THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 118

अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः

# जागदीशी टीका ।

काव्यतीर्थ-न्यायोपाध्यायपदवीमता

श्रीसोमनाथोपाध्यायेन संशोधिता ।

# THE JÂGADÎSÎ,

A COMMENTARY ON

ANUMÂNA-CHINTÂMANI-DÎDHITÎ

BY ŚIROMANI.

EDITED BY

SOMANÂTHOPÂDHYÂYA-NYÂYOPÂDHYÂYA. AND KAVYATIRTHA

FASCICULUS VIII.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK DEPÔT:

BENARES:

AGENTS. OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARÂMA MUKUNDJI BOMBAY.

*Printed by Hari Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

*Price Rupee One.*

## चिन्तामणेः परामर्शः ।

पक्षधर्मस्य व्याप्तिविशिष्टज्ञानमनुमितिहेतुः । ननु व्याप्यत्वावच्छेदकप्रकारेण व्याप्तिस्मरणं पक्षधर्म्मताज्ञानं तथा लाघवात् परामर्शहेतुत्वेनावश्यकत्वाच्च एवञ्च

## दीधित्याः परामर्शः ।

लक्षणोपोद्घातेन विशिष्टज्ञानस्य कारणत्वं व्यवस्थापयति पक्षेत्यादि । व्याप्तिस्मरणेति । स्मरणत्वमविवक्षितम्, अव्यापकत्वात् । लाघवात् प्रथमोपस्थितत्वलाघवात् । कल्पनालाघवमाह परामर्शेति । परामर्शहेतुत्ववादिनाप्यनुमितेः पूर्वं तादृशज्ञानमवश्यं

## जागदीश्याः परामर्शः ।

लक्षणेति । व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नकारणत्वगर्भस्यानुमितिलक्षणस्य तादृशनिश्चयत्वेनानुमितिहेतुत्वं विनाऽसम्भवादिति भावः । पक्षधर्मिकव्याप्यवत्तानिश्चयत्वावच्छिन्नहेतुत्वघटितलक्षणस्योपोद्घातस्तु न युक्तः, लिङ्गधर्मिकपरामर्शस्य स्थापकस्य अथयथातत्त्वाद्यग्रिममूलस्य सन्दर्भविरोधापत्तेः । अविवक्षायां हेतुमाह अव्यापकत्वादिति । यत्र व्याप्त्यनुभवादेवानुमि-

धूमो वह्निव्याप्यो धूमवांश्चायमिति ज्ञानद्वयादेवानुमिति-रस्तु । न चानुमितिं प्रति व्याप्यत्वज्ञानमेव हेतुर्लाघ-

———

मन्तव्यं तथा चातिरिक्तधर्मिणस्तत्रानन्यथासिद्धत्वनियतपूर्ववर्त्ति-त्वयोश्च कल्पनामपेक्ष्य उभयवादिसिद्धनियतपूर्ववर्त्तिनोऽनन्यथा-सिद्धत्वमात्रकल्पना लघीयसीति । ननु धूमत्वावच्छेदेन व्याप्तेरा-लोकत्वेन च पक्षधर्म्मताया ग्रहेऽप्यनुमितिः स्यादित्यत आह ए-वमिति । यद्धर्म्मावच्छेदेन व्याप्तिज्ञानं तेनैव रूपेण पक्षधर्म्मताज्ञानं हेतुरिति नातिप्रसङ्गः । ज्ञानद्वयादिति द्वित्वमविवक्षितम् । लाघ-

———

तिस्तत्रैव व्याप्तिस्मरणस्यासत्त्वादिति भावः । अवच्छेदकलाघव-स्यासम्भवादाह प्रथमेति । यद्यपि प्रथमोत्पन्नस्यापि व्याप्तिज्ञानद्व-यस्य क चिच्चरममुपस्थितिश्चरमोत्पन्नस्यापि विशिष्टज्ञानस्य क चित्प्रथममुपस्थितिस्तु सम्भवतीत्यकिञ्चित्करमेव कारणतायां का-चित्कं प्रथमोपस्थितत्वम् । तथाप्येतदस्वरसेनैव मूलोक्तकल्पनाला-घवं वाच्यमित्याशयः । ननु ज्ञानद्वयं न परामर्शहेतुः पक्षधर्मताज्ञान-स्य सर्वत्राऽतथात्वात् तथा च परामर्शहेतुत्वेनेत्यादिमूलासङ्गतिरतो भावार्थमाह परामर्शहेतुत्वेत्यादि । तादृशज्ञानं व्याप्यतावच्छेदकप्र-कारेण व्याप्तेः पक्षधर्मतायाश्च ज्ञानम् । कल्पनालाघवं व्याकरोति तथा चेति । अतिरिक्तस्य विशिष्टज्ञानरूपस्य धर्मिण इति । कल्पना-मपेक्ष्येति योजना । आलोकत्वेनेति । पक्षधर्मताग्रहस्य व्याप्यताव-च्छेदकप्रकारकत्वसम्पत्तये द्रव्यत्वादेः परित्यागः । यद्धर्मावच्छेदे-नेति । न च येन रूपेण व्याप्तिज्ञानमित्येव सम्यक् कृतमवच्छेदक-त्वप्रवेशेनेति वाच्यम् । यत्र धूमत्वसामानाधिकरण्येन व्यभिचारस्य व्याप्तेश्च ग्रहोत्तरं धूमत्वेन पक्षधर्मताधीस्तत्राप्यनुमितिप्रसङ्गात् । अवच्छेदकत्वप्रवेशे तु धूमत्वसामानाधिकरण्येन व्यभिचारग्रह त-

वात् उपजीव्यत्वाच्चेति वाच्यम्। तस्यानुमितेः पूर्वमसिद्धौ

---

वात् अवच्छेदकलाघवात्। आवश्यकत्वात् व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानस्य हेतुत्वे व्याप्तिज्ञानहेतुताया आवश्यकत्वात्। क चिदुपजीव्यत्वादिति पाठः। उपजीव्यत्वञ्च व्याप्तिज्ञानं विना यद्धर्म्मावच्छेदेन व्याप्तिज्ञानं तत्प्रकारकपक्षधर्म्मताज्ञानस्यासम्भवात्। एवञ्च सिद्धे व्याप्तिज्ञाने हेतावतिप्रसङ्गभङ्गाय पक्षधर्म्मताविषयत्वमवच्छेदकं कल्प्यते लाघवात् न तु कारणान्तरं गौरवादिति भावः। सिद्धस्य व्याप्तिज्ञानस्य न पक्षधर्म्मताविषयत्वमित्याशयेनाह तस्येति। यद्वा व्याप्यत्वज्ञानमिति व्याप्यत्वप्रकारकं पक्षधर्म्मताज्ञानमित्यर्थः। ननु विशिष्टज्ञानान्यथानुपपत्त्या

---

द्वच्छेदेन व्याप्तिग्रहानुत्पत्त्यैवाऽनुमित्यसम्भवादिति भावः। तेनैव रूपेणेति। धूमत्वावच्छेदेन व्याप्तिनिश्चयदशायां नीलधूमत्वादिप्रकारेण पक्षधर्मताग्रहादनुमितेरुत्पादात्तदवच्छेदेनेत्यस्य परित्यागः। वन्हिव्याप्यो धूमो धूमवांश्च पर्वत इत्येकज्ञानादप्यनुमितेः परैरङ्गीकारादाह छित्वमिति। कल्पनालाघवस्यासम्भवादाह अवच्छेदकेति। व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वमपेक्ष्य व्याप्तिज्ञानत्वस्यावच्छेदकस्य शरीरलाघवादित्यर्थः। असम्भवादिति। तथा च स्वनियततादृशज्ञानसत्ताकत्वमेव व्याप्तिज्ञानस्य तादृशज्ञानोपजीव्यत्वमिति भावः। नन्वेतावता व्याप्तिज्ञानस्यानुमितिहेतुत्वप्राप्तावपि परामर्शस्य किमायातमत आह एवञ्चेति। अतिप्रसङ्गभङ्गायेति। व्याप्तिज्ञानमात्रादनुमित्युत्पत्तिवारणायेत्यर्थः। कारणान्तरमिति। गृह्यमाणव्याप्यतावच्छेदकताकधर्मप्रकारकपक्षधर्मताज्ञानरूपं कारणमित्यर्थः। अनुमितेः पूर्वं व्याप्तिज्ञानस्य सर्वजनसिद्धत्वात्तस्येत्यादिमूलासङ्गतेराह सिद्धस्येति।

युगपदुपस्थित्यभावात् । अथ यथा तत्ताविशिष्टस्मरणे सतीन्द्रियसन्निकृष्टे स एवायमित्यभेदप्रत्ययो भवति तथेन्द्रियसन्निकृष्टे धूमे वह्निव्याप्यधूमस्मरणे धूमत्वासाधारणधर्मदर्शनाद्व्याप्योऽयमित्यभेदप्रत्ययः स्यात् साम-

---

ज्ञानद्वयस्यावश्यं वाच्यतया तस्यैव हेतुत्वं युक्तं तदिदमुक्तमावश्यकत्वादित्यत आह उपजीव्यत्वादिति। विशिष्टज्ञानान्यथानुपपत्त्या तत्कल्पने विशिष्टज्ञानस्योपजीव्यत्वादित्यर्थः । स्वसम्बेदनसिद्धमेव ज्ञानद्वयम्, आवश्यकत्वञ्च तस्योभयवादिसिद्धमित्याशयेनाह तस्येति । असिद्धिं परिजिहीर्षुराशङ्क-

---

अनुमितेः पूर्वमुभयवादिसिद्धस्येत्यर्थः । विनैव भावार्थं संमुखत एव परामर्शस्य हेतुताभिप्रायेण व्याचष्टे यद्वेति । व्याप्यत्वप्रकारकेति । मूले व्याप्यत्वज्ञानमित्यत्र व्याप्ये व्याप्यत्वच्छिन्नप्रकारताकपरत्वादिति भावः । नन्विति । यद्यपि पक्षधर्मताग्रहो न विशिष्टपरामर्शमात्रे हेतुः व्यभिचारादतस्तदन्यथानुपपत्त्या न ज्ञानद्वयमावश्यकम्, तथापि धूमवान् पर्वत इत्याकारकपक्षधर्मताज्ञानस्यापि क्वचिद्विशेषणज्ञानविधया परामर्शहेतुत्वात्तदभिप्रायेणेदम् । तस्यैव ज्ञानद्वयस्यैव । उक्तं नन्वित्यादिमूलग्रन्थे । विशिष्टज्ञानेति । तथा च विशिष्टज्ञाने ज्ञानद्वयस्य कल्पकत्वमेवोपजीव्यत्वमिति भावः । ननु परैर्यदि विशिष्टज्ञानान्यथानुपपत्त्यैव ज्ञानद्वयं स्वीकृतं तदा तस्येत्यादिदोषासङ्गतिः अनुमितेः पूर्वं तैरपि विशिष्टज्ञानस्याभ्युपेयत्वादाह स्वसंवेदनेति । स्वात्मकं यत्संवेदनं तत्सिद्धं तेन प्रमितम् । तथा च स्वप्रकाशरूपं ज्ञानद्वयमेव तत्र प्रमाणं न तु विशिष्टज्ञानानुपपत्त्या तदभ्युपेयमिति भावः । नन्वेवं परामर्शहेतुत्वेनावश्यकत्वादित्यादि-

ग्रथा वृत्तत्वादिति स एवानुमितिहेतुरिति चेत् । न। प्रत्य-
क्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वात् अनुमितिरेवो-
त्पद्यते न तु व्याप्याभेदप्रत्ययः। अन्यथा तत्रापि प-
रार्शानन्तरं परामर्शान्तरं तदनुव्यवसायो वा भवेन्न-

---

ते अथेति । अयं पक्षवृत्तिः । हेतुरिति । लाघवादि-
ति शेषः । अनुमितिसामग्र्या इति । स्मृतिहेतुतावादिनां नव्या-
नां नये दूषणमिदम्। न तु संस्कारकारणतावादिनां प्राचामिति ।

---

ना प्रागुक्तमावश्यकत्वं विरुद्ध्येतेत्यत आह आवश्यकत्वं चेति ।
तथा च न्यायमतानुसारेणैव परामर्शहेतुत्वेनेत्युक्तमिति भावः । अ-
सिद्धिमिति । अनुमितेः पूर्वं विशिष्टज्ञानस्यासिद्धिमित्यर्थः । मूले
धूमत्वासाधारणधर्मदर्शनं धूमत्वरूपव्याप्यतावच्छेदकधर्मदर्शनम् ।
तच्च व्याप्तिसंशयनिरासद्वारोपयुक्तम् । अभेदप्रत्यय इति । वस्तुग-
त्या यो व्याप्यस्याभेदो व्याप्यत्वं तत्प्रत्यय इत्यर्थः । पक्षधर्मांशे
व्याप्तिप्रकारकज्ञानस्यैव परामर्शत्वाद्व्याप्याभेदप्रकारकस्याभेदस-
म्बन्धेन व्याप्यप्रकारकस्य वा ज्ञानस्याऽतथात्वेन यथाश्रुतार्थासङ्गते-
रिति ध्येयम् । व्याप्योयमिति ज्ञानस्य पक्षधर्मत्वाविषयकत्वे पराम-
र्शत्वानिर्वाहात् स एवेत्याद्युत्तरग्रन्थासङ्गतिरसिद्धितादवस्थ्यं चा-
तो व्याचष्टे पक्षवृत्तिरिति । पक्षीयो धूम इत्यर्थः । संसर्गमर्यादया
पक्षवैशिष्ट्यावगाहिज्ञानस्यैवानुमितिहेतुत्वादिति ध्येयम् । न्यूनतां
परिहरति लाघवादिति । अवच्छेदकलाघवादिति तदर्थः । ननु यत्र धू-
मः पर्वतवृत्तिरितिज्ञानसहकारेण वन्हिव्याप्तिगोचरोद्बुद्धसं-
स्कारप्रत्यासत्त्या पर्वतवृत्तिधूमो वन्हिव्याप्य इत्याकारकं प्रत्य-
क्षं तत्रैव पूर्वं व्याप्तिज्ञानाभावेनानुमितिसामग्र्यसम्भवात्परा-
मर्शो न घुघेट इत्यत आह स्मृतिहेतुतावादिनामिति । संस्कारो

त्वनुमितेः । अथ धूमो वह्निव्याप्य इति स्मरतः पर्वतीयधूमेन्द्रियसन्निकर्षे प्रथमत एव व्याप्तिधूमत्वयोर्वैशिष्ट्यं

---

अथेत्यादि । अत्र यत्र प्रथमं पक्षाग्रहे गृहीतधूमे स्मृतव्याप्तिवैशिष्ट्यभानमनन्तरञ्च गृहीते पक्षे तादृशविशिष्टधीस्तत्रेत्यपि द्रष्टव्यम् । प्रथमत इति विशिष्टज्ञानात् पूर्वमनुमितिसामग्रीविरहप्रदर्शनाय । एवञ्च सिद्धे पूर्ववर्त्तिनि विशिष्टज्ञाने तस्यैव तत्त्वेन हे-

---

न प्रत्यासत्तिः तथासति विशेषणगोचरानुद्बुद्धसंस्कारादपि तद्विशिष्टप्रत्यक्षापत्तेः, किं तु ज्ञानमेव तथेति नव्यानां मते धूमः पर्वतवृत्तिरितिज्ञानसहकृताद्वह्निव्याप्यो धूम इति स्मरणादेव यदा परामर्शः सम्भावनीयः तदैवानुमितेः सामग्रीसम्भवादनुमितिरेव जायते न पुनः परामर्श इति भावः । मूले पर्वतीयधूम इत्यस्य पर्वतवृत्तितया गृहीतधूम इत्यर्थः । तेन प्रथमं व्याप्तिधूमत्वयोर्द्वयोर्वैशिष्ट्यभानेपि पक्षधर्मत्वाभानान्न विशिष्टपरामर्शालाभः । व्याप्तिविशिष्टवैशिष्ट्यावगाहिनः पर्वतो वह्निव्याप्यधूमवानिति ज्ञानस्यैवानुमितिहेतुत्वमिति मते मूलोक्तस्थलासंकीर्णं यत्तदप्युपदर्शयति यत्र प्रथममिति । पक्षाग्रह इति । पूर्वं तद्ग्रहे तु यदैव धूमे व्याप्तिवैशिष्ट्यधीस्तदैव पक्षवृत्तित्वस्यापि ग्रहसम्भवान्न मूलोक्तस्थलासंकरः स्यादिति भावः।गृहीते पक्ष इति।पक्षविशेष्यकेपि प्रत्यक्षात्मकपरामर्शे पक्षज्ञानं हेतुः संयोगाद्यात्मकस्य पक्षवृत्तित्वस्य प्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वादित्यभिप्रेत्य गृहीत इत्युक्तम् । ननूत्तरकाले धूमत्वादिवैशिष्ट्यभानव्यवच्छेदस्य प्रकृतानुपयुक्तत्वात्प्रथमत एव इत्युक्तिर्निष्फलेत्यत आह प्रथमत इतीति । ननूक्तरीत्याऽनुमितेः पूर्वं परामर्शसम्भवेप्यनुमितौ न तत्त्वेन हेतुत्वं किं तु ज्ञानद्वयस्यैव तथात्वं प्रागुक्तकल्पनालाघवादत आह एवं चेति । तत्त्वेन व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेन।गुर्विति कल्पनाक्रियान्वयि।तथा च गुरुतरं धर्मद्व-

यत्र भासते विशेषणज्ञानस्य पूर्वं वृत्तत्वात् तत्र यत्र चाप्तवाक्याद्वह्निव्याप्यवानयमिति ज्ञानं तत्रोभयत्रापि लाघवात् पक्षधर्मव्याप्यत्वज्ञानस्य हेतुत्वकल्पनादन्यत्रापि तथेति चेत्। न। इन्द्रियासन्निकृष्टेऽतीन्द्रिये च

---

तुत्वं गुरुधर्म्मद्वयावच्छेदेनान्यथासिद्धत्वकल्पनामपेक्ष्य लघ्वेकरूपावच्छेदेन नियमानन्यथासिद्धिकल्पनाया एव न्याय्यत्वात्। गृह्यमाणव्याप्त्यवच्छेदकताकधर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेन पक्षधर्म्मताग्रहप्रकारीभवद्धर्मावच्छिन्नव्याप्तिज्ञानत्वेन वैकरूपेण कारणत्वे

---

यावच्छेदेन यदन्यथासिद्धत्वकल्पनं तदपेक्ष्येत्यर्थः।तेन धूमत्वेन व्याप्तिज्ञानत्वं धूमत्वेन पक्षधर्मताज्ञानत्वं च यदवच्छेदकधर्मद्वयं तस्य व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वापेक्षया लघुत्वेपि नासङ्गतिः।कल्पनायाश्च गुरुत्वं कारणताद्वयोपपादकतया बोध्यम्। एवमुत्तरत्र लाघवमप्येककारणतासम्पादकत्वेनैव द्रष्टव्यम्। यत्तु परैरपि धूमत्वावच्छेदेन व्याप्तिज्ञानत्वेन हेतुत्वं वाच्यमतस्तत्रावच्छेदकत्वप्रवेशेन विशिष्टज्ञानत्वापेक्षया गौरवमिति।तत्तुच्छम्।तावतापि धर्मद्वये गुरुत्वोपदर्शनासङ्गतेः। धूमत्वावच्छेदेन व्याप्तिज्ञानत्वेन हेतुतावादिनां मतेपि धूमत्वप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुतया विशिष्टज्ञानत्वापेक्षया गुरुधर्मघटितं यद्धर्मद्वयं तदवच्छेदेनेत्यर्थकरणान्नायमपि दोष इत्याहुः। ननु धर्मद्वयावच्छेदेन हेतुत्वकल्पने यदि गौरवं तदैकरूपेणैव ज्ञानद्वयस्य हेतुत्वमस्तु अतस्तदपि दूषयति गृह्यमाणेति। न च व्याप्तिग्रहप्रकारीभूतधर्मप्रकारकपक्षधर्मताज्ञानत्वेनेत्येव सम्यक् अवच्छेदकत्वप्रवेशो व्यर्थ इति वाच्यम्। यत्र धूमत्वसामानाधिकरण्येन व्याप्तेर्व्यभिचारस्य च ग्रहोत्तरं धूमत्वेन पक्षधर्मताग्रहस्तत्रानुमितेर्वार-

लिङ्गे प्रत्यक्षविशिष्टज्ञानसामग्रीविरहात्तेन विनानुमित्य-
नुत्पादापत्तेः। अस्मदुक्तसामग्र्याश्च तत्रापि सत्त्वात्।

---

घातिगौरवात् विनिगमनाविरहाच्च। तत्रापि च नियतपूर्ववर्त्तित्वं
कल्प्यमित्याह यत्र चेति। तेन विनेति। तथा च व्यभिचारात्कारण-
त्वं बाधितमिति भावः। स्वतो व्यभिचारं निरस्यति अस्मदुक्तेति।
अनवस्थानादिति। न च धूमान्तरसन्निकर्षे तद्व्यक्तिवृत्तिधूमत्वं वन्हि-

---

णाय तन्निवेशात्। एवमुत्तरत्रापीति भावः। अतिगौरवादिति। गृ-
ह्यमाणव्याप्त्यवच्छेदकत्वादिप्रवेशेन विशिष्टज्ञानत्वापेक्षयोक्तधर्मस्य
गुरुत्वादिति भावः। ननु विशिष्टज्ञानस्य व्याप्यपक्षोभयवैशिष्ट्याव-
गाहिनिश्चयत्वेनेव विनिगमनाविरहात्पक्षव्याप्योभयवैशिष्ट्यावगाहि-
निश्चयत्वेनापि हेतुत्वं वाच्यं तथा च कारणताद्वयापत्तिरतो गुरुत-
रयोरपि गृह्यमाणेत्याद्युक्तधर्मद्वययोरेकेनैव हेतुता लघीयसीत्यत
आह विनिगमनेति। गृह्यमाणेत्यादिनोक्तधर्मद्वययोरपि प्रत्येकरूपेण
हेतुत्वे विनिगमनाभावाच्चेत्यर्थः। तथा चावच्छेदकभेदेन कारण-
ताद्वयं तवाप्यावश्यकमतो लघुरूपाभ्यामेव तथात्वं युक्तमिति भा-
वः। तव मीमांसकस्य। कल्प्यमिति। तथा चानन्यथासिद्धत्ववत्
पूर्ववर्तित्वस्याप्युभयमत एव कल्प्यत्वेन लघुधर्मावच्छेदेनैव क-
ल्पनौचित्यादिति भावः। व्यभिचारादिति। न च न्यायमतेपि धू-
मलिङ्गकपरामर्शाव्यवहितोत्तरानुमितिं प्रति धूमलिङ्गकपरामर्शत्वेन
हेतुताया वाच्यत्वादसन्निकृष्टधूमस्थलीयानुमितेरतादृशत्वेन कथं
व्यभिचार इति वाच्यम्। आलोकाद्यन्यलिङ्गकानुमितिसामान्यं प्र-
त्येव न्यायमते धूमलिङ्गकपरामर्शत्वेन हेतुत्वमित्याशयेन तत्र व्यभि-
चारस्योपन्यासात्। वस्तुतस्तव्यवहितोत्तरत्वस्य स्वत्वादिगर्भ-
त्वेनानुगतस्य दुर्वचनत्वात्तदन्तर्भावेन धूमलिङ्गकवन्ह्यनुमितिसा-
मान्यं प्रत्यनुगतरूपेण न परामर्शस्य हेतुत्वं किं तु यस्य पुंसो धूमेनैव

न चानुमानात् तत्र परामर्शः, अनवस्थानात् । अथ यथा स देवदत्तो गौरो न वा परमाणू रूपाधिकरणं न वेति संशयो बहिरस्वतन्त्रेणापि मनसा कोटिस्मरणविशेषादर्शनादिसहकारिवशाज्जन्यते यथा वा निद्रासहकारेण बाह्यस्वप्नानुभवः तथेहापि ज्ञानान्तरोपनीतविशेष्ये व्याप्तिस्मरणसहकृतेन मनसा परामर्शो जन्यते तदनन्तरमनुमितिदर्शनादिति चेत् । न । व्याप्तिस्मरणादेः प्रमा-

---

व्याप्तिव्याप्यमिति लिङ्गविशेष्यकपरामर्शाद्व्याप्त्यनुमितिसम्भवः धूममात्रासन्निकर्षेऽपि तत्र वन्ह्यनुमानात् तद्व्यक्तिवृत्तित्वधूमत्ववै-

---

हेतुना वन्ह्यनुमितिस्तदीयवन्ह्यनुमितिसामान्यं प्रत्येव तत्पुरुषीयधूमलिङ्गकपरामर्शत्वेनानुगतरूपेण हेतुत्वं नैयायिकैर्वाच्यमित्याशयेन तादृशपुरुषस्यासन्निकृष्टधूमलिङ्गकानुमितौ धूमलिङ्गकपरामर्शस्य व्यभिचारो दर्शितः । विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्यजनकत्वमिति नियमस्य चाऽव्यभिचारे तात्पर्यमिति युक्तमुत्पश्यामः । स्वतः स्वमते । निरस्यति, मीमांसकः । यत्र धूमे वन्हिव्याप्यत्वं पर्वते च धूमवत्तामात्रं प्रागनुभूतं न तु वन्हिव्याप्यधूमवत्त्वं तत्र न पर्वतो वन्हिव्याप्यधूमवानित्येवं स्मृतिः कारणस्य विशिष्टानुभवस्य बाधात् किं तु धूमो वन्हिव्याप्यो धूमवांश्च पर्वत इत्येवं स्मरणमिति तत्रानुमितौ ज्ञानद्वयस्य सत्त्वान्न व्यभिचारः । धूमान्तरेति । इदं च विशेष्यीभूतस्य धूमत्वस्य सन्निकर्षसम्पत्तये । तद्व्यक्तिवृत्तीति । असन्निकृष्टो यः पर्वतादिः तदीयधूमवृत्तीत्यर्थः । व्याप्त्यनुमितीति । तत्पर्वतवृत्तिधूमो वन्हिव्याप्य इत्यनुमितिसम्भव इत्यर्थः । तथा चो-

णान्तरतापत्तेः। तदेव हि प्रमाणान्तरं यदसाधारणं स-

---

शिष्टग्राहकविरहाच्च, असाधारणमिति शरीरादिव्युदासः, आलो-
कादिवारणाय प्रमाणान्तरासहकारीति वाच्यम्। तदपि प्रमाणा-

---

क्तानुमित्यात्मकात् धूमविशेष्यकपरामर्शादेवासन्निकृष्टधूमस्थले प-
र्वतो वन्हिमानित्यनुमितिर्भविष्यतीति भावः। धूममात्रेति। तथा च
विशेष्ये सन्निकर्षाभावाद्धूमत्वधर्मिकस्य वन्हिव्याप्तिव्याप्यत्वानु-
भवस्यासम्भवाद्धूमविशेष्यकोनुमित्यात्मकः परामर्शोप्यसन्निकृ-
ष्टधूमस्थले दुर्घट इति भावः। सत्यपि धूमान्तरस्य सन्निकर्षे तत्पर्व-
तीयधूमवृत्तिधूमत्वं वन्हिव्याप्तिव्याप्यमिति प्रत्यक्षस्यासम्भवः।
तत्पर्वतीयधूमस्यासन्निकृष्टतया तत्पर्वतीयधूमवृत्तित्वस्याऽयोग्यत-
या प्रत्यक्षविषयत्वायोगादित्याह तद्व्यक्तिवृत्तित्वेति। शरीरा-
दीत्यादिपदादात्मादीनां संग्रहः। व्युदास इति। अन्यथा मानसान्य-
प्रमाफलोपहितकारणत्वपर्यवसितस्य प्रमाणान्तरत्वरूपापाद्यस्य श-
रीरादावसत्त्वेनोक्ततर्कस्य मूलशैथिल्यापत्तेरिति भावः। असाधार-
णत्वं चात्राऽनुभवत्वाव्यापकज्ञानवृत्तिजात्यवच्छिन्नकार्यतानिरूपित-
कारणताश्रयत्वम्। कारणता चात्र विषयत्वाद्यनवच्छिन्ना ग्राह्या।
तेन साक्षात्कारत्वावच्छिन्नं प्रति विषयविधया शरीरादेर्हेतुत्वेपि नो-
क्तदोषः। चक्षुरादेस्तु चाक्षुषत्वादिरूपतादृशजात्यवच्छिन्नं प्रत्येव
चक्षुरादिना जनकतया न तत्र दृष्टान्तासिद्धिः। ज्ञानवृत्तीत्युपादाना-
त्संयोगत्वाद्यवच्छिन्नं प्रति द्रव्यत्वादिना हेतुत्वेपि शरीरादेर्व्युदा-
सः। न चानुभवत्वव्याप्यजात्यवच्छिन्नकार्यत्वं प्रवेश्यैव तद्वारण-
सम्भवः। संस्कारवारकस्य प्रमां जनयतीतिमूलस्थप्रमापदस्य वैय-
र्थ्यापत्त्या तदप्रवेशादिति भावः। चैत्रादिशरीरजन्यतावच्छेदकजातेः
प्रामाणिकत्वे पुनरेकदोत्पन्ननानाज्ञानवृत्तित्वेन जातिर्विशेषणीया।
आलोकादीति। चाक्षुषादौ व्यापारद्वारा कारणत्वेप्यालोकादेर्न तत्र
कारणत्वमात्मवदतस्तत्र व्यभिचारवारणायेत्यर्थः। प्रमाणान्तरेति।

हकारि समासाद्य मनो बहिर्गोचरां प्रमां जनयति यथे-

---

न चैवं शरीरस्यापि स्वेतरप्रमाणसहकारितयोक्तविशेषणादेव व्युदासासम्भवात् असाधारणपदस्य वैयर्थ्यमिति वाच्यम् । स्वावृत्तिधर्मावच्छिन्नया प्रमाकरणतया निरूपितं यत्कार्यत्वं तदवच्छेदकीभूतमानसावृत्तिजात्यवच्छिन्नकार्यतानिरूपितकारणताशून्यत्वस्यैव प्रमाणान्तरासहकारीत्यनेन विवक्षितत्वात् । तस्य च शरीरादावप्यनपायात् । अत्र च चक्षुरादेरपि जन्यतावच्छेदकीभूतचाक्षुषत्वाद्यवच्छिन्नं प्रत्येव जनकतया दृष्टान्तासिद्धिरतो भूतान्तं जातिविशेषणम् । न चोक्तासिद्धिवारणाय स्वेतरप्रमाणजन्यतावच्छेदकत्वेनैव जातिर्विशेष्यतामिति वाच्यम् । सर्वेषामेव चक्षुषां स्वेतरचक्षुरन्तरजन्यतावच्छेदकीभूतं यच्चाक्षुषत्वं तदवच्छिन्नं प्रति जनकतया दृष्टान्तासिद्धितादवस्थ्यापत्तेः । मानसावृत्तिपदं स्वापादकस्य पराभ्युपगतत्वसम्पत्त्यर्थम् । अन्यथा व्याप्त्यलौकिकसाक्षात्कारत्वावच्छिन्नं प्रत्येव व्याप्तिस्मरणादेर्हेतुताया नैयायिकैरभ्युपगमेन निरुक्तकारणताशून्यत्वस्य तत्रासम्भवादिति ध्येयम् । स्मृत्युपधायकसंस्कारस्यापि निरुक्तासाधारणतया प्रमाणान्तरासहकारितया च तत्र व्यभिचारवारणाय मूले प्रमामिति । आत्मसुखादिसन्निकर्षे व्यभिचारवारणाय बहिर्गोचरेति । इत्थं चेदं व्याप्तिस्मरणं यद्यनुभवत्वाव्यापकज्ञानवृत्तिजात्यवच्छिन्नकार्यतानिरूपितविषयत्वावच्छिन्नकारणताश्रयत्वे सति स्वावृत्तिधर्मावच्छिन्नप्रमाकरणतानिरूपितकार्यतावच्छेदकीभूतमानसज्ञानावृत्तिजात्यवच्छिन्नकार्यताप्रतियोगिककारणताशून्यत्वे च सति बहिर्गोचरप्रमोत्पादकं स्यात्तदावश्यं मानसान्यप्रमायाः फलोपहितकारणं स्यात् चक्षुरादिवदिति समुदितार्थः । न चानुमित्यादिकरणतामादायेष्टापत्तिरिति वाच्यम् । यन्निरुक्तकारणताशून्यत्वे सति बहिर्गोचरयादृशयादृशप्रमोत्पादकं तदवश्यं मानसान्यतादृशतादृशप्रमायाः फलोपहितकरणमिति व्याप्त्या मानसान्यपरामर्शकारणत्वस्यापत्ताविष्टापत्त्यसम्भवादिति ध्येयम् । आलोकादेरपि चाक्षुषादिकरणत्वमतस्तत्रापाद्यसत्त्वादापाद-

न्तरं भवत्येव प्रत्यक्षादिप्रमाकरणत्वेन च विभागान्न तद्व्याघात इत्यपि कश्चित् । यद्वा असाधारणमसमवहितं तथा च यज्जातीयप्रमायां मनोन्यकरणेनासमवहितं सत् यद्बहिर्विषयकप्रमोत्पादकं यज्जातीयप्रमासामग्रीविरहे वा यत्प्रमोत्पादकं तत्तद्विजातीयप्रमाहे-

---

ककोटौ तद्वारकप्रमाणान्तरासहकारीतिविशेषणं न देयमिति मतं द-र्शयति तदपीति । आलोकादिकमपीत्यर्थः । नन्वेवं प्रमाणस्य चतुर्धा विभागोऽनुपपन्न इत्यत आह प्रत्यक्षेति । तद्व्याघातः विभाग-व्याघातः । प्रमावैजात्यस्यैव प्रमाणान्तरत्वनियामकत्वमनुसृत्य प्रका-रान्तरेण व्याचष्टे यद्वेति । व्याप्तिस्मरणस्यापि मनःप्रभृतिसमवहि-तत्वादाह तथा चेति । यत्प्रमाया इत्युक्तावेकचाक्षुषादिव्यक्तिकर-णासमवहिते चाक्षुषान्तरजनके चक्षुरादौ व्यभिचारः स्यादतो य-ज्जातीयेति । यज्जातीयस्य मनोन्यकरणेनासमवहितमित्युक्तौ स्मृति-जातीयस्य मनोन्यकरणेनासमवहिते चक्षुरादौ प्रमोत्पादके व्यभि-चारः तद्विजातीयप्रमाहेतुरित्यस्य तत्प्रमाविजातीयप्रमाहेतुरित्य-र्थकत्वादतः प्रमाया इति । अनुमितिजातीयप्रमायाः करणेन मनसैव समवहितत्वाच्चक्षुरादौ दृष्टान्तासिद्धिः पक्षीभूते व्याप्तिस्मरणे चा-पादकवत्तायाः पराभ्युपगमासिद्धिश्च स्यादत उक्तं मनोन्येति । म-नोन्यकारणेत्युक्तावपि तथैव दोषात्करणपर्यन्तानुसरणम् । प्रत्यक्ष-जातीयप्रमाया मनोन्यकरणेनासमवहिते सुखादिसन्निकर्षे प्रत्यक्षवि-जातीयप्रमाया अजनकत्वात्तत्र व्यभिचारः स्यादतो बहिर्विषयके-ति । अनुमित्यादिजातीयप्रमायाः मनोन्यकरणेनासमवहितस्मृत्युप-धायकसंस्कारेऽनुमित्यादिविजातीयप्रमित्यजनके व्यभिचारवारणाय प्रमोत्पादकमिति । अत्र च यो यज्जातीयप्रमायाः मनोन्यकरणेनासम-वहितः सन् बहिर्विषयकयादृशप्रमित्युत्पादकः स तद्विजातीयतादृशी-प्रमाहेतुरित्येवव्याप्त्यर्थो बोध्यः । तेन प्रत्यक्षजातीयप्रमाया मनोन्यक-रणेनासमवहितस्य परामर्शात्मकप्रमोत्पादकस्य च पक्षीभूतव्याप्ति-स्मरणस्य प्रत्यक्षविजातीयानुमितिप्रमाहेतुत्वमादाय नेष्टापत्तिरिति ध्येयम् । ननु सुषुप्त्यनुरोधेन ज्ञानसामान्यं प्रत्येव त्वचो हेतुत्वात्प्रत्य-

तुरिसेव व्याप्तिः।ततः सिद्धायां विलक्षणप्रमायां विलक्षणे च तत्करणे कल्पनीये आवश्यकत्वाद्बाधकाभावाच्च तस्यैव तथात्वं पर्यवस्यतीति । संशयस्वप्नौ च न विशिष्टानुभवरूपौ, येनोपनयादिवशाद्बाहिर्विषयानुभवजनने क्लृप्तशक्तिकेन मनसा दोषवशादप्रमेव तदभावादिवशात् प्रमापि जनयितव्येत्याशङ्क्येत, किन्तु

———

क्षजातीयप्रमाया मनोन्यकरणेन त्वचा समवहितत्वात्पक्षीभूतव्याप्तिस्मृतावापादकासिद्धिरतः कल्पान्तरमाह यज्जातीयेति । अत्रापि पूर्ववन्निष्कर्षो बोध्यः । ननूक्तव्याप्तिबलाद्व्याप्तिस्मरणस्य विजातीयप्रमाहेतुत्वमिष्यत एव । न च तावतैव प्रमाणान्तरत्वप्रसंगः, तस्य प्रमाकरणत्वगर्भत्वादत आह तत इति।ततो व्याप्तिस्मरणात् । सिद्धायाम् अभ्युपेतायां विजातीयप्रमायामित्यर्थः । आवश्यकत्वात् करणान्तरकल्पने उपनयहेतुत्वस्यावश्यकत्वात् । बाधकाभावात् व्यापाराभावरूपं यद्बाधकमापाद्यकोटौ फलायोगव्यवच्छिन्नकारणत्वरूपकरणत्वस्य प्रविष्टत्वेन तदभावादित्यर्थः । तस्यैव व्याप्तिस्मरणस्यैव । तथात्वं करणत्वम् । पर्यवस्यतीति । तथा च प्रत्यक्षादिविजातीयप्रमाहेतुत्वोपगमेनैव विजातीयप्रमायाः फलायोगव्यवच्छिन्नकारणत्वलक्षणकरणत्वमापादनीयमतो न त्वया व्याप्तिस्मरणस्य प्रत्यक्षविजातीयप्रमाहेतुत्वमभ्युपेतव्यमिति भावः । ननु संशयस्वप्नयोर्विशिष्टसाक्षात्कारत्वानुरोधादुपनयस्य प्रत्यासत्तित्वध्रौव्ये दोषाद्यभावदशोत्पन्नयोः संशयस्वप्नयोः प्रमात्वं न दुर्घटमतो मूलस्याशयमुपवर्णयति संशयेत्यादिना । न विशिष्टेति । न च घटधर्मिकस्यायं घटो न वेतिसंशयस्य घटत्वांशे विद्यमानदुःखावगाहिनश्चाहं दुःखीत्यादिस्वप्नस्य दुःखाद्यंशे विशिष्टानुभवत्वसम्भवादिदमसङ्गतमिति वाच्यम् । तावतापि संशयस्वप्नसामान्ययोर्विशिष्टानुभवत्वासम्भवादुक्तसंशयस्वप्नयोर्लौकिकसन्निकर्षादेवोत्पत्त्या क्वचिदप्युपनयस्य प्रत्यासत्तित्वाकल्पनात् । यत्तु शयानोऽहं दुःखीत्यादिस्वप्नस्य विशिष्टानुभवत्वेऽपि न प्रमात्वं स्वप्रवहननाडीमनःसंयोगस्यैव दोषतया सर्वत्र भ्रमसामग्रीसम्भवा-

न्द्रियादि । संशयस्त्वप्रमौ तु न प्रमे इति न निद्रादेः प्रमाणान्तरत्वम् । न च तत्रापि कथं स धूमो वह्निव्याप्य इति व्यवहारः तदानीं तद्व्याप्यत्वानुभावकाभावादिति वाच्यम् । तत्र स्मृतधूमे धूमत्वेन वह्निव्याप्यत्वानुमानात् । न च तन्मते धूमत्वेन व्याप्त्यनुभवः सम्भवति ।

———

धर्म्मिज्ञानकोटिस्मरणादिरूपः, धर्म्मिज्ञानं पुनरनुभवरूपं यथासम्भवमक्षादेः स्मरणञ्च संस्कारादिसाशयेनाह संशयेति । व्याप्यत्वानुमानादितिं । धूमत्वादौ वन्ह्यादिव्याप्तिव्याप्यत्वं जानतो धूमत्वत्वादिना तद्वत्त्वनिश्चयदशायामन्यथा त्वसंसर्गाग्रहादेवेति । अ-

———

दिति मतम् । तच्चिन्त्यम् । तदभावादिवशादिति।दोषाभावादित्यर्थः । प्रमापीत्यस्य संशयत्वप्रात्मकेत्यादिः । कोटिस्मरणादीत्यादिना भेदाग्रहादेः परिग्रहः । धर्मिज्ञानमिति । साधारणादिधर्मवद्धर्मिज्ञानजन्या कोटिस्मृतिरेव संशयहेतुरिति प्राचां मते कोट्यनुभवस्य संशयानिर्वाहकत्वात्कोटिस्मरणपर्यन्तमनुसृतम् । अक्षादेरिति पञ्चमी । क चिदक्षादिन्द्रियात् प्रत्यक्षात्मकं क च्चिच्च व्याप्तिज्ञानादितोनुमित्यात्मकं धर्मिज्ञानमित्यर्थः । स्मरणं चेति । धर्मिज्ञानमित्यत्रान्वितम् । तद्वत्त्वेति ।धूमत्ववत्त्वेत्यर्थः । अन्यथा धूमत्वादौ वन्ह्यादिव्याप्तिव्याप्यत्वाद्यग्रहदशायाम् ।असंसर्गाग्रहादेवेति । स धूमो वन्हिव्याप्य इति व्यवहार इति मूलस्थेनाऽन्वयः। न चैवं व्याप्यतावच्छेदकप्रकारेणैव व्याप्तिग्रहस्य बाधास्तत्र पर्वतो वन्हिमानित्यनुमितिर्न स्यात्, इष्टत्वात् । व्याप्यत्वासंसर्गाग्रहस्थले लैङ्गिकासंसर्गाग्रहस्यैव परैः स्वीकारादिति भावः । अथातीन्द्रियस्थले विशिष्टज्ञा-

अत एव यो वह्निव्याप्यवान् सोऽवश्यं वह्निमान् इति व्याप्तिज्ञानवतोऽनुमितिर्नान्यथा । अथ पर्वतीयधूमे धूमत्वेन ज्ञाते वह्निव्याप्योऽयं न वेति संशयेऽप्यनुमितिः स्यादिति चेन्न । धूमो वह्निव्याप्य इति स्मरणे विद्यमाने

———

तीन्द्रियादौ लिङ्गे व्याप्यत्वप्रकारकज्ञानस्यासम्भवेऽप्यनुमितेः सर्वानुभवसिद्धतया तस्य कारणत्वे बाधिते परिशेषाद्गुरोरपि व्याप्यतावच्छेदकप्रकारकज्ञानस्य हेतुत्वे सिद्धे शाब्दव्याप्यवत्ताबोधस्थलेऽपि तत्कल्पयते कारणं विना कार्य्योत्पत्तेरसम्भवात् तेन च विना तत्रानुमितेरसिद्धत्वान्न तस्यापि हेतुताबाधः तवातीन्द्रियलिङ्गादौ सर्वानुभवसिद्धाया अप्यनुमितेः सर्वथैवापलापः मम तु क्वचित्कालविलम्बादिमात्रकल्पनमित्याशयवानाह अत ए-

———

नस्येव व्याप्यवानिति शाब्दस्थले व्याप्यतावच्छेदकप्रकारकज्ञानस्यापि व्यभिचारसाम्येन लघुतरं विशिष्टज्ञानमपेक्ष्य गुरोर्व्याप्यतावच्छेदकप्रकारकज्ञानस्यैवातएवेत्यादिना हेतुत्वव्यवस्थापनं न युक्तमतो मूलकारस्याशयमुपवर्णयति अतीन्द्रियादाविति ।तत् व्याप्यतावच्छेदकप्रकारकज्ञानम् । ननु यत्र विनैव व्याप्यतावच्छेदकप्रकारकज्ञानं व्याप्यवानित्येव परामर्शादनुमितिस्तत्र ज्ञानद्वयस्यापि व्यभिचारेण कारणत्वं बाधितमत आह न चेति । तेन व्याप्यतावच्छेदकप्रकारकज्ञानेन । तत्र व्याप्यवानितिशाब्दस्थले । ननु यत्र केवलं वन्हिव्याप्यवानित्येव शाब्दधीर्न तु व्याप्यतावच्छेदकप्रकारिका तत्र त्वयेव मयाप्यसन्निकृष्टधूमस्थलेनुमितिरपलपनीयैवेति कुतो विशिष्टज्ञानस्य करणत्वबाध इत्यत आह तवेति।सर्वथैवेति।उपनयस्य प्रत्यासत्तित्वविरहात्कालादिविलम्बेनापि विशिष्टज्ञानासम्भवादिति

धूमत्वज्ञानस्य विशेषदर्शनत्वेन संशयाभावात् ।अन्यथा परामर्शोऽपि कुतो न स्यात् संशयेन प्रतिबन्धादिति चेत्तुल्यम् । न च सामान्यनिश्चयस्य सामान्यसंशयनिवर्तकत्वाद्धूमसामान्ये एव संशयो माभूत् विशेषसंशयश्च विशेषनिश्चयनिवर्तनीय इति धूमविशेषसंशयनिरासार्थं पृथग्व्याप्तिनिश्चयो वाच्य इति वाच्यम् । यत्र हि

---

वेति । तुल्यमित्यभ्युपगमवादः।यत्र यदवच्छिन्नोयथा हि तदभावेन

---

भावः । क्व चित् व्याप्यवानितिशाब्दस्थले । कालविलम्बेति । तत्रैव व्याप्यतावच्छेदकप्रकारज्ञानस्य सम्पत्तेरिति भावः । मात्रेति । न त्वनुमितेरपलाप इत्यर्थः। मूले नान्यथेति।न केवलं वन्हिव्याप्यवानिति ज्ञानादनुमितिरित्यर्थः। वन्हिव्याप्योयं न वेतिसंशये पर्वतीयधूमो वन्हिव्याप्यो न वेति संशये सतीत्यर्थः । धूमत्वज्ञानस्येति । धूमो वन्हिव्याप्य इति स्मरणस्यैव विशेषदर्शनत्वेन विरोधिसामग्रीसत्त्वेन संशयविरोधितया संशयानुत्पत्तेरित्यर्थः । अन्यथा विरोध्यनुमितिसामग्रीसत्त्वेपि संशयोत्पादे । परामर्शोपीति । संशयस्येव तस्यापि सामग्रीसम्भवादिति भावः । शङ्कते संशयेन प्रतिबन्धादिति । परामर्शो न स्यादित्यनुषज्यते । ननु परमतेनुमितिसामग्र्याः सत्त्वादेव तया विशेषदर्शनेन च प्रतिबन्धात्संशय एव नोत्पद्यते कुतस्तस्यानुमितिप्रतिबन्धकत्वमुक्तमत आह दीधितौ अभ्युपगमेति । अत एवाग्रे वस्तुतस्त्वित्यादिना मूलेनोक्तस्थलेनुमितिरेव भवति न तु संशय इत्यपि वक्ष्यत इति भावः । मूले धूमविशेषसंशयेति । पर्वतीयधूमत्वावच्छिन्नविशेष्यकव्याप्तिसंशयस्य निरासार्थं पर्वतीयधूमो वन्हिव्याप्य इत्यपि निश्चयो वाच्य इत्यर्थः । धूमत्वादिरूपेण धूमे व्याप्तिनिश्चयेपि द्रव्यत्वादिप्रकारेण तत्रैव व्याप्तिसंश-

तद्भावव्याप्यतया गृहीतेन वा विशिष्टेन तत्संशयः तथा यदवच्छे-
देन तद्व्यावर्त्तकधर्म्मदर्शनं तद्विशिष्टेऽपि अनुभवबलाद्व्यावर्त्तक-
श्च तदभावो यदवच्छेदेन वा तदभावोऽवगतो यो वा तदभाव-
व्याप्यत्वेन गृहीतः। यथा स्थाणुत्वाभावस्य पुरुषत्वावच्छेदेन ग्रहे

———

यस्योत्पादाद्व्याचष्टे यदवच्छिन्न इति । व्यावर्त्तकधर्मदर्शनविरोधि-
त्वं दृष्टान्तेन द्रढयति यथा हीति। तदभावेन तदीयतया गृहीता-
भावेन । विशिष्ट इत्यग्रेऽन्वयः । तथा च निर्वन्हिर्वन्हिमान्न वा नि-
र्वन्हित्वव्याप्यवान् वह्निमान्न वेति वा यथा न संशय इत्यर्थः । तथा
च तदभावादिविशिष्टधर्मिकतद्वत्ताबुद्धिं प्रति सामान्यतस्तद्बुभु-
त्साविरहविशिष्टज्ञानत्वेन प्रतिबन्धकत्वस्य तादृशतद्वत्तानिश्चय-
व्यक्तिं प्रति तत्तद्बुभुत्साव्यक्तित्वेन विशेषतः करणत्वस्य वा क-
ल्पनात् । अत एव सत्यामपि बुभुत्सायां निर्वन्हित्वविशिष्टे वन्हि-
मत्त्वनिश्चयवन्न तत्संशयोत्पाद इति ध्येयम् । तद्विशिष्टेपीति । न त-
त्संशय इत्यन्वयः । अत्र हेतुमाह अनुभवबलादिति । ननु धूमत्वाव-
च्छेदेन व्याप्तिनिश्चयस्य व्यावर्तकधर्मदर्शनविधया व्याप्तिसंशयवि-
रोधित्वं मूलोक्तमसङ्गतं तदभावावच्छेदकधर्मस्यैव व्यावर्त्तकधर्म-
त्वादत आह व्यावर्त्तकश्चेति । प्रकारविधया विशिष्टधीप्रतिबन्ध-
कतावच्छेदकधर्मस्यैव व्यावर्त्तकपदार्थत्वादिति भावः । क्रमेणोदा-
हरति यथेति । प्रथमे स्थाणुत्वाभावस्य पुरुषत्वावच्छेदेन ग्रहे पुरुषः
स्थाणुर्न वेति न संशय इति योजना । द्वितीये स्थाणुत्वाभावस्य पु-
रुषत्वावच्छेदेन ग्रहे पुरुषत्वस्य चेदन्त्वावच्छेदेन ग्रहेऽयं स्थाणुर्न
वेति न संशय इत्यन्वयः। अत्र च इदन्त्वावच्छिन्नधर्मिकस्थाणुत्व-
संशयं प्रति पुरुषत्वावच्छिन्नविशेष्यकस्थाणुत्वाभावनिश्चयविशिष्टे-
दन्त्वावच्छिन्नधर्मिकपुरुषत्वनिश्चयत्वेनैव प्रतिबन्धकत्वम् । वैशि-
ष्ट्यं च तत्र एकक्षणावच्छेदेनैकात्मवृत्तित्वमतो नातिप्रसङ्गः । न
चैवं पुरुषो न स्थाणुरित्याकारकोद्बुद्धसंस्कारविशिष्टोयं पुरुष इत्या-
कारकनिश्चयस्य सत्त्वेप्ययं स्थाणुर्न वेति संशयः स्यादिति वाच्यम् ।
पुरुषत्वावच्छिन्नविशेष्यकस्थाणुत्वाभावोद्बुद्धसंस्कारविशिष्टेदन्त्वा-

वच्छिन्नविशेष्यकपुरुषत्वनिश्चयत्वेनापि इदंधर्मिकस्थाणुत्वसंशयप्रतिबन्धकत्वान्तरस्वीकारात्। अत्राप्युद्बोधकस्यैकस्याभावेन प्रत्येकव्यक्तिविश्रान्तिध्रौव्ये स्थाणुत्वाभावोद्बोधकीभूततत्तद्वस्तुविशिष्टेदन्धर्मिकपुरुषत्वनिश्चयत्वेनैव प्रतिबन्धकत्वं फलितम्। अन्ये तु इदन्त्वविशिष्टधर्मिकस्थाणुत्ववत्ताबुद्धिं प्रति स्थाणुत्वाभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वविशिष्टप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यकज्ञानत्वेनैव प्रतिबन्धकत्वं वाच्यम्, चैत्रो न स्थाणुरयं च चैत्रः मैत्रो न स्थाणुरयं च मैत्रः मनुष्यो न स्थाणुरयं च मनुष्य इत्यादिसकलवित्तिसाधारणत्वात्। निरुक्तावच्छेदकत्ववैशिष्ट्यं तु स्वनिरूपकज्ञानसमानाधिकरणज्ञानीयत्वस्वसमानाधिकरणज्ञानीयत्वस्य सामानाधिकरण्योभयसम्बन्धेन प्रकारतायां बोध्यम्। तेन पुमन्तरस्य मनुष्यत्वावच्छेदेन स्वस्य वा चैत्रत्वावच्छेदेन स्थाणुत्वाभावनिश्चयदशायामिदन्त्वावच्छेदेन मनुष्यत्वं जानतोपि पुरुषस्यायं स्थाणुरिति भ्रमस्योत्पादः। विशेष्यताद्वयमेव चात्र नानाप्रकारतानिरूपितं ग्राह्यमतो मनुष्यत्वावच्छेदेन स्थाणुत्वाभावस्येदन्त्वावच्छेदेन वा मनुष्यत्वस्य संशयदशायामप्ययं स्थाणुरित्याकारको बोधः। संशयस्थलीयविशेष्यताव्यक्तेः कोटिद्वयप्रकारतानिरूपितत्वात्। विशेष्यतावच्छेदकत्वं प्रकारत्वं च द्वयमपि निरवच्छिन्नं ग्राह्यमतः शरीरत्वव्याप्यजातिमत्त्वावच्छेदेन स्थाणुत्वाभावस्य निश्चयदशायामयं चैत्र इति ग्रहे चैत्रत्वावच्छेदेन स्थाणुत्वाभावनिश्चयदशायां चायं शरीरत्वव्याप्यजातिमानिति ग्रहेप्ययं स्थाणुर्न वेत्याकारकग्रहस्योत्पाद इत्याहुः। तच्चिन्त्यम्। अन्ये पुनरवच्छेदकत्वसंसर्गेण स्थाणुत्वाभावविशिष्टस्यैव पुरुषत्वस्येदन्त्वावच्छेदेन निर्णयस्तद्विशिष्ट स्थाणुत्वसंशयविरोधी तथा च स्थाणुत्वाभावीयपुरुषत्ववानयमित्याकारकनिर्णय एव तदभावावच्छेदकधर्मवत्ताज्ञानविधया इदंधर्मिकसंशयप्रतिबन्धक इत्याहुः। तन्न। पुरुषमात्रं न स्थाणुः अयं च पुरुष इत्यादिबुद्धेरनन्तरमप्ययं स्थाणुर्न वेत्यादिसंशयस्योत्पादप्रसङ्गात्। न चेष्टापत्तिः, अनुभवविरोधात्। न च व्याप्यदर्शनसामग्रीवत् विरोधिसामग्रीत्वेनैव तादृशबुद्धीनां स्वातन्त्र्येण विरोधित्वम्, सर्वत्र विरोधिनिश्चयस्योत्पादानियमेन तत्सामग्रीत्वासम्भवादिति दिक्। तृतीये स्थाणुत्वाभाव-

यद्व्यावर्तकधर्मदर्शनं तत्र न तत्संशयः यच्च सामान्य विशेषे वेति । वस्तुतस्तु धूमत्वपुरस्कारेण व्याप्तिस्मरणे पक्षधर्मताज्ञाने चानुमितिर्भवत्येव । ननु भावोऽभावो वा

---

पुरुषत्वस्य स्थाणुत्वाभावव्याप्यत्वेन गृहीतस्य करादेर्वा इदन्तावच्छेदेन ग्रहे पुरुषोऽयं स्थाणुर्न वेति न संशयः । तदभावादिमत्त्वस्य तद्वदन्योन्याभावादेस्तादात्म्येन संशये च तदन्योन्याभावादेरपि ग्रहव्यः । एवं न तद्भ्रमोऽपि, विशेषदर्शनस्य विपरीतज्ञानसामान्यविरोधित्वादित्यग्रे व्यक्तीभविष्यति । नन्विसा-

---

व्याप्यतया गृहीतस्य करादेः इदन्त्वावच्छेदेन ग्रहेऽयं स्थाणुर्न वेति न संशय इति योजना । ननु घटादिविशिष्टबुद्धिं प्रति तद्धर्मदर्शन-श्चरत्वादि विरोधितया तदभावादिज्ञानमात्रस्य व्यावर्तकधर्मत्वनाभिधानमसङ्गतमत आह तदभावादिमदिति तद्वदन्योन्याभावादिरित्यादिपदेन यदवच्छेदेन तद्वत्त्वं गृहीतो यो वा तदवच्छेदव्याप्यः तयोरुपसंग्रहः । संयोगादिना घटादिसंशये घटान्योन्याभावस्याविरोधित्वादाह तादात्म्येनेति । ननु संशयत्वस्यार्थसमाजग्रस्तत्वात् तदवच्छिन्नं प्रति व्यावर्तकधर्मदर्शनस्य विरोधित्वं मूलोक्तमसङ्गतमत आह एवमिति । एवं व्यावर्तकधर्मदर्शनसत्त्व इत्यर्थः । भ्रमपदं दोषविशेषाद्यजन्यनिश्चयपरम् । विपरीतज्ञानेत्यस्य दोषविशेषाद्यजन्येत्यादिः मूलेऽनुमितिर्भवत्येवेत्यस्यानुमितिरेव भवतीत्यर्थः । उभयथापि प्रमेयमिति।अस्योभयथापि प्रमेयत्वव्याप्यवादित्यर्थः । अत्र व्याप्तिः साध्यसम्बन्धितावच्छेदकरूपवत्त्वरूपैवाभिप्रेता व्यापकसामानाधिकरण्यरूपव्याप्त्यभिप्राये तस्याः साधनतावच्छेदकगर्भतया भावत्वाद्यनिश्चयदशायां स्वमतेऽपि तत्रानुमित्यसम्भवादिति ध्येय-

उभयथापि प्रमेयमित्यत्र भावत्वाभावत्वयोर्व्याप्यत्वाव-च्छेदकयोरग्रहादनुमानं न स्यात् तदन्यान्यत्वरूपस्या-न्यतरत्वस्य लिङ्गत्वाभावादिति चेत् । न । भावत्वाभा-

---

दि । इदं नीलत्वेन प्रतीयमानम्, भावोऽभावो वा । भावत्वाभा-वत्वयोस्तत्त्वयोरित्यर्थः । लिङ्गत्वाभावात् अप्रसिद्धत्वेन तत्त्वासम्भ-वात् । भावत्वाभावत्वेत्यादिकं केवलान्वय्यनुमानमतिरिक्तञ्चाभा-

---

म् । भावाभावयोर्विशेष्यत्वे प्रमेयपदस्य पुंस्त्वापत्तिरित्यतो विशेष्यं पूरयति इदमिति।तेजोविशेषाभाववत्त्वस्याभावत्वव्याप्यतया तद्रूपेद-न्त्वादिविशिष्टेऽभावत्वसंशयायोगादाह नीलत्वेनेति । नीलत्वस्यापि भावत्वव्याप्यतया तद्रूपविशिष्टे तत्संशयायोगादुक्तं प्रतीयमानमि-ति । ननु भावत्वाभावत्वयोर्व्याप्यतावच्छेदकत्वे तत्प्रकार-कपक्षधर्मताबुद्धेरविरोधित्वाद्भावो न वेत्यादिसंशयप्रदर्शनम-युक्तमतो व्याचष्टे तत्त्वयोरिति । भावत्वाभावत्वयोरि-त्यर्थः । वस्तुतो भावत्वाभावत्वयोर्वर्तमानौ यौ व्याप्यताव-च्छेदकौ तयोरग्रहादित्यन्वयाद्यथाश्रुतमेव मूलं ज्यायः । यद्यपि तादात्म्येन भावाभावयोरेव व्याप्यत्वाभिप्रायेण भावत्वाभावत्वयो-रिति यथाश्रुतमेव सङ्गच्छते, तथापि प्राचीनमते तादात्म्येन व्याप्ते-र्विवादग्रस्तत्वादित्थं व्याख्यातमिति ध्येयम् । लिङ्गत्वाभावादित्यत्र हेतुमाह अप्रसिद्धत्वेति । भावाभावभिन्नस्य वस्तुनोऽप्रसिद्ध्या तदन्य-त्वस्य लिङ्गत्वासम्भवादित्यर्थः । ननु परेषां साध्यवदन्यावृत्तित्वज्ञा-नबाधेन प्रमेयत्वसाध्यकानुमित्यनङ्गीकारात्तदुपयुक्तहेतुसम्पादनम-युक्तं तथा भावभिन्नत्वरूपस्याभावत्वस्याप्रसिद्ध्या तद्घटितस्य हेतोर-प्रसिद्धिरपीत्यत आह भावत्वेति । धर्ममात्र एव प्रमेयत्वादिसाध्य-व्याप्तिसम्भवाद्भावत्वाभावत्वान्यतरपर्यन्तानुसरणं मूलकृतो विफ-

वत्वान्यान्यधर्मवत्त्वस्य तत्र लिङ्गत्वात् । एवं धूमालोकान्यतरत्वमपि लिङ्गम् । अथ यद्व्यतिरेकज्ञानं यदुत्पत्तिप्रतिबन्धकं तत्तन्निश्चयसाध्यं यथा च पक्षधर्मस्य व्याप्यभेदज्ञानमनुमितिप्रतिबन्धकम् अतो व्याप्याभेदज्ञानं तद्धेतुः सिध्यतीति चेन्न । धूमत्वपुरस्कारेण व्याप्तिस्मरणे पक्षधर्मताज्ञाने च सति विशेषदर्शनान्न धूमे व्याप्यभेदज्ञानं किन्तु अनुमितेरेवोत्पत्तिः तत्सामग्रीसत्त्वात् अतो व्याप्यभेदज्ञानं नानुमितिप्रतिबन्धकं येन

———

वमभ्युपेयं, केवलान्वयिनः साध्यस्य धर्ममात्रमेव व्याप्यमिति तु द्रष्टव्यम् । एवमिति । लिङ्गं व्याप्यत्वे साध्ये लिङ्गतावच्छेदकं वा वन्हौ । यद्व्यतिरेकेति । यत्संशयव्यतिरेकनिश्चयाविसत्र

———

लमित्याह केवलान्वयिन इति । वन्हौ साध्ये धूमालोकान्यतरत्वस्य व्यभिचारित्वाद्व्याचष्टे लिङ्गं व्याप्यत्व इति । धूमत्वादिसन्देहदशायां वन्हिव्याप्यत्वे साध्ये धूमालोकान्यतरत्वमेव लिङ्गमित्यर्थः । व्याप्यतावच्छेदकप्रकारकनिश्चयस्यैव प्रकृते परनिष्पादनीयत्वादाह लिङ्गतावच्छेदकं वेति । ननु मूलोक्तव्याप्तौ यथाश्रुते वैयधिकरण्यं घटाद्यभावनिश्चयप्रतिबद्धघटादिविशिष्टज्ञाने घटादिनिश्चयाजन्यत्वात् व्यभिचारश्चेत्यत आह यत्संशयेत्यादि । या धीर्यद्व्यतिरेकज्ञानसामान्यप्रतिबद्धा सा तन्निश्चयत्वावच्छिन्नजन्येत्येव व्याप्तिः । ग्राह्यसंशयस्याप्रतिबन्धकत्वादेव घटादिविशिष्टबुद्धौ व्यभिचाराभावादतः पक्षधर्मधर्मिकव्याप्यभेदग्रहसामान्यप्रतिबद्धत्वेनानुमितौ तद्धर्मिकव्याप्याभेदनिश्चयत्वावच्छिन्नजन्यत्वं साधनीयमिति भा-

व्याप्याभेदज्ञानं तद्धेतुः स्यात् । न च धूमत्वप्रकारेण व्याप्तिस्मरणपक्षधर्मताग्रहे इयं धूमव्यक्तिर्वह्निव्याप्या नेति भ्राम्यतोऽनुमित्यापत्तिरतो विशिष्टज्ञानं हेतुरिति वाच्यम् । धूमत्वस्य विशेषस्य दर्शनेन तादृशभ्रमानु-त्पत्तेः तत्रानुमितिसद्भावादेव अन्यथा निश्चयसामग्र्यां

---

व्याख्यातत्त्वमेतत् । यद्वा तद्व्यतिरेकनिश्चये कार्य्यानुत्पत्तौ त-द्व्यतिरेकनिश्चयाभावस्य कारणतामपेक्ष्य तन्निश्चयस्यैव कारणत्वं युक्तं लाघवादित्यभिप्रायकमिदम् । अत एव स्वरूपासिद्धभा-वतया भेदग्रहाभाव एवानुमितिहेतुरित्यभिप्रायेणाऽस्तु वेत्यादि वक्ष्य-ति । सामान्यतो विशेषदर्शनात् सामान्यतो भ्रमो न स्यात् वि-शेषतस्तु स्यादेवेत्यभिप्रायिकामाशङ्कां निरस्यति न चेति । अस्तु

---

घः । ननूक्तभेदग्रहसामान्यप्रतिबद्धत्वं यदि तादृशभेदग्रहत्वावच्छि-न्नाभावजन्यत्वं तदा स्वरूपासिद्धिः, विशिष्टज्ञानहेतुमते भेदाग्रह-स्यान्यथासिद्धत्वात्, यदि च तादृशाभावनियतोत्पत्तिकत्वं तदा घ-टादिज्ञानविशेषे व्यभिचारः इत्यतो वक्ष्यमाणास्वरसाच्चाह यद्वेति । यद्व्यतिरेकनिश्चय इति । व्याप्तिव्यतिरेकसंशये कार्योत्पादस्य प्रा-गेव स्वहस्तितत्वात्सामान्यतोऽभिधातुं न शक्य इति निश्चय इत्युक्त-म् । अत एव उक्तग्रन्थस्य लाघवाभिप्रायकत्वादेव । वक्ष्यतीति । अन्यथा व्याप्तितात्पर्यकत्वे तामनिराकृत्य भेदाग्रहहेतुत्वाभिधानम-सङ्गतं स्यादिति भावः । इत्यभिप्रायिकामिति । अन्यथा अथेत्यादि-शङ्कानिरासेनैवोक्तशङ्काया निरस्तत्वात्तदुत्थानासङ्गतेरिति भावः । मूले भ्रमानन्तरमित्यत्र भ्रमादनन्तरमित्यपि क्वचित्पाठः । अत्र ल्य-ब्लोपे पञ्चम्या भ्रममुपश्लयेति अर्थः । ननु गृह्यमाणव्याप्त्यवच्छेद-

सत्यां भ्रमानन्तरं परामर्श एव कुतो न भवति । अस्तु वा व्याप्यतया पक्षधर्मतया चावगतस्य भेदाग्रह एवानुमितिहेतुः परामर्शहेतुतया तस्यावश्यकत्वात् । अत एवासन्निकृष्टधूमज्ञानादप्यनुमितिः । न चैवं गौरवम्, तदा विशिष्टज्ञानानुपस्थितेः । न च जनकज्ञानाविरोधिनो ज्ञानस्याप्रतिबन्धकत्वात् भेदग्रहो न प्रतिबन्धक इति वाच्यम् । अभेदज्ञानस्याजनकत्वात् त्वयापि लि-

---

[illegible] । न [illegible] । अभेदज्ञानस्याहेतुत्वे भेदग्रहो न प्रतिबन्धक [illegible] । अभेदेति । तथा चातथाभूतस्यापि

---

कप्रकारेण [illegible] नायामनुमितेरुत्पत्तिस्वीकारात् विशेषतो भेदग्रहस्य प्रतिबन्धकत्वमयुक्तमित्यत आह अभ्युपगमेति । न च भेदाग्रहस्यानुमितिहेतुत्वोपगमे ह्रदवृत्तिवाय्वादेर्वह्निव्याप्यभेदाग्रहदशायां ह्रदो वह्निमानित्यन्यथाख्यातिप्रसङ्गः । पक्षसाध्यादिभेदेन भेदाग्रहस्यापि नानात्वाद्वह्निह्रदान्तर्भावेन व्याप्यभेदाग्रहस्यानुमितौ हेतुत्वाकल्पनादेव ह्रदो वह्निमानित्यन्यथाख्यात्यापत्त्यसम्भवादिति भावः । न चेत्यादिमूलस्य भेदाज्ञानं नानुमितिप्रतिबन्धकमनुमितिजनकज्ञानाविरोधित्वादित्यनुमानपरत्वे स्वमते स्वरूपासिद्धिः स्यादत आह अभेदज्ञानस्याहेतुत्व इति । तथा च भेदज्ञानमनुमितिजनकज्ञानविघटकमनुमितिप्रतिबन्धकज्ञानत्वादिति सामान्यतो व्याप्तयनुमाने मूलतात्पर्यमिति भावः । मूलेऽजनकत्वादित्यस्यासन्निकृष्टादिस्थले परामर्शासत्त्वेनेत्यादिः । दीधितौ अतथाभूतस्य जनकज्ञानाविघटकस्य । तथा चोक्तानुमाने बाध

ङ्गपरामर्शे तादृशस्य प्रतिबन्धकत्वस्वीकाराच्च । अथ गोत्वं मधुरत्वावान्तरजातिर्वा लिङ्गं न स्यात् तद्गतधर्मान्तरस्याभावात् अत एव तस्य विलक्षणत्वात् इति चेन्न । व्यक्तेरेव तत्र प्रकारत्वात् । नहि गौर्गोत्वमिति

---

प्रतिबन्धकत्वमनायत्या वक्तव्यमिति भावः । अतथाभूतत्वस्य सन्दिग्धत्वे व्यभिचारमाह त्वयापीति । विशेषणान्तरदाने चाप्रयोजकत्वमिति भावः । गोत्वे गोपदशक्यतावच्छेदकत्वमविशेषितं विशेषितं वा तदस्तीत्यतो मधुरत्वेति । मधुरत्वव्याप्यो धर्मो जातिरखण्डोपाधिर्वेति फलतो न विशेषः । गौरितिज्ञाने गोत्वप्रकारक-

---

इति भावः । सन्दिग्धत्व इति । यद्यसन्निकृष्टादिस्थले परामर्शादिसम्भवस्तदा स एव जनक इति तद्विरोधितामादायैव साध्यं स्थास्यतीति क्रमेण जनकज्ञानाविरोधित्वस्य सन्दिग्धत्व इत्यर्थः । विशेषणान्तरेति । ग्राह्याभावानवगाहित्वविशेषणेत्यर्थः । अप्रयोजकत्वमिति । व्यभिचारप्रतिसन्धानादित्यादिः । शक्यतावच्छेदकत्वमिति । न्यायमतेनेदम्, तन्मते तु गोपदशक्यत्वमेव तथा बोध्यम् । पशुत्वादेः साध्यत्वे स्वर्गादौ व्यभिचाराद्गोपदशक्यतावच्छेदकत्वेन हेतुत्वासम्भवादाह विशेषितमिति । प्राणिवृत्तित्वादिविशेषितमित्यर्थः । तत् व्याप्यतावच्छेदकम् । मधुरत्वेतीति । मधुरविशेषेत्यादिकं न पदम् । रसवृत्तित्वादिविशिष्टं तदादिपदशक्यतावच्छेदकं च रसत्वादेः साध्यतायां गुणत्वादिकमादाय गुणादौ व्यभिचारीति भावः । गुणगतजातेः परैरनङ्गीकारादाह मधुरत्वव्याप्य इति । फलत इति । उभयथापि तद्गतधर्मान्तराभावताक्षतेः । एवं च मूले जाति-

ज्ञानयोरविशेषः। अन्यथा गोत्वमितिज्ञानस्य निर्विकल्पकत्वापत्त्या व्याप्यत्वग्रहे परामर्शे चानुपयोगात् गवेतरावृत्तित्वे सति सकलगोवृत्तित्वं गोत्वत्वमित्यनुभवा-

---

त्वं विशेषमाशङ्क्याह अन्यथेति। व्यक्तेः प्रकारत्वेऽपि लिङ्गतावच्छेदकत्वासम्भवादाह गवेतरेति। गोत्वत्वस्यात्राप्रवेशान्नात्माश्रयः। अत्र च यथासम्भवं गवेतरासमवेतत्वादिकमेवोपादेयं का-

---

पदमनुगतधर्मपरमिति भावः। विशेषमिति। गोत्वमिति ज्ञानाच्छेदकमित्यर्थः। मूलेऽनुपयोगादिति। सम्बन्धितावच्छेदकरूपेण एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वात् न्यायमते व्याप्तेः हेतुतावच्छेदकगर्भत्वाच्चेति। दीधितावसम्भवादिति। इदं च व्याप्यत्वमिव तदवच्छेदकत्वमपि वृत्तिनियामकेनैव सम्बन्धेनेति प्राचां मतेन, तेनाधेयताविशेषेण गवादिव्यक्तेस्तादात्म्येन गोत्वादिव्यक्तेरेव वा गोत्वादिनिष्ठव्याप्तेरवच्छेदकत्वसम्भवेपि न क्षतिः। ननु सकलगोवृत्तित्वं गोत्वव्यापकत्वमेव वक्तव्यमन्यस्य दुर्वचत्वात् तत्र च गोत्वत्वेन गोत्वप्रवेशादात्माश्रय इत्यत आह गोत्वस्येति। तथा च गोनिष्ठात्यन्ताभावाप्रतियोगित्वादिकमेव तथा वाच्यं तत्र गोत्वस्य स्वरूपतः प्रवेशान्नोक्तदोष इति भावः। ननु सास्नावान् गोत्वादित्यादौ गोत्वत्वघटकस्य सकलगोवृत्तित्वादेर्वैयर्थ्यान्न तादृप्येण हेतुत्वं सम्भवतीत्यत आह अत्र चेति। यथासम्भवमिति। सास्नायाः साध्यत्वे गवेतरासमवेतमात्रं जातित्वादौ साध्ये तादात्म्येन सकलगोसमवेतमात्रं हेतुः कार्यमतो न वैयर्थ्यम्। मूलोक्तविशिष्टं गोपदशक्यतावच्छेदकत्वे साध्ये तादात्म्यसम्बन्धेन हेत्वभिप्रायेण। अन्यथा गवेतरासमवेतगोरूपादौ सकलगोसमवेतद्रव्यत्वादौ च व्यभिचारापत्तेरिति भाव। ननु गवेतरासमवेतस्य वाच्यत्वादेः सास्नाशून्येपि

च। न चैवमनवस्था, तदितरावृत्तित्वे सति तद्वृत्तित्वस्यानुभवेनापलापासम्भवात् ॥

———

लादौ व्यभिचारवारणाय समवायेन सम्बन्धेन हेतुत्वस्यावश्यवाच्यत्वेनाभावादिसाधारण्येऽप्यदोषात् व्यतिरेकेऽपि रूपान्तरेण सम्बन्धान्तरेण च गोत्वाभावस्यापि व्यभिचारितया गवेतरासमवेतस्य तत्त्वेन समवायसम्बन्धेनाभावस्यैव गमकत्वात् ॥

———

सत्त्वात् व्यभिचारेण तावन्मात्रस्य न हेतुत्वं सम्भवतीत्यत आह कालादाविति। अवश्यमिति। अन्यथा विशिष्टस्यापि कालिकविशेषणतासम्बन्धेन कालादौ सत्त्वात् तदुपादानेऽपि व्यभिचारतादवस्थ्यादिति भावः। गोत्वेन सास्नादिसाधने सकलगोसमवेतत्वांशस्य वैयर्थ्येऽपि गोत्वाभावेन सास्नादिव्यतिरेकसाधने हेतुभूताभावप्रतियोगिकाटौ तदवश्यं निवेश्यमन्यथा गवेतरासमवेतस्य वाच्यत्वादेः सर्वत्र सत्त्वाद्गवेतरासमवेतत्वावच्छिन्नाभावस्याप्रसिद्धेरिति मतं निरस्यति व्यतिरेकेपीति। रूपान्तरम् उभयत्वादिसम्बन्धान्तरं संयोगादि। यद्वा ननु व्यतिरेकव्याप्तेर्गमकत्वपक्षे वन्हिमान् नीलधूमादित्यादौ नीलत्वादेरिव सास्नावान् गोत्वादित्यत्रापि सकलगोसमवेतत्वस्य न वैयर्थ्यमखण्डाभावघटकत्वादत आह व्यतिरेकेपीति। व्यभिचारित्वं साध्याभावाव्यापकत्वम्। गमकत्वादिति। तथा च समवायेन गोत्वाभावस्य प्रतियोगितावच्छेदकं गवेतरासमवेतत्वमात्रमित्यखण्डाभावघटकत्वमपि तस्य नेति भावः। अयमालोक इत्यादिमूलमपि पूर्ववत्साध्यसम्बन्धितावच्छेदकरूपवत्त्वव्याप्तिमभिप्रेत्य, धूमत्वादिसन्देहदशायां तद्घटितस्य व्यापकसामानाधिकरण्यस्य निश्चयासम्भवादिति ध्येयम् ॥

इति परामर्शपूर्वपक्षः।

———

अत्रोच्यते । अयमालोको धूमो वा उभयथापि व-
ह्निव्याप्य इति ज्ञानं ततोऽनुमितिः । न च धूमत्वेना-
लोकत्वेन वा तत्र निश्चयः । अथ तदन्यान्यत्वमेव तत्र
लिङ्गम् । न च तदज्ञानदशायामनुमितिदर्शनात् न त-
थेति वाच्यम् । धूमालोकान्यान्यत्वज्ञानं विना तत्रापि
तत्र व्याप्यत्वानिश्चयेन तदर्थं तद्बोधावश्यकत्वादिति
चेन्न । न हि धूमालोकान्यान्यत्वं धूमान्यान्यत्वं वा

———

लिङ्गं लिङ्गतावच्छेदकम् । तथा च न व्यभिचारः । न तथा
न तेन व्यभिचारवारणम् । न हीति । धूमान्यान्यत्वमिति दृष्टान्ता-

———

## अथ परामर्शसिद्धान्तः ।

धूमालोकान्यतरत्वस्य वन्हिव्यभिचारित्वादत आह लि-
ङ्गतावच्छेकमिति । अग्रेतनतथाशब्देन व्यभिचारवारणं परा-
मर्शयितुं पूरयन्ति तथा च न व्यभिचार इति । व्याप्य-
तावच्छेदकप्रकारकनिश्चयस्यानुमितौ न व्यभिचार इत्यर्थः । आ-
लोकत्वाद्यनवच्छिन्नलिङ्गकानुमितिं प्रत्येव धूमत्वाद्यवच्छेदेन व्या-
प्तिनिश्चयः कारणमित्याशयेनेदम् । धूमत्वाद्यवच्छिन्नलिङ्गकानुमि-
तिं प्रत्येव तदवच्छेदेन व्याप्तिनिश्चयस्य हेतुत्वे प्रकृतानुमिते-
रतथात्वेन व्यभिचारशङ्कया अप्यसम्भवात् । विशेषसामग्रीसहि-
ताया एव सामान्यसामग्र्याः कार्यजनकत्वनियमस्यैव वा प्रकृते व्य-
भिचारो बोध्यः । अन्यतरत्वस्याज्ञानदशायामनुमित्युत्पादेन तस्य

व्याप्यतावच्छेदकं गौरवात् व्यभिचारावारकविशेषणवत्त्वाच्च। किन्तु धूमत्वादिकम्, तच्च तत्र सन्दिग्धमेव। ननु तदन्यान्यद्वह्निव्याप्यमेव व्यभिचाराभावेन व्याप्तिविरहसाधनस्य बाधितत्वात्, पुरुषस्तु तत्र नीलधूमवत्त्वादित्यत्रेवाऽधिकेन निगृह्यते न तु व्याप्यत्वासिद्ध्येति चेन्न। तदन्यान्यत् धूमालोकस्वरूपमेव तच्च व्याप्यमिति सत्यम्। न च वस्तुगत्या व्याप्यज्ञानादनुमितिः, अतिप्रसङ्गात्, किन्तु व्याप्यतावच्छेदकप्रकारकज्ञानात्। न

---

र्थम्। न चैकधर्मस्यावच्छेदकत्वापेक्षया धर्मद्वयस्य तत्त्व एव गौरवमिति वाच्यम्। तादृशैकधर्मघटकानेकभेदादिघटकतया धर्मद्वयस्यैव प्रथमोपस्थितत्वेन चावच्छेदकत्वौचित्यात्। अन्यथा वह्न्यादीनामपि व्याप्यतया तावदन्यतमत्त्वस्यैवावच्छेदकत्वं स्यात्।

---

व्याप्त्यनवच्छेदकत्वे धूमत्वमप्यवच्छेदकं न स्यात्तद्ज्ञानेप्यालोकादिना वह्न्यनुमानादतो व्याचष्टे न तेनेति। धूमत्वादिसन्देहदशोत्पन्नानुमितौ व्याप्यतावच्छेदकप्रकारकनिश्चयस्य व्यभिचारवारणं नेत्यर्थः। अनुक्तोपालम्भं परिहरति दृष्टान्तार्थामिति। तथा च मूले वाशब्द इवार्थ इति भावः। तटस्थः शङ्कते न चेति। यथाश्रुते गुरूणां धूमत्वस्यानवच्छेदकत्वे तदवच्छेदेन व्याप्तिज्ञानदशायामनुमित्यपलापापत्तेरिति ध्येयम्। एकधर्मः धूमालोकान्यतरत्वरूपः। धर्मद्वयं धूमत्वालोकत्वरूपम्। तत्त्वे व्याप्यतावच्छेदकत्वे। घटकतयेति। तथा च धर्मद्वयस्यावच्छेदककोटिप्रवेशावश्यकत्वे तन्मात्र प्रवाव-

च तदन्यान्यत्वं वह्निव्याप्यतावच्छेदकमित्युक्तम् । न चैवं तदन्यान्यत्वाद्वह्निव्याप्यत्वमपि तत्र नानुमेयं व्यर्थविशेषणत्वादिति वाच्यम् । प्रत्यक्षं हि तदन्यान्यत्वविशेषदर्शनाद्व्याप्यत्वज्ञानं जनयति विशेषणज्ञानविशेषणविशेष्यसम्बन्धविशेषणविशेष्येन्द्रियसन्निकर्षतदसंसर्गाग्रहविशेषदर्शनानां सत्त्वेन वह्निव्याप्यत्वप्रत्यक्षसत्त्वात् । न चैवं न प्रत्यक्षेऽपि तदन्यान्यत्वज्ञानं सहकारीति वाच्यम् । अन्वयव्यतिरेकाभ्यां गुरोरपि तस्य विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वात् । तस्मात्तदन्यान्य-

---

अन्वयेति । विशेषदर्शनं हि विपरीतज्ञानविरोधिया प्रत्यक्ष उपयुज्यते तत्त्वञ्चान्यतरत्वदर्शनस्यापि व्यावर्त्तकधर्मदर्शनत्वेनाक्षतम् ।

---

च्छेदकत्वं कल्प्यते लाघवादिति भावः । अन्यथा अनुगतैकधर्मस्यैव एव लघुनानाधर्मस्यानवच्छेदकत्वे । स्यादिति । तथा च धूमालोकान्यतरत्वमुपादाय व्यभिचारेणं व्याहन्येतेति भावः । व्याप्यत्वज्ञाननिश्चयस्यैव विशेषदर्शनत्वाद्वह्निव्याप्तिव्याप्यत्वेनान्यतरत्वदर्शनस्योपयोगित्वमसम्भावि व्यर्थविशेषणत्वादन्यतरत्वे वह्निव्याप्तिव्याप्यत्वाग्रहादत आह विशेषदर्शनं हीति । स्वमते कारणत्वाभावादुक्तमुपयुज्यत इति तत्त्वम् विपरीतज्ञानविरोधित्वम् । व्यावर्त्तकेति । यद्धर्मावच्छेदेन यदसंसर्गाग्रहस्तद्धर्मवत्तानिश्चयस्यापि व्यावर्त्तकधर्मदर्शनत्वस्य परैः स्वीकृतत्वात् । अन्यथेन्धनत्वावच्छेदेन सौरभासंसर्गाग्रहदशोत्पन्नस्यैदमिन्धनमितिज्ञानस्य सत्त्वेपि इदं सुरभि न वेति सन्देहप्रसङ्गात् । अनुमितौ तु व्याप्त्यसंसर्गाग्रहस्य हेतुत्वे द्र-

त्वज्ञानं तत्र व्याप्यताज्ञानोपक्षीणं न तु साक्षादनुमिति-हेतुरिति । किञ्च वह्निव्याप्यवानयमितिशाब्दज्ञाने व्याप्यत्वज्ञानं कारणमित्यन्यत्रापि तथा । अथ वह्निव्याप्यत्वमपि वह्निव्याप्यतावच्छेदकम्, तथा हि, वह्निनिरूपिता धूमादिप्रत्येकवृत्तिरेव व्याप्तिर्व्याप्तित्वेन सकलधू-

---

अत्र च तदन्यान्यत्वस्यातिरिक्तत्वे धूमत्वत्वादेस्तदवृत्तित्वात् धूमत्वादिरूपत्वेऽपि च धूमत्वत्वादेरप्रवेशाल्लिङ्गत्वेऽपि न वैयर्थ्यमित्यपि द्रष्टव्यम् । एवञ्चान्यतरत्वस्य व्याप्यतानवच्छेदकत्वे स्थिते तदवच्छेदेन तद्ग्रहोपगमे तत्राप्यन्यथाख्यातिस्वीकारप्रसङ्गः।अस्तु वा गुरुरपि धर्मोऽवच्छेदकस्तथापि शुद्धव्याप्तिप्रकारकज्ञानस्थले व्यभिचारान्न तस्य हेतुत्वमित्याह किञ्चेति । वन्हीत्यादि । व्याप्ते-

---

व्यत्वावच्छेदेन वन्हिव्याप्यत्वासंसर्गाग्रहदशायां द्रव्यत्ववज्जलमिति ज्ञानात् जलं वन्हिमदित्यन्यथाख्यात्यापत्तेरिति भावः।अथायं वन्हिव्याप्यो धूमालोकान्यतरत्वात् इत्यनुमाने व्यर्थविशेषणत्वाभावादन्यतरत्वस्य विशेषदर्शनविधयोपयोगित्वानुधावनं मौलमनुचितमतस्तदपि समुच्चिनोति अत्रेति । अतिरिक्तत्वे धूमत्वाद्यतिरिक्तत्वे। तदवृत्तित्वादिति । तदन्यान्यत्वावृत्तित्वादित्यर्थः । तथा च भिन्नधर्मत्वान्न वैयर्थ्यम्।धूमत्वादिरूपत्वेपीत्यपिकारोऽनास्थायाम् । आलोके धूमे चानुगतप्रत्ययानुरोधेन धूमालोकान्यतरत्वस्यातिरिक्तस्यैव युक्तत्वात् । अन्यथाऽतिरिक्ताभावमात्रासिद्धिप्रसङ्गात् इति ध्येयम् । अन्यतरत्वस्य व्याप्यतानवच्छेदकत्वेपि तदवच्छेदेन व्याप्तिग्रहादनुमितौ बाधकाभावः इत्यत आह एवं चेति । शुद्धेति । साध्यवदन्यावृत्तित्वरूपस्य साध्यसम्बन्धितावच्छेदकरूपवत्त्वस्य वा धूमत्वाद्यघटितव्याप्यत्वस्य ज्ञानस्थले इत्यर्थः । व्यभिचारादिति । पूर्ववद्व्या-

मादिवृत्तिव्याप्यत्वच्छेदिका आश्रयभेदेनावच्छेदकभेदेन च व्याप्तिभेदादिति चेन्न । सकलधूमादिवृत्तिव्याप्तौ मानाभावात् । यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तिबुद्धौ शाब्दव्याप्यत्वबुद्धौ च प्रत्येकवृत्तिव्याप्याश्रयत्वस्यैव विषयत्वात् प्रत्येकवृत्तिव्याप्तिज्ञानं विना तदबोधाभावा-

---

व्याप्यत्वनवच्छेदकत्वादिति भावः । मानाभावादिति । वस्तुतो विशेषव्याप्यत्वच्छिन्ना महाव्याप्तिरतिरिच्यताम् किं तेन, न हि वस्तुतो व्याप्यत्वच्छेदकप्रकारकं पक्षधर्म्मताज्ञानं हेतुरतिप्रसङ्गात् परन्तु यदवच्छेदेन व्याप्तिर्गृह्यते तत्प्रकारकम् । न च तदानीं व्याप्यत्वच्छेदेन व्याप्तिर्गृह्यते, न च तदग्रहेऽनुमितिरपलपनीया, मानाभावात् कल्पयत्वाविशेषे लघुरूपावच्छिन्नस्यैव नियतपूर्वव-

---

र्त्त्येयम् । तस्य व्याप्यतावच्छेदकप्रकारकज्ञानस्य । ननु शाब्दस्थले व्याप्यत्वावच्छेदेन व्याप्तिग्रहादेवानुमितिरिति प्राक् परैरुक्तमतो न व्यभिचार इत्यत आह व्याप्तेरिति । तथा चाभेदेनैवावच्छेद्यावच्छेदकभावविरहाद्व्याप्यत्वच्छेदेन व्याप्तिग्रहस्वीकारे परेषामन्यथाख्यातिप्रसङ्ग इति भावः । ननु वन्हिमदन्यावृत्तित्वावच्छिन्नव्यापकीभूतवन्हिसामानाधिकरण्यरूपाया एव महाव्याप्तेः सर्वसिद्धत्वान्मानाभावादित्यसङ्गतमत आह वस्तुत इति । वन्हिमदन्यावृत्तित्वरूपविशेषव्याप्यत्वावच्छिन्ना वन्हेर्महाव्याप्तिर्धूमादिप्रत्येकघटितव्याप्तितोऽतिरिच्यतामित्यर्थः । अतिप्रसङ्गात् धूमवान् पर्वत इत्याकारकज्ञानमात्रादप्यनुमितिप्रसङ्गात् । तत्प्रकारकमिति । पक्षधर्मताज्ञानं हेतुरिति पूर्वेणान्वयः । तदानीं शाब्दपरामर्शदशायाम् । तदग्रहे व्याप्यत्वावच्छेदेन व्याप्यत्वाग्रहे । कल्प्यत्वेति । मम अतीन्द्रियादिस्थले

ष्टितायाः कल्पयितुं युक्तत्वात् । एतेन व्याप्तिग्रहविषयधर्मिमात्रवृत्तिधर्मप्रकारकं पक्षधर्मताज्ञानं हेतुरित्यपास्तम् । सामान्यलक्षणानङ्गीकारे धूमत्वादेरपि तथात्वायोगात् वन्हिव्याप्यं सर्वं प्रमेयं धूमवान् पर्वत इति ज्ञानादप्यनुमितिप्रसङ्गाच्च । व्याप्तिसमानाधिकरणत्वेन तादृशधर्मभानोक्तौ च सा धूमव्यक्तिर्वन्हिव्याप्येति ज्ञा-

---

विशिष्टज्ञानस्यैव तत्रापि शाब्दपरामर्शस्थले व्याप्यतावच्छेदकप्रकारकज्ञानस्य कल्प्यत्वेऽवच्छेदकलाघवमादृत्य व्याप्तिप्रकारकनिश्चयत्वेनैव हेतुत्वस्य युक्तत्वादित्यर्थः । शाब्दपरामर्शसंग्राहकं प्रकारान्तरमाशङ्क्य निराचष्टे न चेति । एतेनेत्यपि क्वचित्पाठः । स च न सन्दर्भशुद्धः । धूमो वन्हिव्याप्यवादित्याकारकव्याप्तिग्रहस्य विशेष्यवृत्तित्वं द्रव्यत्वादेरपीति तत्प्रकारकपक्षधर्मताज्ञानादनुमितेर्वारणार्थं मात्रपदम् । न च विशिष्टसत्त्वं द्रव्यत्वव्याप्यं सत्त्ववच्च द्रव्यमित्यादिज्ञानादनुमित्यापत्तिः । विशिष्टसत्त्वे साध्यवदन्यावृत्तित्वरूपायां व्याप्तेरसत्त्वे परमते तत्र व्याप्तिग्रहविशेष्यत्वस्यैवासम्भवात् । तथात्वायोगादिति । व्याप्तिग्रहविशेष्यमात्रवृत्तित्वायोगादित्यर्थः । सामान्यलक्षणाविरहेणासन्निकृष्टधूमादेः प्रत्यक्षासम्भवात् । तथा च वन्हिव्याप्यो धूमो धूमवांश्च पर्वत इत्यादिप्रत्यक्षस्थलीयानुमितौ व्यभिचारः । दूषणान्तरमाह वन्हिव्याप्यमिति । यद्वा ननु सामान्यलक्षणावादिनां नैयायिकानामुक्तरूपेण हेतुत्वं सम्भवत्यत आह वन्हिव्याप्यमित्यादि । वन्हिव्याप्यत्वेनालोकस्य भाने धूमत्वस्य व्याप्तिग्रहविशेष्यवृत्तित्वमेव न सम्भवतीत्यतः सर्वमित्युक्तम् । वन्हिव्याप्यसर्वयोः परस्परमुद्देश्यविधेयभावे बाध इत्यतो वन्हिव्याप्ये सर्वस्मिन् धर्मान्तरं विदधाति प्रमेयमिति । व्याप्तीति । व्याप्तिग्रहधर्मितावच्छेदकविधया तादृशधर्मस्य भानोक्तावित्यर्थः । तेन धूमो वन्हिव्याप्य इत्यादिज्ञाने व्याप्तिसमानाधिकरणत्वस्याप्रकारत्वेऽपि न क्षतिः । धूमत्वावच्छेदेन व्याप्तिग्रहे तत्रानुमिताविष्टापत्तिरतस्तदनवच्छेदकत्वसूचनायोक्तं सा धूमव्यक्तिरिति । पक्षावृत्तिधूमव्यक्तिरित्यर्थः । उक्तज्ञानादिति । वन्हिव्याप्यं सर्वं प्र-

नसहितादुक्तज्ञानात्तत्प्रसङ्गो वन्हिव्याप्यवानिति शाब्दज्ञानासंग्रहः । अत एव व्याप्यत्वभानांशे प्रकारतया यस्तादृशो धर्मो भासते तत्प्रकारकं पक्षधर्मताज्ञानं हेतुः, वन्हिव्याप्यवानित्यत्र च वन्हिव्याप्यत्वमेव तथा धूमवानित्यादौ च धूमत्वादिकम्, धूमसमानाधिकरणेत्यादिव्याप्तिज्ञाने तस्यापि प्रकारकत्वादिति परास्तम् । धूमसमानाधिकरणवन्हिव्याप्यं सर्वं प्रमेयं धूमवानयं प्रमेयत्वव्याप्यं सर्वमभिधेयं समानाधिकरणवांश्चायमित्यादिज्ञानादप्यनुमित्यापत्तिः । न च धूमत्वादेरतिरिक्तवृत्तित्वग्रहे स एव प्रतिब-

---

मेयमित्याद्युक्तज्ञानादनुमितिप्रसङ्ग इत्यर्थः । ननु व्याप्त्यनतिरिक्तवृत्तित्वेन तादृशधर्मस्य भानं वाच्यं तथा च सा धूमव्यक्तिर्वन्हिव्याप्येत्यत्र धूमत्वस्य तदनवगाहनान्नातिप्रसङ्ग इत्यत आह वन्हिव्याप्यवानिति । तेन व्याप्तिसामानाधिकरण्यादेः कुत्राप्यविषयीकरणादिति भावः।अत एव वक्ष्यमाणदोषादेव। परास्तमित्यग्रेतनेनान्वयः । व्याप्यत्वभानांश इति। व्यभिचारधीविरोधितावच्छेदकप्रकारितान्तर्भूतप्रकारताशालीत्यर्थः । तेन व्यापकसामानाधिकरण्यसाध्यवदन्यावृत्तित्वरूपद्वयोरेव व्याप्त्योः प्रवेशान्नाग्रिमग्रन्थासङ्गतिरिति ध्येयम् । तादृशः व्याप्तिग्रहविशेष्यमात्रवृत्तिः। तेन वन्हिव्याप्यो धूमो वन्हिसमानाधिकरणवांश्च पर्वत इत्यादिबुद्धेर्व्युदासः । तथा निरुक्तधर्मः । तस्यापीति । धूमत्वादेरपीत्यर्थः । धूमेत्यादि । व्याप्यत्वभानांशे धूमत्वस्य प्रकारतासम्पत्त्यर्थं धूमसमानाधिकरणवन्हित्वेन साध्यत्वानुसरणम् । व्याप्तिस्त्वत्र साध्यवदन्यावृत्तित्वरूपैव प्रविष्टा धूमव्यापकवन्हिसामानाधिकरण्यरूपव्याप्तेः प्रवेशेऽनुमिताविष्टापत्तिः । अत एव व्यापकसामानाधिकरण्यरूपव्याप्तिं निवेश्यापि दोषमाह प्रमेयत्वव्याप्यमित्यादि । समानाधिकरणत्वं न वन्हिव्याप्तिग्रहविशेष्यमात्रवृत्ति इत्यतो वन्हिव्याप्यं सर्वमित्यपहाय प्रमेयत्वव्याप्यमित्युक्तम् । इत्यादीत्यादिपदादवृत्तिमांश्चायं वन्हिव्याप्यं सर्वं प्रमेयं वन्हिमांश्चायमित्यादेरुपग्रहः। अतिरिक्तवृत्तित्वेति । व्या-

न्धकस्तद्ग्रहे त्वनुमिताविष्टापत्तिरिति वाच्यम् । एवंविधेष्टाप-त्त्यैव सर्वत्र प्रतीकारे विशेषणानुसरणवैयर्थ्यात् व्यभिचाराग्रह-पक्षधर्मताज्ञानयोरेव हेतुत्वस्य सुवचत्वात्। किञ्च पुरुषान्तरस्य त-स्यैव वा कालान्तरे वर्त्तमानं व्याप्तिग्रहमादायातिप्रसङ्गस्य भङ्गाय स्वसमानकालीनस्वसमानाधिकरणव्याप्तिग्रहविषयधर्मिमात्रवृत्तिध-र्मप्रकारकं पक्षधर्मताज्ञानं वाच्यं तथा च स्वत्वस्याननुगतत्वात्का-रणतावच्छेदकस्य तत्तद्व्यक्तिमात्रपर्य्यवसायित्वे मिथो व्यभिचारः तत्तत्पक्षधर्मताज्ञानत्वेनैव हेतुत्वसम्भवेऽधिकवैयर्थ्यञ्च । एतेन गृ-ह्यमाणव्याप्त्यवच्छेदकताकेत्याद्युपदर्शितप्रकारद्वयमपि प्रत्युक्तं वे-दितव्यम् । एवं यद्धर्मावच्छेदेन व्याप्तिज्ञानं तद्धर्मप्रकारकं पक्षध-



सत्त्वभाववद्वृत्तित्वेत्यर्थः। विशेषणं व्याप्तिग्रहविशेष्यमात्रवृत्तीत्यादि-कम् । ननु विशेष्यतावच्छेदकविधया व्याप्यत्वभानांशे प्रकारीभूतो यस्तादृशधर्मस्तत्प्रकारकमेव पक्षधर्मताज्ञानं हेतुर्वाच्यम् उक्तस्थलद्व-ये च धूमत्वादिकं व्याप्तिघटकमपि न विशेष्यतावच्छेदकविधयैव प्रकारीभूतमतो नातिप्रसङ्ग इत्यत आह किं चेति । अतिप्रसङ्ग-भङ्गेति । पक्षधर्मताज्ञानमात्रदशायामनुमितेर्वारणायेत्यर्थः । स्वस-मानाधिकरणेत्यादौ स्वपदं तत्तत्पक्षधर्मताज्ञानपरम् । तत्पक्षकत-त्साध्यकानुमितित्वावच्छिन्नं प्रति हेतुत्वे मिथो व्यभिचारः, तत्तद-नुमितिं प्रति हेतुत्वं पुनराह तत्तदिति । अधिकं व्याप्तिग्रहविशेष्य-मात्रवृत्तिधर्मप्रकारकत्वादिकम् । एतेनेति । उक्तयुक्त्या स्वसमान-कालीनत्वादिप्रवेशादननुगतत्वेनेत्यर्थः । निरस्तमित्यग्रिमेणान्वयः। प्रकारद्वयमिति। पक्षधर्मताग्रहप्रकारीभूतधर्मावच्छिन्नविशेष्यताक-व्याप्तिज्ञानमादाय द्वित्वमवसेयम् । प्रत्युक्तमिति । अत्रापि स्वसमा-नकालीनत्वादेरवश्यं प्रवेशनीयतया अननुगतत्वादिति भावः । ननु तद्धर्मावच्छिन्नविशेष्यकव्याप्तिज्ञानविशिष्टतद्धर्मावच्छिन्नप्रकारकप-क्षधर्मताज्ञानत्वेनैव हेतुत्वं वाच्यं वैशिष्ट्यं चात्र एककालावच्छेदेने-

मताज्ञानं हेतुरित्यपि परास्तम् । तद्धर्मविश्रान्तमूर्त्तिकत्वेनाप्यननुगतत्वाच्च । यत्रेच्छा तत्साधनताज्ञानस्येच्छाहेतुत्वेऽपि समानमिति चेत् । सत्यम्, प्रतिवक्ष्यते हि तत्र लघुगुरुरूपाभ्यां युगपदुपस्थि-

———

कात्मवृत्तित्वमतो नातिप्रसङ्गो न वाऽननुगम इत्यत आह तद्धर्मेति । यत्त्वतत्त्वयोरित्यादिः । तथा च नव हेतुतावच्छेदकीभूतं धूमत्वादिकमन्तर्भाव्यानन्तकार्यकारणभावकल्पने गौरवमस्माकं तु तत्तत्साध्यव्यभिचारधीविरोधितावच्छेदकीभूतप्रकारित्वावच्छिन्नतत्पक्षधर्मतानिश्चयत्वेनैवानुगतरूपेण तादृशनिश्चयोत्तरतत्पक्षसाध्यकानुमितिसामान्यं प्रति हेतुत्वमित्याशयः । नन्वेवं कालान्तरीयपुरुषान्तरीयफलेच्छाविषयतामादायातिप्रसङ्गादुपायेच्छां प्रति इष्टसाधनताज्ञानत्वेन हेतुत्वं तवापि दुर्घटमित्याशयेन शङ्कते यत्रेति । प्रतिवक्ष्यत इति । फलेच्छायाः फलसाधनताज्ञानस्य च द्वयोरेव सामानाधिकरण्यप्रत्यासत्त्योपायेच्छां प्रति हेतुत्वं न त्विच्छाविषयफलसाधनताज्ञानत्वेन हेतुत्वं येनातिप्रसङ्गः स्यादिति भावः । इदमत्रावधेयम् । भोजनेच्छासामान्यं प्रति न तृप्तीच्छात्वेन हेतुत्वं दुःखनिवृत्तीच्छया जनितायां व्यभिचारात् किन्तु तृप्तीच्छाविशिष्टतृप्तिसाधनताज्ञानोत्तरभोजनेच्छादिकं प्रत्येव तृप्तीच्छात्वेन भोजनधर्मिकतृप्तिसाधताज्ञानत्वेन च द्वयोर्हेतुत्वं सुखादेरिवेच्छाया अपि विजातीयमात्रारम्भकत्वस्य मिश्राद्युक्तस्य प्रामाणिकत्वे तादृशभोजनेच्छां प्रति तृप्तीच्छाविशिष्टतृप्तिसाधनताज्ञानत्वेनैव हेतुत्वं वाच्यम् । केचित्तु भोजनधर्मिकतृप्तिसाधनतादिधीजन्यभोजनेच्छात्वाद्यवच्छिन्नं प्रत्येव तृप्तीच्छात्वेन हेतुत्वम् । न च तृप्तिसाधनताधीजन्यतावच्छेदकधर्मस्यापरिचयात्तृप्तीच्छाजन्यभोजनेच्छात्वस्य तथात्वे चान्योन्याश्रय इति वाच्यम् । भोजनत्वप्रकारकतत्तादिच्छां प्रति तृप्तिसाधनत्वावगाहितत्तज्ज्ञानत्वेन विशेषतो हेतुत्वं गृहीत्वा पश्चात्तज्जन्यतासम्बन्धेन तृप्तिसाधनताज्ञानविशिष्टस्य भोजनेच्छात्वस्य तृप्तीच्छाजन्यतावच्छेदकत्वात् । तत्तज्जन्यव्यक्तीनामननुगमेपि सम्बन्धविधया तासां प्रवे-

त् । अपि च यत्र धूमत्वव्याप्त्योर्वैशिष्ट्यं प्रथममेव प्रत्यक्षेण युगपत्पक्षधर्मे भासते तत्र लाघवात् व्याप्यत्व-

---

तौ लघुरूपावच्छेदेनैव कारणत्वं कल्प्यते लाघवात् नियमादेरेकतररूपावच्छेदेनाप्यक्लृप्तत्वात् इत्याशयवानाह अपि चेति । ननु स्वसमानाधिकरणाभावेत्यादिव्याप्तौ स्वपदार्थस्यैकस्याभावेन धूमादिकमेव विशिष्य उपादेयं तत्र च धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवन्हित्वावच्छिन्नवन्हिसमानाधिकरणेन्धनवानयमिति ज्ञानादप्यनुमितिप्रसङ्गेन तादृशवन्हिसमानाधिकरणधूमत्वं

---

शे क्षत्यभावात् । स्वरूपसम्बन्धेन हेतुहेतुमद्भावस्थले सम्बन्धाननुगमस्य सर्वैरेव स्वीकारादिति । यत्तु फलसाधनताया अपि उपायेच्छाविषयत्वाद्भोजनधर्मिकतृप्तिसाधनताज्ञानत्वेन तृप्तिसाधनताप्रकारतानिरूपितभोजनत्वावच्छिन्नोद्देश्यताकेच्छात्वेन हेतुहेतुमद्भावं गृहीत्वा पश्चात्तृप्तिसाधनताधीजन्यभोजनत्वावच्छिन्नं प्रति तृप्तीच्छात्वेन हेतुत्वं ग्राह्यमिति । तत्तुच्छम् । उपायेच्छायाः फलसाधनताविषयकत्वे मानाभावात् । तृप्तिसाधनं भोजनं जायतामित्याकारकेच्छानुभवस्य सन्दिग्धत्वात् । अत एवेच्छायाः स्वजनकज्ञानयावत्प्रकारप्रकारवत्त्वनियमस्योपायेच्छायामिष्टसाधनत्वाप्रकारतया व्यभिचारः शब्दालोके मिश्रैरप्युक्तः । न च प्रकारान्तरेण जन्यत्वस्य दुर्वचत्वात्तृप्त्यादीष्टसाधनताज्ञानजन्यतावच्छेदकतयैवोपायेच्छायां तृप्त्यादीष्टसाधनताविषयकत्वसिद्धिः । विनिगमनाविरहेण क्लृप्ततत्तदनन्तपदार्थविषयकत्वस्याप्यवच्छेदकत्वापत्तेरिष्टसाधनत्वापेक्षया लघुनः कस्य चिद्धर्मान्तरस्यैव जन्यतावच्छेदकतया कल्पयितुमुचितत्वाच्चेति दिक् । नियमादेरित्यादिपदादन्यथासिद्धत्वसंग्रहः । तादृशेति । धूमव्यापकेत्यर्थः । हेतुत्वं युक्तमिति शेषः । उप-

व्याप्तिस्तत्प्रकारकमेव च पक्षधर्मताज्ञानमननुगतमपि हेतुरिति वक्तव्यम्, तथा च यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तत्प्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम्। अयं वन्हिव्याप्यवान् धूमो वन्हिव्याप्योऽयं धूमवान् वन्हिर्धूमव्यापकोऽयं धूमवानित्यादिप्रकारविशिष्टव्यापकत्वात् । न तूपदर्शितव्याप्तिप्रकारकज्ञानत्वेन, अव्यापकत्वात्।किञ्चान्यथाख्यातिवादिभिर्धूमादिसमानाधिकरणात्यन्ताभावाप्रतियोगिगगनसमानाधिकरणधूमादिमानयमिति ज्ञानादनुमित्यङ्गीकारादखण्डव्याप्तेश्चाप्रसिद्धतया प्रकारकत्वासम्भवात् साध्ये साधनव्यापकत्वग्राहकमधिकरणादौ च साध्यीयत्वावगाहि पक्षे च तादृशसाधनवत्त्वावगाहि यज्ज्ञानं तत्त्वेन कारणत्वं वाच्यम्, तथा च लाघवात्तादृशव्यापकत्वपक्षधर्मत्वावगाहितयैव कारणतावच्छेदक-

---

दर्शितेति । धूमव्यापकवन्हिसमानाधिकरणधूमत्वादिरूपेणेत्यर्थः । अव्यापकत्वादिति। धूमव्यापको वन्हिर्धूमवांश्चायमित्यादिज्ञानाव्यापकत्वादित्यर्थः। अखण्डव्याप्तेरिति । इदमुपलक्षणम्। धूमलिङ्गकवन्ह्याद्यनुमितिस्थलेऽखण्डव्याप्तिसत्त्वेऽपि तदविषयकाद्वन्हित्वधूमत्वादिरूपेण गुञ्जावाष्पादिविषयकपरामर्शादनुमित्युत्पादेनापि खण्डशो निरुक्तिः कर्तव्येति ध्येयम्। साधनव्यापकत्वग्राहकमिति । व्यापकत्वावगाहीत्यर्थः। अधिकरणादावित्यादिपदेन साधनस्य साध्यीयत्वादीत्यादिपदेन चाधिकरणवृत्तित्वस्य सङ्ग्रहः। लाघवादिति। साध्यसामानाधिकरण्यविषयत्वाप्रवेशे लाघवादित्यर्थः। इदं तु विशेष्ये विशेषणमित्यादिक्रमेणोत्पन्नपरामर्शादप्यनुमितिरिति मतेन। अन्यथा व्याप्तिविशिष्टहेतुवैशिष्ट्यनिरूपितविलक्षणविषयताविशेषस्य कारणतावच्छेदकत्वे गौरवासंभवादिति ध्येयम्। तथा अवृत्तिगगनादिहेतुकानुमितिस्थले गगनव्यापकाप्रसिद्ध्या तदवगाहित्वस्य कारणतावच्छेदकत्वमसम्भवीत्यत आह अवृत्तीति । खण्डश इति ।

त्वमद्वृत्तिहेत्वनुरोधेन व्यापकत्वस्यापि खण्डशो निरुक्तिस्तेषां परमतिरिच्यते, यथा च सामानाधिकरण्यज्ञानस्य हेतुत्वेऽपि न क्षतिस्तथा वक्ष्यते इति चेन्न। गृह्यमाणव्याप्यतावच्छेदकताकेत्यादिप्रकारद्वयोक्तदूषणग्रस्तत्वात् वन्ह्यसन्ताभाववद्वृत्तिधर्मवानयमित्यादिज्ञानादप्यनुमित्युदयाच्च व्यभिचारज्ञानविरोधिज्ञानविषयत्वे-

---

तथा चाधिकरणे साधनीयत्वाद्यवगाहि अभावे साधनाधिकरणवृत्तित्वावगाहीत्यादिक्रमेणैव साधनव्यापकत्वावगाहित्वं निर्वाच्यमिति भावः। तेषामन्यथाख्यातिवादिनाम्। अस्माकं तु कारणबाधात्तत्रानुमितिरेव नोत्पद्यते किं तु पक्षे साध्यस्य असंसर्गाग्रहमात्रमिति भावः। ननु सामानाधिकरण्यबुद्धेरहेतुत्वे साध्यासमानाधिकरणत्वेन पक्षे हेतुमत्त्वग्रहेऽप्यनुमितिः स्यादत आह तथा चेति। वक्ष्यत इति। साध्यवत्ताबुद्धिमात्रं प्रत्येव साध्यासमानाधिकरणधर्मवत्तानिश्चयत्वेन विरोधित्वात्तदानीं साध्यस्य प्रत्यक्षवदनुमित्यसम्भवादिति भावः। यद्धर्मविशिष्टव्यापकत्वं साध्ये गृह्यते तत्प्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वमिति प्रथमकल्पे दूषणमाह गृह्यमाणेत्यादि। अतिप्रसङ्गभङ्गाय तत्कालीनत्ववत्तत्पुरुषीयत्वेन व्यापकताग्रहस्य प्रवेश्यत्वादननुगम इत्यर्थः। साध्ये हेतुव्यापकत्वावगाहिपक्षधर्मिकहेतुमत्त्वनिश्चयत्वेन कारणत्वमिति किञ्चेत्याद्युक्तद्वितीयकल्पे नोक्तदोषः सम्भवतीत्यतः कल्पद्वयसाधारणं दोषमाह वन्ह्यभावेति। वन्ह्यभाववद्वृत्तित्वं गगनादावतिप्रसक्तमतो धर्मपदं वृत्तिमदर्थकम्। ननु केवलान्वय्यनुरोधेन व्यापकसामानाधिकरण्यज्ञानस्यैव त्वन्मते अनुमितिहेतुत्वादुक्तस्थले अनुमितिरसिद्धैवेत्यत आह व्यभिचारेति। अत्र वदन्ति। वस्तुगत्या यो वन्ह्यादिव्यभिचारधीविरोधिधीविषयः तत्प्रकारकपक्षधर्मतानिश्चयत्वेन न वन्ह्याद्यनुमितिहेतुत्वं वन्हिसमानाधिकरणवान् पर्वत इत्यादिज्ञानतोऽपि वन्ह्याद्यनुमित्यापत्तेः। यादृशविशिष्टविषयकत्वेन वन्ह्यादिव्यभिचारग्रहविरोधित्वं तत्प्रकारकत्वोक्तौ च व्यापकसामानाधिकरण्यग्रहासङ्ग्रहः। वन्हिधर्मि-

कधूमव्यापकतानिश्चयत्वेनैव धूमधर्मिकव्यभिचारग्रहविरोधितया साध्यसामानाधिकरण्यस्य तत्राप्रवेशात् समानाकारकज्ञानस्यैव विरोधितया व्यापकताज्ञानस्यापि व्यभिचारग्रहप्रतिबन्धकत्वासम्भवाच्च । तस्माद् धूमलिङ्गकवन्हिसाध्यकानुमितित्वावच्छिन्नं प्रति वन्हिधर्मिकधूमव्यापकतानिश्चयत्वेनैव हेतुत्वमुपएवं सकलसाध्यसाधारणपर्वतपक्षकधूमलिङ्गकानुमितित्वावच्छिन्नं प्रति पर्वतविशेष्यकधूमवत्तानिश्चयत्वेनापि कारणत्वान्तरं वाच्यमतो वन्हिव्याप्यधूमवान् पर्वतो वन्हिर्धूमव्यापको धूमवांश्च पर्वत इत्यादिसकलवित्तिभ्य एव पर्वतो वन्हिमानित्यनुमितिः । न चोक्तहेतुद्वयकल्पनामपेक्ष्य लाघवात्पर्वतपक्षकवन्हिसाध्यकधूमलिङ्गकवन्ह्यनुमितित्वावच्छिन्नं प्रत्येव वन्हिव्याप्यधूमवत्पर्वतनिश्चयत्वेनैकरूपेण हेतुत्वं युक्तमिति वाच्यम् । पर्वतपक्षकत्वधूमलिङ्गकत्ववन्हिसाध्यकत्वादित्रयस्य विशेषणविशेष्यभावभेदेन गुरुतरकार्यकारणभावषट्कप्रसङ्गात् । न च वन्हिधर्मिकधूमव्यापकतानिश्चयत्वघटकस्य दलद्वयस्य परस्परविशेषणविशेष्यभावापन्नस्य तथाविधवन्हिसाध्यकधूमलिङ्गकत्वघटकीभूतदलद्वयावच्छिन्नं प्रति प्रत्येकं हेतुतावच्छेदकत्वात्कारणताचतुष्टयमेवं धूमवत्तानिश्चयत्वघटकदलद्वयस्यापि पर्वतपक्षकधूमलिङ्गकत्वघटकतादृशदलद्वयावच्छिन्नं प्रति प्रत्येकं कारणतावच्छेदकतयापि कारणताचतुष्टयमिति मिलित्वा कार्यकारणभावाष्टकापत्त्या तत्रैव गौरवमिति वाच्यम् । एवमनुधावने पर्वतपक्षकवन्हिसाध्यकधूमलिङ्गकानुमितित्वघटकस्य पर्वतपक्षकत्वादित्रयस्य विशेषणविशेष्यभावभेदेन षड्विधतया तत्प्रत्येकावच्छिन्नं प्रति वन्हिव्याप्यधूमवत्तानिश्चयत्वघटकदलद्वयस्य मिथो विशेषणविशेष्यभावापन्नस्य हेतुतावच्छेदकत्वसम्भवेन गुरुतरकार्यकारणभावद्वादशधापत्त्या तत्रैव मनस्यातिगौरवग्रस्तत्वात् । किं च पर्वतधर्मिकवन्हिव्याप्यधूमवत्तानिश्चयत्वेन हेतुत्वे परामर्शस्य धूमव्यापकत्वांशे पक्षे धूमवत्त्वांशे च भ्रमत्वग्रहदशायामिव हेतौ व्याप्यत्वांशे भ्रमत्वग्रहदशायां पक्षे व्याप्तिविशिष्टधूमवत्त्वांशे भ्रमत्वग्रहदशायां चानुमितेरस्वीकार्यतया व्याप्यत्वांशे भ्रमत्वज्ञानाभावस्य व्याप्तिविशिष्टधूमवत्त्वांशे भ्रमत्वज्ञानाभावस्य च तादृशानुमितिं प्रति हेतुत्वमपि महागौरवग्रस्तम् । न च पर्वतधर्मिकवन्हिव्याप्यनवच्छिन्नधूमप्रकारक-

नैव व्याप्तीनामनुगमात् । नन्वत्र कारणे कार्य्यमेव प्रमाणं तच्च कार्य्यकारणभावग्रहे सति स्यात् स एव तु न सम्भवति गौरव-

———

ज्ञानत्वावच्छेदेन पर्वतांशे भ्रमत्वग्रहदशायां मीमांसकैरप्यनुमिते-र्वारणाय तादृशभ्रमत्वज्ञानाभावस्य हेतुताया वाच्यत्वादिदं गौरवं त-न्मतेपि समानमिति वाच्यम् । तादृशभ्रमत्वज्ञानस्यानुमित्यप्रतिब-न्धकत्वात् । अन्यथा पक्षधर्मताज्ञानस्य व्याप्त्यनवच्छिन्नधूमप्रकार-कत्वसन्देहदशायामप्युक्तभ्रमत्वज्ञानस्यानुमितिविरोधितापत्तेः । न चोक्तभ्रमत्वग्रहकालीनस्य पक्षधर्मताज्ञानधर्मिकव्याप्त्यनवच्छिन्नधू-मप्रकारकत्वज्ञानस्यैव तथाप्यनुमितिप्रतिबन्धकतया परेषां मते सा-म्यमिति वाच्यम् । तादृशस्य भ्रमत्वत्वावच्छेदकधर्मवत्ताग्रहस्यानु-मितिप्रतिबन्धकताया नैयायिकैरप्यवश्यं स्वीकार्यत्वात् । अन्यथा पर्वतधर्मिकवन्हिव्याप्यधूमवत्ताज्ञानत्वावच्छेदेन पर्वतांशे वन्हिव्या-प्यधूमभ्रमत्वग्रहदशायां तत्तत्परामर्शधर्मिकस्य वन्हिव्याप्यधूमव-त्ताज्ञानत्वज्ञानस्य सत्त्वेप्यनुमितिप्रसङ्गात्।न चानुगतधूमलिङ्गकत्वस्य दुर्वचनतया धूमलिङ्गकवन्हिसाध्यकानुमितित्वावच्छिन्नं प्रति व-न्हिसाध्यकधूमव्यापकत्वानिश्चयत्वेन हेतुत्वासम्भवः तदसत्त्वे प-रामर्शहेतुतावादिनां तत्तदनुमितिव्यक्तौ तत्तत्परामर्शव्यक्तित्वेन हेतुत्वस्य वक्तव्यतया अवच्छेदकलाघवासम्भवेन यत्रानुमितेः पूर्वं विशिष्टपरामर्शो नानुभवसिद्धः तत्र ज्ञानद्वयस्यैव विशिष्य हेतुता-या दुर्वारत्वादिति । अत्रोच्यते । माभूत् सर्वत्रानुमितौ परामर्शोनु-गतरूपेण हेतुः, तथापि यस्य पुंसः पर्वते वन्ह्यनुमितिर्नालोकादिहेतु-का किं तु धूमलिङ्गिकैव तत्पुरुषीयवन्हिसाध्यकानुमितित्वावच्छिन्नं प्रति तत्पुरुषीयवन्हिव्याप्यधूमवत्पर्वतनिश्चयत्वेनैकरूपेण परामर्श-स्य हेतुत्वं तादृशस्थलमादायैव न्यायमीमांसकयोर्विचार उद्भाव-नीयः । वस्तुतो धूमलिङ्गकपरामर्शाव्यवहितोत्तरत्वमनुगतं प्राग्व्य-वस्थापितमतस्तदवच्छिन्नं प्रत्येव वन्हिव्याप्यधूमवत्तानिश्चयत्वेन लाघवाद्धेतुत्वमिति भावः । अत्रेत्यादि । यत्र परामर्शो नानुभव-सिद्धः तत्रानुमित्यात्मकं कार्यमेव स्वकारणे परामर्शेनुमानविधया

ज्ञानेन प्रतिबन्धादित्यत आह कारणताग्रहेति। कारणतानिर्णयं विना तत्फलस्य धर्म्म्यन्तरानिर्णयस्याभावेन तद्घटितगौरवस्यानिर्णयादित्यर्थः। सम्भाव्यते तावदिदं धर्म्यन्तरकल्पनं विना कारणत्वस्यैवाशक्यनिर्वाहत्वादिति चेत्। सम्भाव्यतां न तु तत्प्रतिबन्धकम्, सामान्यतः कार्य्यकारणभावग्रहस्य प्रायशो विलयप्रसङ्गात्। तत्र तत्र क्लृप्तनियतपूर्ववर्त्तितावच्छेदकरूपान्तरविरहे-

---

प्रमाणमित्यर्थः। सतीति स्यादिति। अन्यथा साऽनुमितिः विशिष्टज्ञानपूर्वकाऽनुमितित्वात् इत्यादेरप्रयोजकत्वसम्भवादिति भावः। स एव कार्यकारणभावग्रह एव। गौरवेति। धर्मिकल्पनारूपेत्यादिः। तत्फलस्य कारणताग्रहफलस्य। तद्घटितेति। धर्म्यन्तरघटितेत्यर्थः। ननु परामर्शत्वं यद्यनुमितिजनकतावच्छेदकं स्यात् क्लृप्तपरामर्शातिरिक्तवृत्ति स्यादित्येवं क्रमेण गौरवसम्भावनैव परामर्शत्वेन हेतुत्वग्रहे विरोधिन्यस्तु तस्यां धर्म्यन्तरोपस्थितेरनपेक्षत्वेन सिद्ध्यसिद्धिभ्यां व्याघातायोगादित्याशयेन शङ्कते सम्भाव्यते तावदिदमिति। आपाद्यते तावदिदं धर्म्यन्तरकल्पनागौरवमित्यर्थः। ननूक्तसम्भावनायामप्रयोजकत्वमत आह धर्म्यन्तरमिति। कारणतावच्छेदकत्वहेतुकापत्तिमात्रं न कारणत्वग्रहप्रतिबन्धकं तथासति वन्हित्वं यदि धूमजनकतावच्छेदकं स्यात्तदा क्लृप्तवन्ह्यतिरिक्तवृत्ति स्यादित्यादिसम्भावनया प्रतिबन्धात् वन्हित्वादिनापि धूमादिजनकताग्रहो न स्यादित्याशयेन परिहरति सम्भाव्यतामिति। तत् सम्भावनम्। यत्र विजातीयघटादौ चैत्रत्वादिना हेतुत्वं तत्र बाल्यादिभेदेन भिन्नचैत्रव्यक्तीनां प्रत्यक्षेण सर्वसिद्धत्वादुक्तरूपेणातिरिक्तसम्भावनैव तत्र न सम्भवतीत्यत उक्तं प्रायश इति। ननु वन्हित्वादौ धूमादिजनकतावच्छेदकत्वहेतुकापत्तिमात्रं न तादृशावच्छेदकत्वज्ञानविरोधि किं तु लाघवादिप्रतिसन्धानविशिष्टमेव तथेत्याशयेन शङ्कते तत्र तत्रेति। वन्हिधूमादिस्थले वन्हित्वादिकं विहाय धूमत्वाद्यवच्छिन्नं प्रति नियतपूर्ववर्तितावच्छेदकीभूतलघुरूपान्तराभावादेव ताद्रूप्येण

ज्ञानत्वमेव कारणतावच्छेदकम् । न चैवमतिरिक्तवि-शिष्टज्ञानकारणत्वे गौरवं दोषाय, सप्रमाणकत्वात् कारणताग्रहदशायां फलमुखगौरवस्य सिद्ध्यसिद्धिभ्याम-दोषत्वात् । न चासन्निकृष्टे धूमे तदभावः, भवन्मता-नुमितिहेतुव्याप्तिस्मरणधूमत्वज्ञानसहितेन मनसा तदु-त्पादात् । यथा परमाणुर्निरवयवद्रव्यं नित्यपरिमाणव-त्त्वात् आकाशवदित्यादौ प्रत्येकानुमानोपनीतातीन्द्रिय-साध्यसाधनयोराकाशवृत्तितया स्मरणे व्यभिचाराज्ञाने मनसा व्याप्त्यनुभवः । अनुमानयोः प्रत्येकतदुभयसह-

———

णागत्या गौरवमप्यास्थीयते इति चेत्, इहापि तद्विरहस्यासकृदावे-दितत्वादिति कृतं पल्लवितेनेति । व्यभिचारनिर्णयेन कारणत्व-ग्रहासम्भवं निरस्यति न चेति । अनुमानयोरिति । अनुमितैक-

———

कारणतायामुक्तसम्भावना न विरोधिनी तादृशधर्मान्तरसत्त्वप्रति-सन्धानसहिताया एव निरुक्तसम्भावनायाः प्रतिबन्धकत्वादिति भावः । इहापीति । गृह्यमाणव्याप्त्यवच्छेदकताकेत्यादिरूपस्य तत्त-त्कालादिघटितत्वेन प्रागेव दूषितत्वादिति भावः । न चेत्यादिमूलस्य गौरवाभिप्रायकत्वे न चैवमतिरिक्तेत्यादिप्रागुक्तग्रन्थेन पौनरुक्त्यमत आह व्यभिचारेति । लाघवादिप्रतिसन्धानशून्याया एव व्यभिचार-शङ्कायाः कारणत्वग्रहविरोधित्वान्निर्णयेनेत्युक्तम् । ननु प्रत्येकानु-मानयोः सहचाराग्राहकत्वेऽपि नित्यद्रव्यत्वादिना गगनादौ नित्यप-रिमाणवत्त्वमनुमाय नित्यपरिमाणवद्गगनं निरवयवद्रव्यं विभुत्वादि-

चाराविषयत्वेन व्याप्त्यग्राहकत्वात्। न चातीन्द्रियव्याप्यत्वमतीन्द्रियेऽनुमेयम्, तत्रापि व्याप्तिग्राहकाभावात्। न च तदुपनयसहितस्य मनसो बहिरर्थप्रमाहेतुत्वे उपनयस्य प्रमाणान्तरत्वम्, इन्द्रियादेः सन्निकर्षवत्तदुपनयस्य नियतव्यापाराभावेन प्रमायामकरणत्वात्। सहकारिता च तदभावेऽपि भवति। बहिरिन्द्रियलिङ्गसादृश्यादिव्यापारं विनापि चिन्तोपनीतपदार्थानां बाधकानवतारे मनसा संसर्गानुभवस्य सकलजनसिद्धत्वात्।कथमन्यथा

———

साध्यविशिष्टे साध्यान्तरानुमित्या सहचारग्रहोपगमेऽपि नियमांशग्रहासम्भवादिति भावः।नियतव्यापारेति।एकसम्बन्धिज्ञानाधीनसम्ब-

———

त्यनुमानमेव साध्यसाधनसहचारग्राहकमत आह अनुमितेति। अनुमितं यदेकसाध्यं नित्यपरिमाणवत्त्वादि तद्विशिष्टे धर्मिणि साध्यान्तरस्य निरवयवद्रव्यत्वादेरनुमित्यैवेत्यर्थः। पक्षतावच्छेदकीभूतहेतोः सामानाधिकरण्यस्य संसर्गमर्यादया साध्ये भानेऽप्यनुमित्युपयुक्तं सामानाधिकरण्यप्रकारं ज्ञानमसिद्धमेवेत्याशयेनाह उपगमेपीति। वस्तुतस्तदुपगमेपि प्रकृते न निर्वाह इति भावः। मूले नियतव्यापाराभावेनेति। तथा च बहिर्गोचरप्रमायां नियतव्यापारवत्त्वमेव मानसान्यप्रमाकरणत्वे तन्त्रं न तु निरुक्तबहिर्गोचरप्रमोत्पादकत्वमात्रं तथा च पूर्वोक्तापत्तावप्रयोजकत्वमत एवाह सहकारिता चेति। प्रथमव्याख्यातापत्त्यनुसारेण दीधितौ एकेति। चरमव्याख्यानुसरणे तु नियतव्यापाराभावेनेत्यादिमूलस्य प्रत्यक्षजातीयप्रमासामग्रीविरहनियतप्रमोत्पादकत्वाभावेन तद्विजातीयप्रमित्यकरणत्वा-

कविकाव्यादिकमिति । स्यादेतत्, पक्षधर्मस्य व्याप्यताज्ञानं नेन्द्रियेण, वह्नेरसन्निकर्षे तन्नियतसामानाधिकरण्यस्य व्याप्यत्वस्यायोग्यत्वात् । न च धूमत्वेन सकलधूमव्याप्यतावगमात् धूमविशेषे संस्कारात् स्मरणाद्वो-

---

न्ध्यन्तरस्मरणादितः क्वचिद्विशिष्टज्ञानोत्पत्तावपि नियतत्वेन न तस्य व्यापारत्वं यं जनयित्वैव यस्य यज्जनकत्वं तस्यैव तत्र तद्व्यापारत्वादित्यर्थः । वस्तुतस्तु तदुपनयव्यक्त्यादेस्तत्प्रमाव्यक्तिं प्रति कारणत्वेऽपि न क्षतिः, प्रमावैजात्यस्यैवात्र प्रमाणान्तरनिमित्तत्वात् । न चात्रापि प्रमावैजात्यम्, अनुपलम्भबाधितत्वात् मानाभावा-

---

दित्यर्थः । स चाग्रिमदीधितौ व्यक्तीभविष्यति । क्वचिदिति । यत्र हेतुस्मरणोत्तरं तत्सम्बन्धिव्याप्तिपक्षधर्मतयोः स्मृत्योपनीतभानात्मकः परामर्शः तत्रेत्यर्थः । अनियतत्वेनेति । हेतुव्याप्तिपक्षधर्मत्वानां समूहालम्बनस्मृत्यापि क्वचित्परामर्शोत्पादादिति भावः । तस्य सम्बन्ध्यन्तरस्मरणस्य । तद्व्यापारत्वात् तद्व्यापारशब्दार्थत्वात् । ननु तत्तद्बुद्धिव्यक्तिमुत्पाद्यैव तत्तदुपनयव्यक्तेः परामर्शजनकत्वात् नियतव्यापारवत्त्वं दुर्वारमतस्तादृशव्यापारवत्त्वेनैव प्रमाणान्तरत्वमापादनीयमत आह वस्तुतस्त्विति । न क्षतिः न व्याप्त्युपनयस्य प्रमाणान्तरत्वापत्तिः । प्रमावैजात्यस्यैवेत्येवकारेण यदसाधारणं सहकारीत्यादेः प्रतिक्षेपः । अत्र करणे । निमित्तत्वात् नियामकत्वात् । तथा च प्रत्यक्षविजातीयप्रमायां नियतव्यापारवत्त्वमेव मानसान्यप्रमाकरणत्वरूपप्रमाणान्तरत्वे न तन्त्रं न तु बहिर्गोचरप्रमायां नियतव्यापारवत्तामात्रमित्युक्तक्रमेणाप्यापत्तावप्रयोजकत्वमिति भावः । अत्राप्यसन्निकृष्टादिलिङ्गकानुमितिजनकज्ञानेपि प्रमावैजात्यं प्रत्यक्षाद्यवृत्तिजातिमत्त्वम् । ननु वैजात्यस्य प्रामाणिकत्वे तदनुपल-

पनीतव्याप्यभेदग्रहः प्रत्यभिज्ञाने तत्ताविशिष्टस्यैवेति वाच्यम् । एवं हि धूमवत्त्वेन वह्निमत्त्वज्ञानात् धूमव-

---

च्च । उपनयस्य च विशिष्टज्ञाने विशेषणज्ञानत्वेन प्रत्यक्षे च सन्निकर्षविधयोपयोगितया जात्यव्यवस्थापकत्वात् । अत एव बाह्याभ्यन्तरप्रत्यभिज्ञासादृश्याभावादिप्रत्यक्षाणां तत्ताप्रतियोग्यादिविषयत्वमन्यथा जातिसङ्करप्रसङ्गात् ज्ञानद्वयकल्पने च स्थैर्यमात्र-

---

म्भस्तृणारणिमण्यादिप्रयोज्यजातिवत् भविष्यतीत्यत आह माना-भावाच्चेति । ननूपनयजन्यतावच्छेदकतयैव वैजात्यं सेत्स्यतीत्यत आह उपनयस्य चेति । उपनयस्य कारणताविशेषणज्ञानतया सन्निकर्षतया चोभयथापि वैजात्यं कार्यतावच्छेदकं नेति भावः । अत एव उपनयस्य जात्यव्यवस्थापकत्वादेव । उपनयस्य बहिरिन्द्रियं मानसेन सहकारित्वसूचनाय बाह्याभ्यन्तरेति । उपनयजन्यतावच्छेदकजातेश्चाक्षुषत्वमानसत्वव्याप्यतानिराकरणाय तदित्यपि कश्चित् । विशेष्यांशे उपनयस्यासामर्थ्यात्तदंशे साक्षात्करोमीत्यनुव्यवसायाच्च प्रत्यक्षाणामित्युक्तम् । बाह्यप्रत्यभिज्ञा सोयं घट इत्याकारा अभ्यन्तरप्रत्यभिज्ञा योहमद्राक्षं सोहं स्पृशामीत्याकारा। तत्तेति प्रत्यभिज्ञायाः, प्रतियोगीति सादृश्याभावयोः, प्रत्यक्षस्य । अन्यथेति । सर्वांशे लौकिकप्रत्यक्षे यत्र चाक्षुषत्वं तत्र नोपनयप्रयोज्यजातिर्यत्र च स्पार्शनाद्युपनीतभाने तादृशी जातिर्न तत्र चाक्षुषत्वमेकत्र च स एवायं सुरभि चन्दनमित्यादिचाक्षुषे तयोः सङ्कर इत्यर्थः । चाक्षुषत्वादिव्याप्यनानावैजात्यानामुपनयजन्यतावच्छेदकत्वस्वीकारे च गौरवं प्रत्यक्षत्वस्यैव तथात्वसम्भवादिति भावः । ननु स एवायं सुरभि चन्दनमित्यादौ विशेष्यविशेषणयोर्विभिन्नमेव ज्ञानद्वयं वाच्यमत एव तत्र तत्राप्युपनीतभाने चाक्षुषत्वादेरसत्त्वान्न तेनोपनयप्रयोज्यजातेः साङ्कर्यमत आह ज्ञानद्वये-

द्विशेषे पर्वते संस्कारवशात् प्रत्यक्षेण व्याप्तिज्ञानापेक्षेण वह्निमद्भेदग्रहो वह्निमत्त्व(संसर्ग)ग्रहो वास्तु किमनुमानेन, पृथक् वह्निमत्त्वस्मरणं तत्र नास्ति किन्तु व्याप्त्यवच्छेतकतयेति चेन्न । वह्निमान्न वेति संशयानुरोधेन स्वत-

———

मुच्छिद्येत व्यवस्थापितश्च विशिष्टज्ञानस्य व्यवहारहेतुत्वम् । न च प्रमाणान्तरासहकृतोपनयजन्यतावच्छेदकतया वैजात्यसिद्धिः, इतरासहकृतत्वेनाजनकत्वात् असिद्धेश्च उपनयात्मकसन्निकर्षवशेन मनसा प्रत्यक्षजननस्यैवोपगमात् । पृथगिति । न चैवं धारावाहि-

———

ति । पूर्वापरकालीनयोरभेदरूपं स्थैर्यं प्रत्यभिज्ञायाः ज्ञानद्वयत्वपक्षे न सिध्येदित्यर्थः । तथा च तदनुरोधेन प्रत्यभिज्ञायां विशिष्टज्ञानत्वे तत्रैव साङ्कर्यमावश्यकमिति भावः । नन्वयं स एव तन्मात्रवृत्तिध-र्मवत्त्वादित्याद्यनुमानमेव लाघवादिसहकृतं स्थैर्यनियामकमावश्यकं भविष्यतीत्यत आह व्यवस्थापितं चेति । अन्यथाख्यातौ व्यवस्थापि-तमित्यर्थः । व्यवहारः इच्छाप्रवृत्त्यादिः । तथा च लाघवात्सुरभि-चन्दनत्वादिप्रकारकेच्छादौ तादृग्ज्ञानत्वेन हेतुत्वात्तादृशचाक्षुषवि-शिष्टज्ञान एव साङ्कर्यमावश्यकमिति भावः । प्रमाणान्तरेति । प्रत्य-क्षादिसामग्र्यभावविशिष्टेत्यर्थः । अजनकत्वादिति । लाघवादुपनय-त्वमात्रेणैव तथात्वादिति भावः । ननु मयापि उपनयत्वमात्रेणैव विजातीयज्ञानं प्रति हेतुत्वं वाच्यम् । न चैवं लौकिकप्रत्यक्षादिसा-मग्रीदशायामपि तादृशज्ञानापत्तिः, प्रत्यक्षसामग्र्यभावस्यापि तत्र हेतुत्वादत आह असिद्धेश्चेति । सर्वांशोपनीतभानस्थले प्रत्यक्षादि-सामग्रीविरहस्यासिद्धेश्चेत्यर्थः । असिद्धिं विवृणोति उपनयेति । यद्यपि सर्वांशे उपनीतभानस्य प्रत्यक्षत्वे मानाभावः तद्व्यञ्जकलौ-किकसन्निकर्षजन्यत्वस्य तत्राभावात् । तथापि तत्प्रकारकप्रत्यक्ष-

न्त्रवह्निमत्त्वस्मरणात् । न च विशिष्टज्ञाने स्वतन्त्र-विशेषणज्ञानत्वेन हेतुत्वम्, गौरवात् । अथ यो यत्र विशिष्य पूर्वमवगतः स तत्र संस्कारवशाद्यथार्थप्रत्यक्षे भासते यथा तत्ताप्रत्यभिज्ञाने, न च पर्वते विशिष्य

---

कोच्छेदः, इतरमात्राविशेषणत्वेनोपस्थितेरेव तन्त्रत्वात् । कोटि-स्मरणस्य संशयेन तस्य च व्याप्तिस्मरणादिना नाशात् विशेषद-र्शनकाले च संशयायोगादाह न चेति । गौरवादिति । न चैवम-भावविशेषणत्वेनोपस्थितस्यापि भावस्य ग्रहापत्तिः । अभावग्रा-

---

त्वावच्छिन्नं प्रत्येव तद्विषयकज्ञानत्वेन हेतुत्वादुपनयजन्यत्वमेव तादृशज्ञानस्य प्रत्यक्षत्वसाधकमेतदेव सूचयितुं सन्निकर्षवशेनेत्यु-क्तम् । न च सर्वांशोपनीतभान एव मानाभावः, आत्माद्यंश एवान्त-तो लौकिकत्वसम्भवादिति वाच्यम् । कामिनीजिज्ञासादिना प्रतिब-न्धवशादात्मादेरग्रहसम्भवादिति दिक् । एवमिति । स्वतन्त्रविशेषण-ज्ञानत्वेन हेतुत्वे इत्यर्थः । इतरेति । तथा च तद्विशेष्यकतद्विशिष्टबु-द्धौ तदितरमात्रविशेष्यतानिरूपिततद्विषयताकज्ञानत्वेन हेतुत्वं तच्च धारावाहिकस्थलेपि अक्षतं तत्र द्वितीयादिज्ञानविशेष्यीभूतधर्मि-विशेषणतयैव प्राथमिकादिज्ञानविशेषणस्य घटत्वादेर्भानात् । न च मात्रपदं व्यर्थम् । उभयविशेषणतया गृहीतस्य घटत्वादेः पश्चादेक-त्र विशिष्टबुद्धेः संपत्त्यर्थं तदुपादानादिति भावः । संशयेनेति । ना-शादित्यन्वितम् । तस्य चेति । संशयस्य चेत्यर्थः । ननूत्पन्नसंशय-स्य नाशेपि संशयान्तरोत्पत्त्यैव स्वतन्त्रविशेषणज्ञानं स्थास्यतीत्य-त आह विशेषदर्शनेति । प्रामाणिकं गौरवमित्याशयेन शङ्कते न चैव-मिति । भावस्य प्रतियोगिनः । सामग्र्या इति । न च भावविशि-ष्टबुद्धावभावनिश्चयाभावस्य कार्यसहवर्तित्वेन हेतुत्वोपगमादेव

पुरा वह्निरवगतः, यत्र चन्दने सौरभमुपलब्धं तत्र संस्कारवशाच्चक्षुषा सुरभि चन्दनमिति ज्ञानमन्यथानुमितिरिति चेत् । तर्हि पक्षधर्मधूमेऽपि न पुरा विशिष्य व्याप्तिरवगतेति कथं संस्कारवशात्तद्गतव्याप्तिबोधः प्रत्यक्षेण । न च सहचारदर्शनजन्यसंस्कारसहितेनेन्द्रियेण व्यभिचारज्ञानाभावे सति महानसीयधूमवत्पर्वतीयधूमे

---

इकसामग्र्या बलवत्या प्रतिबन्धात् । अभावाविशेषणत्वेनोपस्थितिस्तन्त्रमित्यपि कश्चित् । वस्तुतः स्वतन्त्रविशेषणज्ञानस्य विशिष्टधीहेतुत्वेऽनुमित्यर्थमेव त्वयापि तत्स्वीकरणीयं न हि विशिष्टप्रत्यक्षं प्रत्येव तथात्वं मानाभावात् । तर्हीत्यादि । वस्तुतो यत्र क्वचिदपि गृहीतस्य धर्मिणि साधारणधर्मदर्शनात् स्मृतस्य संशयादिसाधारणी विशिष्टधीः, इयांस्तु विशेषो यत्कोटिद्वयसहचरितधर्मा-

---

तदानीं भावविशिष्टबुद्ध्यसम्भवात्सामग्र्याः प्रतिबन्धकत्वे मानाभाव इति वाच्यम् । यत्र स्वधर्मिकाप्रामाण्यग्रहोत्तरमभावस्य निश्चयोत्पत्तौ उत्तरकालं भावविशिष्टबुद्धिस्तत्राप्रामाण्यज्ञानाभावविशिष्टाभावनिश्चयत्वावच्छिन्नाभावस्य कार्योत्पाददशायामसत्त्वात्तादृरूप्येणाभावनिश्चयाभावस्य भावबुद्धौ हेतुत्वासम्भवादिति भावः । यत्र स्वातन्त्र्येणाभावस्योपस्थितावप्यभावस्यैव विशिष्टधीरग्रे भविता तत्र भावबुद्ध्यनुत्पत्त्यर्थमभावप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वध्रौव्येऽभावाविशेषणत्वेनोपस्थितेर्हेतुत्वं विफलमित्यस्वरसः कश्चिदित्यनेन सूचितः । व्याघातमप्याह वस्तुत इति । मानाभावादिति । न च विशिष्टज्ञानत्वं विशिष्टानुभवत्वं वाऽनुमित्यादिस्थले सन्दिग्धव्यभिचा-

दर्शनात् कोटिद्वयस्मरणे संशयोऽन्यथा त्वेककोटिनिश्चय इति। एतेन धूमत्वादिना पक्षधर्मे व्याप्तिमनुमाय वन्ह्याद्यनुमितिरिति परास्तम्। धूमत्वाद्यनुपस्थित्या धूमत्वादेर्वन्हिव्याप्तिव्याप्यत्वाग्रहे वन्ह्यननुमितिप्रसङ्गाच्च। एतेन यद्धर्मावच्छेदेन यद्वत्त्वं गृहीतमुपनयवशात् तद्धर्मविशिष्ट एव तद्भासते, धूमवत्त्वावच्छेदेन च वन्हिमत्त्वग्रहाद्धूमवानेव वन्हिमानिति बुद्धिः स्यात् न तु पर्वतो वन्हिमानित्यपि परास्तम्। मानाभावात् चन्दनत्वाद्यवच्छेदेन गृहीतस्य सौरभादेः पुरोवर्त्तिनि चन्दनत्वादिदर्शनादिदं सुरभि इत्या-

———

रितया न तज्जन्यतावच्छेदकमिति वाच्यम्। अभावविशिष्टबुद्धिप्रतिबन्धकवशाद्यत्र घटाभावत्वप्रकारकस्मरणोत्तरं घटस्यैव भूतलादौ विशिष्टप्रत्यक्षं तत्र तादृशप्रत्यक्षत्वस्यापि सन्दिग्धव्यभिचारत्वादिति भावः। ननु पक्षधर्मधूमे व्याप्तेर्न स्मृतिः किं तु धूमत्वहेतुकानुमितिरेवेति यदि ब्रूयात्तदोक्तप्रतिबन्धभावादाह वस्तुत इति। दर्शनादिति। पञ्चम्यर्थो हेतुत्वम्। तच्चोद्बोधकविधया कोटिस्मृतिं प्रति बोध्यम्। तेन साधारणधर्मवत्ताज्ञानस्य तज्जन्यस्मृतेर्वा संशयत्वावाच्छिन्नं प्रत्यहेतुत्वेपि न क्षतिः। साधारणीत्युक्त्या संशयत्वस्य निश्चयत्वस्य चोपनयजन्यतावच्छेदकत्वं प्रतिक्षिप्तम्। अत एवान्यथैव संशयनिश्चयौ सम्पादयति इयांस्त्विति। एतेन यो यत्रेत्यादेरुपेक्षितत्वेन। यो यत्रेत्यादिनियमस्य प्रामाणिकत्वे पुनराह धूमत्वेति। तथा च तर्हीत्याद्युक्तप्रतिबन्दिस्तदवस्थैवेति भावः। अत एवेति। निरस्तमित्यग्रेतनेनान्वयः। तद्धर्मविशिष्ट एवेति। तद्धर्मविशिष्टविशेष्यकतदुपनीतप्रत्यक्षं प्रति तद्धर्मावच्छिन्नविशेष्यकतद्वत्त्वधीजन्यतदुपनयत्वेनैव हेतुत्वमतः पूर्वं धूमान्तर एव धूमत्वरूपेण व्याप्तिग्रहेपि ताद्रूप्येण पक्षधर्मधूमे व्याप्त्युपनीतभाने बाधकाभाव इति भावः। मानाभावादिति उक्तक्रमेण हेतुतायां मानाभावादित्यर्थः। ननु व्यापकस्यानन्यथासिद्धत्वे कारणत्वमर्थायातमत आह चन्दनेति। व्यभिचाराच्चेति। तथा च न व्यापकत्वमिति

व्याप्त्यवगमो वन्हेस्तु न प्रत्यक्षसामग्री सन्निकर्षाभावा-
दिति वाच्यम् । हेतुसाध्यसाक्षात्कारं विना प्रत्यक्षेण
व्याप्त्यग्रहात् । न च पर्वते वह्निसाक्षात्कारः, न च
पक्षधर्मस्य साध्यसामानाधिकरण्यविशेषो व्याप्तिः पक्षे
साध्यग्रहं विनेत्युक्तम् । उच्यते । विशेषणज्ञानं तस्य

---

दिबुद्धौ व्यभिचाराच्च । यदि चावच्छेदकधर्मवैशिष्ट्यमपि
तत्र भासत इति नियमोऽपि तत्र प्रामाणिकस्तदा धू-
मवानयं पर्वतो वन्हिमानित्येव धीरस्तु, न हि लिङ्गो-
पधानभाने बाधकमन्यत्साधकाविरहात् । हेतुसाध्येति । स-
म्बन्धिद्वयनिरूप्यपदार्थप्रत्यक्षं प्रति सम्बन्धिद्वयप्रत्यक्षस्य हेतुता-
याः संयोगादिस्थले त्वयैव क्लृप्तत्वात् तदनादरेऽपि साध्यघटि-
तमूर्त्तिकव्याप्तिप्रत्यक्षस्य साध्यप्रत्यक्षसामग्रीं विनाऽसम्भवादिति
भावः । विशेषणेत्यादि । विशेषणविशेष्यसम्बन्धस्तदंशे प्रमात्वे

---

भावः । मूले सन्निकर्षाभावादिति । चक्षुर्योग्यविद्यमानद्रव्यचाक्षुष-
सामान्यं प्रत्येव चक्षुःसंयोगत्वेन हेतुत्वादिति भावः । ससम्बन्धि-
कपदार्थप्रत्यक्षे सम्बन्धिप्रत्यक्षत्वेन हेतुतायाः परैरनङ्गीकारादाह
दीधितौ सम्बन्धिद्वयेति । त्वया नैयायिकेन । तथा च तन्मतमनु-
सृत्यैवेदं दूषणं दत्तमिति भावः । मूले न च पर्वते वन्हिसाक्षा-
त्कार इति । सम्भवतीति भावः । न च पक्षधर्मस्येत्यादिमूलमभिप्रे-
त्याह तदनादरेऽपीति । तथा च पक्षे साध्यग्रहं विनेति मूलस्य प-
क्षीयसाध्यमविषयीकृत्य तत्सामानाधिकरण्यरूपा व्याप्तिर्गृहीतुं न
शक्यत इत्यर्थः । भ्रमात्मकविशिष्टबुद्धेर्विशेष्यविशेषणसम्बन्धं वि-
नाप्युत्पत्त्या व्यभिचारादाह तदंशे प्रमात्व इति । विशेषणांशे प्रमा-

विशेष्ये सम्बन्धस्तयोरसंसर्गाग्रहो विशेषदर्शनं विशेषणविशेष्येन्द्रियसन्निकर्षो गौरयमित्यादियथार्थविशिष्टप्रत्यक्षकारणम् । अस्ति चात्रापि व्याप्तिस्मरणं स्मृतव्याप्तेः पक्षवृत्तिधूमे सत्त्वम । एकैव हि सा व्याप्तिः तयो-

———

लौकिकत्वे वा, विशेषदर्शनञ्च विपरीतज्ञानप्रतिबन्धकतया क्व चित्सहचरितधर्म्मदर्शनत्वेन विशेषणस्मारकतया विशेषणस्य च ज्ञानसत्त्वेऽप्यतिरिक्तसान्निकर्षस्तदंशे लौकिकतायामुपयुज्यते । एकैव हीति । वस्तुतो व्याप्तिभेदेऽपि न क्षतिः सामान्यतो व्याप्तित्वेन गृहीतानां सकलव्याप्तीनां तथैव स्मरणसम्भवात् वन्हेरसन्निकर्षादिति । ननूपनयात्मकसन्निकर्षेणैव नयनेन निरूप्यतां हुताशनो न हि बहिरिन्द्रियेण द्रव्यस्याधेयतया तद्वत्त्वस्य वा ग्रहे तत्संयोगो हेतुः

———

त्व इत्यर्थः । उपयुज्यत इति परेणान्वयः । स्वमते प्रमात्वस्य कार्यतानवच्छेदकत्वाद्दण्डचयमासीदित्यादिप्रमायां व्यभिचाराच्चाह लौकिकत्वे वेति । सम्बन्धस्येत्यादिः । विनापि विशेषदर्शनं विशिष्टप्रमोत्पत्त्या व्यभिचारादाह विशेषदर्शनं चेति । व्यावर्त्तकधर्मदर्शनं चेत्यर्थः । क्व चित् । व्यावर्त्तकत्वाद्यग्रहस्थले । ननु प्रागुक्तस्य विशेषणाज्ञानस्यैव सन्निकर्षविधयाप्युपयोगसम्भवात्तदीयसन्निकर्षस्य पुनरुपादानं विफलमत आह विशेषणस्येति । ज्ञानसत्त्वेपीति । संस्कारस्येव निर्विकल्पकस्याप्ययोग्यत्वादेव स्वविषयोपधानेन प्रत्यक्षासम्भवाद्गौरित्यादिप्रत्यक्षे गोत्वनिर्विकल्पकस्य प्रत्यासत्तित्वेपि क्षत्यभावात् इत्याशयः । सामान्यतः सामान्यलक्षणया । व्याप्तित्वेन व्यापकसामानाधिकरण्यत्वेन । तथैव व्याप्तित्वेनैव । नन्वाधेयतासम्बन्धावच्छिन्नद्रव्यविषयताके ताहशातिरिक्तसंसर्गानवच्छिन्नद्रव्य-

रसंसर्गाग्रहो धूमत्वविशेषदर्शनं व्याप्तिविशिष्टधूमेन्द्रि-
यसन्निकर्षश्च व्याप्तिविशिष्टज्ञानकारणम् । न च वह्नि-
विशिष्टज्ञानसामग्री, वह्नेरसान्निकर्षात् । कश्चित्तु धूमत्वे

———

दण्डी पुरुषो नास्तीत्यादौ व्यभिचारात् । कथमन्यथा पक्षधर्मे व-
न्हिमत्त्वगर्भिता व्याप्तिरेव गृह्यते । न चाधेयतया मुख्यविशेष्ये

———

विषयताके वा चाक्षुषादौ चक्षुःसंयोगत्वादिना हेतुत्वात्कथं चक्षु-
रसंयुक्तस्य पर्वतीयवन्हेश्चक्षुषा निरूपणमित्याशङ्क्य निषेधति न हि
बहिरित्यादि । घटवद्भूतलमित्यादिमानसोपनीतभाने व्यभिचारा-
दाह बहिरिति । गुणादौ चक्षुःसंयोगविरहेपि आधेयतया चाक्षुषो-
त्पादाद्द्रव्यस्येत्युक्तम् । घटो नास्तीत्याकारकघटचाक्षुषे व्यभिचा-
रादुक्तमाधेयतयेति । ननु पर्वतो वन्हिमानित्यनुमितौ वन्हेर्नाधेयतया
भानं किं तु पर्वतस्यैव वन्हेरधिकरणतयेत्युक्तकार्यकारणभावो न
वन्हेरुपनीतभाने बाधक इत्यत आह तद्वत्त्वस्य वेति । द्रव्यवत्त्वस्य
वेत्यर्थः । अत्राप्याधारतातिरिक्तसम्बन्धानवच्छिन्नद्रव्यविषयताक-
चाक्षुषादिकं प्रति चक्षुःसंयोगत्वादिना हेतुत्वे तात्पर्यान्न द्रव्यस्य
निर्विकल्पार्थं कारणान्तरापेक्षेति ध्येयम् । व्यभिचारादिति । चक्षु-
रसंयुक्तस्यापि दण्डस्याधारतया पुरुषे भानादिति भावः । ननु द-
ण्डी पुरुष इत्यत्र मत्वर्थे सम्बन्ध एव दण्डः प्रतियोगितया प्रकारो
न तु पुरुषेऽप्याधारतयेति यदि ब्रूयात्तदाऽपि व्यभिचारमाह कथमि-
ति । अन्यथा उक्तक्रमेण हेतुत्वसत्त्वे । वन्हिमत्त्वगर्भितेति । तथा च
पर्वतीयधूमधर्मिकव्याप्तिग्रहे साध्यसामानाधिकरण्यकोटौ वन्हेर-
धिकरणांश एवाधारतया प्रकारत्वात्तत्रावश्यं व्यभिचार इति भा-
वः । न चेति । वाच्यमिति परेणान्वयः । आधेयतया आधेयत्वनिया-
मकसंयोगसम्बन्धेन । यथाश्रुते पर्वतो वन्हिमानित्याकारकबुद्धावा-
धेयत्वस्याविषयत्वादलग्नकतापत्तेः । साक्षाद्द्रव्यग्रहे साक्षात्कारा-

परम्परासम्बन्धेन वह्निव्याप्यत्वं पूर्वगृहीतं तथा च संस्कारोपनीतं वह्निव्याप्यत्वं परम्परासम्बन्धेन पक्षवृ-

———

साक्षात् द्रव्यग्रहे तत्संयोगो हेतुः अभेदारोपे च नाधेयतया रजतादिकं प्रकारो दण्डाद्यात्मकतत्तावगाहिप्रत्यभिज्ञायाञ्च तत्तावदभेदो भासत इति न दण्डादेः साक्षात्प्रकारतेति वाच्यम्। मानाभावात्। धूमवान् वह्निमानिति सामान्यलक्षणया ग्रहे व्यभिचारात्, तत्तासंसर्गस्यापि प्रत्यभिज्ञायां भानसम्भवात् प्रकृतेऽपि वह्निमद-

———

त्मकद्रव्यग्रहे। तेन पर्वतस्य वह्निमत्तया स्मरणे गुणवत्तया वा प्रत्यक्षे न व्यभिचारः। एवं च मुख्यविशेष्यतानिरूपिताधेयत्वसंसर्गावच्छिन्नद्रव्यनिष्ठप्रकारतासम्बन्धेन प्रत्यक्षं प्रति समवायेनेन्द्रियसंयोगस्य हेतुत्वाद्वन्ह्यादौ तद्विरहादेव प्रत्यक्षासम्भव इति भावः। आधेयतयेत्यस्य फलमाह अभेदेति। अभेदसंसर्गेण रजताद्यारोप इत्यर्थः। तथा चेदं रजतमित्यादिभ्रमे रजतादिद्रव्यस्य मुख्यविशेष्ये प्रकारत्वेऽप्याधेयतानियामकसंयोगादिसम्बन्धेनाप्रकारत्वान्न तत्र व्यभिचार इति भावः। मुख्यविशेष्य इत्यस्य फलमाह दण्डाद्यात्मकेति। न साक्षादिति। दण्डादेर्न मुख्यविशेष्यतानिरूपितप्रकारतेत्यर्थः। दण्डादिमतः पदार्थान्तरे प्रकारत्वेन मुख्यविशेष्यत्वाभावादिति भावः। मानाभावादिति। लाघवान्निर्विकल्पकसाधारणं द्रव्यलौकिकप्रत्यक्षं प्रत्येवेन्द्रियसंयोगस्य हेतुत्वादिति भावः। उक्तक्रमेण हेतुतायां साधकाभावमुक्त्वा बाधकमप्याह धूमवानित्यादि। यद्यपि वह्निमानित्येव सामान्यजन्यप्रत्यक्षे व्यभिचारः सम्भवति, तथापि किञ्चिद्धर्मावच्छिन्नमुख्यविशेष्यतानिरूपितद्रव्यप्रकारताकप्रत्यक्षं प्रतीन्द्रियसंयोगस्य हेतुत्वोक्तावपि व्यभिचारसम्पत्त्यर्थं धूमवत्त्वस्य धर्मितावच्छेदकतयोल्लेखः। सामान्यप्रत्यासत्तौ विवादादाह तत्तासंसर्गस्येति। मुख्यविशेष्य इत्यादिः। तथा च यत्र प्रत्य-

त्तिधूमत्वे प्रत्यभिज्ञायने तद्वृत्तित्वेन पूर्वमनुभवात् एवञ्च धूमत्वव्याप्यत्वपरामर्शादेवानुमितिरिति प्राह ।

---

भेदग्रहेणैव कृतार्थत्वाच्च । एतेन तत्ताकारानुपनीततादृशद्रव्यग्रहे स हेतुरिति निरस्तम् । चैत्रपदवाच्योऽयमित्यादिवत् दण्ड्ययमासीदयं दण्डीत्यादिग्रहस्यानुभविकत्वात् तत्तात्वस्यातिरिक्तस्याभा-

---

भिज्ञायां दण्डाद्यात्मकतत्त्वैव धर्मिणि साक्षात्प्रकारस्तत्र व्यभिचार इति भावः । यद्यनुभवसिद्धमपि प्रत्यभिज्ञायास्तत्ताप्रकारकत्वमपलप्यते, अपलप्यतां नर्हि परामर्शाज्जायमानस्यापि पर्वतो वह्निमानित्यादिज्ञानस्य धर्म्यंशे वन्हिप्रकारत्वम् । वन्हिमद्भेदावगाहिप्रत्यक्षत्वेनैव तस्य वन्ह्यर्थिप्रवृत्त्युपयोगित्वसम्भवात् । तथा चोक्तक्रमणेन्द्रियसंयोगस्य हेतुत्वेऽप्यनुमितिर्नाधिका प्रमेत्याशयेनाह प्रकृतेपीति । एतेनेति । पर्वतो वन्हिमानित्यादिबुद्धेर्वन्हिमद्भेदप्रत्यक्षत्वेन कृतार्थत्वेनेत्यर्थः । तत्ताकारानुपनीतेति । तत्तात्वप्रकारतानवच्छिन्नेत्यर्थः । तादृशेति । मुख्यविशेष्यतानिरूपिताधेयत्वसंसर्गावच्छिन्नद्रव्यनिष्ठप्रकारताकसाक्षात्कार इत्यर्थः । दण्डी पुरुषो नास्तीत्यादौ दण्डप्रत्यक्षे व्यभिचारवारणार्थं मुख्यविशेष्यतानिवेशस्यावश्यकत्वादिति भावः । सः इन्द्रियसंयोगः । ननु परामर्शाज्जायमानस्य पर्वतो वन्हिमानित्यादिज्ञानस्य पर्वतांशे वन्हिप्रकारकत्वं न प्रवृत्त्यर्थं कल्प्यते, येन वन्हिमद्भेदावगाहित्वेनापि प्रवृत्त्युपयोगिना स्यात् । किं त्वनुभवसिद्धमेव तस्य तथात्वे । तथा च वन्हौ उक्तकारणबाधादेव तस्य न प्रत्यक्षत्वमित्यनुमितिरधिकैव प्रमेत्यत आह चैत्रपदेति । तथा च चक्षुराद्ययोग्यस्य चैत्रादिपदस्येव चक्षुराद्यसंयुक्तस्यापि दण्डादेश्चाक्षुषादिप्रत्यक्षोदयात्तत्रैव व्यभिचारान्नोक्तक्रमणेन्द्रियसंयोगस्य हेतुत्वम्, येन कारणबाधाद्वन्हेरुपनीतप्रत्यक्षं न स्यादिति भावः । अतीतत्वाद्यनवच्छिन्नतादृशद्रव्यप्रकारताकप्रत्यक्षं प्रत्येवेन्द्रियसंयोगस्य

भवतु तावदेवं तथापि जातिरेव लिङ्गं स्यात् न तु व्यक्तिः । तथा च सर्वोपसंहारेण व्यक्तौ व्याप्तिग्रहार्थं

———

वात् । तच्छब्दप्रयोगजननाभावस्य च निमित्तान्तरविरहप्रयुक्तस्य जन्यतानवच्छेदकत्वात् तज्जननयोग्यतायाः प्रकृतेऽपीष्टत्वात् । अत एव बहिरिन्द्रियग्राह्यविद्यमानद्रव्यस्य तेन ग्रहे तत्संयोगो हेतु-

———

हेतुत्वमुक्त्वा कदा चिद्दण्ड्ययमासीत् इत्यत्र प्रत्यक्षे व्यभिचारवारणसम्भवादाह अयं दण्डीत्यादि । ननु परेषामिदं रजतमित्यादिवदयं दण्डीत्यादिकमप्यगृहीतभेदं ज्ञानद्वयमेव निरुक्तकारणविरहेण विशिष्टप्रत्यक्षत्वायोगादिति यदि ब्रूयात्तदाप्याह तत्तात्वस्येति । अतिरिक्तस्य पूर्वानुभूतद्रव्याद्यतिरिक्तस्य । तथा च तत्ताकारानुपनीतद्रव्यप्रकारकप्रत्यक्षत्वं कार्यतावच्छेदकमेवाऽप्रसिद्धमिति भावः। ननु तच्छब्दप्रयोगानुपधायकनिरुक्तद्रव्यप्रत्यक्ष एवेन्द्रियसंयोगस्य हेतुत्वं वाच्यं तावतैव द्रव्यात्मकतत्ताप्रत्यभिज्ञायां व्यभिचारवारणादत आह तच्छब्देति । निमित्तान्तरेति । तच्छब्दप्रयोगधर्मिकेष्टसाधनत्वादिज्ञानविरहप्रयुक्तस्येत्यर्थः । अनवच्छेदकत्वादिति । अन्यथा नीलानुपधायकघटत्वादेरपि कार्यतावच्छेदकत्वापत्तेरिति भावः । ननु तच्छब्दप्रयोगजननस्वरूपायोग्य एव निरुक्तद्रव्यप्रत्यक्षे चक्षुःसंयोगत्वादिना हेतुत्वं वाच्यं स्वरूपयोग्यत्वाभावस्य कारणान्तरविरहाप्रयुक्तत्वेन जन्यतावच्छेदकत्वसम्भवादत आह तज्जननेति । प्रकृतेऽपि परामर्शजनिते पर्वतो वन्हिमानित्यादिज्ञानेपि । तथा च निरुक्तेन्द्रियसंयोगकार्यतानवच्छेदकाक्रान्तत्वात् विनापीन्द्रियसंयोगमुपनीतचाक्षुषाद्यात्मकस्य तादृशज्ञानस्योत्पादे बाधकाभाव इति भावः । अत एवेति । द्रव्याद्यात्मकतत्ताप्रत्यभिज्ञानादौ व्यभिचारादेवेत्यर्थः । चक्षुःसंयोगाद्यजन्ये पिशाचोपहतं गृहमित्यादिचाक्षुषे व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति । [ उपहनन-

सामान्यलक्षणप्रत्यासत्त्युपादानमफलं स्यात् । दृश्यते

---

रिति परास्तम् । नयनादिना रजतादेरभावग्रहाभेदारोपादौ व्य-
भिचाराच्च । अथैवं व्यवहितदण्डे पुंसि न कथं नायनो दण्डीति
निश्चय इति चेत् । क्व चित्तत्सहचरितधर्मादर्शनात् तदस्मरणात्,
क्व चिच्च साधारणधर्मदर्शनादिना संशयस्यैव जननात् । सति

---

सम्बन्धेन पिशाचप्रकारकता अन्यथोपहननस्याद्रव्यत्वादसङ्गतेः ]
मान्धातृचक्षुःसंयोगाजन्ये मान्धातुरियं भूमिरित्यादिचाक्षुषे तद्वार-
णाय विद्यमानेति । गुणादिचाक्षुषे व्यभिचारवारणाय द्रव्येति । च-
क्षुर्ग्राह्यस्यैव विद्यमानद्रव्यस्य प्रभादेः स्पार्शनादिग्रहे चक्षुःसंयोगस्य
हेतुत्वात्तेनेति । तत्तात्वस्यातीतमात्रवृत्तित्वमते प्रत्यभिज्ञायां व्यभि-
चारायोगादाह नयनादिनेति । ननु प्रतियोगित्वसंसर्गानवच्छिन्नद्र-
व्यचाक्षुषादौ चक्षुरादिसंयोगस्य हेतुत्वान्नोक्तस्थले व्यभिचार इत्यत
आह अभेदारोपेति । आदिना अयं चैत्रस्य पुत्र इत्यादिचैत्राद्युपनीत-
चाक्षुषोपग्रहः । एवं तदिन्द्रियग्राह्य इत्यादेरनादरे । व्यवहितेत्यनेन
विद्यमानत्वचक्षुःसंयोगाभावयोः सूचनम् । तदस्मरणादिति । तादृ-
शदण्डास्मरणादित्यर्थः । न नायनः । निश्चय इति पूर्वेणान्वयः । ए-
वमग्रेपि । दर्शनादिनेत्यादिना विशेषादर्शनाद्युपग्रहः । संशयस्यैवे-
ति । तदभावविशिष्टबुद्धेः सामग्रीसद्भावे तदभावाप्रकारकस्य तन्नि-
श्चयस्यायोगादिति भावः । ननु यत्र विशेषदर्शनादिना तदभाववि-
शिष्टधीप्रतिरोधस्तत्रैवोपस्थितस्य व्यवहितदण्डस्यायं दण्डीति चा-
क्षुषो निश्चयः स्यादित्यत्राह सति चेति । उक्तक्रमेण हेतुत्वोपेक्षणं
परिष्करोति युक्तं चैतदिति । अन्यथा तादृशकार्यकारणभावाङ्गीका-
रे । दण्डी न वेति संशयोपि चक्षुर्योग्याविद्यमानदण्डस्य चाक्षुष इति
दण्डचक्षुःसंयोगाभावे सोपि न स्यादिति भावः । न हीति । असौ
दण्डी न वेति संशयः । तस्य विद्यमानदण्डस्य । विशिष्टाविलक्षणा
चाक्षुषात्मिका बुद्धिः । नेति । न हीत्यर्थः । यथाश्रुते चक्षुर्योग्यतादृश-

च विशेषदर्शनादाविष्टत्वात् । युक्तश्चैतत्, कथमन्यथा दण्डी न वेत्यादिकः संशयः । न हि नासौ तद्विशिष्टबुद्धिः । न तन्निश्चय इति चेत् । किं तेन, उक्तं हि संशयत्वं निश्चयत्वञ्च न जन्यतावच्छेदकमिति । अस्तु वा तथा, तथापि विशेषस्यादर्शनात् संशयस्येव तद्दर्शनान्निश्चयस्यापि सम्भवात् । मा भूद्वा नायनादिरयं हुताशनादिनिर्णयो मानसस्तु स्यात् तत्र तादृशनियमस्यासत्त्वं

———

द्रव्यचाक्षुषसामान्यं प्रत्येव चक्षुःसंयोगस्य हेतुतायाः प्रस्तुतत्वात् द्रव्यप्रकारकबुद्धेरुपन्यासानर्हत्वात् इति ध्येयम् । तादृशद्रव्यगोचरचाक्षुषनिश्चयत्वावच्छिन्नं प्रत्येव चक्षुःसंयोगहेतुत्वं वाच्यमित्याशयेन शङ्कते न तन्निश्चय इति । असावित्यनुषज्यते । उक्तम् प्रत्यक्षमणिदीधितौ । संशयत्वमिति दृष्टान्तार्थम् । न जन्यतेति । तद्विशिष्टधीसामग्रीदशायामेव तदभावविशिष्टधीसामग्र्यभावसत्त्वे तन्निश्चयसम्भवात्तदभावाप्रकारकत्वघटितस्य तन्निश्चयत्वस्य जन्यतानवच्छेदकत्वात् । अन्यथा घटाप्रकारकपटवत्ताज्ञानत्वस्यापि तथात्वापत्तेरिति भावः । तदभावप्रकारकस्यापि तद्वत्तासमुच्चयस्य निश्चयत्वात्तस्याखण्डत्वमभ्युपेत्याह अस्तु वेति प्राञ्चः । वस्तुतो नन्विदं दण्डवन्न वेति संशयदशायामिदं रक्तदण्डवदिति प्रात्यक्षिकनिश्चयानुत्पत्त्या प्रत्यक्षतन्निश्चयत्वावच्छिन्नं प्रत्यवश्यं विशेषदर्शनाद्यभावविशिष्टतदभावज्ञानत्वेन प्रतिबन्धकत्वं वाच्यमतो निश्चयत्वं जन्यतावच्छेदकमेवेत्यत आह अस्तु वेति युक्तमुत्पश्यामः । तथा निश्चयत्वं जन्यतावच्छेदकम् । दर्शनादिति । विशेषस्येत्यनुषज्यते । सम्भवादिति । तथा च तत्राप्युक्तहेतुतायां व्यभिचार इति भावः । ननु परामर्शजनितस्य पर्वतो वन्हिमानित्यादिज्ञानस्य चाक्षुषत्वादिसम्भवेनापि अनुभवबलादानीयमानया अनुमितित्वजात्या सङ्कराद्याह माभूद्वेति । अयं परामर्शजन्यः । तत्र द्रव्यमानसे। तादृशनियमस्य मनःसंयोगजन्यत्वनियमस्य । अत्यन्तमिति । घटादिमानसे व्यभिचारादिति भावः । न चानुमितेः साक्षात्कारत्वे तत्तदनुमित्य-

बाधितत्वादिति । उच्यते । अस्ति तावदनुमिनोमीत्यनुव्यवसाय-साक्षिको ज्ञानविशेषो यत्र कारणमन्वयव्यतिरेकाभ्यां व्याप्यपरामर्शः । माननप्रत्यक्षविशेषोऽसाविति चेत्, कुतोऽस्य प्रत्यक्षत्वम् । अनुभवत्वादिति चेत्, किमेवमनुभवत्वमन्यत्प्रत्यक्षत्वात् । स्मृत्य-

---

न्यसाक्षात्कारत्वावच्छिन्नभेदानां तत्तदनुमितिसाधारण्यार्थमतिरिक्तानां कल्पनायां गौरवं स्यात्, अस्माकं तु साक्षात्कारत्वसमनियतानां तत्तदनुमित्यन्यत्वविशिष्टसाक्षात्कारत्वानां गुरुत्वादेव तदवच्छिन्नप्रतियोगिताकभेदानामसम्भवः, घटादौ क्लृप्तस्य साक्षात्कारत्वावच्छिन्नप्रतियोगिताकभेदस्यैव वा तादृशसाक्षात्कारत्वावच्छिन्नभेदत्वमतो लाघवमिति वाच्यम् । अनुमितेः प्रत्यक्षान्यत्वमतेऽपि तत्तदनुमित्यन्यत्वविशिष्टसाक्षात्कारान्यत्वावच्छिन्नभेदानां तत्तदनुमितिसाधारण्यार्थमतिरिक्तानां कल्पनाप्रसङ्गात् । अस्मन्मते तु साक्षात्काराभिन्नत्वसमनियतानां तत्तदनुमित्यन्यत्वविशिष्टसाक्षात्कारान्यत्वानां गुरुत्वादेव तदवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धत्वात् साक्षात्कारान्यत्वावच्छिन्नभेदस्यैव लाघवेन तादृशसाक्षात्कारान्यत्वावच्छिन्नभेदत्वसम्भवाच्चेति ध्येयम् । अथानुमानस्य प्रमाणान्तरत्वं प्रमितिवैजात्याभावाद्वा खण्ड्यते, चाक्षुषादेरिवानुमितेरपि साक्षात्कारविशेषतया तत्करणस्य प्रत्यक्षप्रमाणेऽन्तर्भावाद्वा, नाद्य इत्याह अस्ति तावदिति । ज्ञानविशेषः अनुमितित्वाख्यवैजात्यवान् । यत्र कारणमिति । तथा च परामर्शजन्यतावच्छेदकतयापि तादृशवैजात्यसिद्धिरिति भावः । द्वितीयमभिप्रेत्य शङ्कते मानसप्रत्यक्षेति । तथा चानुभवसिद्धत्वेन दुरपन्हवमनुमितित्वं मानसप्रत्यक्षत्वव्याप्यमेवास्तु इति तदाश्रयकरणं प्रत्यक्षप्रमाणमेवास्तामिति भावः । अनुभवत्वादिति । तुल्यन्यायतयाऽनुमितेरिव शाब्दोपमित्यादावपि मानसप्रत्यक्षत्वादिति भावः । एवम् अनुभवमात्रस्यैव प्रत्यक्षत्वे । अनुभवत्वमनुभवत्वशब्दार्थः । अन्यत्प्रत्यक्षत्वादिति । तुल्यव्यक्तिवृत्तिजातिद्वयास्वीकारात्प्रत्यक्षत्वमेवानुभवत्वम् । तथा च प्रत्यक्षत्वेनैवानुमितेः प्रत्यक्षत्वसाधने साध्याविशेष इति भावः । अ-

न्यज्ञानत्वमिति चेन्न। अप्रयोजकत्वात् अनुमितौ साक्षात्कारित्व-ग्रहप्रसङ्गाच्च। तद्व्यञ्जकलौकिकसन्निकर्षादिजन्यत्वविरहान्न तथेति चेत्,स्वात्मानुमितौ तस्यापि सम्भवात् वन्हिमनुमिनोमि न तु साक्षात्करोमीत्यबाधितसाक्षात्त्वाभावग्रहाच्च। अगत्या तु सौ-

---

सिद्धिं परिहरन्नाह स्मृत्यन्यज्ञानत्वमिति। अनुभवत्वमित्यनुषज्यते। स्मृत्यन्यत्वं घटादौ ज्ञानत्वं च स्मृतौ प्रत्यक्षत्वव्यभिचारीत्यतो विशिष्टमुपात्तम्। अप्रयोजकत्वादिति। अनुकूलतर्कं विना पक्षे तत्समे वा व्यभिचारसन्देहस्यापि व्याप्तिधीविरोधित्वात्। अन्यथा वायू रूपवान् स्पर्शवत्त्वादित्यादेरपि प्रामाण्यापत्तेरिति भावः। ननु सत्यपि व्यभिचारसन्देहेऽनुमानादिना व्याप्तिग्रहसम्भवान्नाप्रयोजकत्वमित्यत आह अनुमिताविति। शङ्कते तद्व्यञ्जकेति। साक्षात्कारत्वव्यञ्जक इत्यर्थः। न तथा नानुमितौ साक्षात्कारत्वग्रहः। स्वात्मेति। परात्मनः संयोगस्य लौकिकसन्निकर्षत्वाभावात्स्वपदम्। तस्य लौकिकसन्निकर्षजन्यत्वस्य। तथा। अहं सुखीत्याद्यनुमितौ साक्षात्कारत्वग्रहः स्यात् तस्याप्यात्ममनःसंयोगात्मकसन्निकर्षजन्यत्वादिति। न चैवं ममैतद्धर्मित्यादिस्वाम्योपनीतमानसप्रत्यक्षेपि साक्षात्कारत्वं गृह्येतेति वाच्यम्। इष्टत्वात्। मानसमात्रस्यैव बाधकं विना स्वात्मांशे लौकिकत्वादिति भावः। ननूपनीतप्रत्यक्षानुरोधात्तत्प्रकारकप्रत्यक्षं प्रति तज्ज्ञानत्वेनावश्यं हेतुत्वं तथा च सामग्रीवशादेव वन्ह्याद्यनुमितिमात्रस्य वन्ह्यादिप्रत्यक्षत्वसिद्धौ विशेष्यतया साक्षात्कारत्वप्रकारकप्रत्यक्षं प्रति तादात्म्येनानुमितित्वादिना प्रतिबन्धकत्वमप्यनायत्या कल्प्यमतो नानुमितौ साक्षात्कारत्वस्य ग्रह इत्यस्वरसादाह वन्हिमिति। यद्वा ननु ज्ञानसामान्यं प्रति स्वरूपायोग्यस्यैव लौकिकसंनिकर्षस्य जन्यत्वं साक्षात्कारत्वव्यञ्जकम् अहं सुखीत्यादौ च मनःसंयुक्तसमवाय एव तादृशसन्निकर्ष इति न तत्र साक्षात्कारत्वग्रहानुपपत्तिरत आह वन्हिमिति। साक्षात्त्वाभावेति। साक्षात्त्वत्वावच्छिन्नाभावग्रहाच्चेत्यर्थः। तथा चानुमितेः साक्षात्त्वे प्रतियोगिमत्त्वाद्वन्हिविधेयकानुमि-

# रभं न पश्यामीत्यादावन्यथात्वकल्पनं सामान्यलक्षणानङ्गीकर्तृनये चाप्रसिद्धवन्ह्यादिव्यक्तिकानुमितौ न प्रत्यक्षत्वसम्भावनापि सम्भि-

———

तौ साक्षात्कारत्वत्वावच्छिन्नाभाववत्ताधीः प्रमा न स्यादिति भावः। ननु सुरभि चन्दनमित्यादिसौरभचाक्षुषदशायामुत्पन्नस्य सौरभं न पश्यामीत्याकारकसौरभदर्शनत्वावच्छिन्नाभाववत्ताग्रहस्य यथा न प्रमात्वं विषयबाधात् किं तु भ्रमत्वमेव तथा वन्ह्यनुमितिदशायामुत्पन्नस्य वन्हिं न साक्षात्करोमीतिग्रहस्यापि विषयबाधेन भ्रमत्वादबाधितत्वमेवासिद्धमत आह अगत्येति। अन्यथात्वं भ्रमत्वम्। तथा च सुरभि चन्दनमित्याकारकविशिष्टज्ञानस्य चन्दनं पश्यामीत्यनुव्यवसायबलात् चन्दनांशे दर्शनत्वसिद्धौ सौरभांशेपि दर्शनत्वस्य सत्त्वात्तत्सामान्याभाववत्ताबुद्धेरवश्यं भ्रमत्वं विषयबाधात् पर्वतो वन्हिमानित्यनुमितेः क्वाप्यंशे साक्षात्करोमीत्यनुव्यवसायविरहात् वन्हिं न साक्षात्करोमीतिबुद्धिर्बाधकं विना प्रमैवेति भावः। अथानुमितेरुत्तरं न साक्षात्करोमीत्यनुभवो नास्त्येव साक्षात्कारसामान्याभावस्यायोग्यत्वाद्वन्हिं न साक्षात्करोमीत्यनुभवस्तु वन्हेर्लौकिकसाक्षात्काराभावविषयकत्वेनोपपन्नो नानुमितेरुपनीतभानत्वे बाधकः। शब्दो गगनवृत्तिरित्याद्यनुमितेरुत्तरं गगनं न साक्षात्करोमीतिप्रत्ययस्तु लौकिकतया गगनशून्यमेव साक्षात्कारमवगाहते। तेन गगनादेर्लौकिकविषयत्वाप्रसिद्धावपि न क्षतिः। सौरभं न पश्यामीत्यादिबुद्धावप्युक्तक्रमानुसरणे तु सापि प्रमैव इत्यत आह सामान्येति। तदङ्गीकारे तयैव प्रत्यासत्त्या तदधीनज्ञानलक्षणया वा पक्षीयवन्हिव्यक्तेः पर्वतो वन्हिमानित्यनुमितावुपनीतभानं स्यात् तदसत्त्वे च सन्निकर्षाभावादेव प्रत्यक्षत्वाभावसिद्धावनुमितिः प्रमान्तरम्। न च तवापि कथं तत्राप्रसिद्धवन्हिविशिष्टानुमितिः, अज्ञातस्य विशेषणत्वायोगादिति वाच्यम्।स्मृतौ व्यभिचारेण विशिष्टज्ञानमात्रे विशेषणधियः कारणत्वाभावात् ज्ञानलक्षणानुरोधेन विशिष्टप्रत्यक्षं प्रत्येव तस्यास्तथात्वादिति भावः। व्याख्यातम्। अतिरिक्तप्रमात्वेन। तथा च तत्रापि न साक्षात्करो-

कर्षासम्भवात्। एतेन शाब्दादिकं व्याख्यातम्। व्यवस्थापयिष्यते तावदप्रसिद्धाभावसाध्यकानुमितिर्न च साक्षात्कारिणी तत्रोपनयस्यासम्भवात्, एवञ्च प्रसिद्धसाध्यकानुमितेरपि न साक्षात्त्वं जातिसङ्करप्रसङ्गादित्यपि केचित्। तत्र भेदत्वादिनोपस्थिते ज-

———

मि किं तु शृणोमि उपमिनोमीत्यनुव्यवसायबलादतिरिक्तप्रमासिद्धौ तत्करणमपि शाब्दादिकमतिरिक्तप्रमाणमित्यर्थः। शृणोतेः प्रवृत्तिनिमित्तं प्रत्यक्षत्वावान्तरं श्रावणत्वमिव तद्विरुद्धं शाब्दत्वमपि आत्मा श्रोतव्यो मन्तव्य इति वैदिकप्रयोगात् एतद्वाक्यादयमर्थः श्रुत इत्यादिलोकव्यवहाराच्चेति ध्येयम्। केषां चिन्मतमाह व्यवस्थेत्यादिना। जलत्वव्यापकस्नेहाभाववती पृथिवीतिव्यतिरेकिपरामर्शात् पृथिव्यां जलभेद इत्याकारानुमितिर्जायते सा न प्रत्यक्षं जलभेदस्य प्रागनुपस्थित्या उपनयासम्भवादिति भावः। न च तादृशानुमितेरुपस्थितपदार्थान्तरांश एव सामग्रीसत्त्वादुपनीतप्रत्यक्षत्वं सुघटमिति वाच्यम्। अनुमितेः प्रत्यक्षत्वमतेपि साध्यवत्तया पक्षमात्रस्य तद्विषयत्वानुभवाद्विषयान्तरप्रत्यक्षेऽनुमितिसामग्र्याः प्रतिबन्धकत्वस्य कल्पनीयत्वात्। अन्यथा उपस्थितयावद्वस्तुवगाहित्वेऽनुमितेर्विषयशतभारमन्थरत्वापत्तेरिति भावः। अथाप्रसिद्धसाध्यकायाः प्रत्यक्षत्वाभावेपि प्रसिद्धसाध्यकाया अनुमितेस्तथात्वे बाधकाभाव इत्यत आह एवं चेति। जातीति। साक्षात्त्वं विना अनुमितित्वमप्रसिद्धसाध्यकानुमितावनुमितित्वं विना साक्षात्त्वं घटादिप्रत्यक्षे वर्तत इति मिथो व्यभिचारिणोस्तयोरेकत्र प्रसिद्धसाध्यकानुमितौ सङ्कर इत्यर्थः। मतमिदं दूषयति तत्रेत्यादिना। तत्र पृथिव्यां जलभेद इत्याद्यप्रसिद्धसाध्यकानुमितौ। भेदत्वादिनेति। जलभेदत्वादिना प्रागनुपस्थित्या तदवच्छिन्नोपनीतभानासम्भवेपि भेदत्वसामान्यलक्षणया उपस्थिते भेदे जलत्वाद्यवच्छिन्नप्रतियोगिकत्वसम्बन्धेन जलादेरुपनीतभानमित्यर्थः। न चैवं विशेष्ये विशेषणमित्यादिक्रमेण पृथिवी जलभेदवतीत्येव तत्रानुमितिः स्यात् तथा चाप्रसिद्धसाध्यकस्थले साध्यविशेष्यिकैवानुमितिरिति प्रवादो भज्ये-

च परम्परासम्बन्धज्ञानं विना जातिव्याप्तिमविदुषोऽपि धूमाद्वह्न्यनुमानम्, न हि व्याप्यतावच्छेदकतया भासमानस्यावश्यं व्याप्यताग्रहः, मानाभावात् । तस्मात् पक्षधर्मे व्याप्तिविशिष्टज्ञानं तदनन्तरं विशिष्टवैशिष्ट्यज्ञानं

---

लादिप्रतियोगित्वग्रह इत्यपरे । मानाभावादिति । तन्निष्ठावच्छेदकान्तरग्रहमन्तरेणासम्भवाच्चेत्यपि द्रष्टव्यम् । उपसंहरति तस्मादि-

---

तेति वाच्यम् । अप्रसिद्धसाध्यकपरामर्शस्य विशेष्यविधया साध्यविधेयकानुमितित्वावच्छिन्नं प्रत्येव हेतुत्वात्ततः साध्यविशेषणकानुमित्यसम्भवात् । अन्यथा जलभेदसाध्यकान्वयपरामर्शादपि तद्विशेषणकानुमित्युत्पत्त्या व्यभिचारप्रसङ्गादित्यादेरन्यत्रोक्तत्वादिति भावः । अप्रसिद्धसाध्यकबुद्धेर्व्यतिरेकव्याप्तिधीजन्यत्वेनार्थापत्तित्वस्याग्रे व्यवस्थाप्यत्वात् तदनुरोधेनानुमानप्रामाण्यसाधनं तदुपनीतभानसम्पादनया पुनरनुमानप्रामाण्यखण्डनं च द्वयमप्युन्मत्तप्रलपितमित्याशयेन केचिदित्यपरं इति चोक्तम् । वस्तुतोऽनुमितेर्मानसत्वे वस्त्वन्तरस्य चाक्षुषज्ञानसामग्रीदशायां वन्हेर्मानसान्तर इवानुमितिरपि नोत्पद्येत लाघवेन मानससामान्यं प्रत्येव चाक्षुषसामग्र्याः प्रतिबन्धकत्वात् अनुमित्यन्यमानसत्वावच्छिन्नं प्रति तथात्वे गौरवात् । एवं वन्ह्याद्यनुमितेः प्रत्यक्षत्वे पूर्वोपस्थितयावद्वस्तूनामेव तत्र भानं स्यादुपनयसन्निकर्षसत्त्वात् इष्टापत्तौ चानुभवविरोधः । तत्तद्धर्मिकतत्तद्विधेयकानुमितिसामग्र्यास्तादृशतादृशविधेयतान्यविधेयताकप्रत्यक्षं प्रति विरोधित्वान्तरकल्पने च विभिन्नसाध्ययोः समूहालम्बनानुमितिर्न स्यादित्यनुमितिः प्रमान्तरमेवेति तत्त्वम् । ननु प्रकारान्तरेणानुमित्यनिर्वाह एव व्याप्यतावच्छेदकस्यापि धूमत्वादेर्व्याप्यताग्रहे भानं भविष्यतीत्यत आह तन्निष्ठेति । धूमत्वादिनिष्ठेत्यर्थः । तथा च धूमत्वसमानाधिकरणाभावेत्यादिव्याप्तेर्धूम-

पक्षे वा तृतीयलिङ्गपरामर्शः । अन्ये तु स्वसमानाधि-

---

ति । वाशब्दोऽनास्थायाम् । उभयथापि प्रकृताक्षतेः । वस्तुतो व्याप्यपक्षयोर्वैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वं विनिगमनाविरहेणा-

---

त्वत्वादिघटितत्वात्तदनुपस्थितौ निरवच्छिन्नधूमत्वप्रकारेण धूमज्ञानदशायां वन्ह्यनुमितिर्न स्याज्जात्यतिरिक्तस्यैवावच्छिन्नप्रकारतानियमेनाभावे निरवच्छिन्नस्यैव धूमत्वस्य सामानाधिकरण्यधीसम्भवेपि धूमत्वव्यापकीभूतसाध्यसमानाधिकरणतद्वृत्तापरामर्शस्य तन्निष्ठधर्मान्तरोपस्थित्यधीनत्वात्तदंशेपि स्वरूपतो धूमत्वस्य निवेशे धूमत्वत्वेन व्यभिचारग्रहेपि धूमत्वहेतुकपरामर्शसम्पत्त्याऽनुमितिप्रसङ्गादिति भावः । लिङ्गविशेष्यकपरामर्शस्य हेतुतायां दोषाभावाद्वाशब्दस्यास्वरससूचकत्वासम्भवादाह वाशब्द इति । उभयथा व्याप्यधर्मिकपक्षधर्मतानिश्चयत्वेन पक्षधर्मिकव्याप्यवत्तानिश्चयत्वेन वा हेतुतायाम् । प्रकृतस्य विशिष्टज्ञानहेतुताव्यवस्थापनस्याक्षतेरित्यर्थः । लिङ्गविशेष्यकस्य पक्षविशेष्यकस्य च द्वयोरेव परामर्शयोरनुमितिहेतुत्वसम्भवात्समुच्चयपरोयं वाशब्द इत्यभिप्रेत्याह वस्तुत इति । व्याप्यपक्षवैशिष्ट्यावगाहिज्ञानत्वेन तादृशवैशिष्ट्यावगाहिनिश्चयत्वावच्छेदेन । तथा च व्याप्यपक्षोभयवैशिष्ट्यावगाहिनां सर्वेषामेव निश्चयानां हेतुत्वमित्यर्थः । कारणतावच्छेदकं तु लिङ्गधर्मिकपरामर्शत्वं पक्षधर्मिकपरामर्शत्वं च द्वयमेव, तादृशतादृशपरामर्शोत्तरानुमितित्वस्यैव कार्यतावच्छेदकत्वेन व्यभिचारासम्भवाद्व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वस्य लघुनो अनुगतस्य दुर्वचत्वात्ताद्रूप्येणानुमितिं प्रत्यहेतुत्वेपि नासङ्गतिरिति ध्येयम् । ननु पक्षविशेष्यकव्याप्यवत्तानिश्चयत्वेनैवानुमितिहेतुत्वात् लिङ्गधर्मिकपरामर्शो न हेतुरत आह विनिगमनेति । व्याप्यधर्मिकपक्षधर्मतानिश्चयत्वेनैव हेतुत्वात्पक्षधर्मिकपरामर्शो न हेतुरित्यत्र विनिगमकाभावेनेत्यर्थः । न च लिङ्ग-

करणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वं तत्सामानाधि-
करण्यञ्च व्याप्यत्वं तथा च लाघवात् व्यापकताज्ञा-
नमनुमितिहेतुः, साध्यस्य पक्षधर्मव्यापकताज्ञानञ्च प-
रामर्शः न तु साध्यव्याप्तस्य पक्षधर्मताज्ञानं साध्यव्या-

---

न्यतरविशेषणविशेष्यभावस्यातन्त्रत्वात् । लाघवादिति । अथा-
व्याप्यवृत्तेर्व्यापकत्वसम्पत्तयेऽभावस्य प्रतियोग्यसामानाधिकर-

---

विशेष्यकपरामर्शस्य हेतुत्वे क्व चिदुपनयोपि लिङ्गविशेष्यकः प्रयु-
ज्येतेति वाच्यम् । कथकसम्प्रदायानुरोधात्पक्षविशेष्यकस्यैव तस्यो-
पन्यासात् । अन्यथा व्याप्तिप्रकारकत्वाविशेषात् सर्वो धूमवान् व-
न्हिमानित्युदाहरणं स्यादिति भावः । वस्तुतो यत्र साध्यव्याप्यग्रह-
जनकत्वापेक्षया लघुतरं पर्वतत्वादिकं पक्षतावच्छेदकं तत्र लिङ्गवि-
शेष्यक एव परामर्शोनुमितौ हेतुः पर्वतधर्मिकवन्हिव्याप्यवत्त्वनिश्च-
यत्वापेक्षया वन्हिव्याप्यवत्त्वावच्छिन्नधर्मिकपर्वतप्रकारकनिश्चयत्व-
स्य गुरुतरव्याप्याभावाप्रकारकत्वाप्रवेशेन लघुतया ताद्रूप्येणैव
हेतुत्वौचित्यात् । यत्र तु सकलवृत्तिप्रमेयत्वाश्रयचैत्रादिसमानका-
लीनपर्वतत्वादिरूपं पक्षतावच्छेदकमेव वन्ह्यादिसाध्यव्याप्यहेतुम-
त्त्वापेक्षया गुरुतरं तत्र तदवच्छिन्नविशेष्यकसाध्यव्याप्यवत्तानिश्च-
यत्वेनैव पक्षविशेष्यकः परामर्शो हेतुः तादृशविशिष्टपर्वतत्वाद्यव-
च्छिन्नप्रकारतानिश्चयत्वापेक्षया साध्यव्याप्यवत्त्वनिश्चयत्वस्य लघु-
त्वात् । तदघटितस्यैव कारणतावच्छेदकत्वात् । तथा च व्यवस्थित-
विकल्प एव मूलोक्तवाशब्दः, यदि न तत्प्रकारतातिरिक्तप्रकारत्वा-
निरूपितविशेष्यताकत्वरूपं निश्चयत्वमिति युक्तमुत्पश्यामः । मिश्रे-
णोक्तमाशङ्कते अथेति । अव्याप्यवृत्तेरिति । कपिसंयोगी एतत्त्वाद-
त्यादौ संयोगादेरेतत्त्वादिव्यापकत्वसम्पत्तय इत्यर्थः । स्वप्रतियोग्य-

ण्यं वाच्यं तच्च स्वप्रतियोग्यनधिकरणवृत्तित्वम् एवञ्चावृत्तिगगना-
देर्धर्ममात्रव्यापकत्वं स्यात् तादृशघटत्वाद्यभावाप्रतियोगित्वात् त-
दधिकरणाप्रसिद्ध्या च तदभावस्य स्वप्रतियोग्यनधिकरणवृत्ति-
त्वासम्भवात् तथा च तद्व्यावृत्तये व्यापके हेतुसामानाधिकरण्यं वा-
च्यम्।न चैवं हेतोर्व्यापकसामानाधिकरण्यापेक्षया लाघवमिति चेत्।
अस्तु तावदेवमापाततः, तथापि वृत्तिमत्त्वमात्रमुपादेयम्। न चैवं

———

नधिकरणवृत्तित्वं च हेत्वधिकरणे ग्राह्यम्। नातः कपिसंयोगाभा-
वस्य प्रतियोग्यनधिकरणवृत्तित्वेपि कपिसंयोगादेरेतत्त्वाद्यव्यापक-
त्वम्। तादृशेति। स्वप्रतियोग्यनधिकरणहेतुमन्निष्ठेत्यर्थः। तदधि-
करणाप्रसिद्ध्या गगनाद्यधिकरणाप्रसिद्ध्या। न च स्वप्रतियोगिस-
मानाधिकरणा यावन्तस्तदन्यत्वरूपस्य प्रतियोग्यसामानाधिकरण्यस्य
प्रवेशात् संयोगादौ व्यापकत्वस्य गगनादौ तदभावस्य सम्भवः गग-
नाभावस्यापि तादृशभिन्नत्वादिति वाच्यम्। संयोगादेः सत्तादि-
व्यापकतापत्तेः। संयोगाभावस्य प्रतियोगिसमानाधिकरणतया
तदन्यस्य सत्त्ववन्निष्ठघटाभावस्य प्रतियोगितायाः संयोगे विरहात्।
न च स्वप्रतियोग्यधिकरणयावद्धेत्वधिकरणको यस्तदन्यत्वमभा-
वस्य वक्तव्यमित्यदोषः। तदापि व्यापकत्वादातिरिक्तस्य यावत्त्वस्य
दुर्वचत्वादिति भावः। तद्व्यावृत्तये गगनादेर्व्यापकत्वव्यावृत्तये।
न चैवमिति। व्याप्तौ हेतुनिष्ठसाध्यसामानाधिकरण्यस्येव व्या-
पकतायामपि साध्यनिष्ठहेतुसामानाधिकरण्यस्य प्रवेशान्न लाघव-
मित्यर्थः। वृत्तिमत्त्वमात्रमिति। येन सम्बन्धेन साध्यता तेनैव वृ-
त्तिमत्त्वमुपादेयम्। तेन समवायादिना वृत्तिमतोपि रूपादेः संयो-
गादिना न कस्यापि व्यापकत्वम्। वस्तुतः साध्यतावच्छेदकसम्ब-
न्धेन स्वावच्छिन्नाधिकरणताकत्वं तादृशसम्बन्धिताकत्वमेव वा
व्यापकतावच्छेदकस्य वक्तव्यम्। नातः समवायेन वृत्तिमतो-
ऽपि विरुद्धघटत्वपटत्वयोस्तादृशोभयत्वेन कस्यापि व्यापकत्वमिति
ध्येयम्। सिद्धान्तलक्षणोक्तखण्डशःप्रसिद्ध्या गगनाभावस्यापि प्र-

हेतोः साध्यसामानाधिकरण्यस्य संशये व्यतिरेकनिश्चये वा अनुमित्यापत्तिरिति वाच्यम् । संशये इष्टत्वात्, व्यतिरेकनिश्चये च पक्षधर्मत्वाग्रहे परामर्शविरहात्, तद्ग्रहे च साध्यासमानाधिकरणधर्मान्तरग्रहस्येव तस्यापि विरोधित्वात् । अन्यथा त्विष्टत्वात् । पर्वतो वन्हिव्याप्यधूमवान् पाषाणमयः पाषाणमयावृत्तिश्च वन्हिरिति ज्ञानेन च तुल्ययोगक्षेमं पर्वतवृत्तिधूमव्यापको वन्हिर्धूमवद-

---

तियोगिव्यधिकरणत्वादापातत इति उक्तम् । एवं सामानाधिकरण्यज्ञानस्याहेतुत्वे । अनुमित्यापत्तिरिति । व्यापकतानिश्चयस्य तदानीमपि सम्भवादिति भावः । परामर्शविरहादिति । पर्वतवृत्तिधूमव्यापको वन्हिरित्येवं परामर्शाभावादित्यर्थः । ननु यत्रोक्तव्यापकतापरामर्शकाले वन्ह्यसमानाधिकरणधूमवान् पर्वत इत्याकारकः साधने साध्यसामानाधिकरण्याभावनिश्चयस्तत्राप्यनुमितिः स्यादत आह तद्ग्रह इति । साध्यासमानाधिकरणत्वेन हेत्वोः पक्षधर्मताग्रह इत्यर्थः । धर्मान्तरेति । साध्यवत्ताबुद्धिं प्रति साध्याभावस्येव साध्यासमानाधिकरणधर्मवत्ताया अपि निश्चयस्य विरोधितायाः प्रत्यक्षादौ क्लृप्तत्वादिति भावः । अन्यथेति । यदि साध्यासमानाधिकरणतया धर्मान्तरवत्ताधीर्न प्रतिबन्धिका तदा ताद्रूप्येण हेतुमत्तानिश्चयेऽपि साध्यवत्तानुमितेरिष्टत्वादित्यर्थः । ननु पर्वतवृत्तिधूमव्यापको वन्हिर्धूमवद्वृत्तिरित्येवं निश्चयात्पर्वतो वन्हिमानित्यनुमितेरनुत्पत्त्या साध्यसाधनयोः सामानाधिकरण्यज्ञानं हेतुरत आह पर्वतो वन्हीत्यादि । तुल्येति । तथा च व्याप्यवत्तापरामर्शवादिनो यदि तादृशज्ञानादप्यनुमितिस्तदा ममाप्युक्तज्ञानादनुमिताविष्टापत्तिः । यदि च पक्षे यद्धर्मवत्तानिश्चयः साध्ये तद्धर्मवद्वृत्तित्वनिश्चयः स्वातन्त्र्येणानुमितिविरोधि तदा ममापि तुल्यं हेतोः पाषाणमयत्त्वादितुल्यत्वादिति भावः । तत्र व्यापकतापरामर्शवादिनां मते विरोधोऽसाधारण्यं वा न हेत्वाभासः, तद्बुद्धेरनुमितितत्कारणज्ञानान्यतराविरोधित्वादिति द्रष्टव्यम् ।

वृत्तिश्चेति ज्ञानम् । न च साध्याप्रतियोगिकस्वसमानाधिकरण-यावदत्यन्ताभावकत्वं साध्याप्रतियोगिकत्वावच्छेदकस्वसमानाधि-करणात्यन्ताभावत्वकत्वं वा व्याप्तिः, साध्यप्रतियोगित्वञ्च केवला-न्वयिनि साध्यस्यान्योन्याभावे सम्बन्धविशेषावच्छिन्नात्यन्ताभावे वा प्रसिद्धमिति वाच्यम् । गौरवात् व्यापकत्वाद्यनन्तर्भावेन यावत्त्वस्य दुर्वचत्वात् प्रमाणाभावेन स्वरूपसम्बन्धविशेषरूपत्वा-

---

न चेति । वाच्यमित्यग्रेऽन्वयः । स्वं हेतुः । तथा च यत्समानाधिक-रणा यावदत्यन्ताभावाः साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिता-कभिन्नास्तत्त्वमित्यर्थः । साध्यतावच्छेदकसम्बन्धेनाभावस्य लाभा-र्थमत्यन्तपदम् । तेन धूमवन्निष्ठस्य समवायावच्छिन्नवन्ह्यभावस्य वन्हित्वावच्छिन्नप्रतियोगिताकत्वेऽपि नाव्याप्तिः । स्वाधिकरणवृत्ति-त्वं च निरवच्छिन्नं ग्राह्यम् । नातः कपिसंयोग्येतत्त्वादित्यादावप्रस-ङ्गः । व्यापकत्वादिपर्यवसन्नस्य यावत्त्वस्याप्रवेशेन लघुलक्षणान्तर-माह साध्याप्रतियोगिकत्वेति । अत्रावच्छेदकत्वं स्वरूपसम्बन्धवि-शेष इत्यभिमानः । ननु वाच्यं ज्ञेयत्वादित्यादौ साध्यतावच्छेदकध-र्मावच्छिन्नप्रतियोगित्वाप्रसिद्धिरत आह साध्येति । प्रमेयसाध्यके साध्यतावच्छेदकप्रमेयत्वावच्छिन्नप्रतियोगिताकान्योन्याभावासम्भ-वादाह सम्बन्धविशेषेति । संयोगादिसम्बन्धेन प्रमेयत्वाद्यवच्छि-न्नात्यन्ताभाव इत्यर्थः । उभयत्र दूषणमाह गौरवादिति । यावत्त्वा-दिप्रवेशेन उक्तव्याप्तेर्व्यापकत्वापेक्षया गुरुत्वादित्यर्थः । प्रथमस्य गौरवं विवृणोति व्यापकत्वादीति । यावत्त्वं यद्यनेकत्वं तदा व्यभि-चारिसाधारण्यमित्यशेषत्वरूपं तद्वाच्यं तच्च व्यापकत्वं पर्यवसन्न-मिति भावः । व्यापकत्वादीत्यादिना अपेक्षाबुद्धिविशेषविषयत्वाद्यु-पग्रहः । द्वितीयस्य तु गुरुत्वं व्याकरोति प्रमाणाभावेनेति । ननु धूमादेरपि वन्हिसमानाधिकरणघटाद्यभावाप्रतियोगित्वात्तद्व्याप-कत्वापत्त्या हेतुमन्निष्ठाभावीययावत्प्रतियोगित्वाभाव एव व्यापकत्वं वाच्यमिति तत्रापि यावत्त्वप्रवेशान्न लाघवमत आह व्यापकतायां

प्यवत्पक्षधर्मताज्ञानं वा, गौरवात् । अत एव यो यो धू-

———

सम्भवेनावच्छेदकत्वस्यानतिरिक्तवृत्तित्वपर्य्यवसायित्वाच्च । व्यापकतायाश्च प्रतियोगित्वादेः सामान्याभावस्योक्तत्वात्। सम्बन्धादिनिष्ठसाध्यप्रतियोगित्वव्यक्तेरभावस्य व्यभिचारिसाधनसमानाधिकरणयावदत्यन्ताभाववृत्तितया त्वयापि तस्यावश्यं वाच्यत्वात् साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपव्यापकत्वज्ञानमपेक्ष्य साध्यवदन्यावृत्तित्वज्ञानस्य लघुत्वात्। तद्धेतुतावादिनं निरस्यति अत एवेत्यादिना । वीप्सासमभिव्याहारादिवशादुद्देश्यधर्मवद्वृत्तेरत्यन्ताभावस्याऽन्योन्याभावस्य वा

———

चेति । प्रतियोगित्वादेरिति । हेतुमन्निष्ठाभावप्रतियोगित्वावच्छेदकत्वमर्थः। आदिना तादृशप्रतियोगितावच्छेदकत्वादेरुपग्रहः । न च संयोग्येतत्त्वादित्याद्यनुरोधेन स्वप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावाप्रतियोगित्वादिकमेव व्यापकत्वं तस्य च स्वत्वगर्भत्वान्न सामान्याभावत्वसम्भव इति वाच्यम् । निरवच्छिन्नहेत्वधिकरणवृत्तिताकाभावाप्रतियोगित्वादेरेव तथात्वमित्यभिप्रायात् । व्याप्यवृत्तेर्व्यापकतायां प्रतियोगिवैयधिकरण्याप्रवेशात्तदभिप्रायेण इदमित्यप्याहुः । ननु तादृशव्याप्तौ यावत्त्वादेरिव तवापि व्यापकतायां सामान्यावच्छिन्नप्रतियोगिताकत्वस्य प्रवेशात्साम्यमेव द्वयोरत आह सम्बन्धादीति । आदिपदाधेन सम्बन्धेन साध्यता तदन्यसम्बन्धावच्छिन्नसाध्याभावस्योपग्रहः । तस्य साध्यप्रतियोगित्वसामान्याभावस्य । तथा च न साम्यमिति भावः । अन्यथेत्याद्यग्रिममूलसङ्गत्यर्थमवतारयति लघुत्वादिति । साध्यवदन्यावृत्तित्वस्य साधनभेदेऽप्यभेदेन व्यापकत्वापेक्षया लघुत्वादित्यर्थः । उदाहरणस्य व्यापकताबोधकत्वं व्युत्पादयति वीप्सेति । आदिना स वह्निमानित्यत्र त-

मत्वान् सोऽग्निमानित्युदाहरणवाक्ये साध्यायोगव्यवच्छे-

———

प्रतियोगित्वाभावो विधेयधर्मे तद्वति वा भासते न तु विधेयध-र्मतद्वतोरत्यन्तान्योन्याभावानधिकरणत्वमुद्देश्यधर्मवति, यद्यद-भिधेयं तत्तत्प्रमेयमित्यादावसम्भवादिति भावः। साध्येति।अयो-

———

त्पदोपसन्धानस्योपग्रहः। उद्देश्यस्य धूमवदादेर्यो धर्मः उद्देश्यता-वच्छेदकीभूतो धूमादिस्तद्वद्वृत्तेरित्यर्थः। लाघवादाह अन्योन्या-भावस्येति। अत्र समभिव्याहारवशादित्युक्तं उपसर्गादेरिव वी-प्सादेस्तात्पर्यग्राहकतामात्रं विधेयवाचकवन्ह्यादिपद एव धूमादि-व्यापकवन्ह्यादौ लक्षणा तेन धूमादिव्यापकवन्हिमानित्याकारक एव उदाहरणवाक्यादूबोध इति सम्प्रदायः। अभावे प्रतियोगिता-वच्छेदकत्वादौ च प्रत्यक्मेव वीप्सायाः शक्तिर्नामार्थयोरपि च धूमवदभावयोरेकपदार्थयोरपि चाभावप्रतियोगितावच्छेदकत्वयोः पदार्थैकदेशेपि वन्हित्वादावच्छेदकत्वाद्यभावस्य व्युत्पत्तिवैचित्र्ये-णान्वयः। अत एव विशिष्टव्यापकत्वस्य प्रागनुपस्थितावप्यन्वयबोध इत्यपि वदन्ति। ननु कल्प्यत्वाविशेषादुद्देश्यतावच्छेदकधर्मवत्येव विधेयधर्मवदन्यत्वविरहो वीप्सया बोध्यतां तावतैवोदाहरणस्य सा-ध्यवदन्यावृत्तित्वप्रदर्शकत्वसम्भवादत आह नन्विति। उद्देश्यधर्म-वति भासत इति पूर्वेणान्वयः। असम्भवादिति। प्रमेयत्ववतद्वतोर-त्यन्ताभावान्योन्याभावाप्रसिद्धेरिति भावः। यद्यप्युद्देश्यधर्मवति विधेयधर्मात्यन्ताभावानधिकरणत्वभानेपि साध्यवदन्यावृत्तित्वस्या-ऽलाभात्तन्निरसनमप्रकृतम्।तथापि लघुनः साध्याभाववदवृत्तित्वस्य ज्ञानं यथा न हेतुः यद्यदभिधेयमित्युदाहरणेनोद्देश्यधर्मवति विधेय-धर्मात्यन्ताभावाप्रसिद्ध्या तदनधिकरणत्वप्रत्ययासम्भवात् तथा सा-ध्यवदन्यावृत्तित्वस्यापि धीर्नानुमितिहेतुः उक्तस्थल एव विधेयधर्म-वदन्योन्याभावाप्रसिद्ध्या तदनधिकरणत्वप्रत्ययायोगात् इति दृष्टा-न्तविधया तन्निरसितम्। न च विधेयधर्मवतां यावतां भेद-

देन धूमव्यापकता वन्हेरुपदर्श्यते । अन्यथा वन्हिमाने-
व धूमवानित्यन्ययोगव्यवच्छेदेनोदाहरणशरीरं स्यात् ।
दोषोऽपि व्यभिचारादिर्न पक्षधर्मव्यापकं साध्यमित्यत्रो-
न्नाव्यः । अथ पर्वतवृत्तिधूमव्यापको वह्निरितिपरामर्शो
यदि तदा पर्वतीयधूमं प्रति व्यापकतायाः पर्वतधूमसा-
मानाधिकरण्यनैयत्यात् पर्वतवह्निः परामर्शविषय एवेति
किमनुमेयमिति चेत् । तर्हि पर्वतीयधूमे नियतसाध्यसा-
मानाधिकरण्यस्य व्याप्यत्वस्य भानं साध्यसामानाधिक-

---

गोऽभावप्रतियोगित्वं तथा च साध्ये साधनवन्निष्ठाभावप्रतियोगि-
त्वव्यवच्छेदेनेत्यर्थः । स्यादिति । न स्याच्च केवलान्वय्यनुमान-
मित्यपि द्रष्टव्यम् । न पक्षेति । एतच्च विरोधस्यातिस्फुटत्वमभि-

---

कूटात्यन्ताभाव एव वीप्सादिसमभिव्याहारादुद्देश्यतावच्छेदकावि-
शिष्टे भासत इति प्रकृतेऽपि स्वसमानाधिकरण एव प्रसिद्धस्य प्रमेय-
व्यक्तीनां प्रत्येकभेदस्यात्यन्ताभावोऽभिधेयत्वावच्छिन्ने भासतामि-
ति वाच्यम् । तावतापि साध्यवत्त्वावच्छिन्नान्योन्याभाववदवृत्तित्व-
स्य प्रत्ययासम्भवात् । साध्यवद्भेदकूटस्य तादृशव्याप्त्यघटकत्वा-
दिति भावः । हेतुव्यापकतायां साध्यायोगस्य व्यवच्छेदाप्रवेशादु-
सङ्गतेराह अयोग इति । ननु साध्यवदन्यावृत्तित्वं बोधयदपि व-
न्हिमान् धूमवानित्यादिवाक्यं नोदाहरणं किं तु कथकसंप्रदाया-
नुरोधेन यो यो धूमवान् सोऽग्निमानित्येवोदाहरणशरीरम्, अन्यथा
त्वन्मतेऽपि सर्वं धूमवद्वन्हिमदित्याद्यपि वाक्यं व्यापकत्वबोधक-
तयोदाहरणं स्यादत आह न स्याच्चेति । केवलान्वय्यनुमानमिति ।

रण्यभाननियतमिति व्याप्यत्वभानेऽपि तुल्यम् । यदि च स्मृना व्याप्तिर्धूमेऽवगम्यते तदा व्यापकत्वेऽपि समानम् । वस्तुतस्तु व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं न तु धूमसामानाधिकरण्यं व्याप्यत्वन्तु सामानाधिकरण्यविशेष इति तत्रैवानुमितिरफला स्यात् । न चैवं परामर्शस्य चाक्षुषत्वं न स्याद्व्यापकस्य विशेष्यस्येन्द्रियासन्निकर्षादिति वाच्यम् । इष्टत्वात् । असन्निकृष्टधूमादाविव मानस एव हि सर्वत्र परामर्शः, चक्षुरन्वयव्यतिरेकानुविधानञ्च पक्षवृत्तिधूमोपनयोपक्षीण-

———

सन्धायासाध्याभाववद्वृत्तित्वबुद्धेरपि व्यापकताधीविरोधित्वादिति वदन्ति । मानस एवेति प्रायिकत्वाभिप्रायेण । तेन क्व चिच्छब्दादिना क्व चिच्च साध्येन्द्रियसन्निकर्षात् परामर्शेऽपि न क्षतिः, पक्षसाध्यसम्बन्धस्याग्रहात् ग्रहेऽप्यनुमित्साया अनुमि-

———

साध्यस्य केवलान्वयित्वग्रहदशायामनुमानं न स्यादिति भावः । अतिस्फुटत्वामिति । वन्हाव्व्यापकत्वनिश्चयस्य तद्धर्मिकव्यापकताधीप्रतिबन्धकत्वस्यानुभविकत्वमभिसन्धायेत्यर्थः । वदन्ति प्राञ्चः । प्रायिकत्वेति । एवकारस्य प्रायार्थकत्वाभिप्रायेणेत्यर्थः । तथा च सर्वत्र प्रायशो मानसः परामर्श इति मूलार्थः।।नियमार्थकत्वे बाधकमाह तेनेति । परामर्शे साध्यधर्मिके । ननु साध्येन्द्रियसन्निकर्षदशायां पक्षेऽपि साध्यवत्त्वस्य निर्णयसम्भवात्कथमनुमितिरत आह पक्ष इति । ननु जनकज्ञानोपसर्जनस्य जन्यपरोक्षज्ञाने प्राधान्येन भानं नेति नियमो वक्तव्य इत्याशङ्क्याह मूले अन्यथेति । उक्तनियमसत्त्वे इ-

म् । अथ जनकज्ञाने उपसर्ज्जनतया भातस्य पक्षस्य पर्व्वतादेरनुमितौ प्राधान्येन भानं न स्यात्, न हि जनकज्ञाने उपसर्ज्जनतयावगतं जन्यज्ञानं प्राधान्येन भासते, तथादर्शनात् । न चानुमितेस्तथात्वमसिद्धम्, पर्वतोऽयं वह्निमानित्यनुमितेर्लोकसिद्धत्वादिति चेन्न । पुरुषस्य दण्ड इति ज्ञानानन्तरं दण्डी पुरुष इतिज्ञानजन्यज्ञानदर्शनात् । अन्यथा तत्रापि कथं पक्षविशेष्यकत्वनियमः । न हि कारणीभूतज्ञाने यद्विशेष्यतया भासते तत्कार्य्यीभूतेऽपि तथा, इह भूतले घटो नास्तीति ज्ञानजन्ये घटाभाववद्भूतलमितिज्ञाने तत्र च व्यभिचारात् । तस्मात् पक्षवृत्तिलिङ्गपरामर्शस्यायं स्वभावो यत्स्वाश्रयविशेष्यिकामनुमितिं जनयति नाऽतथाभूताम्, एवं ममापि तुल्यमिति ।

---

तिसम्भवात् । व्यभिचारादिति।न च यत्र यत्रयदुभयवैशिष्ट्याव-

---

त्यर्थः । त्वन्मतेपि लिङ्गविशेष्यकपरामर्शस्याप्यनुमितिजनकतया तत्रोपसर्जनस्य पक्षस्यानुमितौ प्राधान्येन भानासम्भवादिति भावः । ननु जनकज्ञानविशेष्यस्यैव जन्यीभूतज्ञानविशेष्यत्वादनुमितेः पक्षविशेष्यकत्वानुरोधेन लिङ्गविशेष्यकः परामर्शो हेतुरेव नेति कथं तदादाय व्यभिचार इत्यत आह न हीति । तत्र चेति । पुरुषस्य दण्ड इत्याद्युक्तस्थले चेत्यर्थः । तथा च लिङ्गधर्मिकपरामर्शस्य हेतु-

गाहि ज्ञानं कारणं तत्र तदेकतरोपसर्जनस्यान्यतरस्य जन्यज्ञाने प्राधान्येन न भानमिति वाच्यम् । मानाभावात् । अत्र चेदमस्वरसबीजम्, पक्षधर्मसमानाधिकरणाभावप्रतियोगित्वत्वेनाभावज्ञानं वह्न्यादावभ्रान्तमसम्भवि, तादृशप्रतियोगित्वप्रतियोगिताकाभावावगाहि चातिप्रसक्तम्, पक्षधर्मधूमसमानाधिकरणाभावप्रतियोगित्वत्वेनच तज्ज्ञानं न व्यापकम्, येन रूपेण पक्षधर्मताग्रहस्तद्रूपावच्छि-



तायामुक्तव्याप्तिर्न बाधिकेति भावः । उक्तव्याप्तिं परिष्कृत्य शङ्कते दीधितिकारो न चेति । तत्र कारणतायाम् । सप्तम्यर्थः प्रविष्टत्वम् । तच्चोपसर्जनत्वान्वितम् ।तेन तदन्यधर्मिकतत्प्रकारकनिश्चयत्वावच्छिन्नकारणतानिरूपितं ज्ञाननिष्ठकार्यत्वं च तद्विशेष्यकत्वावच्छिन्नं नेत्यत्र तात्पर्यात् लिङ्गधर्मिकसमूहालम्बनानुमितौ न व्यभिचारः । पक्षस्य हेतुतास्थले तत्प्रकारकनिश्चयत्वावच्छिन्नकारणताकानुमितौ पक्षस्य विशेष्यतया भानात्तदन्यधर्मिकत्वानुसरणमिति ध्येयम् । मूले स्वाश्रयः पक्षः । दीधितौ अत्र व्यापकतापरामर्शस्य हेतुत्वे । अभ्रान्तमिति । पक्षधर्मस्येन्धनादेः जलादावपि सत्त्वेन वन्ह्यादौ तत्समानाधिकरणाभावप्रतियोगित्वस्यैव सत्त्वादिति भावः । केवलान्वयिसाध्ये सम्भवत्येवाभ्रान्तं तादृशज्ञानमतो वन्ह्यादावित्युक्तम् । अतिप्रसक्तमिति । धूमादेः पक्षधर्मवन्ह्यादिसमानाधिकरणाभावीयघटादिनिष्ठप्रतियोगित्वाभावग्रहेऽपि पक्षे धूमाद्यनुमित्यापादकमित्यर्थः । न व्यापकमिति । यत्र वन्हौ धूमसामान्यव्यापकत्वं धूमे च पक्षवृत्तित्वं गृहीतं तत्र पक्षवृत्तिधूमान्तर्भावेन व्यापकत्वाग्रहेऽपि अनुमित्युपगमादिति भावः । अत्र धूमे पर्वतवृत्तित्वमुपलक्षणीकृत्य साध्ये धूमसामान्यव्यापकत्वावगाहिनः पक्षवृत्तिधूमव्यापको वन्हिरित्येवं विशिष्टवैशिष्ट्यावगाहिज्ञानस्य हेतुत्वं सुवचमेव । अत एव जातित्वमुपलक्षणीकृत्य जात्यवच्छिन्नाभावस्य प्रमात्मको ग्रहः पटादौ संमतः । अत एव वन्ह्यादौ स्वर्गादौ च वैजात्यस्य स्वरूपतोऽनुपस्थितौ वन्हित्वादिसमानाधिकरणजातित्व-

**व्यापकताज्ञानञ्च मीमांसकमतनिरासेनैव निरस्तमिति। स्वर्गकामो यजेतेत्यादावन्वयबोधं शब्दमणिदीधितौ विवेचयिष्यामः ।**

---

मुपलक्षणीकृत्य वन्हित्वादिसमानाधिकरणजात्यवच्छिन्ननियतपूर्ववर्तितावच्छेदकत्वरूपं वन्ह्यादिकारणतावच्छेदकत्वं तृणारणिमणित्वादौ सुग्रहमित्याशयेन तृणादौ वन्हित्वादिसामानाधिकरण्येन हेतुताग्रह इति मिश्रैरुक्तमिति तु विभावनीयम् । मीमांसकेति । तथा च पुमन्तरीयं तत्पुंस एव वा कालान्तरीयं च पक्षधर्मताज्ञानमादायातिप्रसङ्गात् तत्पुरुषीयत्वादिप्रवेशेऽनन्तकार्यकारणभावापत्तिरिति भावः । अत्रोक्तदोषभयात्स्वव्यापकसाध्यस्य सम्बन्धमात्रमेवास्तु व्याप्तिः तथा च साधनवन्निष्ठाभावाप्रतियोगिसाध्यसम्बन्धहेतुमान् पक्ष इत्येवं परामर्शे साध्यसामानाधिकरण्यभानानियमात्तादृश्यां हेतुत्वे मानाभावः साधनांशे तादृशसाध्यप्रकारतामात्रस्यापेक्षणीयत्वादिति चिन्तनीयम् । ननूक्तक्रमेण स्वर्गकामो यजेतेत्यादावप्यन्यथासिद्ध्यनिरूपकस्वर्गव्यापकतावच्छेदकधर्मवत्तोपर्यवसिततस्य स्वर्गसाधनत्वस्य यागादावभ्रान्तं ज्ञानमसम्भवि स्यात् यागत्वाद्यधर्मत्वादेः स्वर्गवन्निष्ठाभावप्रतियोगितावच्छेदकत्वादत आह स्वर्गकामेत्यादि । स्वर्गसाधनं याग इत्याकारको न तत्र बोधः किं तु यागसाध्यस्वर्गको याग इत्याकारक एव । तत्र यागवदन्यावृत्तित्वघटितं यागसाध्यत्वं स्वर्गत्वसामानाधिकरण्येनैव भासत इति न कापि क्षतिः । आश्रयेऽन्यवृत्तित्वे अभावे च खण्डशो विधिशक्त्यैव मिथः तद्विशिष्टलाभसम्भवादिति भावः । केचित्तु स्वर्गप्रतियोगिकाभावप्रयोजकाभावप्रतियोगितावच्छेदकधर्मवत्त्वलक्षणं स्वर्गसाधनत्वमेव विध्यर्थः । तच्च विजातीयस्वर्गत्वावच्छिन्नाभावस्यैव स्वर्गप्रतियोगिताकाभावत्वेन रूपेण यागत्वावच्छिन्नाभावप्रयुक्तत्वं सुग्रहम् । प्रयुक्तत्वं च स्वरूपसम्बन्धविशेषः कारणतावच्छेदकावच्छिन्नाभावनिरूपितः कार्यतावच्छेदकावच्छिन्नाभावनिष्ठ एवेति नातिप्रसङ्गः । प्रयुक्तत्ववत्कारणत्वस्याप्यखण्डत्वे तु नानुपपत्तिलेशोऽपि स्वर्गकारणतावान् याग इत्येव विधिबोधसम्भवात्, अतिरिक्तस्यापि

एवं लिङ्गपरामर्श एव कारणं न तु परामृश्यमाणं लिङ्गम्। अथ परामर्शमात्रं न हेतुरपि तु लिङ्गपरामर्शः तथा च लिङ्गमपि हेतुः विशिष्टकारणताग्राहकमानेन बाधकं विना विशेषणस्यापि हेतुत्वग्रहात्। न च लिङ्गं परामर्शपरिचायकत्वेनान्यथासिद्धम्, परिचेय विशेषणान्तराभावेन लिङ्गमेव विशेषकं तथा चानन्यथासिद्धत्वात् तदपि हेतुः। अन्यथा परिचायकतया संयोगेनान्यथासिद्धमिन्द्रियमपि करणं न स्यात्। अपि च धूमवान्

———

परिचायकत्वं परिचेयव्यावर्त्तकत्वं तच्च नोपलक्षणतयेत्याह परिचेय इति। विशेषणतया तत्त्वे पुनराह तथा चेति। अवच्छेदकतामात्रेण चान्यथासिद्धावाह अन्यथेति। अपि चेत्यादि। या

———

कारणत्वस्याप्यन्यथासिद्धिनिरूपकानियतपूर्ववर्त्तितावच्छेदकधर्मव्याप्यतया वैजात्यादेः कल्पनीयत्वादिति प्राहुः॥

मूले लिङ्गमपीति। विशेष्येण परामर्शेनान्वयि यत्कारणत्वं तदन्वितत्वे सत्येव लिङ्गस्य विशेषणत्वसम्भवादिति भावः। ननु परिचायकत्वं यदि परिचयजनकत्वं तदा विशेषान्तराभावादित्यग्रिममूलासङ्गतिरतो व्याचष्टे परिचयेति। यद्यपि परिचायकत्वं व्यावर्त्तकत्वमित्येव वक्तुमुचितम्, तथापि विषयितया व्यावर्तकत्वलाभार्थं परिचेयपदम्। नोपलक्षणतया न व्यावर्त्तकधर्मान्तरोपस्थापकतया। तथा च काकवत्त्वादिकं यथा तृणत्वाद्युपस्थापकतया गृहादिव्यावर्त्तकं न तथा लिङ्गं धर्मान्तरोपस्थितिद्वारा परामर्शस्य व्यावर्तकं परामर्शे तादृशलक्षणान्तराभावादित्यर्थः। तत्त्वे व्यावर्तकत्वे।

वन्हिमानिति धूमसमानकालवन्हिविषया धूमविशेषणिकानुमितिः ज्ञायमानविशेषणजन्या विशेषणसमानकालतया विशेष्यविषयेऽशाब्दविशिष्टज्ञानत्वात् दण्डी पुरुष इति प्रत्ययवत् । अत एव ज्ञायमानविशेषणजन्यत्वेन

---

यद्विशेषणसमानकालीनत्वेन तादृशी बुद्धिः सा ज्ञायमानतद्विशेषणजन्येति सामान्यव्याप्तौ पक्षधर्मतासम्पत्तये धूमविशेषणिकेत्यादि । तादृप्यस्यानुभविकत्वप्रदर्शनाय च धूमवानित्यादि। ज्ञायमानेति च तज्ज्ञानस्यापि जनकत्वलाभाय । साध्यविशिष्टानुमितेः साध्याजन्यत्वाद्विशेषणसमानकालतयेति। धूमकालीनवन्हिमान् धूमध्वंसादित्यनुमितेः धूमजन्यत्वात् विशेष्येति।विशेष्ये विशेषणभा-

---

अन्यथेति मूलस्य विशेषणत्वेपि अन्यथासिद्धत्वे इति नार्थः स्फुटतरविरोधात् अतः प्रकारान्तरेणावतारयति अवच्छेदकतामात्रेणेति । कारणतावच्छेदकतामात्रेणेत्यर्थः । यथाश्रुते पक्षतावच्छेदकपर्वतत्वादिजन्यतामादायार्थान्तरत्वापत्तेः सामान्यमुखीं व्याप्तिमाश्रित्य पदव्यावृत्तिमाह यदित्यादि । तादृशी बुद्धिः विशेष्यविषयकाऽशाब्दबुद्धिः । सामान्यव्याप्ताविति । तथा च धूमस्वरूपं विशेषणमादाय हेतुसत्त्वात्तज्जन्यत्वसिध्यैव नार्थान्तरमिति भावः । ननु धूमवति धूमसमानकालतया वन्ह्यवगाह्यनुमितित्वेनैव पक्षतासम्भवाद्धूमवान् वन्हिमानित्याकारप्रदर्शनं व्यर्थमत आह तादृप्यस्येति । विशेषणीभूतधूमस्य समानकालीनतया वन्ह्यवगाहित्वस्येत्यर्थः । धूमवान्पर्वतो वन्हिमानित्यनुमितेरनुव्यवसायेन तस्यां तादृशवन्ह्यवगाहित्वस्य ग्रहादिति भावः । ननु तद्विशेषणजन्येत्युक्त्यैव लिङ्गजन्यत्वासिद्धौ ज्ञायमानत्वांशो व्यर्थ इत्यत आह ज्ञायमानेति चेति । ननु

विशेषणकालवृत्तितया विशेष्यभाननैयत्यं यथा दण्डी

———

वापन्नं यत्समानकालीनत्वेन धर्मान्तरवैशिष्ट्यावगाहीत्यर्थः। त-
दानीं धूमवान् पर्वतो धूमकालीनवह्निमान् धूमध्वंसवत्त्वादित्या-
दौ च विशेषणे विशेषणतापन्नस्यैव धूमस्य समानकालत्वं वह्नौ

———

या यद्विशेषणिकाऽशाब्दविशिष्टबुद्धिः सा तज्जन्येत्येवव्याप्तिरस्तु कृतं
समानकालीनत्वादिप्रवेशेनेत्यत आह साध्यविशिष्टेति। तथा चानु-
मितेः साध्यसमानकालीनत्वानवगाहित्वादेव न व्यभिचार इति भा-
वः। इत्यनुमितेः एवं प्रयोगस्थलीयानुमितेः। अनुमितेरुक्ताकारत्वा-
भावात्। तथा च धूमध्वंसवान्पर्वतो धूमकालीनवह्निमानित्येवं धू-
मध्वंसहेतुकानुमितौ धूमसमानकालीनत्वावगाह्यशाब्दविशिष्टबुद्धि-
त्वस्य हेतोः सत्त्वाद्धूमजन्यत्वरूपस्य साध्यस्य चासत्त्वाद्व्यभि-
चारः स्यादतो विशेष्यपदमिति भावः। यथाश्रुते व्यभिचारतादव-
स्थ्याद्व्याचष्टे विशेष्ये विशेषणभावेनेति। तथा चोक्तानुमितौ विशेष्ये
पर्वते विशेषणतापन्नो न धूम इति तत्समानकालीनत्वावगाहिन्याम-
पि तस्यां न व्यभिचार इति भावः। धर्मान्तरेणेति स्वरूपकथनं न तु
तु विवक्षितं वैयर्थ्यात्। सम्बन्धभेदेनैकस्यैव लिङ्गसाध्यभावेनाऽनु-
मितावुक्तक्रमेण लिङ्गजन्यत्वस्याऽननुमानप्रसङ्गाच्चेति ध्येयम्। ननु
तदानीं धूमवान्पर्वतो धूमकालीनवह्निमानित्याकारानुमितर्विशेष्ये
विशेषणीभूतस्य धूमस्य समानकालीनत्वेन धर्मान्तरस्य वह्नेर्वैशि-
ष्ट्यावगाहिन्या अपि धूमध्वंसलिङ्गकत्वेन धूमाजन्यत्वाद्व्यभिचार
इत्यत आह तदानीं धूमवत्पर्वते इत्यादि। सतः पक्षतावच्छेदकस्य
अनुमितिहेतुत्वमिति मतेपि व्यभिचारसम्पत्त्यर्थं तदानीमित्युक्तम्।
तेन विद्यमानध्वंसप्रतियोगिधूमवत्पर्वतत्वेन पक्षत्वात्तदवच्छेदकी-
भूतधूमस्यासत्त्वलाभः। विशेषण इति। साध्ये विशेषणीभूतो यः
कालः तद्विशेषणतापन्नस्यैवेत्यर्थः। तथात्वापन्नस्य विशेष्ये विशे-

भासते न तु विशेष्ये तथात्वापन्नस्य, अनुभवसिद्धो ह्ययं विशिष्टवै-
शिष्ट्यबुद्धीनां विशेषणताविशेषः। विशेषणं धर्मितावच्छेदकं वि-
शेष्यश्च विधेयम्। तथा च विधेयतावच्छेदकावच्छिन्नं यद्धर्मविशिष्टे
तत्समानकालीनत्वेनावगाहते या अशाब्दी बुद्धिः सा तद्धर्मज-
न्येति पर्य्यवसितोऽर्थः। धूमकालीनवन्हिमानसादौ च विधेय-
तावच्छेदकधूमकालीनवन्हित्वावच्छिन्नं न धूमकालीनत्वेन भासते
परन्तु वन्हित्वावच्छिन्नम्, धूमवानयं धूमकालीनवन्हिमान् पर्वतो
वन्हिमानालोकादिसादौ च न धूमवत्त्वविशिष्टे धूमकालीनवन्हि-
मत्त्वं भासते, किन्तु यादृशविशिष्टपक्षतावच्छेदकवति वन्हिमत्त्वं

———

षणत्वापन्नस्य। धूमस्य समानकालीनत्वं वन्हौ भासत इति पूर्वेणा-
न्वयः। यद्यपि विशेष्ये विशेषणत्वापन्नो यो धूमः तस्यैव समान-
कालीनत्वेन वन्ह्यवगाहित्वादुक्तानुमितौ धूमाजन्यायां व्यभि-
चारतादवस्थ्यम्, तथाप्यापन्नपदमहिम्ना या विशेष्यनिरू-
पितयद्धर्मनिष्ठविशेषणताप्रयुक्ततद्धर्मसमानकालीनत्वावगाहिताक-
शाब्दभिन्नबुद्धिः सा तद्विशेषणजन्येत्यत्र तात्पर्यम्। उक्ता-
नुमितौ च पर्वते धूमस्य यद्विशेषणत्वं तत्प्रयुक्तं न
धूमसमानकालीत्वावगाहित्वं किं तु साध्यांशे विशेषणताप्रयुक्तमे-
वेति न व्यभिचारः। ननु धूमवान्पर्वतो वन्हिमानित्यनुमितावपि
विशेष्ये धूमस्य यद्विशेषणत्वं तत्प्रयुक्तं न धूमसमानकालीनत्वाव-
गाहित्वमित्यसिद्धिरत आह अनुभवेति। अयं विशेष्ये विशेषण-
ताप्रयुक्तः विषयताविशेषः समानकालीनत्वावगाहितारूपः। तादृश-
विषयत्वानुभवे विप्रतिपत्तेः कल्पान्तरमाह विशेषणमित्यादिना।
विधेयतावच्छेदकावच्छिन्नमित्यस्य फलमाह धूमकालीनेत्यादि। वि-
धेयतेति। विधेयतावच्छेदकं यद्धूमकालीनवन्हित्वं न तदव-
च्छिन्नं भासते किं तु वन्हित्वावच्छिन्नं तथा च तादृ-
शीं धूमवत्पर्वतो धूमकालीनवन्हिमानित्यनुमितौ धूमाजन्यायां

पुरुष इतिप्रत्यक्षे, तेन धूमसमानकालीनवह्निसिद्धिः । अन्यथा तत्तद्धूमकालवृत्तिवन्ह्यनुमानं स्यात् । समयविशेषमन्तर्भाव्य व्याप्त्यग्रहात् । किञ्च लिङ्गकरण-

---

सम्बन्धमर्यादया यत्समानकालीनत्वमवगाहत इत्यपि वदन्ति । अथ वा विशिष्टत्वं व्यावृत्तत्वं तच्च तत्समानकालीनत्वग्रहाजन्यत्वं विशेषणविशेष्यपदे च धर्मद्वयमात्रोपदर्शके तथा चैकस्मिन् धर्मे

---

व्यभिचारवारणार्थं तदिति भावः।यद्धर्मविशिष्ट इत्यस्य फलमाह धूमवानयमित्यादिना । धूमवत्त्वविशिष्टे धूमवत्त्वविशेष्यांश इत्यर्थः । उद्देश्यतावच्छेदककुक्षिनिक्षिप्तवस्तूनां परस्परमुद्देश्यविधेयभावविरहादिति भावः । किं त्विति । हेतुभूतालोकविशिष्टे यद्धूमवदभिन्नधूमकालीनवन्हिमत्पर्वतत्वरूपं पक्षतावच्छेदकं तद्धर्मेव वन्हिमत्त्वं भासत इत्यर्थः । तथा च धूमाजन्यायां तादृशानुमितौ व्यभिचारवारणार्थं यद्धर्मविशिष्टपदम् । यद्धर्मनिष्ठविशेष्यतावच्छेदकताकत्वं तदर्थः । कथितस्थले तु धूमो न विशेष्यतावच्छेदकः साक्षाद्धर्मिणि प्रकारतापन्नस्यैव तथात्वात् किं तु विशेष्यतावच्छेदककुक्षिनिक्षिप्त एव धूमः । अत एव ग्रन्थकृतापि तादृशविशिष्टपक्षतावच्छेदकवतीत्युक्तम् । यद्धर्ममात्रावच्छिन्नविशेष्यकत्वं तु नार्थः । पक्षभूतानुमितौ स्वरूपासिद्धिप्रसङ्गात् धूमविशिष्टपर्वतत्वस्यैव तत्तद्धर्मितावच्छेदकत्वादिति ध्येयम् । धूमकालीनवन्हिमानित्याद्यनुमितौ व्यभिचारवारकं प्रकारान्तरमाह सम्बन्धेत्यादि । धूमवान्पर्वतो धूमवद्वन्हिमान् धूमध्वंसादित्यादौ समानकालीनत्वसंसर्गेण धूमविशिष्टवन्ह्यादिसाध्यकानुमितौ धूमाजन्यत्वेन व्यभिचारो वदन्तीत्युक्त्वा सूचितः । ननु धूमवान्पर्वतो वन्हिमानालोकादित्यादौ धूमसमानकालीनवन्हिभिन्नवन्ह्यभाववानित्यादिबाधनिश्चयसहकारेण जनितायां धूमसमानकालीनवन्हिविधेयकानुमितौ धूमाजन्यायां व्यभिचारः

यद्धर्मसमानकालत्वग्रहाजन्या या अशाब्दी तद्धर्मसमानकालीन-त्वबुद्धिः सा ज्ञायमानतद्धर्मजन्येत्यर्थः। एवं न क्वापि व्यभिचार-शङ्का। साध्यस्य पक्षतावच्छेदकसमानकालीनत्वं क्वापि नानुमिति-विषयो मानाभावात्। नवीननये तु कालादेः पक्षतावच्छेदकत्वे तदवच्छिन्नत्वं साध्यस्य भासत इत्यन्यदेतत्। दण्डी पुरुषो गच्छ-

---

किं च विधेयतावच्छेदकत्वमात्रस्यातिप्रसक्तत्वात्स्वविधेयतावच्छेद-कत्वाद्यन्तर्भावेणाननुगमोपीत्यत आह अथ वेति। भेदात्मनो व्यावृ-त्तत्वस्य व्यभिचारावारकत्वादाह तच्चेति। विशेषणत्वादेः प्रवेशवै-यर्थ्यादाह विशेषणेति। ननु धूमकालीनः पर्वतो वन्हिमानित्याद्यनु-मितेर्लिङ्गकालीनत्वग्रहाजन्यत्वविरहादसिद्धिरित्यत आह तथा चेति। तथा च या तत्र तत्कालीनत्वग्रहाजन्यत्वे सति तत्र तत्समानकाली नत्वावगाह्यशाब्दबुद्धिः सा तद्धर्मजन्येत्यर्थः। कथितानुमितावपि वन्हौ यो धूमकालीनत्वग्रहस्तदजन्यत्वसत्त्वान्नासिद्धिः।न च द्वितीय-स्य तत्रेत्यस्य वैयर्थ्यम्, धूमाजन्यायां धूमकालीनः पर्वतो वन्हिमाना-लोकादित्यादिस्थलीयानुमितौ व्यभिचारवारकत्वात्।न चैवमपि धू-मकालीनवन्हिमत्सधर्मा पर्वतो वन्हिमान् धूमादित्यादिस्थलीया-नुमितावसिद्धितादवस्थ्यम्, तस्या अपि वन्हौ धूमसमानकालीनत्व-ग्रहेण जनितत्वादिति वाच्यम्। तत्र हेत्वन्तरेणैव लिङ्गजन्यत्वस्या-नुमातव्यत्वादिति भावः। ननु पक्षतावच्छेदकीभूतपर्वतत्वादिसमा-नकालीनत्वेन साध्यावगाह्यनुमितौ पर्वतत्वाजन्यत्वाद्व्यभिचार इ-त्यत आह साध्यस्येति। ननु गन्धप्रागभावावच्छिन्नो घटो गन्धवा-नित्यादिस्थलीयानुमितौ पक्षतावच्छेदकीभूतस्यापि गन्धप्रागभाव-स्य समानकालीनत्वं गन्धे भासत एव, अन्यथा तत्रासंकीर्णबाधप्रद-र्शनानुपपत्तेः अतस्तत्रैव गन्धप्रागभावाजन्यायां व्यभिचार एवेत्यत आह नवीनेति। गन्धप्रागभावो न तत्र पक्षतावच्छेदकः किं तु त-त्कालः, तदवच्छिन्नत्वमपि स्वरूपसम्बन्धात्मकमेव तत्रानुमितौ भा-सते न तु तत्कालवृत्तितामात्रं येन चरमव्याख्यायामप्युक्तानुमितौ गन्धप्रागभावाजन्यायां व्यभिचारः स्यादिति भावः। पक्षतावच्छे-

तीतादिशाब्दधीवारणाय अशाब्देति। तुल्यन्यायतयोपनीतभानवारणाय तदन्यत्वमपि वाच्यमित्यपि वदन्ति । एतन्नये चातीतत्वाग्रहेऽप्यतीतादिलिङ्गज्ञानान्नानुमितिरिति नातीतलिङ्गकालीनत्वाव-

---

दकावच्छेदेन साध्यस्यानुमितौ नाचार्यसंमतिरतो नवीनेत्युक्तम् । न च कालिकसम्बन्धेन धूमविशिष्टे काले तेनैव सम्बन्धेन वन्हेः साध्यत्वे धूमवत्कालो वन्हिमान् तत्कालत्वादित्यादिस्थलीयानुमितेर्वन्हौ धूमसमानकालीनत्वावगाहिन्यां धूमाजन्यत्वाद्व्यभिचार एवेति वाच्यम् । वस्तुगत्या धूमवन्ह्योरेककालवृत्तित्वभानेऽप्युक्तानुमित्या धूमकालवृत्तितात्वरूपेण वन्हौ तत्समानकालीनत्वानवगाहनात्।पर्वतो वन्हिमान् धूमादित्यादिस्थलीयानुमितौ धूमसमानकालीनत्वं ताद्रूप्येणैव वन्हौ संसर्गमर्यादया भासते धूमवान्पर्वतो वन्हिमानित्याकारकानुमितौ धूमकालीनवन्हीयसंयोगेनैव वन्हेः पर्वतांशे प्रकारत्वादिति भावः । वारणायेति । अन्यथा दण्डसमानकालीनत्वेन गमनवत्त्वावगाहिनि शाब्दबोधे दण्डाजन्यत्वाद्व्यभिचारः स्यादिति भावः । तुल्येत्यादि । एकधर्मविशिष्टे धर्मान्तरवैशिष्ट्यावगाहिबोधत्वावच्छेदेनैव धर्मितावच्छेदकसमानकालीनतया विधेयभानस्यानुभविकत्वात् । अनुभवार्थकज्ञानपदेन तादृशस्मृतौ व्यभिचारवारणेपि तादृशोपनीतप्रत्यक्षे व्यभिचारवारणार्थमुपनीतप्रत्यक्षान्यत्वमपि हेतौ देयमित्यर्थः । तत्राप्युपमितेस्तादृशावगाहित्वाभावादतिरिक्तायास्तस्या असत्त्वाद्वा तदन्यत्वं नोपात्तमिति ध्येयम् । अथातीतलिङ्गिकायां धूमकालीनत्वावगाह्यनुमितौ धूमाजन्यत्वादुक्तव्याप्तौ व्यभिचार इत्यत आह एतन्नय इति । आचार्याणां मत इत्यर्थः । अतीतत्वाद्यग्रह इति । तदग्रहे तूपस्थितधूमध्वंसादिलिङ्गिकैव तत्रानुमितिर्भविता तस्यां च धूमकालीनत्वस्य कारणबाधाद्भानेन निरुक्तहेत्वभावादेव न व्यभिचार इति भावः । नानुमितिरिति । तत्समानकालीनत्वग्रहाजन्यतत्समानकालीनत्वावगाह्यनुमितौ परामृष्यमाणलिङ्गत्वेन हेतुत्वादिति भावः । अतीतलिङ्गिकायां तत्समानकालीनत्वावगाह्यनुमितौ व्यभिचारवारकं कस्य चिन्म-

गाह्यनुमितौ व्यभिचारः। कालोऽत्र वर्त्तमानो विवक्षितः। तद्वैशिष्ट्यांशे च प्रमात्वं वाच्यं वर्त्तमानत्वं वा तादृशधर्मविशेषणमित्यपि कश्चित्। केचित्तु विशेषणं विशेष्यतावच्छेदकं तथा च वर्त्तमानविशेष्यतावच्छेदकसमानकालीनतया धर्मान्तरवैशिष्ट्यावगाह्यशाब्दज्ञानत्वादित्यर्थः। सतश्च पक्षतावच्छेदकस्य हेतुत्वमिष्टमेव, समानका-

---

तमाह काल इति। अत्र समानकालीनत्वे। तथा चातीतलिङ्गकालीनत्वावगाहिन्यामनुमितौ वर्तमानकालानवगाहनात् निरुक्तहेत्वभावादेव न तत्र व्यभिचारः।ननु वर्तमानस्यैव कालस्य यत्रातीतलिङ्गाधिकरणतया तत्र भानं तादृशानुमितौ तथापि व्यभिचार एवेत्यत आह तद्वैशिष्ट्यांशे चेति। तयोर्लिङ्गवर्तमानकालयोर्वैशिष्ट्यांशे चेत्यर्थः। काले वर्तमानत्वं तद्वैशिष्ट्यांशे च प्रमात्वमित्युभयापेक्षया लाघवादाह वर्तमानत्वं वेति। तथा च वर्तमानयद्धर्मसमानकालीनत्वावगाहिनी या तादृशी बुद्धिः सा तद्धर्मजन्येत्येव व्याप्तिरिति भावः। तल्लिङ्गिसमानकालीनत्वावगाह्यनुमितौ परामृश्यमाणतल्लिङ्गत्वेन हेतुत्वादतीतलिङ्गिका तादृशानुमितिरेवासिद्धेति व्यर्थं विशेषणमित्यस्वरसः कश्चित्युक्त्या सूचितः। मिश्रव्याख्यां परिष्कृत्याह केचित्त्वित्यादिना। सतोऽपि साध्यविशेषस्यानुमितावहेतुत्वादाह विशेष्यतावच्छेदकमिति। मुख्यविशेष्यतानिरूपितावच्छेदकमित्यर्थः। तेन पर्वतो धूमकालीनवह्निमानालोकादिमत्त्वादित्यादिस्थलीयानुमितेः कालीनत्वादिविशेष्यतावच्छेदकीभूतवह्नित्वाद्यजन्यत्वेऽपि न व्यभिचारः। एतन्नयेऽतीतलिङ्गज्ञानादप्यनुमित्युत्पादात्तत्र व्यभिचारवारणाय वर्तमानत्वं धर्मविशेषणमित्याशयेनाह तथा चेति। ननु पर्वतः पर्वतत्वकालीनवह्निमानित्यादिस्थलीयानुमितेर्विशेष्यतावच्छेदकीभूतपर्वतत्वाजन्यत्वात् व्यभिचार इत्यत आह सतश्चेति। वर्तमानस्येत्यर्थः। नन्वेवं या यद्विशेष्यतावच्छेदकविशिष्टधर्मान्तरावगाह्यशाब्दबुद्धिः सा तद्विशेष्यतावच्छेदकजन्येत्येव व्याप्तिरस्तु समानकालीनत्वप्रवेशो व्यर्थ इत्यत आह समानेति।

त्वपक्षे परामर्श एव तद्व्यापारः परामर्शस्य तु न व्यापारान्तरमस्ति चरमकारणत्वादिति न तत् करणम् ।

अत्रोच्यते । अतीतानागतधूमादिज्ञानेऽप्यनुमितिद-

———

लीनत्वानुसरणन्तु ताद्रूप्यविषयत्वे प्रतिज्ञायमानविशेष्यतावच्छेदकजन्यत्वस्य प्रयोजकत्वसूचनायेत्याहुः । परामर्श एवेति । न च कारणतावच्छेदकस्य तस्य न व्यापारता परामृश्यमाणत्वेन परामर्शाजननादिति वाच्यम् । व्यापारं प्रति रूपान्तरेण हेतुत्वेऽपि फलम्प्रति ताद्रूप्येण हेतुतायां विरोधाभावात् । लिङ्गत्वेनैवानुमितिहेतुता परामर्शस्तु व्यापारमात्रमित्यपि केचित् ।

———

ताद्रूप्यविषयत्वे तादृशम्मानकालीनत्वविषयत्वे।प्रतिज्ञायमानयद्विशेष्यतावच्छेदकजन्यत्वं तस्य प्रयोजकत्वलाभाय इत्यर्थः । तथा च तत्रोपादेयमेव हेताविति भावः । अनुमितेः पक्षतावच्छेदकजन्यत्वं नाचार्यसंमतमन्यथाऽनुमितिविषयत्वाविशेषाद्वर्तमानसाध्यतावच्छेदकादिजन्यत्वमपि तत्र स्यादिति विशेष्यतावच्छेदकादिप्रवेशोपि हेतौ व्यर्थः स्यात् । या वर्तमानयद्धर्मावगाह्यशाब्दबुद्धिः सा तद्धर्मजन्येत्यस्यैव सम्यक्त्वादित्यस्वरसः केचिदित्युक्त्या सूचितः । परामृश्यमाणत्वेनेति । फलं प्रति यद्रूपेण करणत्वं व्यापारं प्रत्यपि तद्रूपेणैव करणस्य हेतुत्वादिति भावः । रूपान्तरेण विषयित्वादिरूपेण । ताद्रूप्येणेति । परामृश्यमाणलिङ्गत्वेनेत्यर्थः । फलव्यापारौ प्रत्येकरूपेण करणस्य हेतुत्वमुपपादयितुमाह लिङ्गत्वेनैवेति । व्यापारमात्रमिति । मात्रपदेन कारणतावच्छेदकत्वव्युदासः । केचिदित्यस्वरसः । तद्बीजं तु परामर्शं प्रत्यपि लिङ्गत्वेन न हेतुत्वं सामान्यतः प्रत्यक्षे विषयत्वेन तत्तद्व्यक्तिगोचरप्रत्यक्षे तत्तद्व्यक्तित्वेन वा हेतुत्वात्ताद्रूप्येण चानुमितौ हेतुत्वं व्यभिचारीत्येकरूपेण फलव्यापारौ प्रति हेतुत्वमसम्भावितमेवेत्यादि ।

र्शनाच्च लिङ्गं तद्धेतुः व्यापारपूर्ववर्त्तितयोरभावात् । न च विद्यमानं लिङ्गान्तरमेव तद्धेतुः । तदा तस्यापरामर्शात् परामर्शविषयस्य कारणताग्राहकाभावात् । भाविनि पक्षे व्यक्त्यैक्यमेव वा यत्र लिङ्गं तत्र लिङ्गान्त-

---

परामर्शविषयस्येति विनिगमनाविरहो विशेषणत्वं वा तस्य हेतुत्वे बीजं न चेदमज्ञायमानेऽस्तीति भावः । न च विशिष्टस्य कारणत्वं गृह्णत् प्रमाणं विशेषणतावच्छेदकावच्छेदेनापि तत्परिच्छिनत्ति तथा चापरामृष्यमाणस्यापि लिङ्गत्वेन हेतुत्वमविरुद्धमिति वाच्यम् । यतो हि लिङ्गत्वं न साध्यव्याप्यत्वादिकं तदप्रसिद्धावपि गगनाद्यनुमानात् । नापि परामर्शविषयतावच्छेदकमात्रं तथा सति वस्तुमात्रस्यैवानुमितिहेतुतापत्तेः । न चेदं प्रामाणिकम्, तथान्वयव्यति-

---

विनिगमनेति । लिङ्गपरामर्शत्वेनेव परामृश्यमानत्वेनापि हेतुतायां विनिगमकाभावः लिङ्गपरामर्शस्य विषयतया विशेषणत्वं वा लिङ्गस्यानुमितिहेतुतायां बीजं तच्चाज्ञायमाने न सम्भवतीति प्रमाणाभावादेव न तस्यानुमितिहेतुत्वमिति भावः । न चेति । वाच्यमित्यग्रेऽन्वयः । विशिष्टस्य लिङ्गविशिष्टपरामर्शस्य । लिङ्गत्वेनेति । तस्यैव परामर्शविशेषणतावच्छेदकत्वादिति भावः । व्याप्यत्वादीत्यादिना पक्षवृत्तित्वोपग्रहः । तदप्रसिद्धाविति । वृत्तितानियामकसम्बन्धेन साध्यतायां गगनादिसाध्यनिरूपितव्याप्तेर्गुणादिपक्षके संयोगेन हेतुतायां च पक्षवृत्तित्वस्याप्रसिद्धावित्यर्थः । वस्तुमात्रस्येति । परामर्शविषयतावच्छेदकस्याभाववत्त्वाधिकरणत्वादेः केवलान्वयित्वादिति भावः । इदं वस्तुमात्रस्यानुमितिहेतुत्वम् । तथेति । परामर्शविषयतावच्छे-

रेकादिविरहात् । अन्यथेच्छाशाब्दबोधादिकं प्रतीष्टसाधनत्वाका-ङ्क्षादिकुक्षिनिक्षिप्तस्य जगत एव हेतुतापत्तेः । न वा वास्तवो वि-निगमनाविरहोऽपि।प्रमेयत्वादिना ज्ञातादपि लिङ्गादनुमित्यापत्तेः। व्याप्तिपक्षधर्मत्वेन ज्ञानमानत्वोक्तौ च लाघवाचादृशज्ञानत्वेनैव हे-तुत्वात् । किञ्च कालान्तरीयतादृशज्ञानविषयादपि लिङ्गादनुमि-तिप्रसङ्गः कारणतावच्छेदकावलीढकारणसत्त्वस्यैव कार्य्योत्पत्ति-नियामकत्वान्न तु तद्विशिष्टसत्त्वस्यैव, गौरवात्। इतोऽपि च प्रति-

---

दकीभूतेनाऽभाववत्त्वादिनानुमितौ स्वतन्त्रान्वयाद्यनुविधानाभावा-दिति भावः । ननु विनापि स्वतन्त्रान्वयविधानं लिङ्गविशिष्टपराम-र्शहेतुत्वमेव तद्विशेषणतावच्छेदकीभूतेनाभाववत्त्वादिना हेतुताग्रा-हकमित्यत आह अन्यथेति । इच्छादाविष्टसाधनत्वादेर्यथासङ्ख्यम-न्वयः । कुक्षिनिविष्टस्य तद्घटकीभूताभावत्वावच्छिन्नस्य । ननूक्त-दोषाल्लिङ्गपरामर्शहेतुताग्राहकप्रमाणेन विशेषणीभूतस्य लिङ्गस्य हेतुत्वाग्रहेऽपि धूमादिलिङ्गकानुमितौ धूमादिलिङ्गकपरामर्शत्वेनेव विनिगमनाविरहेण परामृश्यमाणधूमत्वादिनापि हेतुत्वमायास्यत्ये-वेत्यत आह न वेति । व्याप्तीति । व्याप्तिप्रकारकपक्षधर्मतानिश्चयावि-षयत्वेनेत्यर्थः । तादृशज्ञानत्वेन व्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वेन । तद्विषयत्वस्यापि प्रवेशो गौरवादिति भावः । ननु पक्षनिष्ठविशेष्य-तानिरूपितव्याप्त्यवच्छिन्नप्रकारतासम्बन्धेनैव ज्ञानविशिष्टत्वेन हेतु-त्वाद्विनिगमनाविरह एव, प्रमेयत्वादिप्रकारस्यापि तादृशसम्बन्धेन हेतुत्वाभावादेवातिप्रसङ्गाभावादत आह किं चेति । कालान्तरीयं यद्व्याप्तिविशिष्टपक्षधर्मताज्ञानं तद्विषयीभूतादपि लिङ्गादित्यर्थः । ननु कारणतावच्छेदकधर्मावच्छिन्नपूर्वसत्त्वस्य कार्योत्पत्तौ तन्त्र-त्वात्तदानीं तु तादृशज्ञानविषयतापन्नस्य लिङ्गस्याभावान्नानुमितिरत आह कारणेति ।अवलीढमुपलक्षितम् । तद्विशिष्टस्येति । कारणता-वच्छेदकविशिष्टसत्त्वस्येत्यर्थः । कार्योत्पत्तिनियामकत्वमिति विभ-क्तिपरिणतेनाऽन्वयः । गौरवादिति । दण्डादिसत्त्वापेक्षया दण्डत्वा-

बन्धकाभावादीनां न कारणतावच्छेदकत्वम्, परामर्शविशिष्टसत्त्वस्य चात्र प्रयोजकत्वाभिधाने लाघवादावश्यकत्वाच्च परामर्शस्यैव तथात्वं तत्र च नातिप्रसङ्गशङ्कापि । अथैवं संयुक्तेन्द्रियादीन्द्रियसंयोगाद्योः कारणतायामपीदमेव विनिगमकं स्यादिति चेत्,

---

दिविशिष्टसत्त्वस्य घटाद्युत्पत्तिनियामकत्वे गौरवादित्यर्थः । स्वरूपसम्बन्धात्मनो नियामकत्वस्य बाधकं विना लघुन्येव विश्रामादिति भावः । इतोपि चेति । कारणतावच्छेदकोपलक्षितपूर्वसत्त्वस्यैव कार्योपधाने तन्त्रत्वादपि चेत्यर्थः । अन्यथा मण्यादिसत्त्वदशायां मण्याद्यभावविशिष्टवन्हित्वावच्छिन्नस्यासत्त्वादेव दाहानुत्पत्तिसम्भवात् मण्याद्यभावत्वेन दाहादिहेतुत्वं न स्यादिति मुरारिमिश्र एव विजयी स्यादिति भावः। इतोपीत्यपिकारान्मण्याद्यभावविशिष्टवन्हित्वेनेव विनिगमनाविरहाद्वन्हिविशिष्टमण्याद्यभावत्वेन हेतुतापत्तिरतो वन्हित्वमण्यभावत्वाभ्यां स्वतन्त्रान्वयव्यतिरेकेण ताद्दशलघुधर्माभ्यां दाहादिहेतुत्वसिद्धौ न प्रतिबन्धकाभावस्य कारणतावच्छेदकत्वमित्यादिकमावेदितम् । प्रतिबन्धकाभावादीत्यादिना नैमित्तिककारणस्योपग्रहः । तेन घटादिकार्यसमवायित्वान्यथानुपपत्त्या लब्धघटादिकारणताकस्य कपालादेर्न दण्डाविशिष्टकपालत्वादिना घटादिहेतुत्वं दण्डाद्युपलक्षितादपि तद्विगमदशायां केवलकपालाद्धटाद्यापत्तेरिति ध्येयम् । ननु कारणतावच्छेदकविशिष्टसत्त्वस्यैव कार्योत्पत्तौ नियामकत्वं वाच्यम्, अन्यथा कार्योत्पत्तेः पूर्वं तदवच्छिन्नस्याभावस्य सत्त्वे तेन रूपेण कारणत्वमेव दुर्वचं स्यात् अवच्छेदकधर्मस्य कार्याव्यवहितपूर्ववर्तितानवच्छेदकत्वादत आह परामर्शविशिष्टेति । अत्राऽनुमितौ । लाघवादिति । परामृश्यमाणत्वापेक्षया परामर्शत्वस्यावच्छेदकत्वे लाघवादित्यर्थः । सति व्यभिचारे लाघवस्याकिञ्चित्करत्वादाह आवश्यकत्वादिति । विशिष्टसत्त्वस्थले विशेषणसत्त्वस्यावश्यकत्वादित्यर्थः । तथा चाव्यभिचारित्वं तवाप्यनुमतमिति भावः । तथात्वमनुमितिहेतुत्वम् । यत्सत्त्वं कार्योत्पत्तिनियामकं तस्यैव कारणत्वादिति भावः । तत्र चेति । परामर्शत्वा-

स्यादेव यदि न स्यातामिन्द्रियादेः स्वतन्त्रान्वयव्यतिरेकौ, स्याच्च व्यापारेण व्यापारिणोऽव्यवधानम्, न चानुमितिमात्रे तौ लिङ्गस्य, न चातीन्द्रियस्यापि तस्य परामर्शो व्यापार इति ।

---

वच्छिन्नस्यानुमितेः पूर्वमपेक्षणादिति भावः । परामर्शधर्मिकाप्रामाण्यज्ञानाभावस्य स्वतन्त्रान्वयव्यतिरेकाभ्यां पृथगेवानुमितिहेतुत्वात्पूर्वक्षणावच्छेदेनागृहीताप्रामाण्यकादपि धूमत्वेन गृह्यमाणपरामर्शान्नानुमितिरिति भावः । अथैवमिति । एवं कारणतावच्छेदकलाघवस्यादरे । इदमेवेति । संयुक्तचक्षुष्ट्वादिना चाक्षुषादिकं प्रति हेतुतायामेकद्रव्यसंयुक्तादपि चक्षुरादितो द्रव्यान्तरस्य प्रत्यक्षवारणाय तत्तद्द्रव्यसंयुक्तत्वविशिष्टचक्षुष्ट्वादिना तत्तद्द्रव्यचाक्षुषं प्रति हेतुत्वे गौरवात् द्रव्यचाक्षुषसामान्यं प्रत्येव सामानाधिकरण्यप्रत्यासत्त्या चक्षुस्संयोगत्वेन हेतुतायां लाघवमेव नियामकं स्यादित्यर्थः । तथा च चक्षुरादिसंयोगत्वेनेव संयुक्तचक्षुष्ट्वादिनापि विनिगमनाविरहाच्चाक्षुषादिहेतुत्वं स्यादिति चाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुष्ट्वादिना चक्षुःसंयोगत्वाद्यवच्छिन्नं प्रति चक्षुष्ट्वादिना द्रव्यत्वादिना वा हेतुत्वमिति प्रवादो भज्येतेति भावः । संयोगाद्योरित्यादिपदेन घटादिकं प्रति कपालतत्संयोगाद्योः परिग्रहः । विनिगमनाविरहो न चक्षुरादेः कारणत्वसाधकः किं तु अन्वयाद्यनुविधानमेवेत्यभिप्रेत्याह स्यादेवेत्यादि । अन्वयव्यतिरेकयोः स्वातन्त्र्यं कारणप्रमापकत्वम् । ननु चक्षुःसंयोगाद्यन्वयाद्यनुविधानोपक्षीणमेव चक्षुरादेः अन्वयाद्यनुविधानं न तु स्वातन्त्र्येणापि, चक्षुर्नाशकालेपि चक्षुःसंयोगसत्त्वे प्रत्यक्षोत्पादे क्षतिविरहादत आह स्याच्चेति । तथा च चक्षुरादिसंयोगस्य प्रत्यक्षहेतुत्वे चक्षुरादेस्तत्र हेतुत्वं व्यापारेण व्यापारिणो अन्यथासिद्ध्यभावात् । हेतुता च चाक्षुषत्वावच्छिन्नं प्रति चक्षुष्ट्वादिना संयोगत्वाद्यवच्छिन्नं प्रति चक्षुष्ट्वादिना द्रव्यत्वादिना वेत्यन्यदेतदिति भावः । व्यवधानमन्यथासिद्धत्वम् । नन्वेवं चाक्षुषादौ चक्षुरादेरिव अनुमितावपि लिङ्गस्य स्वतन्त्रान्वयव्यतिरेकाभ्यामेव हेतुत्वमायास्यतीत्यत आह न चेति । धूमाद्यसत्त्वेपि

अपि च चैत्रेण परामृष्यमाणाल्लिङ्गादपरामृशतोऽपि मैत्रस्यानुमित्यापत्तिः । तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषपरामृष्यमाणलिङ्गत्वेन हेतुत्वे चानन्तकार्य्यकारणभावप्रसङ्गः । इच्छाकृतिसुखदुःखस्मरणविशिष्टज्ञानशाब्दबोधादिषु ज्ञानेच्छाधर्माधर्मनिर्णयविशेषणभानपदार्थज्ञानादीनामिवानुमितौ परामर्शस्याप्येकार्थप्रत्यासत्त्या हेतुत्वान्नातिप्रसङ्गशङ्कापीति कृतं पल्लवितेन । एकान्योन्याभावविशिष्टापरान्योन्याभावादिर्वर्त्तमान एव

---

तल्लिङ्गकानुमित्युत्पत्त्या व्यभिचारादनुमितिमात्रे लिङ्गस्य न स्वतन्त्रान्वयव्यतिरेकावित्यर्थः । नन्वेवं नित्यलिङ्गकानुमितिं प्रत्येवास्तु परामृश्यमाणलिङ्गस्य हेतुत्वमन्वयाद्यनुविधानसत्त्वादत आह न चेति । तस्य लिङ्गस्य । तथा च यद्यतीन्द्रियलिङ्गस्य मनस्त्वादेः परामर्शो व्यापारः स्यात्तदा तेन व्यापारेणान्यथासिद्ध्यसम्भवात्तादृशलिङ्गस्यानुमितिहेतुत्वं स्यात्, न चैवम्, लौकिकप्रत्यक्षस्यैव विषयजन्यत्वादतः परामर्शेनैवान्यथासिद्धं तत्रापि लिङ्गं न हेतुरिति भावः । ननु कार्योत्पत्तेर्नियामकत्वं न स्वरूपसम्बन्धविशेषः किं तु तद्व्यापकत्वं तच्च लिङ्गपरामर्शसत्त्वस्येव गुरोरपि परामर्शविशिष्टलिङ्गसत्त्वस्याक्षतमतः कारणतावच्छेदकविशिष्टसत्त्वस्यैव कार्योत्पत्तिनियामकत्वस्वीकारेण कालान्तरीयपरामर्शविषयाल्लिङ्गादनुमित्यापत्तिवारणाल्लिङ्गपरामर्शत्वेनेव परामृश्यमाणलिङ्गत्वेनापि हेतुतायां वास्तवो विनिगमनाविरह इत्यतो लिङ्गस्याजनकत्वे विनिगमकान्तरमाह अपि चेति । ननु तथाप्येकस्य पुंसः परामर्शादन्यस्यानुमित्यनुत्पत्त्या तत्पुरुषीयानुमितिं प्रति तत्पुरुषीयपरामर्शत्वेन हेतुत्वात्कार्यकारणभावानन्त्यमेवेत्यत आह इच्छेत्यादि । इच्छादिषु सप्तसु ज्ञानादिसप्तानां यथासङ्ख्यं हेतुतान्वयः । एकार्थेति । यदा यत्रानुमितिः तत्प्राक्क्षणावच्छेदेन तत्र परामर्श इत्येव व्यापकताघटितायां कारणतायां कार्यकारणयोः समवाय एव सम्बन्धविधया प्रविष्ट इति यत्र कारणताघटकसम्बन्धेन कारण

राभावाच्च । यदि च वर्त्तमानमेव तत्र लिङ्गं तदा वर्त्त-
मानवह्न्यनुमानोपपत्तिः। अथ भावि भूतं वा धूमादि न
लिङ्गं किन्तु तत्प्रागभावस्तद्ध्वंसश्च वर्त्तमान एव, त-

---

सर्वत्र हेतुः सम्भवतीत्यत आह यदि चेति । किन्तु तत्प्रागभाव
इति । तस्य च विरोधिकालावच्छेदेन व्याप्यत्वग्रहान्न तत्कालीन-
साध्यसिद्धिरिति भावः । अपि चेत्याद्यभ्युपगमवादः । नियत-
सामानाधिकरण्यरूपाया व्याप्तेः प्रागभावादौ दुरपह्नवत्वात् ।
धूमप्रागभावत्वादिकं नावच्छेदकमिति चेत् । किञ्चातः, न चैत-

---

न्तत्र तस्यैव कार्यताघटकसम्बन्धेन कार्योपधायकत्वान्नैकस्य पुंसः
परामर्शदशायामपरस्यानुमित्यापत्तिरित्यर्थः । साध्यवह्निभेदस्य
केवलान्वयिसाध्यकेऽप्रसिद्धत्वाद्व्यतिरेकिसाध्यके च प्रसिद्धस्यापि
साध्यात्मकस्य तस्य सर्वत्रानुमितौ वर्त्तमानत्वायोगाद्धेत्वन्तरं दर्श-
यति एकेति । एकान्योन्याभावविशिष्टाः येऽपरेषामन्योन्याभावा-
स्तदादिरित्यर्थः । तथा च भाविन्यपि पर्वते ह्रदान्यत्वे सति घटाद्य-
न्यत्वमेव विद्यमानं लिङ्गं वन्ह्यादेः साधकं भविष्यतीति भावः । आ-
दिना ह्रदत्वाद्यत्यन्ताभावविशिष्टस्य घटत्वाद्यत्यन्ताभावस्योपग्रहः ।
ननु वर्तमानस्य धूमप्रागभावादेर्हेतुत्वे तत्कालीनत्वेन वन्ह्याद्यनुमा-
नापत्तेस्तस्य लिङ्गत्वाभिधानमसङ्गतमत आह तस्य चेति । प्रागभाव-
स्य ध्वंसस्य चेत्यर्थः । विरोधीति । यत्र धूमप्रागभावस्तत्र धूमप्राग-
भावानधिकरणकालावच्छेदेनैव वन्हिरित्यादिक्रमेण व्याप्तिग्रहादि-
त्यर्थः । दुरपन्हवत्वादिति । साध्यनियमस्य तत्सामानाधिकरण्यस्य
च द्वयोरेव प्रागभावे सत्त्वादिति भावः । शङ्कते धूमप्रागभावत्वादि-
कमिति । किं चात इति । प्रागभावत्वस्य व्याप्त्यनवच्छेदकत्वेपि
प्रागभावे व्याप्तिपक्षधर्मत्वयोः परामर्शसम्भवादिति भावः । वस्तु-
गतिमनुरुध्याह न चैतदपीति । धूमप्रागभावत्वादेर्व्याप्त्यनवच्छेदक-

योरपि वह्निसमानदेशत्वनियमादिति चेन्न । अतीतभावि दिनवृत्तितया निश्चितात् वर्त्तमानतया सन्दिग्धात् धूमादनुमितौ हि न प्रागभावध्वंसौ लिङ्गे, तयोः सन्दिग्धत्वात् । नापि धूमः, तस्यावर्त्तमानत्वात् । किञ्च भूतभाविवर्त्तमानत्वाविषयात् पर्वते इति ज्ञानाद्यतानु-

———

ष्टपि, व्याप्तेरवच्छिन्नत्वनियमात् परिशेषेण तस्यैव तथात्वात् । अन्यथा धूमादिवृत्तिव्याप्तीनामपि धूमत्वादिकमवच्छेदकं न स्यात् । अथ स्वव्यापकसमानाधिकरणं व्याप्यं व्यापकत्वञ्च तद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगित्वत्वाद्यवच्छिन्नप्रतियोगिताकाभाववत्त्वादिकं स च विशेषणं धर्मो व्याप्यवच्छेदकः । न च धूमप्रागभावसमानाधिकरणाभावप्रतियोगितात्वादिकं प्रतियोगितावच्छेदकम्, गौरवादपि तु धूमसमानाधिकरणाभावप्रतियोगितात्वादिकमेव लाघवात् । एवञ्च न धूमप्रागभावो व्याप्यो न वा तत्त्वं

———

त्वमपि नेत्यर्थः। तस्यैवेति । धूमप्रागभावत्वस्यैवावच्छेदकत्वादिति भावः । अन्यथा व्याप्तेरवच्छेद्यत्वानियमे । प्रतियोगित्वत्वादीत्यादिना तादृशप्रतियोगितावच्छेदकत्वत्वाद्युपग्रहः । स चेति । यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितात्वावच्छिन्नाभावो व्यापकत्वं स एव च विशेषणीभूतो धर्मो व्याप्यवच्छेदक इत्यर्थः । प्रतियोगितात्वादिकमिति । प्रतियोगितावच्छेदकमिति पूर्वेणान्वयः । यद्यप्यव्याप्यवृत्तिवन्हिसंयोगादेर्धूमादिव्यापकत्वोपपत्तये स्वानधिकरणहेतुमन्निष्ठाभावप्रतियोगित्वाद्यभावकूटवत्त्वमेव व्यापकत्वं स्वस्वस्याननुगतत्वेन सामान्याभावासम्भवात् तच्च धूमप्रागभावस्य हेतुत्वेपि सुवचम्, तथापि व्याप्यवृत्तिसाध्यकस्थलाभिप्रायेणेदम् ।

मानं तत्र का गतिः । सर्वत्र प्रागभावाद्यन्यतमत्वं धूमाद्यत्यन्ताभावाभाववत्वं वा लिङ्गमिति चेत् । न । व्यर्थविशेषणत्वेन तेषामलिङ्गत्वात् । अन्यतमत्वाद्यज्ञानेपि धूमज्ञानादनुमितिसत्त्वाच्च । अपि च न धूमप्रागभावादि लिङ्गं न वा तद्धीरनुमितिकारणम्, प्रागभावादीनां व्यर्थत्वात् आवश्यकधूमज्ञानादेवानुमितिसम्भवाच्च ।

---

व्याप्यवच्छेदकम् । अत एव प्रमेयधूमत्वादिकमपि नावच्छेदकमिति चेत् । गतं तर्हि जातिसमनियतोपाधिगुणादीनां व्याप्यत्वेन, लाघवेन गोजलादिनिष्ठाभावप्रतियोगितात्वादेरवच्छेदकत्वात् न तु सास्नास्नेहादिमन्निष्ठाभावप्रतियोगितात्वादेर्गौरवात् । प्रसिद्धतञ्च गोत्वादिवृत्तिधर्माणामवच्छेदकत्वेन, आपातितञ्च ते नीलधूम-

---

तत्र वैय्यधिकरण्याप्रवेशादिति ध्येयम् । लाघवादिति । प्रागभावाप्रवेशेन लाघवादित्यर्थः । एवं चेति । धूमप्रागभावव्यापकत्वाप्रसिद्ध्यैव स्वव्यापकसामानाधिकरण्यरूपव्याप्तेस्तत्रासम्भवादिति भावः । तत्त्वं धूमप्रागभावत्वम् । अत एवेति । धूमवन्निष्ठाभावप्रतियोगित्वत्वाद्यपेक्षया प्रमेयधूमवन्निष्ठाभावप्रतियोगित्वत्वादेर्गुरुत्वात्तदवच्छिन्नाभावाप्रसिद्ध्यैव प्रमेयधूमत्वादिकं न व्याप्त्यवच्छेदकमित्यर्थः । एकजातिव्याप्यस्यापरजातिव्यापकस्य च रूपादेरुत्क्षेपणकर्मणो व्याप्यताव्युदासस्यासम्भवात्समनियतेत्युक्तम् । गुणादीत्यादिपदेन वन्हित्वादिसमनियतस्योर्ध्वज्वलनादिकर्मणः परिग्रहः । तथा च द्रव्यं सास्नावत्वात्स्नेहादूर्ध्वज्वलनाद्वेत्यादौ सास्नादिकं साध्यव्याप्यं न स्यादिति भावः । व्याप्यत्वाभावं व्युत्पादयति लाघवेनेत्यादि । जलादीत्यादिना वह्न्याद्युपग्रहः । अवच्छेदकत्वात् व्यापक-

किञ्च लिङ्गं नानुमितिमात्रे हेतुः लिङ्गं विनापि धूली-
पटलात् लिङ्गभ्रमेणानुमित्युत्पत्तेः, नापि लिङ्गं प्रमानु-
मितौ, परामर्शोऽनुमितिमात्रं हेतुः तद्विशेषप्रमात्वाभ्या-
मेवानुमितितथात्वात्, यत्सामान्ये यत्सामान्यं प्रयो-
जकं तद्विशेषे तद्विशेषस्य प्रयोजकत्वात् । अथ प-

---

समानाधिकरणाभावप्रतियोगित्वाद्यभावस्यातिरिक्तत्वात् । प्रमेय-
धूमत्वादिना वन्ह्याद्यव्यापकत्वार्थमिव स्नेहत्वादिना व्याप्यत्वार्थ-
मपि लघुगुरुसाधारणस्यावच्छेदकत्वस्योपादाने कुतस्तद्व्युदास

---

ताप्रतियोगितावच्छेदकत्वात् । स्नेहादीत्यादिनोर्ध्वज्वलनाद्युपग्रहः ।
सखण्डानामव्याप्यतामभिधायाऽखण्डानामपि तामाह प्रस्थितं चे-
ति । गोनिष्ठाभावप्रतियोगित्वत्वापेक्षया गोत्वत्वविशिष्टवन्निष्ठाभा-
वप्रतियोगित्वत्वादेर्गुरुतया तदवच्छिन्नाभावाप्रसिद्ध्या द्रव्यं गोत्वा-
दित्यादौ गोत्वत्वादिकमपि व्याप्यतावच्छेदकं न स्यादित्यर्थः । उ-
क्तक्रमेण व्याप्यतावच्छेदकनिरुक्तावव्याप्तिमुक्त्वाऽतिव्याप्तिमाह
आपतितं चेति । स्वयं नीलधूमत्वस्य व्याप्त्यवच्छेदकत्वोपगमादाह
ते इति । अतिरिक्तत्वादिति । तस्य नीलधूमादावपि सत्त्वेन धूमव-
न्निष्ठाभावप्रतियोगित्वत्वावच्छिन्नाभावतोऽतिरिक्तत्वादित्यर्थः । त-
था चोक्तक्रमेण नीलधूमत्वे गौरवासम्भवादतिप्रसङ्ग इति भावः ।
ननु प्रमेयधूमत्वादिरूपेण वन्ह्याद्यव्यापकत्वरक्षायै गुरोरपि प्रमेय-
धूमत्वादेर्यथा प्रतियोगितावच्छेदकत्वं स्वीकृतं तथा प्रमेयधूमत्वा-
दिप्रकारेण व्याप्यत्वरक्षार्थमपि स्नेहवन्निष्ठाभावप्रतियोगित्वत्वादे-
स्तथात्वं स्वीकार्यमतः स्नेहादौ नाव्याप्यत्वमत आह प्रमेयधूम-
त्वादिनेति । उपादाने उपगमे । कुत इति । तस्य धूमप्रागभावत्वनील-

रामर्शस्य प्रमात्वं विद्यमानलिङ्गविषयत्वं तथा चायातं लिङ्गस्य प्रमानुमितिहेतुत्वमिति चेन्न । भाविना भूतेन वा यदाकदाचिद्विद्यमानेनापि लिङ्गेन परामर्शप्रमात्वसम्भवान्नानुमितिपूर्वसमये तत्प्रमात्वानुरोधेन लिङ्गस्य सत्त्वं कारणत्वं वा धूमकालीनवन्ह्यनुमानञ्च यदा यत्र धूमस्तदा तत्र वह्निरिति व्याप्तिज्ञानादेव । अथ वा धू-

———

इति । तथा चेति । तत्रैव क्लृप्तसामान्यकारणस्य विशेषरूपेण हेतुत्वं यत्र कल्प्यकारणतावच्छेदकमपेक्ष्य न गौरवम्, अन्यथा विशेषकारणकलापविलयप्रसङ्गादिति भावः । धूमकालीनेत्यादि । सामानाधिकरण्ये कालविशेषस्यापि सम्बन्धघटकतया प्रविष्टत्वा-

———

धूमत्वादेः कुतो व्याप्यतावच्छेदकत्वव्युदासः धूमप्रागभावादिमन्निष्ठाभावप्रतियोगित्वत्वादेरपि गुरोः प्रतियोगितावच्छेदकत्वसम्भवादिति भावः। ननु यत्सामान्य इत्यादिन्यायेनानुमितिसामान्यहेतोः परामर्शस्यैव प्रमापरामर्शत्वेन प्रमानुमितौ विशिष्य हेतुत्वोक्त्या लिङ्गस्य तत्र कारणत्वखण्डनात्पुनः तदाशङ्कनं सन्दर्भविरुद्धमतो भावमाह तत्रैवेति । न गौरवमिति । तथा च लिङ्गत्वापेक्षया गुरुत्वादेव यथार्थलिङ्गपरामर्शत्वेन प्रमानुमितौ न हेतुत्वसम्भव इति भावः । अन्यथेति । सामान्यतः क्लृप्तत्वादेव विशेषतः कारणत्वे कार्यसामान्यहेतोः कालादेरनुमित्यादिकं प्रति परामर्शादिविशिष्टकालत्वादिना हेतुत्वापत्त्या परामर्शादिकमप्यनुमितौ हेतुर्न स्यादित्यर्थः । ननु यदा यत्रेत्यादिव्याप्तौ सामान्यतः कालनिवेशात्कथं धूमकालीनत्वेन वन्हेः सिद्धिरत आह सामानाधिकरण्य इति । नियतेत्यादिः । तथा च यत्र धूमस्तत्र धूमकालीनवन्हिसंयोगेन वन्हि-

मकालः पक्षतावच्छेदकः पक्षतावच्छेदकधर्मसमानाधिक-रणञ्च पक्षधर्मबलात् साध्यं सिध्यतीति धूमकालीनवह्निसिद्धिः। यत्तु व्यापाराभावान्न परामर्शः करणमिति, तथैव, किन्तु व्याप्तिज्ञानं करणं परामर्शो व्यापारः। न

---

दित्यर्थः। यदा यत्रेति कालिकदैशिकव्याप्तिद्वयज्ञानात्कालदेशयोः साध्यं सिध्यदसति बाधके लाघवादेकमेव सिध्यतीत्यपि वदन्ति। पक्षतावच्छेदकेति। पक्षतावच्छेदककालाद्यवच्छिन्नमित्यर्थः। किन्तु व्याप्तीति। न च स्मरणात्मकपरामर्शस्थले तदसम्भवः, तत्र व्याप्तिविशिष्टानुभवस्य संस्कारद्वारा परामर्शहेतुत्वात्

---

रित्येवं व्याप्तौ धूमकालीनवन्हिसंयोगेनैव साध्यस्य वन्हेः प्रविष्टत्वात् तादृशसम्बन्धेन पर्वतो वन्हिमानित्यनुमितिः सम्बन्धविधयैव धूमकालीनत्वं वन्हेरवगाहते निरुक्तसम्बन्धेन वन्हेः साध्यतालाभार्थमेव यदायत्रेत्युभयोर्मूलेऽभिधानादिति भावः। मतान्तरं दर्शयति यदा यत्रेत्यादि। यदा धूमस्तदा वन्हिर्यत्र धूमस्तत्र वन्हिरित्येवं व्याप्तिद्वयज्ञानाज्जायमानायां पर्वतो धूमकालश्च वन्हिमानित्यनुमितौ पर्वते धूमकाले चैक एव वन्हिर्भासत एवेत्यर्थः। वस्तुगत्या धूमकालीनस्यैव वन्हेः पर्वते भानेपि अपेक्षितस्य धूमकालीनत्वेन वन्हिज्ञानस्यासम्पादनाद्वदन्तीत्युक्तम्। पक्षतावच्छेदकोपलक्षिते पक्षे साध्यसिद्धावपि धूमकालीनत्वेन वन्हेः सिद्ध्ययोगात् व्याचष्टे पक्षतेति। कालादीत्यादिना देशोपग्रहः। एतावताप्याचार्यसम्मतं धूमादकालवृत्तित्वेन वन्ह्याद्यवगाहित्वं नानुमितेः सम्पादितम्। धूमकालस्य पक्षतावच्छेदकत्वे तदवच्छेद्यत्वस्यानुमितौ भानसम्भवेपि धूमसमानकालीनत्वभानासम्भवाद्धूमासमानकालीनवन्हेर्बाधाद्यवतारदशायामेव धूमसमानकालत्वेन वन्ह्याद्यनुमानं द्रष्टव्यमिति नव्याः।

च परामर्शस्य संस्कारो व्यापारः, परामर्शस्य च चरमका-
रणत्वेन संस्कारोत्पादनसमयेऽनुमित्युत्पादनात् । नापि

---

फलाजनकव्यापारस्य फलजनकव्यापारजनकत्वे विरोधाभावात् ।
न च विशिष्टपरामर्शत्वेन न कारणत्वं व्याप्तिज्ञानत्वेन च न तद्वि-
शिष्टस्मृतिहेतुत्वं न वा विशिष्टस्मृतित्वेनानुमितिहेतुत्वमिति वा-
च्यम् । व्याप्तिविषयकज्ञानत्वस्मृतित्वाभ्यां विशिष्टविषयकतत्त्वा-

---

तदसम्भवः व्याप्तिज्ञानस्य करणत्वासम्भवः । ननु फलाजनकस्य त-
दीयव्यापाराजनकत्वनियमादनुमित्यजनकस्य संस्कारादेः कथं त-
द्व्यापारीभूतपरामर्शजनकत्वमत आह फलाजनकेति । विरोधाभा-
वादिति । घटाद्यजनकस्यापि कपालादिकर्मणः तद्व्यापारीभूतकपा-
लसंयोगादिजनकत्वादुक्तव्याप्तेर्व्यभिचारादिति भावः । न चेति।वा-
च्यमित्यग्रेन्वयः । न करणत्वं नानुमितिकरणत्वम् । तथा च व्या-
पारजनकतावच्छेदकरूपेण फलजनकस्यैव करणत्वात् स्मरणात्म-
कपरामर्शजनकतावच्छेदकेन व्याप्यवत्तानिश्चयत्वेनैवानुमिताव-
हेतुत्वात्स्मृत्यात्मकपरामर्शस्थले व्याप्तिविशिष्टानुभवस्यानुमिति-
करणत्वासम्भवादिति भावः । ननु व्यापारीभूतस्मरणात्मकपराम-
र्शस्य व्याप्तिविशिष्टबुद्धित्वात्तज्जनकतावच्छेदकीभूतेन व्याप्तिज्ञानत्वे-
नैवानुमितिकरणत्वान्नोक्तदोष इत्यत आह व्याप्तिज्ञानत्वेन चेति ।
ज्ञानोपरमेपि व्याप्तिविशिष्टविषयोपधानेनेच्छाकृत्योः साक्षात्कारात्
व्याप्तिविषयकत्वेनैव व्याप्तिविशिष्टज्ञानं प्रति हेतुत्वात् । न चानुमि-
तावपि ताद्रूप्येणैव करणत्वम्, इच्छादावप्यतिप्रसक्तत्वादिति भावः।
स्वनिष्ठकरणजन्यतावच्छेदकरूपेण फलजनकस्यैव व्यापारत्वात् पू-
र्वोत्पन्नव्याप्तिविशिष्टस्मृतित्वेनानुमितावजनकत्वात् स्मरणात्मक-
परामर्शस्य न व्याप्तिविशिष्टानुभवव्यापारत्वसम्भव इत्याशयेनाह न
चेति । उक्तनियमयोरप्रयोजकत्वमित्यभिप्रेत्य दूषयति व्याप्तिविष-

भ्यां वा हेतुहेतुमद्भावेऽपि व्यापारव्यापारिभावाविरोधात् । न हि द्वारद्वारिणोः फलजनकत्वं येन रूपेण तेन रूपेण तयोर्मिथो हेतुहेतुमद्भावेऽपि नियमः, मानाभावात् इन्द्रियतत्संयोगपदज्ञानपदार्थोपस्थित्यादिषु प्रत्यक्षशाब्दादिकरणव्यापारेषु व्यभिचाराच्च । न चैवं धारावहनस्थले पूर्वपूर्वेषां विशेषणज्ञानानामुत्तरोत्तरतद्द्वारा शिष्टप्रत्यक्षं प्रति करणत्वापत्तिः, यं जनयित्वैव यस्य यज्ज-

---

यकेत्यादि । एकधर्मिकव्याप्तिज्ञानात् अन्यधर्मिकव्याप्तिस्मरणानुत्पत्त्या धर्मिनिवेशस्यावश्यकत्वे व्याप्तिज्ञानत्वव्याप्तिस्मृतित्वाभ्यां कार्यकारणभावे मानाभावादाह विशिष्टविषयकेति । धूमादिधर्मिकव्याप्तिविशिष्टज्ञानत्वतद्धर्मिकव्याप्त्यादिस्मृतित्वाभ्यां चेत्यर्थः । व्यापारेति । स्मरणात्मकपरामर्शतज्जनकव्याप्यवत्त्वानुभवयोरनुमितौ व्यापारव्यापारिभावेपि विरोधाभावादित्यर्थः। अप्रयोजकत्वं स्पष्टयति न हीति । तयोर्व्यापारव्यापारिणोः। ननूक्तनियमे बाधकाभाव एव मानमत आह इन्द्रियेति । चक्षुःसंयोगाद्यात्मकव्यापारं प्रति द्रव्यत्वेन हेतुभूतस्य चक्षुरादेस्तज्जनकतानवच्छेदकीभूतचक्षुष्ट्वादिना चाक्षुषाद्यात्मकफलं प्रति करणत्वात् संयोगत्वेन चक्षुरादिकरणजन्यस्य चक्षुःसंयोगादेस्तज्जन्यतानवच्छेदकीभूतेन चक्षुःसंयोगत्वादिना चाक्षुषाद्यात्मकफलं प्रति कारणत्वात् । एवं पदार्थोपस्थित्यादिव्यापारं प्रति सम्बन्धिज्ञानत्वेन हेतोः पदज्ञानस्य तज्जनकतानवच्छेदकीभूतपदज्ञानत्वेन शाब्दात्मकफलं प्रति करणत्वात् सम्बन्धिस्मृतित्वेन पदज्ञानात्मककरणजन्यायाः पदार्थोपस्थित्यादेस्तज्जन्यतानवच्छेदकीभूतपदजन्यपदार्थोपस्थितित्वेन शाब्दात्मकफलं प्रति व्यापारत्वाच्च उक्तव्याप्तौ व्यभिचार एव बाधक इत्यर्थः। एवम् उक्तनियमासत्त्वं । द्वारेति । उत्तरोत्तरविशेषणधीद्वारेत्यर्थः । अस्माकं तु प्रथमधीजन्यतावच्छेदकीभूतेन विशिष्टज्ञानत्वेन तृतीयज्ञानं प्रति मध्यमस्याहेतुत्वान्न तस्य तत्र तद्व्यापारत्वमतस्तद्द्वारा प्रथमस्य न तृतीये करणत्वमिति भावः । यमिति । यद्धर्मावच्छिन्नं जयित्वैव

तर्कः, व्याप्तिग्राहकस्य विषयपरिशोधकस्य वा तस्य तदजन्यत्वादिति ॥

---

नकत्वं तस्यैव तत्र व्यापारत्वात् । यत्तु तथानियमेऽपि न क्षतिर्विशिष्टस्मृतेरपि व्याप्तिविशिष्टज्ञानतया विशेषणव्याप्तिविषयकेण पूर्वानुभवेन संस्कारेण वा जननाद्व्याप्तिविषयत्वेनैव करणत्वादिति । तन्न । जन्यत्वविशेषितेन संशयसाधारणेन व्याप्तिविशिष्ट-

---

यद्धर्मावच्छिन्नस्य फलतावच्छेदकीभूतयद्धर्मावच्छिन्नोत्पादकत्वं तद्धर्मावच्छिन्नस्यैव तादृशफले तदवच्छिन्नस्य व्यापारत्वादित्यर्थः । तेन प्रथमज्ञानव्यक्तेर्द्वितीयव्यक्तिं जनयित्वैव तृतीयव्यक्त्युत्पादकत्वेपि न क्षतिः।न चैवं मन इवात्मापि जन्यज्ञानसामान्ये मनोयोगद्वारा करणं स्यात्, इष्टत्वात्।अत एवात्मानमात्मना वेत्तीत्यादौ आत्मनैव मया कृतमित्यादौ च करणे तृतीयापीति भावः । तथा नियमेपीति । व्यापारजनकतावच्छेदकरूपेण फलजनकस्यैव करणत्वं करणजन्यतावच्छेदकरूपेण फलजनकस्यैव व्यापारत्वमित्येवं नियमेपीत्यर्थः । विशिष्टेति । व्याप्यवत्तया पक्षस्मृतेरपीत्यर्थः । विशिष्टबुद्धिसामान्यं प्रत्येव संस्कारसमवायान्यतरसम्बन्धेन विशेषणज्ञानत्वेन हेतुत्वमभिप्रेत्याह पूर्वानुभवेनेति । संस्कारादिसाधारणसविषयकत्वेनैव समवायसम्बन्धेन लाघवाद्विशिष्टधीहेतुत्वमित्यभिप्रेत्याह संस्कारेणेति । जननादिति । तथा च स्मरणात्मकपरामर्शस्थले व्यापारजनकतावच्छेदकेन व्याप्तिविषयकत्वेन पूर्वानुभवस्यानुमित्यात्मकफलजनकत्वान्न तस्य करणत्वहानिः । नन्वेवं व्याप्तिज्ञानत्वेन करणत्वं न स्यादत आह व्याप्तिविषयकत्वेनैवेति । तथा च तत्रेष्टापत्तिरिति भावः । एतावतापि करणजन्यतावच्छेदकरूपेण फलजनकस्यैव व्यापारत्वनियमो नोपपादित इत्याशयेनाह तन्नेति । व्याप्तिविशिष्टबुद्धित्वस्य नित्यवृत्तित्वेन कार्यतानवच्छेदकत्वात् जन्यत्ववि-

ज्ञानत्वेन तज्जन्यत्वात्, नित्यसाधारणेन च व्याप्तिविशिष्टवैशि-ष्ट्यावगाहिपक्षनिश्चयत्वेनानुमितिहेतुत्वात् । यदि च विशिष्टव्याप्तेः प्रथममनुपस्थितावपि विशेष्ये विशेषणं तत्रापि विशेषणमिति रीत्या परामर्शादनुमितिस्तदा नियतपूर्वोपस्थितिकपदार्थोपस्थितेरेव करणत्वं वाच्यम् । यत्तु परामर्शजनकत्वेन तत्तद्विशेषणज्ञानानां करणत्वमिति । तन्न । अन्यम्प्रति पूर्ववर्त्तित्वं गृहीत्वैव तथात्वग्रहेणान्यथासिद्धत्वात् । न च तत्र फलाननुगुणमन्यं प्रतीति

---

शिष्टेनेत्युक्तम् । अनुमितिजनकतावच्छेदकीभूतस्य निश्चयत्वस्याप्रवेशं स्फोरयन्नाह संशयसाधारणेति । तज्जन्यत्वात् विशेषणीभूतव्याप्तिविषयकधीजन्यत्वात् । करणजन्यतावच्छेदकीभूतस्य जन्यव्याप्तिविशिष्टज्ञानत्वस्याप्रवेशं सूचयितुमाह नित्यसाधारणेति । समवायिकारणस्थल एव नित्यस्येत्यादिव्याप्तेः सम्प्रदायसिद्धत्वात्ता-दृशनिश्चयवत्तोपीश्वरस्य हेत्वन्तरविलम्बादेवानुमित्यनुत्पत्तेरिति भावः । धूमव्यापकतावच्छेदकेन तद्भिन्नेन वा वन्हित्वेनावच्छिन्नस्य समानाधिकरणो धूम इत्याकारकस्य विशेष्ये विशेषणमिति रीत्या उत्पन्नस्य व्याप्तिज्ञानस्यानुमित्यजनकत्वाद्व्याप्तिघटकीभूतप्रतियोग्यंशमन्तर्भाव्य निश्चयत्वस्य जनकतावच्छेदकत्वे चाऽतिगौरवाद्व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शत्वेनैव स्वमतेऽनुमितिहेतुत्वमतो यदि चेत्युक्तम् । नियतेति । परामर्शपूर्वं नियतोपस्थितस्याभावत्वादेर्ज्ञानमेव करणमित्यर्थः । मिश्रमतं निरसितुमाह यत्त्विति । परामर्शजनकत्वेनेति । व्यभिचारधीविरोधितावच्छेदकविषयतानिरूपकपक्षधर्मतानिश्चयजनकत्वेनेत्यर्थः । तेन विशेष्ये विशेषणं विशिष्टे वैशिष्ट्यमित्युभयसाधारणपरामर्शत्वस्यासत्त्वेपि न क्षतिः । अन्यमित्यादि । फलादन्यं प्रति पूर्ववर्त्तित्वं गृहीत्वा फलजनकत्वग्रहे ताद्रूप्येण फलं प्रति अन्यथासिद्धत्वादित्यर्थः । तत्रान्यथासिद्धौ । वाच्यं विवेचनीयम् । तथा च परामर्शस्यानुमित्यात्मकफलानुगुणतया तत्पूर्ववर्त्तित्वग्रहेऽप्यनुमितौ न ताद्रूप्येणान्यथासिद्धिरिति भा-

वाच्यम्, गौरवात् । न चैवं भ्रमिजनकत्वलक्षणं दण्डत्वमपि दण्डे घटजनकतावच्छेदकं न स्यात, इष्टत्वात् दण्डत्वेनैव तथात्वात् । क्वचिद् घटानुत्पादो भ्रमिरूपद्वारविरहात् क्षुद्रचक्रभ्रमिजननसमर्थान्महाचक्रसमवहिताद्दण्डाद् घटानुत्पत्तौ तत्प्रयोजकताया आवश्यकत्वात् भ्रमिविशिष्टत्वेन च जनकत्वे चक्रादीनामपि पृथक्कारणत्वं न स्यात, न स्याच्च घटार्थितया दण्डे निष्कम्पा प्रवृत्तिः, प्रथमं

———

वः । एवं फलाननुगुणं प्रतीत्यस्याप्रविष्टत्वे । इष्टत्वादिति । तर्हि किं दण्डस्य घटजनकत्वं निरवच्छिन्नमेव, तथात्वे चापसिद्धान्त इत्यत आह दण्डत्वेनैवेति । ननु भ्रम्यजनकादपि दण्डाद् घटोत्पत्तिः स्यादत आह क्वचिदिति । ननु भ्रमेरपि स्वातन्त्र्येण हेतुत्वमपेक्ष्य दण्डस्यैव भ्रमिजनकत्वेन हेतुत्वं लाघवादुचितमत आह क्षुद्रेति । समर्थादित्यन्तेन कारणतावच्छेदकीभूतभ्रमिजनकत्वस्य महाचक्रत्वादिना भ्रम्यनुपधायकत्वस्य सूचनम् । तत्प्रयोजकताया इति । भ्रम्यभावस्य प्रयोजकताया इत्यर्थः । ननु उपधायकतासम्बन्धेन भ्रमिविशिष्टदण्डत्वेनैव घटहेतुत्वात् कारणतावच्छेदकपूर्वसत्त्वस्यापि कार्योत्पादकत्वाच्च भ्रमेः स्वातन्त्र्येण हेतुत्वं वाच्यमत आह भ्रमिविशिष्टत्वेनेति । भ्रमिविशिष्टत्वान्तर्भावेणेत्यर्थः । चक्रादीनामपीति । तेषामपि भ्रम्युपधायकत्वरूपेणैव घटहेतुत्वसम्भवे चक्रत्वादिना हेतुत्वं न स्यादित्यर्थः । ननु मास्तु चक्रत्वादिना हेतुत्वमतः किमायातमत आह न स्याच्चेति । निष्कम्पेत्युपलक्षणम् । घटार्थिप्रवृत्तिसामान्यं प्रत्येव घटजनकतावच्छेदकधर्मात्मकतत्स्वरूपयोग्यतानिश्चयस्योपादानधर्मिकस्यापेक्षणीयत्वात् । फलोपधायकत्वसन्देहस्थल एव कृष्यादौ सकम्पप्रवृत्तेरुपगमादिति ध्येयम् । ननु स्वर्णत्वपाषाणत्ववंशत्वकाष्ठत्वादिभिः साङ्कर्याद्दण्डत्वजात्या घटहेतुत्वासम्भवो यदि च घटजनकतावच्छेदकतया सिद्धं स्वर्णत्वादिव्यापकमेव दण्डत्वं स्वर्णद्व्यणुकादितश्च घटानुत्पादो भ्रमिरूपव्यापारविरहादेवेत्युच्यते, तदा नानावि-

भ्रमेरुपधानानिर्णयात् । अस्तु वा भ्रमिप्रयोजकोऽवयवसंयोगविशेषादिरेव तथा, प्रथमोपस्थितत्वादावश्यकत्वाच्च । अन्यथा घटजनकत्वेनैव भ्रमिजनकतां किमिति न रोचयेः । अत एव सौवर्णवैणवादिदण्डेष्वनुगतदण्डत्वविरहेऽपि न क्षतिः । किञ्चैवं प्रवृत्तिं प्रतीष्टसाधनताज्ञानजनकत्वेन शब्दादीनां शाब्दबोधं प्रति च त-

---

धानामेव दण्डानां द्रव्यत्वेन मूर्तत्वेन वा घटहेतुत्वसम्भवाद्दण्डत्वजातौ मानाभावः गगनमनःप्रभृतिभ्यो घटानुत्पादस्यापि भ्रम्यात्मकद्वारविरहादेव वक्तुं शक्यत्वादत आह अस्तु वेति । अत्र संयोगविशेषो न काठिनसंस्थानवत्त्वं वेगवद्वायुविशेषादपि चक्रभ्रमरुत्पत्तेः, किं तु चक्रभ्रमिप्रयोजकतया सिद्धवैजात्यान्तरविशिष्टसंस्थानवत्त्वमेव तथा वाच्यम् । तथा च परम्परासम्बन्धेन तादृशसंस्थानवत्त्वस्य कारणतावच्छेदकत्वमपेक्ष्य लाघवाद्विलक्षणैकत्ववत्ताया एव समवायेन जनकतावच्छेदकत्वमुचितम् । अत एव संस्थानगतवैजात्यस्य कर्मजत्वादिभिरभिघातत्वादिभिर्वा साङ्कर्येणासिद्धावपि न क्षतिरित्याशयेनाह आदिरिति । तथा घटजनकतावच्छेदकः । प्रथमेति । भ्रमिजनकत्वस्य तज्जनकतावच्छेदकवैजात्यधीग्राह्यत्वनियमादिति भावः । न च द्वित्रिसंवलितैरेव तृणादिभिः चक्रभ्रमिरुत्पाद्यते तेषामेकस्मादपि चक्रभ्रमेर्घटस्य चोत्पत्तिप्रसङ्गः तदीयैक्यैकत्वे संस्थाने वा भ्रमिप्रयोजकवैजात्यसत्त्वादिति वाच्यम् । असंवलिततत्तत्संयोगव्यक्तीनामपि भ्रम्यादिप्रतिबन्धकत्वकल्पनादिति भावः । यद्यन्यथासिद्धिनिरूपकेणापि भ्रमिजनकत्वेन घटहेतुत्वं तदा भ्रमिहेतुत्वमपि घटजनकत्वरूपेणैव स्यात् तथा चान्योन्याश्रयापत्तिरित्यभिप्रेत्याह अन्यथेति । अत एवेत्यस्य स्वर्णत्वकाष्ठत्वादिभिः साङ्कर्यादिति शेषः । वैणवादीत्यादिना पाषाणदण्डस्योपग्रहः । ननु भ्रमेः फलानुगुणतया तज्जनकत्वेन घटहेतुत्वेपि घटस्य भ्रम्यननुगुणत्वात्तज्जनकत्वेन भ्रमिहेतुतायामन्यथासिद्धिरेव बाधिकेत्यत आह किं चेति । एवं परामर्शजनकत्वेन व्याप्त्यादिज्ञानस्यानुमितिहेतुत्वे । शब्दादीनामिति । हेतुत्वप्रसङ्ग इत्यग्रेऽन्वयः । एवमग्रे-

ञ्जनकाकाङ्क्षादिज्ञानजनकत्वेनानुमानसंस्कारतत्तद्विशेषणज्ञानादीनां कार्यान्तरं प्रति च तज्जनकतत्तत्पदार्थकारणानां तत्तत्पदार्थकारणत्वेन हेतुत्वप्रसङ्गः । तज्जनकत्वेन हेतुत्वे तत्त्वेनैव हेतुत्वं प्रथमोपस्थितत्वादावश्यकत्वाल्लाघवाच्चेति चेत् । किमिदं प्रकृते पाणिपिहितम् । इदं पुनरिहावधेयम् । विशिष्टविषयकत्वेन कारणत्वे केवलविशेषणादिविषयत्वेन न हेतुत्वं तदवच्छिन्नका-

---

पि । तज्जनकेति । शाब्दधीजनकं यदाकाङ्क्षादिज्ञानं तज्जनकत्वेनेत्यर्थः । तद्विशेषणेति । आकाङ्क्षादिनिविष्टविशेषणज्ञानादीनामित्यर्थः । कार्यान्तरं घटादि । तथा च घटादिजनको यः कपालादिस्तज्जनकत्वेन कपालिकादीनामपि घटादिजनकत्वप्रसङ्ग इत्यर्थः । नियतपूर्ववर्तितावच्छेदकस्यान्यथासिद्ध्यनिरूपकत्वेन कारणतावच्छेदकत्वनियमादिति भावः । शङ्कते तज्जनकत्वेनेति । आकाङ्क्षाज्ञानादिजनकत्वेन शाब्दादिबोधहेतुत्वे आकाङ्क्षादिज्ञानत्वेनैव शाब्दादिहेतुत्वं युक्तमित्यर्थः । बहुशो व्यभिचारेण प्रथमोपस्थितत्वस्य वस्तुव्यवस्थापकत्वानियतत्वादाह आवश्यकत्वादिति । आकाङ्क्षाज्ञानाद्युत्पत्तिदशायां शाब्दबोधानुत्पत्त्या शाब्दबोधादिकं प्रति आकाङ्क्षाज्ञानत्वादिना हेतुत्वस्यावश्यकत्वाच्चेत्यर्थः । ननु स्वजन्याकाङ्क्षाज्ञानादिसम्बन्धेनैव आकाङ्क्षादिजनकस्य शाब्दबोधादिजनकत्वाच्चाकाङ्क्षाज्ञानादेर्हेतुत्वमावश्यकमत आह लाघवाच्चेति । आकाङ्क्षाज्ञानादिजनकत्वेन हेतुतामपेक्ष्य आकाङ्क्षाज्ञानत्वादिना हेतुतायामवच्छेदकलाघवाच्चेत्यर्थः । इदं प्रथमोपस्थितत्वादि । प्रकृत इति । अनुमितावपि परामर्शहेतुत्वेन जनकत्वे प्रथमोपस्थितत्वादित्युक्त्या परामर्शत्वेनैव हेतुत्वौचित्यादिति भावः । व्याप्तिज्ञानत्वेन करणत्वं खण्डयितुमाह इदं पुनरिति । विशिष्टविषयेति । व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वेनानुमितिहेतुत्वे तद्व्यापकीभूतेन व्याप्त्यादिज्ञानत्वेन तत्र न हेतुत्वं तथा च सुतरां तादृप्येण कारणत्वाभावो हेतुत्वगर्भत्वात्तस्येति भाव । तदवच्छिन्नेति । यद्धर्मावच्छिन्नकार्य-

वैजनकतावच्छेदकान्तराव्यापकरूपेणैव तदवच्छिन्नं प्रति जनक-त्वात्।दर्शयिष्यते हि तथान्यथासिद्धत्वम्।अन्यथा घटत्वाद्यवच्छिन्नं प्रति कपालतत्संयोगादीनां जन्यत्वविशेषितेन शुद्धेन वा द्रव्य-त्वगुणत्वादिना विशिष्टवैशिष्ट्यबोधं प्रति च विशेषणतावच्छेदक-

---

तानिरूपितकारणतायाः स्वभिन्नयदवच्छेदकं तदव्यापकरूपेणैव त-द्धर्मावच्छिन्नं प्रति हेतुत्वादित्यर्थः। विजातीयरक्तत्वावच्छिन्नजन-कतावच्छेदकस्य पद्मरागत्वस्य व्यापकेनापि पृथिवीत्वेन रक्तत्वाव-च्छिन्नं प्रति जनकत्वात्तदवच्छिन्नेत्युक्तम्। न चैवं व्याप्तिज्ञानजन्य-तायाः धूमलिङ्गकवन्ह्यनुमितित्वेन व्याप्तिविशिष्टवैशिष्ट्यपरामर्शज-न्यतायाः पर्वतधर्मिकधूमलिङ्गकवन्ह्यनुमितित्वेनावच्छेदादेकधर्मा-वच्छिन्नं प्रति व्याप्तिज्ञानत्वेन विशिष्टपरामर्शत्वेन चाहेतुत्वादाशङ्क्रै-व निष्फलेति वाच्यम्। धूमधर्मिकव्याप्तिज्ञानत्वेन व्यापारीभूतपरा-मर्शप्रत्यासत्त्या अनुमितिकारणतायां पर्वतमहानसादिप्रत्येकधर्मि-कधूमलिङ्गकवन्ह्यनुमितित्वादेरेव कार्यतावच्छेदकत्वात्।अन्यथा प-क्षभेदेन परामर्शस्याननुगतत्वात्पर्वतमहानसादिप्रत्येकधर्मिकधूमलि-ङ्गकवन्हिव्याप्यवत्तापरामर्शप्रत्यासत्त्या धूमलिङ्गकवन्ह्यनुमितित्वा-वच्छिन्नं प्रति धूमधर्मिकवन्हिव्याप्तिविशिष्टज्ञानत्वेन हेतुत्वेऽन्यपक्षक-तादृशानुमितौ व्यभिचारादिति भावः। उक्तक्रमेणाहेतुत्वे बीजमाह दर्शयिष्यते इति। तथा तदवच्छिन्नजनकतावच्छेदकान्तरव्यापकं-धर्मेण नित्यस्येत्यादिव्याप्तिमङ्गीकृत्याह जन्यत्वविशिष्टेनेति। अन्य-था मनःप्रभृतिद्रव्यात्तदीयपरिमाणादिगुणाच्च घटादेरवश्यंभावाप-त्तेरिति भावः। तद्व्याप्तिमनङ्गीकृत्याह शुद्धेन वेति। गुणत्वादीत्या-दिना मूर्तत्वसंयोगत्वादेः परिग्रहः। नन्वेतावता वरं द्रव्यत्वेन हेतु-तायामवच्छेदकान्तरव्यापकरूपेणान्यथासिद्धिः कल्प्यतां ज्ञानहेतुता-यां तु कुत इत्याह विशिष्टवैशिष्ट्येति। अथास्तु घटत्वादिविशिष्ट-वैशिष्ट्यबोधं प्रति घटत्वादिप्रकारकज्ञानत्वेनेव घटादिज्ञानत्वेनापि हेतुर्न कोपि दोष इत्यत आह अनुमितीत्यादि। परामर्शस्याकाङ्क्षा-कृतिसाध्यत्वादीनां ज्ञानस्य च विषयीभूतो विशिष्टोऽविशिष्टो वा

विषयत्वेन हेतुत्वप्रसङ्गात् अनुमितिशाब्दबोधचिकीर्षादिकं प्रति च परामर्शाकाङ्क्षाकृतिसाध्यत्वादिज्ञानविषयविशिष्टाविशिष्टतत्तत्पदार्थविषयत्वेन हेतुत्वे अनन्तकार्य्यकारणभावप्रसङ्गाच्च। न चात्र करणान्तरासम्भवादगत्या परामर्शजनकज्ञानस्य तथात्वं कल्प्यते, चिकीर्षां प्रत्यपि कृतिसाध्यताज्ञानजनकज्ञानस्य तथात्वापत्तेः। तत्र मन एव करणमिति चेत्, इहापि तदेवास्तु। मनोऽसाधारणकरणकज्ञानत्वेन मानसत्वापत्तिरिति चेत्, चिकीर्षादिसाधारणतत्करणकत्वस्यैव ज्ञानत्वविशेषितस्यापि तस्याप्रयोजकत्वात्। किं तर्हि मानसत्वे प्रयोजकमिति चेत्। किन्नाम प्रयोजकम्, कारणञ्चेन्न

---

तत्तत्पदार्थो धूमधूमत्वादिः तद्विषयकत्वेन यथाक्रममनुमित्यादौ हेतुत्वमित्यर्थः। तथा च एकधर्मावच्छिन्नं प्रत्येवानन्तधर्मैरेकस्यानन्तहेतुत्वापत्त्याऽवश्यमवच्छेदकान्तरव्यापकरूपेणान्यथासिद्धिराश्रयेति भावः। अत्र अनुमितौ। तथात्वं जनकतावच्छेदकान्तरव्यापकेनापि व्याप्त्यादिज्ञानत्वेन हेतुत्वम्। शाब्दज्ञाने च पदार्थोपस्थितिद्वारा ज्ञानत्वेनैव करणत्वसम्भवान्नाकाङ्क्षादिघटकतत्तत्पदार्थज्ञानत्वेन हेतुत्वमुक्तक्रमेणान्यथासिद्धेरिति भावः। तथात्वापत्तेः। कृत्यादिज्ञानत्वेन हेतुत्वापत्तेः। शङ्कते तत्रेति। चिकीर्षायामित्यर्थः। इहापीति। धूमलिङ्गकपर्वतधर्मिकवन्ह्यनुमितित्वावच्छिन्नं प्रति तथाविधपरामर्शप्रत्यासत्त्यानुमितिसामान्यं प्रत्येवात्मनःसंयोगप्रत्यासत्त्या वा मन एव करणमस्त्वित्यर्थः। शङ्कते मनोऽसाधारणेति। चाक्षुषादावपि मनःकरणत्वादसाधारणेति। मनस्त्वावच्छिन्नकरणतानिरूपितजन्यज्ञानत्वावच्छिन्नकार्यतावज्ज्ञानत्वेनेत्यर्थः। तत्करणत्वस्य मनोसाधारणत्वस्य। अप्रयोजकत्वादिति। मानसत्वाप्रयोजकत्वादित्यर्थः। पृच्छति किं तर्हीति। खण्डनादिशा निरस्यति किं नामेति। न किञ्चिदिति। मानसत्वजातेर्नित्यत्वेन तस्याः कारणासम्भवादिति भावः। नत् प्रत्यक्षम्। प्रत्यक्षे विषयस्य हेतुत्वादिति भावः। शङ्कते कारणाभेद इति। मानसानुमित्योः कारणाभेदे कथं तयोर्वैजात्यमि-

किञ्चित्, कार्य्यञ्चेत्तत्तत्सक्षम्, व्यापकञ्चेत्प्रमेयत्वादि, व्याप्यञ्चे-त्तत्सामग्रीजन्यत्वादि, तदवच्छिन्नोत्पत्तिनियामकञ्चेत्तत्सामग्री । कारणाभेदे कथं कार्य्यवैजात्यमिति चेत् । सामग्रीवैलक्षण्यात् । यथा मनःकरणकानामेव चिकीर्षासुखादीनां यथावाग्निकरण-कानां पाकजानाम् । कथं तर्हि प्रमाणविभाग इति चेत्, करण-विशेषकक्रियावैजात्यविशेषादिति विभाव्यताम् । अपरे तु व्याप्ति-ज्ञानत्वेन विशिष्टपरामर्शत्वेन वा नानुमितिमात्रं प्रति हेतुता सा-ध्यादिभेदेन व्याप्तेर्भेदात्, किन्तु पक्षज्ञानत्वेनाभावज्ञानत्वेन ज्ञान-त्वेन वा । पक्षोऽपि धर्मिमात्रं पक्षताया अप्यननुगमात् । तत्तत्प-

---

त्यर्थः । यथेति । अत्राऽऽन्तरबाह्यभेदेन दृष्टान्तद्वैविध्यम् । पाकजानां रूपादीनाम् । कथं तर्हीति । प्रत्यक्षकरणस्यैव मनसोऽनुमितिकरण-त्वे प्रत्यक्षानुमानयोः कथं विभिन्नप्रमाणत्वेन व्यवहार इत्यर्थः । ध-र्म्यभेदेऽपि विभिन्नजातीयप्रमाकरणताप्रयुक्तस्तादृशो व्यवहारो नानु-पपन्न इत्याशयेनाह करणविशेषकेति । क्रियावैजात्यम् अनुमिति-त्वप्रत्यक्षत्वादि । अनुमितित्वावच्छिन्नं प्रत्येव व्याप्तिज्ञानस्याभावज्ञा-नसामान्यप्रत्यासत्त्या करणत्वात् तस्य चानुमितित्वावच्छिन्नजनक-तावच्छेदकान्तराव्यापकत्वान्नोक्तक्रमेणान्यथासिद्धिरनुमितिसामा-न्ये विशिष्टपरामर्शत्वादिना हेतुत्वस्य व्यभिचारेणासम्भवादित्याश-येन मतान्तरं दर्शयति परे त्विति । धर्मित्वपर्यवसायिनोऽपि प्रत्यक्ष-त्वस्याभावत्वापेक्षया गुरुत्वादाह अभावज्ञानत्वेनेति । अतिलाघवा-दाह ज्ञानत्वेन वेति । न चैवं सत्त्वगुणत्वादिनाप्यनुमितिकरण-त्वापत्तिस्तुल्यशरीरत्वेऽपि नियता, जनकगगनादिसाधारणतया ता-द्रूप्येणान्यथासिद्धेरिति भावः । पक्षताया अपीति । साध्यादिभेदेने-त्यनुषज्यते । नन्वेवमपि वन्ह्यनुमितित्वावच्छिन्नं प्रति वन्हिव्याप्ति-ज्ञानत्वेन करणत्वं न स्यात् तादृशानुमितिजनकतावच्छेदकस्य व-न्हिव्याप्यवत्तानिश्चयत्वस्य व्यापकतया वन्हिव्याप्तिज्ञानत्वेऽन्यथा-सिद्धेरत आह तत्तत्पक्षतावच्छेदकेति । आवश्यकत्व इति । अन्य-

क्षतावच्छेदकविशिष्टवन्ह्यनुमितिं प्रति तत्तद्विशिष्टे वन्हिव्याप्यव-त्तापरामर्शत्वेन हेतुताया आवश्यकत्वे वन्ह्यनुमितिमात्रं प्रत्यपि न तादृशपरामर्शत्वेन हेतुता गौरवात्, किन्तु वन्हिव्याप्तिज्ञानत्वेन लाघवात् । वस्तुनो वन्हिज्ञानत्वेनैव तथा अतिलाघवात् । एवं व-न्ह्यभावानुमितिं प्रत्यपि । एतेनानुमित्यनन्तरं व्याख्यानमिति वद-न्ति । कृतं पल्लवितेनेति ॥

---

थानुमितौ धर्मिनियमो न स्यादिति भावः । तादृशपरामर्शत्वेन व-न्हिव्याप्यवत्तानिश्चयत्वमात्रेण हेतुत्वादिभेदेन वन्हिव्याप्तेरननुग-तत्वादाह वस्तुत इति । तथात्वं हेतुत्वम् । अतिलाघवादिति । का-र्यकारणयोस्तद्धेतुकत्वादिप्रवेशेन व्यभिचारवारणेपि वन्हिव्याप्ति-ज्ञानत्वमपेक्ष्य वन्हिज्ञानहेतुतायामवच्छेदकलाघवादित्यर्थः । अत एवाह एवमिति । प्रत्यपीति । वन्हिज्ञानत्वेनैव तथात्वमिति पूर्वेणा-न्वयः । वन्ह्यभावज्ञानत्वमपेक्ष्य वन्हिज्ञानत्वस्य लघुत्वात्प्राचाम-भावत्वस्याखण्डस्य विरहेणाभावत्वमात्रस्य वन्हिज्ञानत्वापेक्षया गु-रुत्वादिति भावः । व्याख्यानमिति । द्रव्यत्वाद्यनुमितावपि द्रव्य-त्वादिज्ञानत्वेन हेतुत्वं न तु व्याप्तिज्ञानत्वेनेत्यर्थः ॥

इति श्रीजगदीशभट्टाचार्यतर्कालङ्कारविरचिता
परामर्शदीधितिटीका समाप्ता ॥

---

## चिन्तामणेः केवलान्वय्यनुमानम् ।

तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षं केवलान्वयि । तथा

---

## दीधित्याः केवलान्वय्यनुमानम् ।

केवलान्वयीत्यादि । केवलान्वयिसाध्यकादीत्यर्थः । तत्र तेषु मध्ये असद्विपक्षम् अत्यन्ताभावाप्रतियोगिसाध्यकं केवलान्वयि ।

---

## जागदीश्याः केवलान्वय्यनुमानम् ॥

केवलान्वयिहेतोस्तद्धर्मिकव्यतिज्ञानस्य वा विभजने वाच्यं घटत्वात् इत्यादौ घटत्वादिहेतोस्तज्ज्ञानस्य वा असंग्रहापत्तिः अत आह केवलान्वयिसाध्यकेति । यद्यपि केवलान्वय्यादिभेदादित्यत्र केवलान्वयितया परिभाषितत्वरूपं केवलान्वयित्वं वाच्यत्वादिसाध्यकघटत्वादेरपि अक्षतमेव अतः केवलान्वयिसाध्यकादीति व्याख्यानमफलम्, तथापि हेतुनिष्ठस्यैव केवलान्वयित्वपदार्थस्य प्रकान्तत्वे पश्चादुच्यत इत्यादिना साध्यनिष्ठस्य केवलान्वयित्वस्याभिधानं मूलकृतः सन्दर्भविरुद्धं स्यात् अतः साध्यनिष्ठस्यैव केवलान्वयित्वस्य उपक्रमार्थम् इत्थं व्याख्यातमिति ध्येयम् ।

तत्र केवलान्वयिनि इति योजनायां सप्तम्यर्थाधेयत्वस्य बा-

एवमगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकि, गृहीतान्वय-व्यतिरेकिसाध्यकमन्वयव्यतिरेकि ।

व्याप्तिग्राहकसहचारभेदाद्भेदे त्वन्वयसहचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वम् । तच्च प्रकृतव्याप्तिग्राहकज्ञानविषयस-

---

धितत्वात् सप्तम्या निर्द्धारणार्थकत्वं व्यनक्ति तेष्विति । असद्विपक्ष-मिति मूलं विपक्षस्य सिद्ध्यसिद्धिभ्यां व्याहतम् अत आह असदिति । अत्यन्तेति । अत्यन्ताभावाप्रतियोगिसाध्यकानुमितिकरणमित्यर्थः । तेन लिङ्गस्य तज्ज्ञानस्य मनसो वा अनुमितिकरणत्वेऽपि न क्षतिः । केवलान्वयीतिपदन्तु मूलस्थमेव योजितं न तु स्वातन्त्र्येणोक्तं मूलस्थस्य तस्य वैयर्थ्यापत्तेः । यद्यपि तत्र केवलान्वयिसाध्यके असद्विपक्षम् अत्यन्ताभावाप्रतियोगि केवलान्वयीति व्याख्यानं सम्भवति निर्द्धारण इवान्तर्गतत्वेऽपि सप्तमीप्रयोगात्, तथापि द्वन्द्वस्थानामेकं परित्यज्य अपरस्य परामर्शकत्वं तदादिशब्दस्य अव्युत्पन्नमित्याशयेन एतत् परित्यक्तमिति भावः । न्यूनतां परिहरति एवमिति । प्रकृतहेतुधर्मिकसाध्यसहचारग्रहाजन्यायाः प्रकृतहेतुकव्यतिरेकिसाध्यकानुमितेः करणत्वं प्रकृतहेतुसाध्यककेवलव्यतिरेकित्वमित्यर्थः । न च साध्यविशेषणस्य व्यतिरेकीत्यस्य वैयर्थ्यम्, अन्वयसहचाराग्रहदशायाम् इदं वाच्यम् ज्ञेयत्वात् इत्यादौ अतिव्याप्तेः तदानीमपि तस्य केवलान्वयित्वात् । व्यतिरेकित्वञ्च अत्र अवच्छिन्नवृत्तिकान्यस्य व्यतिरेकस्य प्रतियोगित्वं भेदप्रतियोगितावच्छेदकत्वं वा, नातः साध्यसहचाराग्रहदशायां संयोगाभावादिसाध्यकवाच्यत्वादिहेतुककेवलान्वयिनि अतिव्याप्तिः । गृहीतेति । प्रकृतहेतुधर्मिकसाध्यसहचारग्रहजन्यव्याप्तिज्ञानजन्यप्रकृतहेतुकव्यतिरेकिसाध्यकानुमितिकरणत्वं प्रकृतहेतुसाध्यकान्वयव्यतिरेकित्वमित्यर्थः । तत्रापि केवलान्वयिवारणार्थं व्यतिरेकित्वेन साध्यं विशेषितम् ।

दशाविशेषे वन्हिसाध्यकधूमादिहेतोरपि केवलान्वयित्वमङ्गीकुर्वतामाचार्य्याणां मतमाह व्याप्तिग्राहकेति । सहचारभेदादिति । ल्यब्लोपे पञ्चमी । तेन तादृशसहचारभेदमन्तर्भाव्य भेदे

हचारत्वव्यापकान्वयसहचारत्वकत्वं तादृशसहचारत्वव्यापकप्रकृत-
व्याप्तिघटकसहचारत्वकत्वं वा ।

---

विभजते इत्यर्थः । उभयसहचारगृहीतव्याप्तिकस्य अन्वयव्यतिरे-
किणो व्युदासाय मात्रपदम् । तथा च साध्याभावगोचरस्वाभाव-
सहचारग्रहाजन्यप्रकृतसाध्यव्याप्तिग्रहविशेष्यत्वमर्थः । तेन इन्द्रि-
यादेरपि व्याप्तिग्राहकत्वात् नाप्रसिद्धिः, न वा अन्यदीयव्यतिरेकस-
हचारविषयकप्रकृतसाध्यसाधनान्वयसहचारगृहीतव्याप्तिकेऽव्या-
प्तिः । साध्यभावत्वादिकञ्च वैज्ञानिकं ग्राह्यं न तु वास्तवम्,
तेन इदं वाच्यं ज्ञेयत्वात् इत्यादौ साध्याभावादेरप्रसिद्धावपि
[ दशाविशेषे ] नाव्याप्तिः । ननु वन्हिमान् धूमात् इत्यादौ
अन्वयेन व्याप्तिग्रहस्यापि भागवतेनैव व्यतिरेकसहचारग्रहेण जन-
नात् अव्याप्तिः [ ननु इदानीं फलोपहितजन्यत्वं न निवेशितम्,
अन्यथा भागवतज्ञाननिरूपितफलोपहितजन्यत्वाप्रसिद्ध्या भागवत-
व्यतिरेकसहचारज्ञानजन्यत्वमादाय अव्याप्तिदानस्य अनौचित्यात् ।
एवञ्च प्रमेयत्वादिसाध्यकस्थलेऽपि भ्रमात्मकव्यतिरेकसहचारज्ञान-
जन्यप्रसादयोः सम्भव एव प्रसज्यते कथमव्याप्तिरिति चेन्न । स्वा-
व्यवहितपूर्ववृत्तिव्यतिरेकसहचारज्ञानजन्यत्वरूपफलोपहितजन्य-
त्वाभावो विवक्षणीयः । एवञ्च यत्र केवलान्वयिसाध्यके व्यतिरेक-
सहचारभ्रमोऽप्रसिद्धः तत्र लक्षणगमनात् नासम्भव इति कश्चित् ।
तन्न । तादृशस्थलस्य प्रमाणत्वेऽपि व्यतिरेकसहचारत्वस्य अव्याव-
र्त्तकतया प्रकृतसाध्याभावगोचरस्वाभावसहचारग्रहाजन्यत्वस्यैव
निवेशितत्वेन तादृशज्ञानाप्रसिद्ध्या तत्रापि लक्षणसमन्वयासम्भवा-
दव्याप्तिः । ] तादृशसहचारग्रहत्वावच्छिन्नजनकताकत्वाभावस्य प्र-
वेशे च व्यतिरेकसहचारगृहीतव्याप्तिकेऽतिव्याप्तितादवस्थ्यम् ।
व्यभिचारधीविरोधिज्ञानत्वादिनैव आचार्य्यमते अन्वयव्यतिरेक-
सहचारज्ञानयोर्व्याप्तिधीजनकत्वात् । एवं तत्पुरुषीयतादृशव्यति-
रेकसहचारग्रहाजन्यत्वस्य [प्रकृतव्याप्तिज्ञानसमानाधिकरणव्यतिरे-
कसहचारग्रहाजन्यत्वस्य च]प्रवेशे यत्र केवलान्वयिनि साध्याभावा-

दिग्रहोऽप्रसिद्धः सर्वत्र भ्रमे मानाभावात् तत्राव्याप्तिरत आह तच्चे-
ति । इहापि प्रकृतत्वं ग्रहविशेषणम् । तथा च स्वजनकज्ञानविष-
यसहचारत्वव्यापकान्वयसहचारत्वकप्रकृतव्याप्तिज्ञानविशेष्यत्वमि-
त्यर्थः । तेन धूमादिनिष्ठवह्न्याद्यन्वयव्याप्तेरेव कदाचिदुभयसहचा-
रेणापि ग्रहात् अन्वयसहचारत्वस्य व्याप्तिग्राहकसहचारत्वाव्याप-
कत्वेऽपि नासम्भवः । स्वपदेन विशेषतोऽन्वयसहचारमात्रग्रहका-
लीनव्याप्तिग्रहव्यक्तीनामेव फलतः सङ्ग्रहात् अन्वयव्यतिरेकिण्य-
पि तादृशसहचारत्वसमानाधिकरणमन्वयसहचारत्वमतो व्यापके-
ति । यद्यपि प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वं घटादिसहचा-
रस्यापीति तत्र साध्यान्वयसहचारत्वाभावादव्याप्तिः । सहचारप-
देन अन्वयव्यतिरेकसहचारयोरन्यतरत्वेनोपादाने च वाच्यम् ज्ञेय-
त्वात् इत्यादावव्याप्तिः । तत्र व्यतिरेकसहचाराप्रसिद्धेः । न च प्र-
कृतव्याप्तिग्राहकज्ञानविषयसहचारत्वस्य प्रकृतव्याप्तिज्ञानत्वावच्छि-
न्नकार्य्यतानिरूपितकारणतायां विषयविधयाऽवच्छेदकीभूतसहचार-
त्वमर्थः तच्च न घटादिसहचारेऽस्तीत्यदोष इति वाच्यम् । सहचार-
विशिष्टबुद्धित्वावच्छिन्नं प्रत्येव सहचारज्ञानत्वेन हेतुतया व्याप्ति-
ज्ञानत्वावच्छिन्नं प्रति तादृप्येण हेतुत्वाभावात् । अन्यथा व्य-
तिरेकसहचारस्यापि तादृशत्वादसम्भवापत्तेः । गगनवान् धूमात्
इत्यादौ साध्यसहचारभ्रमाधीने अन्वय्यनुमाने अव्याप्तिप्रसङ्गात् ।
अन्वयव्यतिरेकसाधारणस्य सहचारत्वस्य दुर्वचत्वाच्च ।
तथापि प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यतावगाहियज्ज्ञानजनकीभू-
तज्ञाननिष्ठप्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वसाध्या-
भावधर्मिकहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरस्य तादा-
त्म्येन व्यापकं हेतुधर्मिकप्रकृतसाध्यसहचारविषयित्वं तज्ज्ञानत्वं
तज्ज्ञानविषयत्वविशिष्टप्रकृतहेतुत्वं वा प्रकृतहेतुसाध्यककेवलान्व-
य्यनुमानत्वं विवक्षितम् । साध्यभावत्वादिकञ्च इह वैज्ञानिकं ग्रा-
ह्यम् । तेन वाच्यं ज्ञेयत्वात् इत्यादौ साध्याभावस्य अलीकत्वेऽपि
[ दृशाविशेषे ] नाव्याप्तिः । न च अवगाहीत्यन्तदलवैयर्थ्यम्, सा-
ध्यसामानाधिकरण्यविशिष्टहेतुमत्तादिग्रहे अतिव्याप्तिवारकत्वात् ।
तादृशज्ञानजनकत्वञ्च इह फलोपहितं ग्राह्यम्, तेन साध्याभावधर्मि-
कहेत्वभावसहचरितत्वज्ञानस्य व्याप्तिज्ञानसामान्यं प्रत्येव विशेषण-

गृहीतव्याप्तिभेदाद्भेदे तु प्रकृतहेतुकप्रकृतसाध्यानुमितिहेतुज्ञानवि-
षयव्याप्तित्वव्यापकप्रकृतसाध्यव्याप्तित्वकत्वं तत्त्वम् । जलं निर्गन्धं

---

ज्ञानविधया स्वरूपयोग्यत्वेऽपि नासम्भवः । न च यत्त्वतत्त्वयोर्विशे-
षत एव विश्रामादननुगमः । प्राचीनमते स्वत्वस्यैव तयोरनुगमात् ।
प्रकृतव्याप्त्यवगाहिस्वजनकज्ञाननिष्ठतादृशान्यतरविषयितात्वव्याप-
कान्वयसहचारविषयितात्वकप्रकृतव्याप्तिज्ञानत्वं तत्त्वमित्यस्यापि
सुवचत्वाच्च । यदि च अनुमित्यजनकव्याप्तिज्ञानस्य न लक्ष्यत्वं
तदा प्रकृतहेतुकप्रकृतसाध्यकानुमितिफलोपहितकरणत्वेनापि त-
ज्ज्ञानं विशेषणीयमिति सङ्क्षेपः । ननु यत्र पूर्वं साध्यसहचारस्य नो-
पस्थितिः किन्तु तद्घटकसाध्यादिप्रत्येकवस्तूपस्थित्यैव विशेष्ये वि-
शेषणमित्यादिरीत्या अन्वयव्याप्तिधीः, तत्र उक्तलक्षणाव्याप्तिः, अतः
प्रकारान्तरमाह तादृशसहचारत्वेति । प्रकृतव्याप्तिग्रहानुकूलसह-
चारत्वेत्यर्थः । तथा च उक्तस्थलेऽपि व्यापकताघटकमभावस्य हेतु-
सहचरितत्वमवश्यं प्राग्ग्राह्यमिति तत्र लक्षणसमन्वयः । तत्रापि
प्रकृतहेतुसाध्यकान्वयव्याप्त्यवगाहियज्ज्ञानजनकज्ञानवृत्तिविषयिता-
त्वव्यापकं व्यतिरेकसहचारावगाहितान्यत्वं तज्ज्ञानविषयताविशिष्ट-
प्रकृतहेतुलिङ्गत्वं केवलान्वयित्वमित्यत्र तात्पर्य्यम् । अतो न पूर्वलक्ष-
णोक्तदोषाणामवकाश इति ध्येयम् ।

अन्वयव्यतिरेकव्याप्त्योर्द्वयोरेव ज्ञानमनुमितिहेतुर्न तु व्य-
तिरेकसहचारान्वयसहचाराभ्यामेव अन्वयव्याप्तिमवगत्यैवानुमि-
तिरिति चिन्तामणिकृतां मतमालम्ब्याह गृहीतेति । प्रकृतेत्या-
दि । प्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यकानुमितित्वघटितधर्मा-
वच्छिन्नस्वनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकीभूतप्रकारितात्व-
व्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वकानुमितिकरणत्वमित्य-
र्थः । तेनोभयसाधारणस्य एकस्य व्याप्तित्वस्य असत्त्वेऽपि न क्षतिः,
न वा द्रव्यं सत्त्वात् इत्यादौ अखण्डव्याप्तेरप्रसिद्ध्या तादृशकेवला-
न्वय्यनुमानेऽव्याप्तिः । व्याप्तिघटकपदार्थानां परस्परोपश्लेषेण प्रका-
रितायास्तत्र अनपायादिति ध्येयम् । अत्र च स्वपदमनुमितिपरम् ।

पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादिसाध्ये हेतुतावच्छेदिका च व्याप्तिर्न प्रकृतसाध्यानुमित्यौपयिकी तद्विशिष्टपक्षधर्मताज्ञानेऽपि व्याप्त्यन्तरबोधं विना निर्गन्धत्वानुमित्यनुदयादिति नाव्याप्तिः ।

---

तज्जनकत्वमिह स्वरूपयोग्यतामात्रं न तु फलोपहितं ग्राह्यं वैयर्थ्यात् स्वपदेन अन्वयव्याप्तिज्ञानस्थलीयानुमितिव्यक्तीनामेव धृतत्वेन व्यतिरेकपरामर्शमादाय असम्भवायोगादिति ध्येयम् । व्यापकत्वोपादानादन्वयव्यतिरेकिव्युदासः । अत्र वन्हौ साध्ये तद्धूमत्वेन धूमहेतुकव्यतिरेकिण एव धूमत्वेन धूमहेतुककेवलान्वयित्वात् तत्राऽव्याप्तिः । वन्हिसाध्यकधूमव्यक्तिहेतुकानुमित्यौपयिकव्यतिरेकव्याप्तेः वन्हिसाध्यकान्वयव्याप्तित्वाभावात् अतो हेतौ प्रकृतपदम् । तथा च तद्धूमत्वावच्छिन्नव्यतिरेकव्याप्तेर्धूमत्वावच्छिन्नप्रकारकनिश्चयोत्तरानुमितित्वघटितधर्मावच्छिन्नं प्रति अनुकूलत्वविरहात् नाव्याप्तिः । साध्यांशे प्रकृतपदव्यावृत्तिस्तु ग्रन्थकृतैव वक्ष्यते । न च यत्र हेतुतावच्छेदकबहिर्भावेण वन्हिमदन्यावृत्तिमान् पर्वत इति व्याप्तिज्ञानादेवानुमितिः तादृशान्वयिनि अव्याप्तिरिति वाच्यम् । व्यापकसामानाधिकरण्यरूपान्वयव्याप्तिज्ञानस्यैव अन्वय्यनुमितिहेतुत्वमिति प्राचां मतेनैव लक्षणकरणात् । ननु प्रकृतहेतुप्रकारकनिश्चयोत्तरानुमितित्वघटितधर्मावच्छिन्नकार्य्यता एव प्रवेश्यतां प्रकृतसाध्यकत्वनिवेशो व्यर्थ इत्यत आह जलं निर्गन्धमित्यादि।न प्रकृतेति । न निर्गन्धत्वानुमितित्वावच्छिन्नस्य प्रकारविधया कारणतावच्छेदिकेत्यर्थः । विषयपदेन तादृशौपायिकत्वस्य विवक्षितत्वादितिभावः । तदौपयिकत्वाभावमेव विवृणोति तद्विशिष्टेति । पृथिवीत्वव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिविशिष्टेत्यर्थः । व्याप्त्यन्तरबोधमिति । पृथिवीत्वव्यापकाभावप्रतियोगित्वलक्षणहेतुव्यापकनिर्गन्धत्वसामानाधिकरण्यरूपान्वयव्याप्तिबोधं विनेत्यर्थः । तथा च पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वनिश्चयोत्तरानुमितित्वघटितपृथिवीत्वाभावानुमितित्वावच्छिन्नस्य जनकतावच्छेदिकायाः पृथिवीत्वव्यापकीभूताभावप्रतियोगित्वरूपायाः पृथिवीत्वाभावीयव्यतिरेकव्याप्ते-

वन्ह्यभाववान् वन्हिव्यापकाभावप्रतियोगिमत्त्वादित्यादावन्वय-व्याप्तेरवच्छेदिका व्यतिरेकव्याप्तिर्न तु सैवेति नाप्रसङ्गः । अत एवेतरव्यापकाभावप्रतियोगित्वेनाभावप्रतियोगित्वेन वा यल्लिङ्ग-

---

निर्गन्धत्वरूपप्रकृतसाध्यान्वयव्याप्तित्वाभावात् तत्राव्याप्तेर्वारणार्थ-मेव प्रकृतसाध्यकत्वस्य प्रवेश इति भावः । इदमुपलक्षणम् । साध्यस्य प्रकृतत्वानुक्तौ वन्हित्वेन वन्हेः साध्यतायां व्यतिरेक्यात्मके द्रव्य-त्वेन वन्हेः साध्यतायामन्वयिनि धूमलिङ्गकानुमानेऽपि अव्याप्तिः स्यात् । प्रकृतहेतुभूतधूमप्रकारकनिश्चयोत्तरवन्हिसाध्यकानुमिति-त्वावच्छिन्नं प्रति अनुकूलाया धूमनिष्ठवन्हीयव्यतिरेकव्याप्तेः द्रव्य-त्वावच्छिन्नसाध्यकान्वयव्याप्तित्वाभावादिति द्रष्टव्यम् । ननु एव-मपि वन्ह्यभाववान् वन्हिव्यापकीभूताभावप्रतियोगिमत्त्वात् इ-त्यन्वयिन्यव्याप्तिः, तत्र हेतुनावच्छेदकीभूताया वन्ह्यभावीयव्य-तिरेकव्याप्तेरपि वन्हिव्यापकाभावप्रतियोगिरूपप्रकृतहेतुप्रकारक-निश्चयोत्तरवन्ह्यभावरूपसाध्यानुमितित्वावच्छिन्नं प्रति अनुकूलत्वा-त् तस्यामेव वन्ह्यभावीयान्वयव्याप्तित्वाभावात् इत्याशङ्क्य तत्रान्व-यव्याप्तेः प्रकृतसाध्यकप्रकृतहेतुकानुमित्यौपयिकत्वविरहात् लक्ष्य-त्वमेव नास्ति, काव्याप्तिप्रसङ्ग इत्याशयेन समाधत्ते वन्ह्यभाववा-नित्यादि।अन्वयव्याप्तेरवच्छेदिका अन्वयव्याप्तिघटिका।व्यतिरेकव्या-प्तिरित्यत्र प्रकृतसाध्यानुमित्यौपयिकी इत्यनुषज्यते । न तु सैव न तु पुनरन्वयव्याप्तिरेव । प्रकृतसाध्यकानुमित्यौपयिकीत्यर्थः । अयं भा-वः । वन्हिव्यापकीभूताभावप्रतियोगिमत्तानिश्चयोत्तरवन्ह्यभावसा-ध्यकानुमितित्वावच्छिन्नं प्रति वन्हिव्यापकाभावप्रतियोगिमत्तानि-श्चयत्वेनैव हेतुत्वं लाघवात् । न तु स्वव्यापकवन्ह्यभावसमानाधि-करणतादृशप्रतियोगिमत्तानिश्चयत्वेन, गौरवादिति तादृशहेतुसा-ध्यकानुमानस्य केवलव्यतिरेकितया न लक्ष्यत्वम् । यत्रानुमितौ अ-न्वयव्याप्तिप्रकारकनिश्चयत्वेन हेतुत्वं तत्करणस्यैव केवलान्वयित्वा-दिति ।नाप्रसङ्ग इत्यस्य दूषणमिति शेषः।लक्ष्ये अप्रसङ्गो दूषणं भवेत् न चैतल्लक्ष्यमिति भावः । गृहीतव्याप्तिभेदेन अनुमानभेदे प्राचां सं-वादमाह अत एवेति । लिङ्गतावच्छेदकस्य लिङ्गस्य यज्ज्ञाने इतर-

ज्ञानं न प्रकृतसाध्यानुमितिहेतुस्तत्केवलान्वयीत्यपि वदन्ति । एवं केवलव्यतिरेकित्वादिकमपि निर्वाच्यम् ।

---

व्यापकाभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नं प्रकृतहेतुसाध्यकानुमितिजनकत्वम्, [यज्ज्ञानीयेतरव्यापकाभावप्रतियोगित्वानवच्छिन्नलिङ्गतावच्छेदकावच्छिन्नविशेष्यता तादृशानुमितिजनकतावच्छेदिकेति यावत्] तत् केवलान्वयीत्यर्थः । तेन जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वात् इत्यादौ अन्वयिनि नाव्याप्तिः । ननु इतरव्यापकाभाव इत्यत्र इतरत्वावच्छिन्नव्यापकत्वप्रवेशेऽप्रसिद्धिः, गगनाभावादौ कथञ्चित् तत्प्रसिद्धावपि केवलव्यतिरेकिणि अतिव्याप्तिः, तत्र वह्न्यभावव्यापकाभावप्रतियोगित्वप्रकारेणैव धूमज्ञानस्य अनुमितिहेतुतया इतरत्वावच्छिन्नव्यापकाभावप्रतियोगिमत्त्वाज्ञानत्वेनाऽहेतुत्वात् इत्यतो लाघवाच्च आह अभावप्रतियोगित्वेनेति । अत्रापि लिङ्गतावच्छेदकविशिष्टस्य यज्ज्ञानं प्रकृतानुमितौ अभावप्रतियोगित्वप्रकारकत्वानवच्छिन्नं हेतुरित्यर्थः । नातः प्रागुक्तदोषः । एवमिति । सहचारभेदात् भेदे व्यतिरेकसहचारमात्रगृहीतान्वयव्याप्तिकत्वं केवलव्यतिरेकित्वम् । यत्रान्वयव्याप्तिघटकप्रत्येकवस्तूनामुपस्थितौ सत्यां विशेष्ये विशेषणमितिन्यायेनैव अन्वयव्याप्तिधीः न तु साध्यसामानाधिकरण्यत्वप्रकारकज्ञानमपि प्रागपेक्षितम् तत्रैव अन्वयसहचारज्ञानाजन्यस्य व्यतिरेकसहचारधीजन्यान्वयव्याप्तिग्रहस्य सम्भवात् । एवमुभयसहचारगृहीतान्वयव्याप्तिकत्वम् अन्वयव्यतिरेकित्वं बोध्यम् । गृहीतव्याप्तिभेदात् भेदे तु प्रकृतहेतुकप्रकृतसाध्यकानुमित्यौपयिकव्याप्तित्वव्यापकव्यतिरेकव्याप्तित्वं प्रकृतहेतुकप्रकृतसाध्यकान्वयपरामर्शाजन्यप्रकृतहेतुकप्रकृतसाध्यकव्यतिरेकपरामर्शजन्यप्रकृतसाध्यकानुमितिकरणत्वं वा । यत्र स्थलविशेषे साध्यसाधनयोरन्वयपरामर्शो न प्रसिद्धः तत्र तदजन्यत्वं नोपादेयम् अन्वयव्यतिरेकित्वं तु प्रकृतहेतुकप्रकृतसाध्यकान्वयव्यतिरेकोभयपरामर्शाजन्यप्रकृतहेतुकप्रकृतसाध्यकानुमितिकरणत्वम् । न च यत्र वन्हिव्याप्यधूमवान् वन्ह्यभावव्यापकीभूता-

हि, केवलान्वयिनोऽभिधेयत्वस्य न विपक्षः, अभिधानेऽनभिधाने च विपक्षत्वव्याघातात् । अथ यथा आकाशशब्दाच्छब्दाश्रयत्वमनभिधेयमप्युपतिष्ठते तथाऽभिधेयत्वविपक्षस्यानभिधेयत्वेऽपि पदादुपस्थितिः स्यात्, एवञ्चाभिधेयत्वं कुतोऽपि व्यावृत्तं धर्मत्वात् गोत्ववदिति चेन्न । व्यावृत्तत्वस्याऽव्यावृत्तत्वे व्यावृत्तत्वमेव

---

अभिधेयत्वं शब्दशक्यत्वम् । विपक्षत्वव्याघातो विपक्षत्वासिद्धिः । ननु

---

भावप्रतियोगिमांश्च पर्वत इति ज्ञानात् वन्ह्यनुमितिः तत्रान्वयव्यतिरेकिणि धूमेऽव्याप्तिः, धूमत्वविशिष्टव्यतिरेकव्याप्तेरपरामृष्टत्वेन तत्रानुमितेः प्रकृतहेतुकव्यतिरेकपरामर्शाजन्यत्वात्, व्यतिरेकपरामर्शादिशि हेतोः प्रकृतत्वाप्रवेशे च वन्हिसाध्यकाभ्यां धूमस्यान्वयेन आलोकस्य च व्यतिरेकेण परामर्शाभ्यां यत्र वन्ह्यनुमितिः तत्रापि धूमस्यान्वयव्यतिरेकित्वापत्तिरिति वाच्यम् । वन्ह्यभावव्यापकाभावप्रतियोगितामात्रस्य अतिप्रसक्तत्वात् तादृशप्रतियोगितावच्छेदकीभूतधूमत्वादेरेव व्यतिरेकव्याप्तितया तदवच्छिन्नस्य परामर्शे प्रकृतहेतोरवश्यं प्रविष्टत्वात्, पक्षधर्मांशे प्रकृतहेतुतावच्छेदकातिरिक्तानवच्छिन्नविशेष्यताकव्यतिरेकव्याप्तिप्रकारिताशालिज्ञानस्यैव वा व्यतिरेकपरामर्शपदेन विवक्षितत्वात् । तादृशी हि प्रकारिता व्यतिरेकव्याप्त्यंशे विशेष्यतावच्छेदकस्य विरहे हेतुतावच्छेदकस्यैव वा तत्त्वे निर्वहतीति अतः सर्वसामञ्जस्यमिति ध्येयम् ।

अथाभिधेयत्वं यदि शब्दोपस्थाप्यत्वं तदा शब्दाश्रयत्वमनभिधेयमपीति आग्रममूलासङ्गतिः अतो व्याचष्ट शब्दशक्यत्वमिति । अथ अभिधेयत्वाभाववत्त्वरूपस्य तद्विपक्षत्वस्य व्याघातो विरहः स च प्रतियोग्यप्रसिद्धत्वात् दुर्घट इत्यत आह विपक्षत्वेति । ननु

केवलान्वयि, व्यावृत्तत्वे यत एव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्वयीति धर्मत्वस्यानैकान्तिकत्वात् । एव-

---

व्यावृत्तत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वं तच्च लघुगुरुसाधारणं गगनादिनिष्ठान्योन्याभावप्रतियोगितावच्छेदकश्चेति न व्यभिचार इत्यत आह एवमिति।नन्वभावप्रतियोगित्वादिकमभावादिव्यक्तिभे-

---

वृत्तिमत्त्वविशिष्टस्य अत्यन्ताभावप्रतियोगित्वस्य व्यापकं यद्व्यावृत्तत्वं तदभावेनैव वृत्तिमतोऽभिधेयत्वस्य अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वं साधनीयमत एवाह मूले एवञ्चेति । तथा च अत्यन्ताभावप्रतियोगित्वव्यापकस्य व्यावृत्तत्वस्य अभावोऽभिधेयत्वे स्वरूपासिद्ध एवेति भावः । यथाश्रुते अत्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वाखण्डकत्वेन व्यावृत्तत्वानुमाने अर्थान्तरत्वापत्तेः । गोत्ववदित्यत्र च गोत्वं व्यतिरकेण दृष्टान्तः । अन्यथा स्वरूपसम्बन्धेन व्यावृत्तत्वस्यैव तत्सम्बन्धावच्छिन्नकेवलान्वयित्वखण्डकतया तस्य गोत्वजातौ असत्त्वेन अन्वयदृष्टान्तत्वासम्भवात् । वाच्यत्वं वा प्रकृते गोत्वं वाच्यस्यापि गोशब्दशक्यत्वादिति ध्येयम् । ननु धर्मत्वहेतोरनैकान्तिकत्वे कथितक्रमेण अभिधेयत्वस्य व्यावृत्तत्वस्यैव वा केवलान्वयित्वसम्भवात् अत्यन्ताभावप्रतियोगित्वादेर्लक्ष्यान्तरस्यानुसरणं मूलकृतामयुक्तम् अतस्तदवतरणिकामाह दीधितौ नन्विति।अथान्योन्याभावप्रतियोगितावच्छेदकत्वरूपं व्यावृत्तत्वं प्रमेयधूमत्वादौ नास्तीति तत्रैव धर्मत्वं निरुक्तव्यावृत्तत्वव्यभिचारीत्यत आह तच्चेति । व्यावृत्तत्वं यतो व्यावृत्तं तत् केवलान्वयीति धर्मत्वं तत्रैव अनैकान्तिकम् इति यदुक्तं तदपाकुर्वन्नाह गगनादीति । तथा च व्यावृत्तत्वं गगनादिभ्य एव व्यावृत्तं भविष्यति तेषाञ्च धर्मत्वरूपहेत्वभावादेव न तत्र अनैकान्तिकत्वशङ्कापि स्यास्यतीति भावः । न व्यभिचार इति । तथा च उक्तानुमानस्य अप्रत्यूहत्वात् नाभिधेयत्वव्यावृत्तत्वयोः केवलान्वयित्वं सम्भवतीति कृ-

मत्यन्ताभावप्रतियोगित्वस्यात्यन्ताभावाप्रतियोगित्वे अ-
त्यन्ताभावप्रतियोगित्वमेव केवलान्वयि, अत्यन्ताभाव-
प्रतियोगित्वे यन्निष्ठात्यन्ताभावप्रतियोग्यत्यन्ताभावप्र-
तियोगित्वं तदेव केवलान्वयि । न चात्यन्ताभावप्रति-
योगित्वं व्यावृत्तत्वञ्च नानेति वाच्यम् । अनुगतप्रती-
तिबलेन गोत्ववत्तयोः सिद्धेः । तत्र न तावदव्याप्यवृ-
त्त्यत्यन्ताभावः केवलान्वयी, तस्य प्रतियोग्यवच्छिन्नेप्य-
त्यन्ताभावात् अत्यन्ताभावाप्रतियोगिनश्च केवलान्वयि-
त्वात्, नाप्याश्रयनाशजन्यगुणनाशात्यन्ताभावः, तस्य
नाशस्य सर्वत्रात्यन्ताभावादिति वाच्यम् । यत्र हि प्र-

———

दाभानैव अनुगतव्यवहारस्तु कथञ्चिद्विशेषणतावच्छेदकधर्मानुगमात्
एवञ्च लक्ष्याप्रसिद्ध्या लक्षणासम्भव इत्याशङ्कते तत्रेत्यादि । यत्र
हीत्याद्यभ्युपगमवादः । वस्तुतो भूतलादिदेशे समये च तस्य व-

———

त्त्वैव लक्ष्यान्तरमनुसृतमिति भावः । ननु लक्ष्याप्रसिद्ध्या लक्षणास-
म्भवपरस्य न तावदित्यादिमूलस्यासङ्गतिः, अत्यन्ताभावप्रतियोगि-
त्वादेरेव लक्ष्यस्य व्यवस्थापितत्वात् अतस्तस्य लक्ष्यत्वं विघटयन्नाह
नन्विति । प्रतियोगित्वादिकमित्यादिना व्यावृत्तत्वस्योपग्रहः । अ-
भावादीत्यादिना प्रतियोगिव्यक्तीनामुपग्रहः । तेन यावत्त्वावच्छिन्ना-
भावस्यैकत्वेऽपि तस्य प्रतियोगित्वं नैकं येन तत् केवलान्वयि स्या-
दिति ध्येयम् । अनुगतेति । अभावप्रतियोगीत्यादिव्यवहारो विशेष-
णतावच्छेदकस्य अभावत्वादेरनुगमादित्यर्थः । अनुगतगोचरव्यव-

तियोगिप्रागभावो वर्त्तते तत्र न तदत्यन्ताभावो वर्त्तते तथा च नाशस्य प्रागभावो यत्र नाशप्रतियोगिसमानदेशे वर्त्तते तत्र कथं नाशात्यन्ताभावो वर्त्तताम्।तर्हि नाशस्य तत्र वृत्तिः स्यादिति चेन्न। पूर्वं तत्र नाशप्रागभावस्यैव सत्त्वादुत्तरकाले आश्रयस्यैवाभावात् । नाप्याकाशात्यन्ताभावः केवलान्वयी, तस्यापि प्रतियोगिरूपात्यन्ताभावप्रतियोगित्वात् । अभावात्यन्ताभावस्य भाव-

———

र्त्तमानत्वादाकाशाभावतुल्यत्वाच्च । अभावाभावस्येति सावधारणम् । भावत्वात् । यदाहुराचार्य्याः, स्वाभावविरहात्मत्वं वस्तुनः

———

हार एव नास्ति अभावत्वादेरपि तत्तत्स्वरूपसम्बन्धरूपत्वादित्याशयेनोक्तं कथञ्चिदिति । एवञ्चेति । अत्यन्ताभावप्रतियोगित्वादेर्नानात्वं चेत्यर्थः । इत्याशङ्कत इति । एवञ्च मूले तत्र इत्यस्य अत्यन्ताभावप्रतियोगित्वादीनां नानात्व इत्यर्थ इति ध्येयम् । अत्यन्ताभावस्य प्रागभावेन समं विरोधस्य नव्यैरुपेक्षितत्वादाह यत्र हीत्यादीति। तत् किं तादृशनाशात्यन्ताभावः केवलान्वय्यत्यत: स्वयं दूषणमाह वस्तुत इति । तस्येति । तादृशगुणनाशस्येत्यर्थः । तथा च इह भूतले घटनाशाद् गुणो नष्ट इत्यादिप्रतीत्या भूतलादावेव तादृशगुणनाशात्यन्ताभावस्य असत्त्वात् कुतस्तस्य केवलान्वयित्वमिति भावः।वर्त्तमानत्वादित्यस्य नापि तादृशगुणनाशात्यन्ताभावः केवलान्वयीति मूलेनान्वयः, नातः पञ्चम्यसङ्गतिः।ननु उक्तप्रतीतेरवच्छेदकत्वाख्यपरम्पराकालिकसम्बन्धाभ्यामेव देशकालयोर्नाशवत्त्वावगाहित्वेनोपपत्तौ दैशिकविशेषणतया देशकालयोस्तादृशगुणनाशवत्त्वे मानाभावः, तथा च दैशिकसम्बन्धावच्छिन्नप्रतियोगिताकस्तादृशगुणनाशस्य

त्वात् । अथाभावात्यन्ताभावो न प्रतियोगिरूपस्तथास-त्यन्योन्याभावात्यन्ताभावः प्रतियोगिरूप इति प्रति-योगिसमानदेशोऽन्योन्याभावो न स्यादिति चेन्न। अत्य-न्ताभावात्यन्ताभावः प्रतियोग्येव अन्योन्याभावात्यन्ता-भावस्तु प्रतियोगिवृत्तिरसाधारणो धर्म इति ।

---

प्रतियोगितेति । प्रतियोग्येवेति । प्रागभावादेरत्यन्ताभावाभावरू-पत्वनयेऽपि न क्षतिः । तन्मतेऽत्यन्ताभावस्यापि तदभावरूपत-या तस्यापि प्रतियोगित्वात् । असाधारण इति । प्रतियोगिताव-च्छेदक इति तु तत्त्वम् ।

---

अत्यन्ताभावः स्यास्यत्येव अत आह आकाशेति । तस्येत्यनुषज्यते । तथा च आकाशात्यन्ताभावस्य इव प्रतियोगिस्वरूपात्यन्ताभावस्यैव प्रतियोगित्वं तादृशगुणनाशात्यन्ताभावेऽपि स्यास्यतीति तस्य केव-लान्वयित्वं दुर्घटमिति भावः । यत्र यदभावस्य अभावत्वं तत्र तद-भावप्रतियोगित्वम् इत्येवं नियमात् नाकाशस्य स्वाभावाभावत्वसि-द्धिरत आह सावधारणमिति तथा च अभावाभावस्यैव भावत्वादि-त्यन्वयात् भावत्वान्यथानुपपत्त्यैव गगनस्य स्वाभावाभावत्वसिद्धि-रिति भावः । ननु अभावाभावस्यैवेति यथाश्रुतं प्रमेयत्वादौ व्यभि-चारि, यो यदभावप्रतियोगी स तदभावाभाव इति भावत्वान्तर्भावेण व्याप्तौ चाप्रयोजकत्वं भावपदवैयर्थ्यञ्च अतो व्याचष्टे प्रतियोगित्वा-दिति । प्रतियोगित्वेन व्यवह्रियमाणत्वादित्यर्थः । नातः साध्यावि-शेषः । तदभावप्रतियोगित्वस्य तदभावाभावत्वव्याप्यतायां मानमाह यदाहुरिति । प्रतियोगिता प्रतियोगित्वव्यवहारप्रयोजकधर्मः । अ-थात्यन्ताभावात्यन्ताभावः प्रतियोग्येव इत्यसङ्गतम्, प्रतियोगिभि-

अथान्योन्यात्यन्ताभावसाधारणः प्रतियोगितावच्छेदक-सम्बन्ध एवाभावाभावः स च क्व चित्तादात्म्यं क्व चिच्च संयोगादिरिति चेत् । यद्वत्त्वे हि ज्ञाते यद्वत्त्वं न प्रतीयते तदभाववत्त्वञ्च व्यवह्रियते तस्यैव तदभावात्मकत्वमुपेयते प्रतियोगितदभाववत्त्वबुद्ध्योश्च मिथस्तथात्वमानुभविकम् । न च तत्सम्बन्धवत्त्वञ्च तद्विषयः । सम्बन्धसम्बन्धवत्ताबुद्धिवत् क्व

———

ध्वंसप्रागभावयोरपि अत्यन्ताभावाभावत्वस्य प्राचीनैः स्वीकारात् अत आह प्रागभावेति।तदभावरूपतया प्रागभावात्यन्ताभावरूपतया। तस्यापि प्रागभावादेरपि । प्रतियोगित्वादिति । तथा च प्रतियोगित्वरूपेणैव प्रागभावादेरपि उपग्रहात् नैवकारार्थबाध इति भावः। एवं सत्त्वानतिरिक्तस्य विशिष्टसत्त्वस्यातिप्रसक्त्या द्रव्यत्वस्यैव विशिष्टसत्ताभावाभावत्वस्वीकारेपि नैवकारार्थबाधः विशिष्टसत्ताभावस्यैव द्रव्यत्वाभावतया द्रव्यत्वस्यापि विशिष्टसत्ताभावप्रतियोगित्वादित्यपि द्रष्टव्यम् । असाधारणस्यापि कम्बुग्रीवादिमत्त्वप्रभृतेर्घटादिभेदात्यन्ताभावत्वविरहादाह प्रतियोगितावच्छेदकेति । यद्यपि सर्वत्र अभावस्याभावः प्रतियोग्येव तस्यापि प्रतियोगितावच्छेदकसम्बन्धेनैव अभावविरोधित्वात् घटाद्यन्योन्याभाववत्यपि संयोगादिसम्बन्धेन प्रतियोगिनो घटादेः सत्त्वे बाधकाभावः इत्यपि सुवचम्, तथापि घटे घटभेदो नास्ति इत्याधाराधेयभावप्रतीतेः तादात्म्यसम्बन्धेन कर्त्तुमशक्यत्वात्, बहूनां प्रतियोगिनामन्योन्याभावाभावत्वकल्पनामपेक्ष्य लाघवेन एकस्य प्रतियोगितावच्छेदकस्यैव तथात्वौचित्यात् नैष प्रकारः सम्भवतीति भावः।

मिश्रोक्तमाशङ्कते अथेति । स चेति । प्रतियोगितावच्छेदकश्चेत्यर्थः । क्व चित् भेदस्थले । क्व चित् अत्यन्ताभावस्थले । न प्रतीयते इति । तस्यैव इत्यग्रिमान्वयि । ननु तद्वत्ताप्रतीतिविरोधिन एव तदभावात्मकत्वे तद्व्याप्यस्यापि तदभावाभावत्वापत्तिः अत आह तदभाववत्त्वञ्चेति । प्रतियोगितदभावयोरिति।भेदप्रतियोगितावच्छेदकयोरपि उपलक्षकम् । तथात्वं विरोधित्वम् । तत्सम्बन्धवत्त्वं

च्छित्सम्बन्धबुद्धिर्विशेषदर्शनतयोपयुज्यते । न च स्वतः, मानाभावात् । अथ सम्बन्धान्तरावच्छिन्नाभाववति सम्बन्धान्तरेण प्रतियोगिनो वृत्तेर्न तदभावविरोधित्वमिति चेत् । प्रतियोगितावच्छेदकसम्बन्धस्याभाववति सम्बन्धान्तरेण वृत्तेर्न तथात्वम् । सम्बन्धविशेषेण च विरोधित्वं तुल्यमेव । अनतिप्रसक्तये च स्वप्रतियोगितावच्छेदकसम्बन्धत्वेनाभावत्वकल्पने क्वानुगमसम्भव-

---

प्रतियोगितावच्छेदकसम्बन्धवत्त्वम् । तद्विषयः प्रतियोगिमत्ताबोधप्रकारः । तत्र सम्बन्धस्य संसर्गविधयैव भानादिति भावः । अथ अभावव्यावृत्तत्वेन ज्ञातस्य प्रतियोगिसम्बन्धवत्त्वस्यापि अभाववत्ताबोधविरोधित्वमस्त्येव अत आह सम्बन्धसम्बन्धवदिति । तथा च तद्व्यावृत्तत्वाद्यविषयकं यद्गोचरज्ञानं अभाववत्ताबोधप्रतिबन्धकं तस्यैव अभावविरहत्वं परेणापि वाच्यम् । अन्यथा तन्मतेनापि प्रतियोगिसम्बन्धियसम्बन्धस्य अभावविरहत्वापत्तेः । न चेदं प्रतियोगिसम्बन्धेऽस्तीति भावः । उपयुज्यत इत्यस्य अभावधीप्रतिबन्ध इत्यादिः । न स्वतः न सम्बन्धवत्ताबुद्धित्वेन । तस्य प्रतियोगिनः । प्रतिबन्दिमुद्रया निराचष्टे प्रतियोगितेति । न तथात्वं नाभावविरोधित्वम् । तथा च घटाद्यभावप्रतियोगितावच्छेदकीभूतसंयोगादिसम्बन्धस्य कालिकसम्बन्धेन स्पन्दादौ वर्त्तमानत्वात् संयोगादिसम्बन्धावच्छिन्नघटाद्यभावोऽपि स्पन्दादौ न तिष्ठेदिति भावः। यदि च प्रतियोगितावच्छेदकसम्बन्धस्य संसर्गतानियामकसम्बन्धेन अभावविरोधित्वमुच्यते तदा मयापि प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिनस्तथात्वं वाच्यमित्याह सम्बन्धविशेषेण चेति । अन्योन्याभावात्यन्ताभावसाधारणेत्युक्तिलब्धमनुगतत्वं निरस्यति अनतीति । यथाकथञ्चित् प्रतियोगितावच्छेदकसम्बन्धमात्रस्यैव तथात्वे संयोगेन घटाद्यभावः कपालादौ न स्यात्, अभावान्तरप्रतियोगितावच्छेदकीभूतस्यैव घटसमवायस्य तत्र सत्त्वात् अतः स्वप्रतियोगितावच्छेदकसम्बन्धस्यैव तथात्वं वाच्यमिति क्वाऽनुगम इत्यर्थः ।

नापीति। व्यधिकरणसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वात्त-द्वत्यन्ताभावविलयप्रसङ्गो भवताम्, तदभावविलोपप्रसङ्गो वेति।

ननु प्राचां मते स्वत्वमनुगतमेव इत्युक्तावपि आह व्यधिकरणेति। संयोगसम्बन्धावच्छिन्नघटाद्यभावस्थले प्रतियोगिनिरूपितस्यैव संयोगस्य प्रतियोगितावच्छेदकसम्बन्धत्वमावश्यकत्वात् न तु प्रतियोग्यनिरूपितस्य, मानाभावादित्युक्तौ नैष दोषः सम्भवतीति व्यधिकरणपर्य्यन्तानुसरणम्। तद्वति व्यधिकरणसंयोगवति। तत्सम्बन्धावच्छिन्नरूपाद्यभावस्य विलयप्रसङ्ग इति भावः। अभावविरोधिनः प्रतियोगितावच्छेदकसम्बन्धस्य तत्र सत्त्वादिति भावः। ननु प्रतियोगिनिरूपितस्यैव प्रतियोगितावच्छेदकसम्बन्धस्य तथात्वं वाच्यम्, न तु प्रतियोगिनिरूपितो व्यधिकरणसम्बन्धोऽस्तीति अतो न तदवच्छिन्नाभावस्य विलय इत्यत आह भवतामिति। तदभावेति। व्यधिकरणसम्बन्धावच्छिन्नाभावस्याभावः त्वन्मते न स्यात् प्रतियोगिनिरूपिततादृशसम्बन्धस्य अप्रसिद्धत्वात्। अस्माकन्तु गगनस्य स्वाभावविरहत्ववत् प्रतियोगिन एव तादृशाभावविरहत्वं तथाविधाभावस्य अनभ्युपगम एव नेति भावः। न च प्रतियोगिनः स्वाभावविरहत्वेन संयोगसम्बन्धावच्छिन्नघटाभावः कपाले नास्तीति प्रमा स्यात् घटात्मकतादृशघटाभावविरहस्य समवायेनैव कपाले सत्त्वात् इति वाच्यम्। कपालस्य समवायेन घटत्वावच्छिन्नवत्त्वेऽपि समवायेन संयोगसम्बन्धावच्छिन्नघटाभावाभावत्वावच्छिन्नवत्त्वाप्रसिद्धयैव ताद्रूप्येण प्रमात्वासम्भवात्। संयोगादिसम्बन्धेनैव तादृशघटाभावाभावत्वावच्छिन्नाधिकरणतायाः पारमार्थिकत्वात् तद्धर्मप्रकारेण प्रमात्वस्य तद्धर्मावच्छिन्नवद्विशेष्यकत्वघटितत्वात्। अन्यथा विशिष्टसत्तायाः सत्तानतिरिक्तत्वेन गुणो विशिष्टसत्तावान् इत्यादिप्रतीतेः प्रमात्वापत्तेरिति ध्येयम्।

इति केवलान्वय्यनुमानपूर्वपक्षः।

---

उच्यते । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । आकाशात्यन्ताभावो यद्यपि प्रतियोगिरूपात्यन्ताभावप्रतियोगी तथापि स न वृत्तिमानित्याकाशात्यन्ताभाव एव केवलान्वयी । तथा प्रमेयत्वाभिधेयत्वादि केवलान्वयि । वृत्तिमतोऽत्यन्ताभावस्याप्रतियोगित्वात् ।

---

लक्षणम्परिष्कुरुते वृत्तिमदित्यादि । आकाशस्य तदभावाभावत्वमित्यभ्युपगममात्रम् । भाववति तदभावासत्त्वप्रतीत्या हि भावस्य स्वाभावाभावत्वं कल्प्यते, न चेह तथा, अभावप्रतियोगित्वं स्वरूपसम्बन्ध एवेत्युक्तमधस्तात्, अभावप्रतियोगित्वञ्चाप्रयोजकम् । एवञ्च यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वं यस्य तस्य तेन सम्बन्धेन केवलान्वयित्वमिति सूचयितुं वृत्तिमदिति ॥

---

परिष्कुरुते इति । लक्ष्याप्रसिद्धिनिबन्धनस्य असम्भवस्य विशेषणान्तरप्रक्षेपेण वारणमेवास्य परिष्कारः । न चेह तथेति । न चाकाशवति आकाशाभावस्य असत्त्वप्रतीतिः, आकाशवत एवाप्रसिद्धत्वादित्यर्थः । अन्यथा प्रमेयत्वाद्यभावत्वमपि गगनादेः स्यादविशेषादिति भावः । ननु प्रतियोगित्वान्यथानुपपत्त्यैव गगनस्य स्वाभावाभावत्वं सेत्स्यतीत्यत आह अभावप्रतियोगित्वमिति । उक्तमिति । अभावविरहत्वस्य प्रतियोगितात्वे भेदप्रतियोगितत्त्वावच्छेदकयोरतिव्याप्त्यापत्तेरिति भावः । ननु यो यदत्यन्ताभावस्य प्रतियोगी सोऽवश्यं तदत्यन्ताभावस्याभाव इति सामान्यव्याप्त्या गगनाभावप्रतियोगित्वहेतुनैव गगनस्य स्वाभावाभावत्वं साधनीयमत आह अभावप्रतियोगित्वमिति । अत्यन्ताभावप्रतियोगित्वमित्यर्थः । तेन भेदस्य प्रतियोगिनि न व्यभिचारः । अप्रयोजकमिति । यत्तद्-

**अत एव ज्ञानस्य ज्ञानत्वस्य च समवायेन ज्ञानविषयत्वादेश्च व्यधिकरणसमवायादिना सम्बन्धेनाभावप्रतियोगित्वेऽपि विषयतया**



र्थयोरननुगतत्वेन सामान्यव्याप्तेरसत्त्वादिति भावः । तत् किं वृत्तिमत्पदमफलमेव इत्याशङ्कायामाह एवश्चेति । तथा च उद्धर्त्तो हि ग्रन्थ इत्यादिन्यायात् सम्बन्धविशेषावच्छिन्नप्रतियोगितालाभार्थमेव वृत्तिमत्पदमिति भावः । नव्याः पुनराकाशाभावो यद्यपि विशिष्टस्वाभावात्मकस्वप्रतियोगिस्वरूपाभावस्य प्रतियोगी, तथापि विशिष्टाभावात्मकस्वप्रतियोगिस्वरूपाभावो न वृत्तिमान् न प्रतियोग्यनधिकरणे वृत्तिमान् वृत्तिमत्पदेन प्रतियोग्यनधिकरणवृत्तिमत्त्वस्यैव उक्तत्वात् इत्येवं क्रमेण मूलव्याख्याने गगनस्य स्वाभावाभावत्वविरहेऽपि न मूलासङ्गतिरित्याहुः । सम्बन्धनिवेशस्य फलमाह अत एवेति । ज्ञानस्य समवायसम्बन्धेन अभावप्रतियोगित्वेऽपि विषयतया केवलान्वयित्वमिति योजना । अत्र ज्ञानं सर्वगोचरं ग्राह्यम् । तत्तन्मात्रविषयकज्ञानस्य विषयतासम्बन्धेन सर्वत्र असत्त्वात् तस्य अलक्ष्यत्वादिति ध्येयम् । साक्षात्सम्बन्धेन केवलान्वयित्वमुक्त्वा परम्परासम्बन्धेन तमाह ज्ञानत्वस्येति । समवायेन अभावप्रतियोगित्वेऽपि स्वाश्रयविषयत्वरूपपरम्परासम्बन्धेन केवलान्वयित्वमित्यन्वयः । स्वाश्रयविषयत्वादिसम्बन्धस्य वृत्त्यनियामकतया तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या तत्सम्बन्धेन ज्ञानत्वादेः केवलान्वयित्वासम्भवमनुसृत्याह ज्ञानविषयत्वादेश्चेति । आदिना गगनाद्यभावस्य सङ्ग्रहः । तेन विषयभेदेन विषयताया अननुगतत्वेन अलक्ष्यत्वेऽपि न क्षतिः । वक्ष्यमाणावच्छेदकगर्भलक्षणाभिप्रायेण ज्ञानविषयत्वस्य उपादानमित्यपि कश्चित् । व्यधिकरणेत्युपलक्षणम् । समानाधिकरणकालिकादिसम्बन्धेनापि गगनादौ ज्ञानविषयत्वादेरभावसत्त्वे बाधकाभाव इत्यपि द्रष्टव्यम् । [ वस्तुतो ननु केवलान्वयिताघटकान्यसमानाधिकरणसंसर्गानवच्छिन्नाया एव प्रतियोगिताया निवेश्यत्वान्न समवायेन ज्ञानादेरभावमादायाऽव्याप्तिरत आह ज्ञानविषयत्वादेश्चेति । आदिना ज्ञानज्ञानत्वाद्युपग्रहः । ]

परम्परासम्बन्धेन स्वरूपसम्बन्धेन च केवलान्वयित्वम् । संयोगाद्यभावोपसंग्रहाय च प्रतियोग्यसमानाधिकरणत्वेनाभावो विशेष्यः । आकाशाभावोऽपि च यथा प्रतियोग्यसमानाधिकरणस्तथोक्तमधस्तात् । वृत्तिमतस्तादृशाभावाप्रतियोगित्वमिति वार्थः ।

---

संयोगाद्यभावेति । यद्यपि प्रमेयत्वादेरपि वैशिष्ट्याद्यवच्छिन्नाभावप्रतियोगित्वात् असम्भववारणाय इत्येव वक्तुमुचितम्, तथापि विशेष्यादिमति विशिष्टाभावादेर्न विशेष्यादिप्रतियोगित्वमिति प्राचां मतेन वैशिष्ट्याद्यनवच्छिन्नप्रतियोगित्वनिवेशाभिप्रायेण वा संयोगाद्यभावानुसरणम् । प्रतियोग्येति । प्रतियोग्यनधिकरणवृत्तित्वेनेत्यर्थः । तथा च स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्त्यभावीयतत्सम्बन्धावच्छिन्नप्रतियोगित्वाभाव एव तत्सम्बन्धेन केवलान्वयित्वमिति फलितम् । तेन घटाद्यभावस्यैव घटादिविशिष्टवाच्यत्वाद्यभावत्वमतेऽपि न प्रतियोग्यनधिकरणवृत्त्यभावस्याप्रसिद्धिः स्वपदस्य आग्रमप्रतियोगित्वपरत्वादिति ध्येयम् । ननु गगनस्याधिकरणस्य अप्रसिद्ध्या तदभावस्य प्रतियोगिवैयधिकरण्यविरहात् तादृशघटाद्यभावस्य अप्रतियोगित्वं गगनस्यापीति तत्रातिव्याप्तिः, स्वरूपसम्बन्धात्मनः प्रतियोगित्वस्य प्रतियोगिभेदेन भिन्नतया द्रव्यसामान्याभावीयस्यापि गगननिष्ठप्रतियोगित्वस्य अतथात्वात् तदाश्रयस्य गगनस्याधिकरणस्य अप्रसिद्धेः, अभावविरहत्वरूपप्रतियोगित्वस्य लक्षणघटकत्वे गगनादेर्द्रव्यसामान्याभावाभावत्वविरहेण तत्प्रतियोगित्वासम्भवाच्च इत्यत आह आकाशाभावोऽपीति । तथा च यादृशसम्बन्धसामान्ये यद्यत्प्रतियोगिताश्रयप्रतियोगिकत्वयत्किञ्चिदधिकरणानुयोगिकत्वोभयाभावः तत्तत्प्रतियोगित्वाभावकूटवत्त्वं तादृशसम्बन्धेन केवलान्वयित्वं वाच्यम् । गगनस्य तु तादृशप्रतियोगितासत्त्वात् न केनापि सम्बन्धेन तस्य केवलान्वयित्वमिति भावः । उभयाभावस्य अप्रवेशेन लाघवं वृत्तिमत्पदस्य सार्थक्यञ्च कुर्वन्नाह वृत्तिमत इति । तादृशेति । प्रतियोगिव्यधिकरणेत्यर्थः । तथा च यथाश्रुतमेव प्रतियोगिवैयधिकरण्यं निवेश-

व्याप्यवृत्तित्वार्थकं वृत्तिमत्पदमभावविशेषणमित्यपि कश्चित्। तादात्म्येनाभिधेयस्य केवलान्वयित्वसम्पत्तये व्याप्तिरिदखिलमालोकनीयम्।

---

नीयम्। वृत्तिमत्त्वविरहादेव च गगनादौ नातिप्रसङ्गः। वृत्तिमत्त्वञ्च केवलान्वयिताघटकसम्बन्धेन ग्राह्यम्। तेन समवायेन वृत्तिमतोऽपि घटत्वादेः संयोगसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वेऽपि न तस्य संयोगेन केवलान्वयित्वम्। यदि च ज्ञानत्वादेः स्वाश्रयविषयत्वादिसम्बन्धेन इव स्ववृत्तिप्रमेयत्ववत्त्वादिसम्बन्धेनापि केवलान्वयित्वम् एकशेषस्य दुःशक्यत्वात् तथा च तादृशसम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या तत्राव्याप्तिरिति विभाव्यते, तदा यत्सम्बन्धावच्छिन्नयद्वन्निष्ठप्रतियोगिव्यधिकरणाभावस्य प्रतियोगित्वाभाववत्त्वावच्छेदेन प्रतियोगिव्यधिकरणाभावप्रतियोगित्वाभाववत्त्वं तत् सम्बन्धेन तत् केवलान्वयीति वाच्यम्। प्रतियोगिताद्वयञ्च तत्र विशेषणताविशेषावच्छिन्नं ग्राह्यमतो न कश्चिद्दोष इति ध्येयम्। व्याप्यवृत्तित्वेति। तथा च गगनाद्यभावो व्याप्यवृत्तिरेवेति गगने नातिप्रसङ्गः। संयोगरूपश्च अभावो न तथेति तत्प्रतियोगित्वेऽपि संयोगाद्यभावे न अप्रसङ्ग इति भावः। अत्र व्याप्यवृत्तित्वं यदि अवच्छिन्नवृत्तिकान्यत्वं तदा संयोगस्य केवलान्वयित्वापत्तिः तदभावस्य अवच्छिन्नवृत्तिकत्वात्। न च निरवच्छिन्नवृत्तिकत्वमेव व्याप्यवृत्तित्वं वाच्यम्। अवच्छेदकत्वादिसम्बन्धेनैव मूलादौ निरवच्छिन्नवृत्तिकस्य संयोगादेः प्रतियोगित्वेन संयोगाद्यभावाव्याप्तितादवस्थ्यात्। न च विशेषणताविशेषेण निरवच्छिन्नवृत्तिकत्वं तथा, घटाद्यभावस्यापि केवलान्वयित्वापत्तेः घटादिरूपस्य तदभावस्य विशेषणतया वृत्तित्वविरहात्। एवं द्वित्वावच्छिन्नस्यैव प्रमेयत्वादेरभावस्य व्याप्यवृत्तित्वात् तत्प्रतियोगित्वेन असम्भवश्च स्यात् इत्यस्वरसः कश्चिदित्युक्त्वा सूचितः। ननु वृत्त्यनियामकेन स्वविषयतादात्म्येन प्रतियोगिव्यधिकरणत्वाप्रसिद्ध्या तेन सम्बन्धेन नित्यज्ञानादेरभिधेयस्य कुतः केवलान्वयित्वमत आह तादात्म्येनेति। स्वविषयतादात्म्येनेत्यर्थः।

ननु प्रमेयत्वं प्रमाविषयत्वं तच्च न केवलान्वयि, प्रमाया विषयत्वस्य चाननुगमादिति वाच्यम्। प्रमात्वमेव हि परम्परासम्बन्धात् घटादौ प्रमेयत्वमनुगतं प्रमाजातीय-

———

प्रमाजातीयेति । तथा च तादृशाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमर्थः । इत्थञ्च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमेवाभावविशेषणं तेन द्रव्यगुणभेदयोर्द्वित्वादिना न

———

यथाश्रुते अभिधेयमात्रस्य एव तत्तद्व्यक्तित्वावच्छिन्नभेदप्रतियोगितया तादात्म्येन कस्यापि अभिधेयस्य न यावद्वृत्तित्वं कुत्राऽव्याप्तिशङ्का स्यादिति ध्येयम् । नव्यास्तु तथा च इत्यग्रिमग्रन्थोत्तरमेव अयं पाठः, तत्र अनवच्छेदकगर्भलक्षणे अभिधेयत्वादिप्रकारेण वस्तुमात्रस्यैव तादात्म्येन केवलान्वयित्वसम्भवादिति प्राहुः । अखिलमिति । प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोग्यसम्बन्धित्वं वृत्तिमत इत्यत्र च सम्बन्धितामात्रं निवेश्यम् अत्यन्ताभावत्वादिकञ्च न प्रवेश्यमिति भावः ।

मूले प्रमाजातीयेति । घटत्वाद्येकतरप्रमामुपादाय भ्रमसामान्याभिन्नत्वेन तत्सजातीयस्य ज्ञानस्य विषयत्वमेव प्रमेयत्वं वाच्यमित्यर्थः । प्रमाजातीयत्वोक्त्यापि न प्रतियोगित्वगर्भलक्षणस्य प्रतीकारः, विषयत्वस्य नानात्वात् अतः प्रमाजातीयत्वेन अनुगमं कुर्वाणस्य मूलकृतोऽनवच्छेदकत्वगर्भलक्षणे तात्पर्य्यमवधार्य्य व्याचष्टे तथा चेति । अत्र गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वोपगमात् न प्रमेयधूमत्वादिप्रकारेण धूमादेः केवलान्वयित्वम्, सिद्धान्तलक्षणोक्तरीत्या प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव वा तदवच्छेदकत्वं वाच्यम् । इत्थञ्चेति । अवच्छेदकत्वनिवेशो चेत्यर्थः । तेनेति । अन्यथा द्रव्यभेदगुणभेदोभयत्वावच्छिन्नाभावस्य प्रतियो-

विषयत्वं वा। तथापि केवलान्वयिनि संशयाभावात् कथमनुमितिः, प्रमेयत्वमत्र वर्त्तते न वेति संशयश्च न प्रमेयपक्षकः किन्तु प्रमेयत्वपक्षको भिन्नविषयकः, प्रमेयत्वपक्षके चास्तित्वसाध्यस्यान्वयव्यतिरेकित्वं तथा च घटः प्रमेयो न वेति संशयो मृग्यते स च नास्त्येव।

---

केवलान्वयित्वम्। न चैवं विरुद्धयोर्धर्मयोर्द्वित्वेन केवलान्वयित्वापत्तिः तदवच्छिन्नाधिकरणाप्रसिद्ध्या तदवच्छिन्नाभावे प्रतियोग्यसामानाधिकरण्यस्यासम्भवादिति वाच्यम्। तादृशधर्मावच्छिन्नस्य यत्किञ्चिदधिकरणवृत्तिताया विवक्षितत्वात्। क्व चिदपि तादृशोभयवत्त्वाप्रतीतेस्तस्याऽतथात्वात्। सन्दिग्धसाध्यत्वं पक्षत्वमित्याशयेनाशङ्कते तथापीति। अस्तित्वसाध्यस्य घटवृत्तित्व-

---

गिसमानाधिकरणत्वात् तदसामानाधिकरणस्य अभावान्तरस्य प्रतियोगितानवच्छेदकमेव तादृशोभयत्वमिति ताद्रूप्येणापि केवलान्वयित्वं स्यात् इति भावः। वृत्तिमत इत्यादिद्वितीयमतमालम्ब्य शङ्कते न चेति। वाच्यमित्यग्रेऽन्वयः। एवमिति। प्रतियोगितावच्छेदकावच्छिन्नस्य असामानाधिकरण्यप्रवेशे इत्यर्थः। यथाश्रुते तु विरुद्धयोर्द्वयोरपि प्रतियोग्यनधिकरणवृत्तिप्रत्येकाभावप्रतियोगित्वेनैव अतिव्याप्त्यसम्भवात् इति भावः। तादृशधर्मावच्छिन्नस्येति। निरुक्तप्रतियोगितानवच्छेदकधर्मावच्छिन्नस्येत्यर्थः। विवक्षितत्वादित्यस्य वृत्तिमत्पदेन इत्यादिः। तस्य। विरुद्धगोत्वाश्वत्वाद्युभयत्वस्य। अतथात्वात् यत्किञ्चिद्व्यक्तिनिरूपितवृत्तितानवच्छेदकत्वात्। वस्तुतः अत्रापि यत्सम्बन्धेन यद्रूपावच्छिन्नस्य अधिकरणे वर्त्तमानस्य अभावस्य दैशिकविशेषणतावच्छिन्नप्रतियोगितानवच्छेद-

अथ पक्षः साध्यवान्न वा पक्षे साध्यमस्ति न वेति संशयौ समानविषयकावेव, तदस्यास्त्यस्मिन्निति मतुपो विधानादिति चेन्न। विशेषणविशेष्यभावभेदेनार्थभेदात्। मैवम्। य एव हि संशयः पक्षे साध्यसिद्धिविरोधी स एवानुमानाङ्गमावश्यकत्वात् लाघवाच्च न तु समानविषयकत्वमपि तत्र तन्त्रं गौरवात्। प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि न वेति संशयश्च घटः प्रमेय इति साध्य-

———

साध्यस्य। साध्यसिद्धिविरोधी साध्यसिद्धिनिवर्त्त्यः। विशेषण-

———

कसामान्यं दैशिकविशेषणतावच्छिन्नप्रतियोगितानवच्छेदकं तत्सम्बन्धेन तद्रूपावच्छिन्नं केवलान्वयीत्येव वक्तव्यम्। अन्यथा स्ववृत्तिप्रमेयत्ववत्त्वादिसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्याप्रसिद्ध्या तादृशसम्बन्धेन केवलान्वयिनि ज्ञानत्वादौ उक्तलक्षणस्य अव्याप्तिप्रसङ्गादित्यवधेयम्। ननु संशयस्य अनुमित्यनुपयुक्तत्वात् तथापीत्यादिमूलासङ्गतिः अत आह सन्दिग्धेति। तथा च सिद्धिदशायामनुमितेर्वारणाय पक्षताविधयैव संशयस्योपयोग इत्याशङ्कितुरभिप्रायः। कालसम्बन्धित्वरूपस्य अस्तित्वस्य केवलान्वयितया तत्साध्यकस्य अन्वयव्यतिरेकित्वं मूलोक्तमसङ्गतमतो व्याचष्टे घटास्तित्वेति। [घटवृत्तितेति तदर्थः।] साध्यसंशयस्य निश्चयं प्रति अविरोधित्वात् व्याचष्टे साध्यसिद्धीति। तथा च मूले साध्यसिद्धेर्यो विरोधः प्रतिबन्धस्तद्वानित्यर्थः। न तु साध्यसिद्धिर्विरोधिनी यस्येति बहुव्रीहिः, परपदे पुंस्त्वायोगात् नित्यं कप्रत्ययापाताच्च। साध्यसिद्धिपदञ्च साध्यधर्मिकपक्षवृत्तित्वनिश्चयपरम्, नातः केवलान्वयिनि साध्याभावाप्रसिद्ध्या साध्या-

सिद्धिविरोधी भवत्येव। यद्वा संशययोग्यतैवानुमानाङ्गं संशयस्य तदानीं विनाशात्। न च सापि साधकबाधकप्रमाणाभावः प्रमेयत्वाभावासिद्धौ तत्प्रमाणासिद्धेस्तदभावासिद्धिरिति वाच्यम्। पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वज्ञानस्यैव साध्यसाधकत्वेन तदभावस्यैव योग्यतात्वात्।

---

विशेष्यभावभेदेऽपि विरोधिविषयतामात्रेण प्रतिबन्धकत्वमनुभवबलादास्थीयते न हीदं साध्यवदत्र वा साध्यमित्येकतरानिश्चयेऽत्र साध्यं न वा इदं साध्यवन्न वेति अन्यतरः सन्देह इति। पक्षनिष्ठत्यादि। पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिज्ञानस्य साध्यसा-

---

भावाप्रकारकसाध्यप्रकारकज्ञानपर्य्यवसितायाः साध्यसिद्धेः पुनरप्रसिद्धितादवस्थ्यमिति भावः। वस्तुतः साध्यनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपितपक्षनिष्ठविशेष्यताकत्वमेव साध्यनिश्चयत्वं वाच्यम्। अन्यथा वाच्यं पक्षीकृत्य ज्ञेयस्य तादात्म्येन साध्यतायां तादृशसम्बन्धेन वाच्यवृत्तित्वाभावस्य अप्रसिद्ध्या कथितक्रमेण अप्रसिद्धितादवस्थ्यात्। [ न चैवं साध्यतदितरोभयप्रकारतानिरूपितपक्षनिष्ठविशेष्यताकत्वरूपसाध्यसंशयत्वस्यैव निरुक्तौ सामञ्जस्ये साध्यनिश्चयनिवर्त्यत्वेन अनुगमोक्तिर्विफलेति वाच्यम्। पक्षः साध्यवान्न वेति संशयवत्साध्यं पक्षनिष्ठाभावप्रतियोगि न वेत्यादिसंशयादनुमित्युत्पादेन तदर्थमेवाऽगत्याऽभिधानादिति भावः। ]
ननु साध्यं पक्षवृत्ति न वा इत्यादि संशयस्य असंग्रहः भिन्नप्रकारकतया तस्य साध्यवत्त्वनिश्चयानिवर्त्यत्वात् अतः प्राचां मतेनोपगृह्णाति विशेषणेत्यादि। भेदेऽपीत्यपिना प्रमेयत्वं पक्षवृत्त्यभावप्रतियोगि न वा इत्यादिमूलोक्तस्थले विषयभेदस्यापि संग्रहः। विरो-

प्रमेयत्वमत्यन्ताभावप्रतियोगीति भ्राम्यतः संशय इत्यन्ये । नन्वेकरूपविकलमिदं कथं गमकं तत्त्वे वा व्यतिरेकविकलवत् रूपान्तरविकलमपि गमकं स्यादिति चेन्न । अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चयेनानुमित्यनु-

---

धकत्वेन कथञ्चित्साध्यसिद्ध्यनुगुणत्वेन पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावस्य वा साध्यस्य साधकत्वेन तदभावस्य तस्य साध्ये पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य साध्ये पक्षनिष्ठाभावप्रतियोगित्वावगाहिज्ञानत्वेन साध्यविशिष्टपक्षज्ञानाविरोधित्वेन वा रूपेणा-

---

धीति । विरोधिना तत्तत्संशयानुपपत्तिप्रयोजिका या विषयता तन्मात्रेणेत्यर्थः । न तु विरोधिना विषयतामात्रेणेत्यर्थः । तथा सति प्रमेयत्वं पक्षवृत्ति न वा पक्षवृत्त्यभावप्रतियोगि न वा इत्यादिसंशयस्य पक्षः प्रमेयत्ववान् इत्यादिनिश्चयानिवर्त्यत्वे प्रकृतासङ्गतिप्रसङ्गादिति ध्येयम् । पक्षनिष्ठाभावाप्रतियोगित्वज्ञानं न साध्यसाधकं अबाधितत्वबुद्धेरनुमित्यहेतुत्वात्, हेतुत्वेऽपि तदभावो न योग्यता इत्युभयथापि पक्षनिष्ठेत्यादिमूलासङ्गतिः अतो व्याचष्टे पक्षेत्यादि । अग्रे तदभावस्य इत्यत्र तच्छब्देन पक्षवृत्त्यभावप्रतियोगित्वज्ञानस्यैव परामर्शे सामञ्जस्यम् अतो विरोधित्वलक्षणं नञर्थमन्तर्भाव्य आह प्रतियोगित्वज्ञानविरोधिज्ञानस्येति । कथञ्चित् बाधापनयनद्वारा । इदञ्च भावाभावकृतं विरोधित्वमनुसृत्य । वस्तुतः साध्यधर्मिकपक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिनः परामर्शस्यैव साध्यसाधकत्वसम्भवात् यथाश्रुतमेव ज्यायः । साध्यसाधकत्वं यथाश्रुतमेव विवक्षिषुविरोधार्थकस्यापि नञो ज्ञानविरोधित्वप्रकारेण बोधकतायाम् आधुनिकलक्षणापत्तेः पक्षान्तरमाह पक्षनिष्ठेति । तथा च घटानधिकरणमित्यादिप्रयोग इव अप्रतियोगित्वज्ञानेत्यत्रापि नञ्व्यत्या-

भत्रात् युगपदुभयव्याप्त्युपस्थितौ विनिगमकाभावेन उ-
भयोरपि प्रयोजकत्वे व्यतिरेकोपासना व्यतिरेकश्च वि-
पक्षवृत्तित्वशङ्कानिवृत्तिद्वारा व्यतिरेकव्याप्तावुपयुज्यते
अत्र तु विपक्षाभावेन शङ्कैव नोदेति ॥

---

भावस्य योग्यतात्वात् । व्यतिरेकः विपक्षे हेतोरभावः । व्य-
तिरेकव्याप्तौ साध्याभावहेत्वभावयोर्यौ व्यतिरेकौ साध्यहेतू त-
योर्व्याप्तौ ।

---

सात् ज्ञानपदेनान्वय इति भावः । द्वितीयकल्पे तदात्मकस्य अभा-
वस्य इत्यर्थसम्भवेऽपि उभयकल्पसाधारण्यार्थं प्रक्रान्तमेव पक्ष-
निष्ठाभावप्रतियोगित्वज्ञानं तच्छब्देन परामर्शयन्नाह तस्येत्यादिना ।
धर्मान्तरे तादृशप्रतियोगित्वज्ञानदशायामपि साध्यानुमित्युत्पत्तेः
साध्य इति पूरितम् । तादृशप्रतियोगित्वज्ञानप्रतियोगिताकाभावमा-
त्रस्य तादृशप्रतियोगित्वज्ञानदशायामपि सत्त्वादाह तादृशप्रतियो-
गित्वावगाहिज्ञानत्वेनेति । तादृशनिश्चयत्वेनेत्यर्थः । तेन तादृशप्रति-
योगित्वसन्देहदशायां न योग्यताहानिः । ननु एवं पक्षः साध्या-
भाववान् इत्यादिनिर्णयदशायामपि उक्तक्रमेण संशययोग्यता स्यात्,
तथा च तत्रापि अनुमित्यापत्तिः अत आह साध्यविशिष्टेति । अभा-
वमात्रात्मकस्य व्यतिरेकस्य विपक्षगामित्वशङ्कानिवर्त्तकत्वासम्भ-
वात् व्यतिरेकश्च इत्यादिमूलासङ्गतिः अतो व्याचष्टे विपक्षे हेतोर-
भाव इति । ननु क्वचित् विपक्षे हेतोरभावग्रहेऽपि विपक्षवृत्तित्वश-
ङ्कोत्पादात् विपक्षत्वावच्छेदेन हेत्वभाववत्त्वं वाच्यं तच्च व्यतिरेक-
व्याप्तिपर्य्यवसितं न स्वात्मिकायां व्यतिरेकव्याप्तौ उपयुज्यते इति
मूलासङ्गतिः अतो व्याचष्टे साध्याभावहेत्वभावयोरिति । तथा च
व्यतिरेकव्याप्तेः स्वस्मिन् अनुपयुक्तत्वेऽपि साध्यान्वयव्याप्तौ व्यभि-
चारशङ्कानिरासद्वारा उपयोगः भिन्नप्रकारकस्यापि ज्ञानस्य विरो-

अत्र वदन्ति । साध्याभाववदवृत्तित्वमेव व्याप्तिः, लाघवात् प्रायशः साधनभेदेऽप्यभेदाच्च । यत्सम्बन्धावच्छिन्नसाध्याभाव-

---

धित्वोपगमादिति भावः । केचित्तु व्यतिरेको यदि अभावमात्रं व्यतिरेकव्याप्तिर्वा उभयथापि तद्बुद्धेर्न विपक्षवृत्तित्वशङ्कानिवर्त्तकत्वं भिन्नप्रकारकत्वात् अतो व्याख्यातं विपक्षे हेतोरभाव इति । हेतोर्विपक्षवृत्तित्वाभाव इति तदर्थः । व्यभिचारशङ्कया न व्यतिरेकव्याप्तिविरोधित्वं भिन्नप्रकारकत्वात् अतस्तन्निराशद्वारा विपक्षवृत्तित्वाभावस्य सुतरां व्यतिरेकव्याप्तौ उपयोगो न सम्भवति अतो व्याचष्ट साध्याभावहेत्वभावयोरितीत्याहुः । तच्चिन्त्यम् । अत्रेति । शङ्का इयं नव्यनैयायिकानां न तु गुरूणाम्, तैरनौपाधिकत्वस्य व्याप्तित्वस्वीकारात् । अत एव गुरूणां व्याप्यतावच्छेदकप्रकारकज्ञानस्यैव अनुमितिहेतुतया प्रायशः साधनभेदेऽपि इत्याद्यग्रिमग्रन्थासङ्गतिरित्यपि परास्तमित्यपि ध्येयम् ।

साध्येति । अत्र साध्याभावस्य अधिकरणत्वं निरवच्छिन्नं ग्राह्यम् । तेन कपिसंयोगादिसाध्यकस्य एतद्वृक्षत्वादेर्नासंग्रहः । तदपि वा केवलान्वयिनां पथि प्रस्थाप्यमित्यवधाव्यतम् । व्याप्तिरिति । प्रकारतया अनुमितिजनकतावच्छेदकमित्यर्थः । व्याप्तिर्व्याप्तेः शक्यम्, केवलान्वयिनि तु न व्याप्यव्यवहारोऽपीत्यपि कश्चित् । लाघवादिति । पक्षधर्मिकसाध्याभाववदवृत्तिमत्तानिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन हेतुतायामवच्छेदकलाघवादित्यर्थः । पक्षधर्मिकस्वव्यापकसाध्यसमानाधिकरणहेतुमत्तानिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशहेतुमत्तानिश्चयत्वेन कारणतायान्तु पूर्वापेक्षया अवच्छेदकगौरवादिति भावः । साध्याभाववदवृत्तित्वावच्छिन्नप्रकारकनिश्चयत्वेन एकरूपेण धूमालोकादिनानालिङ्गकपरामर्शस्य तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति हेतुत्वम् अतः साधनविशेषाप्रवेशप्रयुक्तलाघवमप्यस्ति इत्याह प्रायश इति । साध्याभाववदवृत्तित्वं न साध्याभाववति सम्बन्धसामान्येन अवर्त्तमानत्वम्, तद्ग्रहेऽपि पक्षः साध्याभाववदसंयुक्तवान् साध्य-

वति हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन साध्यसिद्धिः फलम्, सा-

भाववदसमवेतवान् इत्यादिज्ञानादेव साध्यानुमितेरानुभविकत्वात्, एवञ्च विभिन्नसम्बन्धेन हेतुतास्थले साध्याभाववदवृत्तित्वमप्यस्माकं नाना इत्याशयेन प्रायश इत्युक्तम्। न च साध्याभाववदवृत्तित्वज्ञानस्य साधनविशेषमन्तर्भाव्य अहेतुत्वे वन्ह्यभाववदसंयुक्तधूमवान् पर्वत इत्यादिपरामर्शस्य धूमवत्त्वाद्यंशे भ्रमत्वग्रहेऽपि ततः पर्वतो वन्हिमान् इत्यनुमितिः स्यादिति वाच्यम्। इष्टत्वात्। यादृशवस्तुविषयकत्वेन अनुमितिहेतुत्वं तदघटितभ्रमत्वग्रहस्यैव अनुमितिप्रतिकूलत्वात्। अन्यथा धूमसामान्यव्यापकवन्हिसमानाधिकरणनीलधूमवान् पर्वत इत्यादिपरामर्शस्य नीलांशे भ्रमत्वग्रहदशायां तन्मतेऽपि तादृशपरामर्शात् अनुमित्युत्पत्तिप्रसङ्गात्। यादृशी विषयिताव्यक्तिः अनुमितिजनकतावच्छेदिका तद्घटकपदार्थगर्भाप्रामाण्यज्ञानस्यैव उत्तेजकतया निरुक्ताप्रामाण्यज्ञानस्यापि अनुमितिविरोधित्वसम्भवाच्च। तत्रत्यायाः साध्याभाववदवृत्तिधूमत्वावच्छिन्नविषयताया एव तादृशवृत्तित्वावच्छिन्नविषयतात्वादिति ध्येयम्। यद्यपि धूमलिङ्गकवन्ह्यनुमितित्वावच्छिन्नं प्रति आलोकलिङ्गकानुमित्सायाः प्रतिबन्धकतया तदभावदशायां वन्ह्यभाववदवृत्तिमान् पर्वत इत्येवं निश्चयादपि धूमलिङ्गकवन्ह्यनुमितिप्रसङ्गः। पक्षधर्मिकसाध्याभाववदवृत्तिधूमवत्तानिश्चयोत्तरानुमितेरेव धूमलिङ्गकानुमितित्वेन तत्र तादृशानुमित्यनुत्पादस्य सर्वसिद्धत्वात्। तथा च तद्वारणाय पक्षधर्मिकसाध्याभाववदवृत्तिधूमादिमत्तानिश्चयत्वेन तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति हेतुत्वं वाच्यमिति साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्वमतेऽपि साधनभेदेन भिन्न एव कार्यकारणभावः। तथापि तल्लिङ्गकानुमितौ तदन्यलिङ्गकानुमित्सायाः कामिनीजिज्ञासादिवत् स्वातन्त्र्येण प्रतिबन्धकत्वे मानाभाव इति मतेनेदम्। पक्षता च गुरूणामिव नव्यानां नानुमितिहेतुः। यत्तु आलोकलिङ्गकेच्छासत्त्वेऽपि धूमालोकोभयपरामर्शदशायां धूमलिङ्गकानुमितेरुत्पादात् आलोकलिङ्गकपरामर्शाभावविशिष्टाया एव आलोकलिङ्गकानुमित्साया धूमलिङ्गकानुमितिविरोधित्वं वाच्य-

ध्याभाववति येन सम्बन्धेन हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन पक्षधर्मताधीः कारणमिति नातिप्रसङ्गः । आकाशादेस्तथात्वेऽपि पक्षधर्मताज्ञानविरहान्नानुमितिः । निविशतां वा तेन साध्यसामानाधिकरण्यं वृत्तिमत्त्वं वा । अथ साध्याभाववदवृत्तित्वं तदवृत्तिभिन्नत्वादिरूपं व्यभिचारज्ञानविरोधिज्ञानविषयत्वेनानुगमनीयं तच्च व्यापकसामानाधिकरण्यसाधारणमिति चेत् । स्यादेवं यदि

---

म, तथा च पर्वतधर्मिकवन्ह्यनुमितिसामान्यं प्रति धूमालोकभस्मादिप्रत्येकलिङ्गकपरामर्शाभावविशिष्टधूमालोकभस्मादिप्रत्येकलिङ्गकानुमितसात्वेन प्रतिबन्धकत्वमेव सम्यक् इति धूमलिङ्गकत्वस्य कार्य्यतानवच्छेदकत्वात् तदवच्छिन्नस्य आपादनमेव दुर्घटमिति । तच्चिन्त्यम् । ननु व्यापकसामानाधिकरण्यव्याप्तेः प्रयोजकत्वे तत्र हेतोर्यादृशः सम्बन्धः प्रविष्टः तेन पक्षधर्मताज्ञानात् तत्र साध्यस्य यादृशः सम्बन्धो निविष्टः तेनैव पक्षे साध्यस्यानुमितिः, तथैव हेतुत्वकल्पनात् त्वन्मते त्वनियमः स्यात् अत आह यत्सम्बन्धेति । नातिप्रसङ्गः । नैकसम्बन्धेन निरुक्तव्याप्त्यादिग्रहात् अपरसम्बन्धेन साध्यानुमितिप्रसङ्गः । ननु यदि उक्तप्रकारिकैव व्याप्तिः तदा गगनादौ तत्प्रमातोऽपि व्याप्तिग्रहाधीनं फलं स्यात् इत्याशङ्का-फलं यदि अनुमितिः तदा कारणान्तरविलम्बादेव न तत्सम्भव इत्याह आकाशादेरिति । पक्षधर्मतेति । अत्र आकाशस्य तत्त्वेन पक्षधर्मत्वाग्रहेऽपि साध्याभाववदवृत्तित्वेन पक्षधर्मत्वग्रहसम्भवात् अयुक्तमेतत् । साधनविशेषान्तर्भावेण व्याप्तिग्रहस्य हेतुतायाः साधनभेदेऽपि इत्यादिना परित्यक्तत्वादिति चिन्त्यम् । व्याप्यव्यवहारस्य फलत्वे तु आह निविशतामिति । तथा च साध्यसामानाधिकरण्यविशिष्टमेव तत् व्याप्यताव्यवहारौपयिकम् अतो न गगनादौ वन्ह्यादिव्याप्यताव्यवहार इति भावः । लाघवादाह वृत्तिमत्त्वं वेति । साध्याभाववति येन सम्बन्धेन अवृत्तित्वं तेनैव वृत्तिमत्त्वं बोध्यम् । तेन समवायादिना वृत्तिमति द्रव्यत्वादौ संयोगादिना न वन्ह्यादि-

व्यापकताज्ञानं व्यभिचारबुद्धिं विरुन्ध्यात्, न चैवम्, वन्ह्यभाववद्वृत्तिर्धूम इति ज्ञाने हि वन्हित्वं स्वरूपेण प्रतियोगित्वं तदवच्छेदकत्वञ्च सम्बन्धमर्य्यादया भासते धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वन्हित्वमित्यत्र च वन्हित्वत्वेन वन्हित्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वत्वाविशिष्टाभाव इति विषयविरोधविरहात्। विशिष्टस्य वन्हित्वस्यावच्छेदकत्वेन प्रकारान्तरानुसरणे

---

व्याप्यत्वव्यवहारः। अत्र एवं सति घटत्वादेः साध्यतायां पर्य्याप्तिसम्बन्धेन घटपटोभयत्वादेर्व्याप्यत्वं स्यात्, पूर्वकल्पे तु तादृशसम्बन्धेन साध्यसामानाधिकरण्यविरहादेव व्याप्यत्वासम्भवात् तस्मात् वाकारोऽनास्थायामिति तत्त्वम्। शङ्कते अथेति। भिन्नत्वादीत्यादिना साध्याभाववदवृत्तित्वात्यन्ताभावसङ्ग्रहः। व्यभिचारेति। व्यभिचारधीविरोधितावच्छेदकधर्मघटितत्वेनेत्यर्थः। तेन व्यापकताधियो विरोधिताखण्डकस्य यदीत्याद्युत्तरग्रन्थस्य नासङ्गतिः। अनुगमनीयमिति। यद्यपि तादृशभिन्नत्वादिप्रकारकनिश्चयस्य स्वस्वोत्तरानुमितित्वावच्छिन्नं प्रत्येव हेतुत्वात् अननुगमेऽपि न क्षतिः, तथापि अत्यन्तान्योन्याभावगर्भमन्तर्भाव्य कारणताद्वयकल्पनामपेक्ष्य लाघवात् साध्यव्यभिचारधीविरोधिधीविषयप्रकारकपक्षधर्मतानिश्चयत्वेन तादृशानुमितित्वावच्छिन्नं प्रति एकमेव कारणत्वं युक्तमित्याशयेनेदम्। तच्च तादृशज्ञानविषयत्वञ्च। न चैवमिति च्छेदः। वन्ह्यभावेत्यादिविषयाविरोधविरहादित्यन्तम् अविरोधित्वे हेतुः। स्वरूपेण धर्मान्तराविशेष्यत्वेन भासत इत्यन्वयः। तदवच्छेदकत्वञ्चेति। वन्हित्वस्यावच्छेदकत्वञ्चेत्यर्थः। निर्वन्हित्वबुद्धौ वन्हित्वावच्छिन्नप्रतियोगितात्वेन संसर्गतायां तेषामनुप्रवेशादिति भावः। तदवच्छेदकत्वत्वेति। प्रतियोगितावच्छेदकत्वत्वेत्यर्थः। विषयाविरोधविरहादिति। समानप्रकारताकबुद्धेरेव प्रतिबन्धकत्वादिति भावः। विशिष्टस्य महानसीयत्वादिविशिष्टस्य। प्रकारान्तरेति। हेतुमन्निष्ठाभावप्रतियोगितात्वावच्छेदेन यादृशधर्मावच्छेद्यत्वाभावः तादृशधर्मावच्छिन्नसामानाधिकरण्यं

च सुतराम् । मणिमन्त्रादिन्यायेन च प्रतिबन्धकतायां मानाभा-

———

व्याप्तिरित्यनुसरणे चेत्यर्थः, न तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणान्यत्वानुसरणे इत्यर्थः । तथा सति महानसीयवह्निमान् धूमात् इत्यादौ महानसीयत्ववह्नित्वोभयोरेव तादृशावच्छेदकत्वपर्य्याप्त्यधिकरणतया तदुभयभिन्नेन महानसीयत्वविशिष्टवह्नित्वप्रकारेण धूमादिव्यापकताया दुरुद्धरत्वापत्तेः । महानसीयवह्नित्वावच्छिन्नाभावस्यापि वह्नित्वावच्छिन्नाभावतया तद्वद्वृत्तित्वज्ञानस्यापि व्यापकताज्ञानप्रतिबन्धकत्वापत्त्या वह्नित्वपर्य्याप्तावच्छेदकताकवह्निनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वस्यैव व्यभिचारतया तज्ज्ञानस्य विषयविरोधसम्भवाच्चेति ध्येयम् । यद्वा प्रकारान्तरानुसरणे इत्यस्य साध्यतावच्छेदकतदितराभयानवच्छेद्या या हेतुमन्निष्ठाभावप्रतियोगिता तदनवच्छेदकत्वस्य निवेशे इत्यर्थः । निर्वह्निवृत्तिर्धूम इत्यादिव्यभिचारज्ञाने वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगितात्वेनैव प्रतियोगितायाः संसर्गतया भानसम्भवात् इति भावः । सुतरामिति । विषयविरोधविरहादिति पूर्वेणान्वयः । धूमवन्निष्ठाभावप्रतियोगितात्वावच्छेदेन वह्नित्वावच्छेद्यत्वाभावबुद्धौ निरुक्तप्रतियोगिताधर्मिकवह्नित्वाद्यवच्छेद्यत्वग्रहस्यैव विरोधित्वादिति भावः । केचित्तु प्रकारान्तरेति, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणघटितान्यत्वाद्यनुसरण इत्यर्थः । सुतरामिति, निर्वह्निवृत्तिर्धूम इत्यादिप्रतीतौ वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगितात्वेनैव संसर्गतया वह्नित्वादौ अवच्छेदकतापर्य्याप्तेरप्रवेशादित्यभिप्राय इत्याहुः । तच्चिन्त्यम् । मणिमन्त्रादिन्यायः स्वातन्त्र्यम् । मानाभावादिति । इदमुपलक्षणम् । निरुक्तव्यभिचारधीविरोधिधीविषयत्वस्य साध्याभाववद्वृत्तित्वविशिष्टहेतुकालीनत्वादौ अतिप्रसक्तत्वात् यत्प्रकारकनिश्चयत्वेन व्यभिचारधीविरोधित्वं तत्प्रकारकपक्षधर्मतानिश्चयत्वेनैव हेतुत्वं वाच्यम्, न चेदं व्यापकसामानाधिकरण्येऽप्यस्ति, व्यभिचारबुद्धिं प्रति व्यापकतानिश्चयत्वेन विरोधित्वस्य आवश्यकतया व्यापकसामानाधिकरण्यनिश्चयत्वेनापि तथात्वे मानाभावादित्यपि द्रष्टव्यम् ।

वात् । व्यापकताज्ञानादेवानुमितिरिति च नानुभविकं न वा यौक्तिकम्, ज्ञानत्वत्वादिना ज्ञानत्वादेर्व्यापकतावच्छेदकत्वग्रहे ज्ञानादिमानित्यनुमितेरयोगात् । अन्यथा जातित्वेनानुभवत्वव्यापक-

———

वस्तुतः साध्याभाववदवृत्तित्वात्यन्ताभावबोधस्य अनुमितिहेतुत्वं न तु साध्याभाववदवृत्तिभिन्नत्वज्ञानस्य तथात्वम् । साध्याभाववदवृत्तित्ववतां धर्मिणां कारणतावच्छेदकेऽनुप्रवेशे गौरवात् । अत एव साध्यवदन्यावृत्तित्वस्यापि ज्ञानं न हेतुः । साध्यवतां धर्मिणां प्रवेशेन साध्याभाववदवृत्तित्वाभावापेक्षया गुरुत्वात् इत्यनुगम एव नोचित इति ध्येयम्।ननु यत्र साध्याभावाद्यनुपस्थितावपि व्यापकतागोचरज्ञानादेवानुमितिः तत्र व्यभिचारात् साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्वं सम्भवत्येव नेत्यत आह व्यापकतेति । क्लृप्तकारणं विना कार्य्योत्पत्त्यसम्भवात् एतादृशस्थल एव मानाभाव इति भावः । यत्तु ननु व्यापकसामानाधिकरण्यस्य गुरुत्वेऽपि लघोर्व्यापकत्वधियः कारणतायां बाधकाभावात् केवलान्वयिखण्डनं दुर्घटमित्याशङ्क्य व्यापकतेत्यादिग्रन्थावतारणम्।तत्तुच्छम् । व्यापकत्वस्य साधनभेदाज्ञानात्वेन तदपेक्षया साध्याभाववदवृत्तित्वे लाघवस्य प्रागेव दर्शितत्वेन सन्दर्भविरोधापत्तेः।व्यापकतावगाहिज्ञानस्य हेतुत्वे साधकाभावमुक्त्वा बाधकमप्याह न वा यौक्तिकमिति।अयोगादिति।यद्रूपावच्छिन्ने व्यापकतावच्छेदकत्वधीः तद्रूपावच्छिन्नप्रकारेणैव साध्यस्यानुमितेस्त्वयापि वाच्यत्वादित्याशयः । अत एवाह अन्यथेति।यद्रूपावच्छिन्ने व्यापकतावच्छेदकत्वं गृह्यते।तद्रूपानवच्छिन्नप्रकारेणापि साध्यस्यानुमितौ भाने इत्यर्थः।ननु तन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वग्रहस्य स्वरूपतस्तद्रूपावच्छिन्नविधेयकानुमितिहेतुत्वात् जातित्वेन व्यापकतावच्छेदकत्वग्रहात् न ज्ञानवान् इत्यनुमितिर्भविता जातित्वस्य ज्ञानत्वमात्रावृत्तित्वात् किन्तु ज्ञानत्वं व्यापकतावच्छेदकम् इत्याकारकग्रहादेव इत्यत आह अनुभवत्वेति । अनुभवत्वव्यापकजातित्वं सत्तादौ गुणत्वव्याप्यजातित्वञ्च रूपत्वादौ अतिप्रसक्तम् अतो जातित्वस्य ज्ञानत्वमात्रवृत्तित्वरक्षार्थं विशेषण-

गुणत्वव्याप्यजातित्वादिना वा तथात्वग्रहेऽपि तत्प्रसङ्गात् । एतेन केवलान्वयिसाध्यकत्वज्ञानमेवाऽनुमितिहेतुरित्यपि परास्तम् । सर्व-

———

ज्ञयम् । तथात्वग्रहे व्यापकतावच्छेदकत्वग्रहे । तत्प्रसङ्गादिति । ज्ञानवान् इत्यनुमितिप्रसङ्गादित्यर्थः । यद्यपि स्वरूपतस्तद्धर्मविशेष्यकं व्यापकतावच्छेदकत्वज्ञानं स्वरूपतस्तद्धर्मावच्छिन्नविधेयकानुमितौ कारणं ज्ञानत्वत्वावच्छिन्नधर्मिकञ्च व्यापकतावच्छेदकत्वज्ञानं ज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितौ हेतुरित्युक्तौ न दोषः । न च एवं ज्ञानत्वत्वेन व्यापकतानवच्छेदकत्वग्रहदशायामपि ज्ञानवान् इत्यनुमितिप्रसङ्गः स्वरूपतो ज्ञानत्वधर्मिकव्यापकतावच्छेदकत्वग्रहस्य तदानीमपि सम्भवादिति वाच्यम् । त्वन्मते निर्वन्हिवृत्तिर्धूम इत्याकारकव्यभिचारधियः सत्त्वेऽपि वन्ह्यभाववदवृत्तिमान् पर्वत इत्याकारकज्ञानदशायामिव अस्माकमपि उक्तज्ञानदशायामनुमितेरिष्टत्वात् । ज्ञानत्वत्वावच्छिन्नधर्मिकव्यापकतानवच्छेदकत्वग्रहस्य तु ज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितावेव विरोधित्वसम्भवात् । तथापि व्यापकताज्ञानस्य हेतुत्वे चैत्रीयज्ञानवान् महानसीयवन्हिमान् इत्याद्यनुमित्यनुपपत्तिः । चैत्रीयज्ञानत्वादेरखण्डत्वाभावेन स्वरूपतस्तद्विशेष्यकव्यापकतावच्छेदकत्वज्ञानसम्भवात् चैत्रीयज्ञानत्वत्वेन व्यापकतावच्छेदकत्वग्रहे चैत्रीयज्ञानत्ववद्वान् इत्येवानुमितिप्रसङ्गादिति ध्येयम् । यादृशरूपावच्छिन्नाधिकरणतात्वे हेतुव्यापकतावच्छेदकत्वधीः तादृशरूपावच्छिन्नविधेयताकैव अनुमितिः फलम् अतो न कोऽपि दोषः । प्रतियोगिवैयधिकरण्यस्य व्यापकतायां निवेशमपेक्ष्य साध्याधिकरणतायास्तद्घटितहेतुव्यापकत्वस्य व्याप्तौ प्रवेशेन लाघवादित्यपि वदन्ति । एतेनेति । एकरूपेण केवलान्वयित्वग्रहात् अन्यरूपेण अनुमित्युत्पत्तौ अतिप्रसङ्गेन इत्यर्थः । ननु गगनाभावत्वत्वादिना केवलान्वयित्वग्रहः ; गगनाभावत्वादिप्रकारेण अनुमितौ हेतुर्वाच्यः गगनाभावत्वत्वविशिष्टगगनाभावत्वप्रकारेण अनुमितौ गगनाभावत्वत्वाश्रयत्वप्रकारेणैव केवलान्वयित्वग्रहस्य हेतुत्वात् नैकदा अवच्छिन्नानवच्छिन्नगगनाभावत्वप्रकारताकानुमितिप्रसङ्ग इति यदि

जनानुभवसिद्धानुमितिभावे धूमादिदर्शनानन्तरं जायमाने गृह्यमाणव्यतिरेकत्वभ्रमादिज्ञानेऽसम्भवाच्च । प्रमेयत्वादेश्च घटादिवृत्तित्वं केवलान्वयित्वेन कथञ्चित्तद्वृत्तिधर्मव्यापकत्वेन वानुमेयं न ज्ञेयत्वादिहेतुका तदनुमितिरानुभविकी ।

---

ब्रूयात् तदाप्याह सर्वजनेति । गृह्यमाणव्यतिरेकेति तदानीं केवलान्वयित्वाग्रहसम्पत्तये, तत एव तत्रानुमितिसम्भवादिति भावः । ननु एवं प्रमेयत्वादेरभावाप्रतियोगित्वग्रहदशायां घटादौ तद्वैशिष्ट्यावगाह्यनुमितिर्न स्यात् कारणबाधात् अत आह प्रमेयत्वादेश्चेति । तथा च तदानीं प्रमेयत्वादिसाध्यकानुमितिरसिद्धैवेति भावः । ज्ञेयत्वादौ घटादिवृत्तित्वाग्रहदशायां सहचारग्रहासम्भवात् केवलान्वयित्वेन घटादिवृत्तित्वानुमानासम्भवादाह कथञ्चिदिति । तथा च तद्वृत्तियत्किञ्चिद्धर्मव्यापकत्वेन समं साध्यस्य सहचारो जात्यन्यत्वादावेव सुलभ इति तद्वृत्तिधर्मत्वावच्छिन्नव्यापकत्वस्य हेतुत्वे तद्दोषतादवस्थ्यमतः कथञ्चिदित्युक्तम् । केचित्तु तद्वृत्तिधर्मव्यापकत्वं तन्मात्रवृत्तिधर्मव्यापकत्वम् अन्यथा केवलान्वय्यन्तरे घटादिवृत्तित्वाग्रहदशायां सहचारज्ञानाभावात् तद्दोषतादवस्थम्, तथा च हेतुग्रहदशायां साध्यस्यापि प्रायशो ग्रहसम्भवात् सिद्धसाधनम् अतः कथञ्चिदित्युक्तम् । तथा च तद्वृत्तित्वाग्रहदशायामेव अनुमितिरिति भाव इत्याहुः । तदनुमितिः प्रमेयत्वसाध्यकानुमितिः । अत्रेदमवधेयम् व्यापकसामानाधिकरण्यस्य हेतुत्वेऽपि वाच्यत्वस्य व्यतिरेकित्वभ्रमदशायां तदभाववद्वृत्तित्वस्य ग्रहात् तत्साध्यकानुमितिसम्भवेन केवलान्वयिसाध्यकानुमितिखण्डनं दुर्घटं तार्किकैरन्यथाख्यात्यभ्युपगमात् । न च वाच्यत्वादेः केवलान्वयित्वग्रहदशायां वाच्यत्वाभाववद्वृत्तित्वग्रहासम्भवात् तदानीं वाच्यत्वाद्यनुमित्यनुत्पाद एव केवलान्वयिखण्डनस्यार्थ इति वाच्यम् । भिन्नप्रकारकज्ञानस्य अविरोधितया साध्ये वृत्तिमदभावप्रतियोगित्वरूपकेवलान्वयित्वस्य ग्रहे सत्यपि प्रतियोगितासंसर्गेण अभावे साध्यवैशिष्ट्यावगाहिनः साध्याभाव-

वद्वृत्तिर्हेतुरित्याकारकज्ञानस्य उत्पत्तौ बाधकाभावात्। न च अभावे
धर्मिणि साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गेण साध्यीय-
त्वाभावग्रहदशायां साध्याभाववदवृत्तित्वग्रहासम्भवात् तदानीं वा-
च्यत्वाद्यनुमित्यनुत्पाद एव केवलान्वयिखण्डनशब्दार्थ इति साम्प्र-
तम्। अभावत्वसामानाधिकरण्येन तादृशाभावग्रहेऽपि अभावधर्मि-
कस्य तादृशप्रतियोगितासम्बन्धेन साध्यीयत्वग्रहस्य सम्भवात् अ-
भावत्वावच्छेदेन तादृशसाध्यीयत्वाभावग्रहस्य च प्रमात्मकस्य दु-
र्घटत्वात् संयोगादिसम्बन्धेन वाच्यत्वाद्यभाव एव तादृशसाध्यीय-
त्वाभावस्य असत्त्वात्। वस्तुतस्तु अभावत्वविषयतामनन्तर्भाव्य
साध्यतावच्छेदकावच्छिन्नप्रतियोगितासंसर्गेण यः साध्यीयस्तद्वदवृ-
त्तित्वज्ञानमेव लाघवात् कारणमित्यभावत्वावच्छेदेन प्रतियोगिता-
सम्बन्धेन साध्यीयत्वाभावभ्रमे सत्यपि तादृशज्ञानोत्पत्तौ बाधका-
भावः धर्मितावच्छेदकविशेषान्तर्भावेणैव बाधबुद्धेर्विरोधित्वात्।
यत्तु साध्यतावच्छेदकधर्मेण साध्यतावच्छेदकसम्बन्धेन च अव-
च्छिन्नं यत् प्रतियोगित्वमखण्डं तत्सम्बन्धेन अभावे साध्यवैशि-
ष्ट्यावगाहिन एव साध्याभाववदवृत्तित्वज्ञानस्य अनुमितिहेतुत्वं ला-
घवात् न तु साध्यतावच्छेदकधर्मावच्छेद्यत्वं प्रतियोगित्वञ्च वि-
शेष्यविशेषणभावापन्नमवगाहमानस्य साध्याभाववदवृत्तित्वज्ञानस्य
तथात्वं गौरवात्। तथा च स्वरूपसम्बन्धेन वाच्यत्वत्वाद्यवच्छिन्न-
प्रतियोगिताव्यक्तेरलीकतया तत्सम्बन्धेन अभावे वाच्यत्ववै-
शिष्ट्यावगाहिवाच्यत्वाद्यभाववदवृत्ति ज्ञेयत्वमित्याकारकज्ञानस्या-
पि अलीकत्वम्, असतः संसर्गस्यापि ख्यातिनिरासात् अतः कार-
णस्यैव बाधात् केवलान्वयिसाध्यकानुमानस्य खण्डनमिति। तन्न।
घटादिपक्षकवाच्यत्वाद्यनुमितेरानुभविकत्वेन वाच्यत्वत्वाद्यवच्छिन्न-
त्वं प्रतियोगित्वे प्रतियोगित्वञ्च अभावांशे संसर्गमर्य्यादया विषयी-
कुर्वाणस्यैव वाच्यत्वाभाववदवृत्तित्वज्ञानस्य अन्यथाख्यातिरूपस्य
तत्र हेतुत्वसम्भवेन कारणबाधस्य असम्भवात्। साध्यादिभेदेन अ-
नुमितिव्याप्तिज्ञानयोः कार्य्यकारणभावभेदात् वन्ह्याद्यनुमितौ वन्हि-
त्वाद्यवच्छिन्नाखण्डप्रतियोगितासम्बन्धेन वन्हीयाभाववदवृत्ति-
त्वज्ञानत्वेनैव हेतुतालाघवस्य वाच्यत्वादिसाध्यकस्थले अकिञ्चि-
त्करत्वात्। तस्मात् केवलान्वयिनो वाच्यत्वादेः साध्यविधयानुमि-

एवं साध्याभावव्यापकाभावप्रतियोगित्वमपि नानुमित्यौपयिकं गौरवात् व्यभिचारज्ञानाविरोधित्वाच्च । वन्ह्यभावसमानाधिकरणाभावप्रतियोगी धूमाभाव इति ज्ञानं धूमाभावाभावत्वेन तत्र वन्ह्यभावसामानाधिकरण्यबुद्धिं कदाचिद्विरुन्ध्यात् न तु धूमत्वेन, भिन्नप्रकारकत्वात् । व्यति-

---

त्यनुभवाभाव एव केवलान्वयिखण्डनपदार्थः । तदुक्तं दीधितिकारैः न तु ज्ञेयत्वादिहेतुका तदनुमितिरानुभविकीति । एतेन साध्यादिभेदेन व्याप्तिज्ञानानुमित्योः कार्य्यकारणभावभेदात् वन्हिविधेयकानुमितौ वन्ह्यभाववदवृत्तित्वज्ञानस्य हेतुत्वेऽपि ज्ञेयत्वादिलिङ्गकवाच्यत्वादिसाध्यकानुमितौ ज्ञेयत्वादिव्यापकवाच्यत्वादिसामानाधिकरण्यधियः कारणत्वे बाधकाभावः, कार्य्यकारणभावान्तरापत्तिभिया तदुपेक्षणे द्रव्यत्वादेरपि अनुमितिर्न स्यात्, द्रव्यत्वादिविधेयकानुमितिं प्रति द्रव्यत्वाद्यभाववदवृत्तित्वज्ञानस्य कारणतान्तरकल्पनायां गौरवात् इत्यस्यापि सुवचत्वात् इत्यपि निरस्तम् । द्रव्यत्वादिविधेयकानुमितेरानुभविकत्वेन तत्र कारणान्तरकल्पनस्य प्रामाणिकत्वात् । वाच्यत्वादिविधेयकानुमितेस्तु निष्प्रामाणिकत्वात् तत्र विशेषतोऽपि व्यापकसामानाधिकरण्यधियः कारणत्वस्य उन्मत्तमात्रकल्प्यत्वात् । अन्यथा निर्वन्हिधर्मिकवन्हिविधेयकानुमितिमपि अङ्गीकृत्य तत्रापि निर्वन्हिधर्मिकवन्हिव्याप्यधूमवत्तादिपरामर्शस्य हेतुतायाः कल्पनापत्तेरिति दिक् ।

केवलान्वयिनं निरस्य केवलव्यतिरेकिणं निरस्यति एवमिति । गौरवादित्यस्य साध्याभाववदवृत्तित्वज्ञानापेक्षया इत्यादिः । ननु साध्यवदन्यावृत्तित्वज्ञानस्यैव व्यतिरेकव्याप्तिग्रहस्यापि व्यभिचारधीविरोधित्वेन अनुमितिहेतुत्वं साधनीयम् अत आह व्यभिचारेति । अविरोधं व्युत्पादयति वन्ह्यभावेति । वन्ह्यभाववति धूमाभावो नास्तीति धीः अभावे धूमाभावप्रतियोगिकत्वावगाहिनी धूमाभावेऽपि वन्ह्यभाववदवृत्त्यभावप्रतियोगित्वमवगाहते इति तस्या एव विरोधिविषयकत्वमात्रेण व्यतिरेकव्याप्तिग्रहे कदाचित् प्रतिब-

रेकव्याप्तिग्रहाधीना च धीर्नानुमितित्त्वेनाननुभवात् क्लृप्त-कारणाभावात् सामग्रीभेदकल्पनायाश्चानुभवैकाधीनत्वात् । किन्तु विजातीया । तत्करणमपि प्रमाणान्तरमर्थापत्तिरेव । क्लृप्तप्रमाण-द्वयसमाहारसमशीलश्च युगपदन्वयव्यतिरेकिधर्मद्वयप्रतिसन्धानम् । अथ निर्णीते विना सिद्धीच्छामर्थापत्तेरनुत्पादात् पक्षताजन्यत्वात्

———

न्धकत्वमुचितम् । वस्तुतस्तु तदप्ययुक्तम्, संसर्गविधया प्रतियोगि-त्वग्रहे प्रतियोगित्वाभावप्रकारिकाया व्यतिरेकव्याप्तिधियो विरो-धित्वासम्भवात् । वन्ह्यभाववति धूम इत्येवं व्यभिचारग्रहे तु व्य-तिरेकव्याप्तिग्रहस्य विरोधित्वं सुदूरपराहतम् । वस्तुगत्या धूमाभा-वाभावात्मकस्य धूमस्य विषयत्वेऽपि धूमाभावाभावत्वेन अप्रकार-त्वादित्याखण्डनार्थः । ननु व्यतिरेकव्याप्तिग्रहोत्तरं जायमानबुद्धेः प्रत्यक्षादिभिन्नानुभवत्वेन अनुमितित्वसिद्धौ अनायत्या व्यतिरेक-व्याप्तिज्ञानस्य हेतुत्वं सेत्स्यतीति अतस्तत्रैव बाधकमाह व्यतिरेके-त्यादि । तत्त्वेन अनुमितित्वेन । क्रमिकानुमितिव्यक्तिपूर्वपूर्वानुमितौ परमते स्वमतेऽपि प्रवृत्तिजनकानुमितौ च व्यभिचारात् हेत्वन्तरमाह क्लृप्तेति । सामग्रीति । क्व चित् साध्याभाववदवृत्तित्वज्ञानं क्व चित् व्यतिरेकव्याप्तेर्ज्ञानं हेतुरित्येवं कल्पनायाः फली-भूतज्ञाने अनुमितित्वानुभवाधीनत्वात् तस्य च प्रकृते अभावा-दिति भावः । विजातीयेति । धीरित्यनुषज्यते । वैजात्यम् अ-र्थापयामि नानुमिनोमि इत्यनुभवादेव सिद्धम् । व्यतिरेकव्याप्तिग्रह-स्य जन्यतावच्छेदकत्वेनैव तत्सिद्धिः प्रत्यक्षादिभिन्नानुभवत्वस्य तथात्वे गौरवादित्यपि वदन्ति । नन्वेवं साध्याभाववदवृत्तित्वस्य व्यतिरेकव्याप्तेश्च युगपत् परामर्शे अनुमित्यर्थापत्त्योः सङ्करः स्यात् अत आह क्लृप्तप्रमाणेति । तथा च प्रत्यक्षानुमित्योर्युगपत् सामग्री-समवधाने यथानुभवसिद्धं तदेकतरसामग्र्या अपरप्रतिबन्धकत्वं तथैव प्रकृतेऽपि वाच्यम् । यद्वा परैः ज्ञानद्वययौगपद्यस्य अङ्गीका-रात् विजातीयज्ञानद्वयमेव तत्र उत्पद्यते इत्याशयः । नातः प्रतिब-ध्यप्रतिबन्धकभावान्तरकल्पनागौरवमपीति भावः ।

साध्यनुमितिर्लाघवेन पक्षताजन्यत्वस्यैवानुमितित्वे प्रयोजकत्वात् । न चैवं पक्षताप्रत्यक्षस्यापि तथात्वापत्तिः, इच्छासत्त्वेऽपि कालान्तरे प्रदेशान्तरे वा तद्विरहसत्त्वेनैककालीनत्वाद्यतीन्द्रियघटितप्रतियोगित्वेन तस्या अतीन्द्रियत्वादिति चेन्न । अनुमितावेव पक्षताया हेतुत्वस्य निरस्तत्वात् साध्यादिभेदेनाननुगतत्वात् तज्जन्यत्वस्याऽप्रयोजकत्वाच्च । प्रयोजकत्वञ्च न जनकत्वमसम्भवात् न

———

तत्रानुमितित्वमाशङ्कते अथेति । निर्णीत इति । सिद्धिसत्त्व इत्यर्थः । अनुत्पादादिति पक्षताजन्यत्वे हेतुः । सापि अर्थापत्तिरपि । लाघवेनेति । अन्वयपरामर्शसहितपक्षताजन्यत्वापेक्षया इत्यादिः । एवं पक्षताजन्यत्वमात्रस्य प्रयोजकत्वे । समवायसम्बन्धावच्छिन्नस्यैव पक्षताजन्यत्वस्य प्रयोजकत्वोक्त्या पक्षताजन्यत्वस्य वारणसम्भवेऽपि वस्तुगतिमनुरुध्य समाधत्ते इच्छासत्त्वेऽपीति । देशान्तरे इच्छाशून्यात्मनि । तस्याः पक्षतायाः । निरस्तत्वादिति । प्रमाणाभावेनेत्यादिः । तथा च दृष्टान्तासिद्धिरिति भावः । ननु सिद्धिकालीनायाः प्रत्यक्षादिसामग्र्यास्तत्तद्व्यक्तित्वेन अनुमितौ प्रतिबन्धकत्वकल्पनापेक्षया लाघवादेव सिद्ध्यभावरूपपक्षतायास्तद्धेतुत्वं सेत्स्यतीति अत आह साध्यादीति । आदिना सिषाधयिषोपग्रहः।तथा च साध्यादिभेदादिव अनुमितित्वार्थापत्तित्वादिप्रकारकसिषाधयिषाया भेदादपि पक्षताभेदात् अनुमितित्वादिप्रकारकेच्छाविरहघटितपक्षताजन्यत्वं यदि प्रयोजकं तदा हेत्वभावादर्थापत्तौ स्वरूपासिद्धिः, अर्थापत्तित्वादिप्रकारकेच्छाविरहघटितजन्यत्वस्य प्रयोजकत्वे च अनुमितौ दृष्टान्तासिद्धिरिति भावः । ननु प्रत्यक्षाद्यतिरिक्तसाध्यज्ञानत्वप्रकारकेच्छाविरहविशिष्टसिद्धित्वघटितधर्मावच्छिन्नाभावत्वेन निरुक्तपक्षताद्वयमनुगमय्य तज्जन्यत्वमेव अनुमितित्वे प्रयोजकं वाच्यम् अतो नोक्तदोष इत्यतः प्रयोजकत्वपदार्थं वितर्क्य दूषयति प्रयोजकत्वञ्चेति । वस्तुतोऽर्थापत्तित्वावच्छेदेन तत्सामानाधिकरण्येन वा अनुमितित्वस्य साधने पक्षताजन्यत्वं प्रयोजकम्, तत्र नाद्य इत्याह साध्यादीति, तथा च भागासिद्धिरिति,

व्याप्यत्वं मानाभावादित्यादेरसकृदावेदितत्वाच्च । एतेन व्याप्तिज्ञानादिजन्यत्वमनुमितित्वे प्रयोजकमित्यपि परास्तम् । साध्याभावव्यापकाभावप्रतियोगिधर्मत्वेन साध्यव्याप्यत्वानुमानात् प्रसिद्धसाध्यकैवानुमितिरित्यपि केचित् । अथ वन्ह्याद्यभाववति धूमादेः समवायेन तन्तुत्वाद्यभाववति च पटादेः संयोगेन वर्त्तमानत्वात् साध्याभाववति संयोगेन समवायादिना वर्त्तमानत्वस्य विशिष्टस्यैवाभावो वाच्यः तथा च जलं जातिमत् गुणवत्त्वात् गुणवच्च घटादेरित्यादिकं विलीयेत जातिगुणाभाववतोः समवेतत्वसंयोगि-

---

द्वितीये तु आह प्रयोजकत्वञ्चेत्यादीति, युक्तमुत्पश्यामः।प्राञ्चस्तु साध्यादीत्यादिपदेन पक्षाद्युपग्रहः । तेन साध्यपक्षभेदात् पक्षताया नानात्वात् न तज्जन्यता अनुमितित्वप्रयोजिका समव्याप्तस्यैव प्रयोजकत्वस्थितेरित्याशयः । ननु व्याप्यमात्रे प्रयोजकत्वमास्थेयं तत्तत्पक्षसाध्यकानुमितित्वे वा तत्तत्पक्षसाध्यकपक्षताजन्यत्वं प्रयोजकं वाच्यम् इत्यत उक्तं प्रयोजकत्वञ्चेतीत्यप्याहुः।असम्भवादिति । अनुमितित्वजातेर्नित्यत्वादिति भावः । इत्यादेरित्यादिपदेन व्यापकत्वमित्यादेः सूचनम्।एतेन उक्तदिशा प्रयोजकत्वस्य निरस्तत्वेन।व्याप्तिज्ञानेति । अन्वयव्यतिरेकान्यतरव्याप्त्यवगाहिज्ञानजन्यत्वमित्यर्थः । तेन न व्याप्त्यननुगमनिबन्धनः स्वरूपासिद्ध्यादिः । अर्थापयामीत्यनुभवस्य व्यतिरेकिपरामर्शप्रयोज्यानुमितित्वावगाहित्वमङ्गीकुर्वतां व्यतिरेकव्याप्तिस्थलेऽपि अनुमितिमेव क्षणविलम्बेन कल्पयतां सिद्धान्तिनां मतमाह साध्यभावेत्यादि । साध्यव्याप्यत्वस्य वृत्तिमत्त्वगर्भत्वे गगनादौ व्यभिचारवारणार्थं धर्मपदम्, अन्यथा तु उपरञ्जकं तद्बोध्यम् । जलादौ धूमव्यापकाभावप्रतियोगिजलत्वादिपरामर्शात् अप्रसिद्धस्य धूमाद्यभावस्य अर्थापत्तौ उक्तगत्यसम्भवात् प्रसिद्धसाध्यकैव इत्युक्तम् । स एवं क्षणविलम्ब एव केचिदित्यत्र अस्वरसः । समवायेनेति । वर्त्तमानत्वादित्यन्वयि । गुणवदिति । यद्यपि जातिसाध्यक एव संयोगेन घटादिहेतौ अप्रसिद्धिः सम्भवति,

त्वयोरप्रसिद्धेरिति चेत्, उपदर्शयैनमपि केवलान्वयिनः सरणिं स्वी-
कुरु वा स्वाधिकरणावृत्तिसाध्याभावादिकत्वमेव व्याप्तिम्, स्वत्वा-

---

तथापि सम्बन्धविशेषेण वृत्तिमत्त्वमात्राप्रसिद्धिनिबन्धनानुमानवि-
लयप्रदर्शनाय गुणवदिति साध्यान्तरमित्युक्तम्। पूर्वत्र तु समवे-
तत्वापेक्षया जातित्वस्य गुरुतया तदवच्छिन्नाभावस्य अप्रसिद्ध्यापि
विलयसम्भवादिति द्रष्टव्यम्। उपदर्शयेति। तथा च तत्र जात्यादौ
जलादिवृत्तित्वानुमानमेव प्रमात्मकव्याप्तिज्ञानादिति भावः। स्वा-
धिकरणेति। तथा च जात्यादिसामान्याभावस्य हेतुभूतगुणादिम-
द्वृत्तित्वात् नोक्तदोष इति भावः। ननु स्वाधिकरणावृत्तिसाध्या-
भावकत्वव्याप्तौ स्वाधिकरणवृत्तित्वं न सम्बन्धसामान्येन वक्तव्यम्,
जातिमान् द्रव्यत्वात् इत्यादौ अव्याप्तेः द्रव्यत्ववति काले जात्यभा-
वस्य कालिकसम्बन्धेन वृत्तेः। नापि विशेषणतया, घटभिन्नं द्रव्य-
त्वात् इत्यादौ अतिव्याप्तेः। साध्याभावस्य घटत्वादेर्विशेषणतया वृ-
त्तित्वविरहात् अभावीयस्वरूपसम्बन्धेन भावस्य वृत्तौ मानाभावात्।
घटत्वाभावो घटे नास्ति इति बुद्धेः क्लृप्तसमवायेनैव सम्भवात्। न
चाभावत्वप्रतीतेः प्रमात्वानुरोधेन स्वमते अभावाभावस्य अतिरिक्तत्वा-
त् न दोष इति वाच्यम्। तथापि घटत्वाभावस्य कालिकसम्बन्धाव-
च्छिन्नाभावे साध्ये गगनत्वादिहेतौ अव्याप्तिप्रसङ्गात्। घटत्वाभा-
वरूपस्य साध्याभावस्य विशेषणतया गगनवृत्तित्वात्। अत एव न
प्रकृतसाध्यवत्ताबोधविरोधिताघटकसम्बन्धेनापि अधिकरणवृत्तित्व-
निवेशो युक्तः। कालिकसम्बन्धेन गगनवृत्तित्वाप्रसिद्ध्या कथित-
स्थल एव अव्याप्तितादवस्थ्यात्, सत्त्वाभाववत्ताबुद्धिविरोधिताघट-
कसमवायसम्बन्धेन जातिवृत्तित्वाप्रसिद्ध्या इदं सत्ताशून्यं जा-
तित्वात् इत्यादौ अव्याप्तेश्च। किञ्च द्रव्यसामान्याभाववान् जाति-
सामान्याभाववान् वा घटसत्तान्यतरत्वात् इत्यादौ अतिव्याप्तिः।
गगनाद्यात्मकस्य साध्याभावस्य हेत्वधिकरणावृत्तित्वात्। न च सा-
ध्याभावत्वावच्छेदेन स्वाधिकरणवृत्तित्वाभावो विवक्षितः। स्वाधि-
करणत्वावच्छेदेन साध्यवत्त्वलक्षणव्यापकसाध्यासामानाधिकरण्य-

ननुगमस्य प्रागेव स्वहस्तितत्वादिति । एतेन नीलेतररूपवान् नी-
लासमवेतत्वे सति गोत्वादिमादिकं विलीयेत, विशेष्यस्य व्य-
भिचारित्वात् विशिष्टस्य चानतिरिक्तत्वादिति परास्तम् । साध्या-

---

मपेक्ष्यापि गुरुत्वादिति चेन्न । उक्ताम्बरसेनैव साध्याभावकत्वादी-
त्यादिपदस्य उपन्यस्तत्वात् । तेन [ साध्यवत्त्वप्रकारकप्रमाविशे-
ष्यत्वसामान्याभावस्य ] साध्याधिकरणत्वसामान्याभावस्य साध्य-
समानाधिकरणसामान्याभावस्य वा लाभः । तथा च [ स्वाधिकर-
णावृत्तिसाध्यवत्त्वप्रकारकप्रमाविशेष्यत्वसामान्याभावकत्वं ] स्वा-
धिकरणावृत्तिसाध्याधिकरणतासामान्याभावकत्वं स्वाधिकरणावृ-
त्तिसाध्यसमानाधिकरणसामान्याभावकत्वं वा पर्य्यवसितम् । तत्र
स्वाधिकरणवृत्तित्वं साध्यासामानाधिकरण्यं तदवच्छिन्नाभावश्च
विशेषणताविशेषेणैव वाच्यम् । अतो न कश्चिद्दोषः । साध्याभा-
ववदवृत्त्यधिकरणतानिरूपकतावच्छेदकधर्मवत्त्वे तात्पर्य्यम् इत्य-
पि कश्चिदिति कृतं पल्लवितेन । [ यत्तु सत्ताभाववान् जातित्वादि-
त्यादौ साध्याभाववदवृत्तित्वज्ञानमेव हेतुः साधनभेदेन व्याप्त्य-
ननुगमात् अत एव दीधितिकृता स्वीकुरु वा तत्रेत्युक्तम्, यत्र सा-
ध्याभाववदवृत्तित्वं तत्रेत्यर्थात्, तथा च यत्र यत्प्रसिद्धं तत्र तद-
भाव एव हेतुरिति । तन्न । एवमपि यत्राभावत्वविशिष्टघटाभावस्य
कालिकसम्बन्धेनाभावे साध्ये आत्मत्वं हेतुस्तत्राभावत्वविशिष्टघ-
टाभावस्य साध्यवत्ताग्रहविरोधितानियामकेन कालिकसम्बन्धेना-
धिकरणे ध्वंसे हेतुतावच्छेदकसमवायेन वृत्तित्वस्य हेत्वधिकरणे
कालिकसम्बन्धेन वृत्तित्वस्य चाऽप्रसिद्ध्या उभयथाप्यव्याप्तेः । ] न-
नु एवं स्वत्वप्रवेशे हेतुभेदात् अनन्तकार्य्यकारणभावापत्तिः अत
आह स्वस्वेति । प्रागेव स्वव्यापकसाध्यसामानाधिकरण्यघटितधियो हे-
तुत्वस्वीकारदशायामेव । स्वहस्तितत्वादित्यस्य भवद्भिरित्यादिः ।
अस्माभिस्तु हेतुमनन्तर्भाव्य साध्याभाववदवृत्तित्वज्ञानस्यैव हेतुत्वं
स्वीक्रियते इति भावः । एतेन स्वाधिकरणावृत्तीत्यादिक्रमेणैव व्या-
प्तेर्निर्वचनेन । परास्तमित्यग्रेऽन्वयः । नीलरूपवान् नीलसमेवतत्वं

भावस्य विशिष्टहेत्वधिकरणावृत्तित्वात् परम्परासम्बन्धेन विशेषणविशेष्यसम्बन्धस्यैव वा तत्र हेतुत्वादिति॥

---

सति गोत्वात् इत्यस्यैव सम्यक्त्वे साध्यसाधनकोटौ अभावप्रवेशो विफल इति चिन्तनीयम् । विशिष्टस्य गोत्वस्य । व्यभिचारित्वात् नीलगवादौ । विशिष्टहेत्विति परमते । स्वमते तु विशिष्टगोत्वादेः केवलान्वयिनः पथि प्रत्याप्यत्वमेव इत्याशयेनाह परम्परेति । विशेष्यविशेषणयोः प्रत्येकाधिकरणताद्वयमेव विशिष्टवत्त्वप्रतीतेर्विषयः अत एव प्रत्येकाधिकरणत्वस्य अभावनिश्चयेऽपि न विशिष्टवत्त्वबुद्धिरिति प्राचां मते विशिष्टनिरूपिताधिकरणत्वाप्रसिद्धौ आह परम्परेत्यादीत्यपि वदन्ति । परम्परा च अत्र स्वाश्रयाधिकरणत्वम् अवच्छेदकत्वाख्यस्वरूपसम्बन्धो वा बोध्यः । तत्रेति । यत्र विशिष्टस्य व्याप्यत्वव्यवहारः तत्र विशेषणविशेष्यसम्बन्धस्यैव व्याप्यत्वग्रहादनुमितिरिति भावः ॥

इति श्रीजगदीशतर्कालङ्कारकृता केवलान्वय्यनुमानदीधितिटीका समाप्ता ।

---

## चिन्तामणेः व्यतिरेक्यनुमानम् ।

केवलव्यतिरेकी त्वसत्सपक्षो यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः । ननु व्यतिरेकी नानुमानं व्याप्तिपक्षधर्मताज्ञानस्य तत्कारणत्वात् अत्र व्यतिरेकसहचारात् तत्र व्याप्तिरन्वयस्य पक्षधर्मता । न च व्याप्तपक्षधर्मत्वं साध्याभावव्यापकाभावप्रतियोगिसत्त्वमुभयमप्यनुमितिप्रयोजकमिति वाच्यम् । अननुगमात् । न चान्यतरत्वं तथा, एकप्रमाणपरिशेषापत्तेः । न च तृ-

## दीधित्याः व्यतिरेक्यनुमानम् ।

व्याप्तिग्रह इति साधारणोक्तिः । तत्र केवलान्वयिन्यभावा-

## जागदीश्याः व्यतिरेक्यनुमानम् ।

ननु यत्र व्यतिरेकसहचारेण व्याप्तिग्रह इत्यत्र व्याप्तिपदस्य व्यतिरेकव्याप्तिमात्रपरत्वे व्यतिरेकसहचारेणेत्यस्य वैयर्थ्यम्, अन्वयव्याप्तिमात्रपरत्वे च नन्वित्याद्यग्रिमशङ्कानुत्थापनापत्तिः अत आह साधारणेति । तथा च व्याप्तिग्रहपदमनुमितिकारणज्ञानपरमतो ग्रन्थद्वयोपपत्तिरिति भावः।सावधारणोक्तिरिति पाठे अन्वयव्यतिरे-

णारणिमणिन्यायेनानुमितिविशेषे तद्धेतुत्वमिति वाच्यम् । व्यतिरेकिसाध्येऽनुमितित्वासिद्धेः उभयासिद्धक्लृप्ततत्कारणस्याभावात् । न च साध्याभावव्यापकाभावप्रतियोगित्वमेवानुमितिप्रयोजकमिति वाच्यम् । गौरवात् केवलान्वयिन्यभावाच्च । अथ साध्याभावव्यापकाभावप्रतियोगित्वेन साध्यव्याप्यत्वमनुमेयम्, एवं व्यतिरेकव्याप्त्यान्वयव्याप्तिमनुमाय यत्रानुमितिः स एव व्यतिरेकीत्युच्यते । तन्न । अन्वयव्याप्तेर्गमकत्वे व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरतापत्तेः । अन्वयव्याप्त्यनुकूलतया च तदुपन्यासे अन्वयव्याप्तिमनुपन्यस्य तदुपन्यासस्याप्राप्तकालत्वमिति । उच्यते । निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते, प्रतियोग्यनुयोगि-

---

च्च साध्यव्याप्यत्वं तद्वदन्यावृत्तित्वादिरूपमन्ततः साध्य एव प्रसिद्धम् । निरुपाधीति । उपाधिज्ञानाहितव्यभिचारनिरासाय

---

किवारणाय व्यतिरेकसहचारेणैवेत्यवधारणमन्तर्भाव्योक्तिरित्यन्वयः । व्याप्तिग्रहपदमनुमितिजनकज्ञानपरमेव तत्रापीति भावः । मीमांसकैः केवलान्वय्यनुमानास्वीकाराद्व्याप्त्यभिधानं तन्मते विरुद्धमतस्तवपदं पूरयित्वा समाधत्ते तव केवलान्वयिन्यभावाच्चेति । तथा च न्यायमतानुसारेणैव तन्मतमास्कन्दितमिति भावः । स्वव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तेः साध्यत्वे तदप्रसिद्ध्या साध्यप्रसिद्धिः प्रसिद्धौ वाऽनुमानवैफल्यमतो व्याचष्टे सा-

भात्रस्य नियामकत्वात् अन्वयव्यतिरेकिवत् । नन्वेवं व्याप्तिग्रह एव पृथिवी इतरभिन्नेति भाषितम्, नियतसामानाधिकरण्यरूपत्वाद्व्याप्तेरिति । सत्यम्, गन्धवत्त्वावच्छेदेनेतरभेदस्य साध्यत्वात् । अत एवाचार्य्यैः पक्षतावच्छेदकस्य न हेतुत्वमनुमेने । पृथिवीत्वमितरभेदव्याप्यमितिप्रतीतावपि सर्वा पृथिवी इतरभिन्नेति पृथिवीवि-

———

पृथिवीत्वमिति । पृथिवीत्वमितरभेदव्याप्यमित्यत्र हि पृथिवीत्वत्वविशिष्टे पृथिवीत्वे इतरभेदसामानाधिकरण्यं भासते पृथिवी इतरभिन्नेत्यत्र शुद्धपृथिवीत्वविशिष्टे तदवच्छेदेनेतरभेद इति न सिद्धसाधनमित्यर्थः । सर्वेति च पृथिवीत्वस्यावच्छेदकत्वस्फोरणाय । अत्र च पृथिवीत्वत्वं पृथिवीतरासमवेतत्वमात्रं न तु पृथिवीवृत्तित्वघटितमित्यतोऽपि नोपनयवैयर्थ्यम् । अथान्वयव्याप्तिघटकताव-

———

च्छेदकपृथिवीत्वत्वव्याप्यत्वमिति । अन्तत इति साध्यव्याप्यान्तरस्याऽप्रतिसन्धानदशामधिकृत्य । निरुपाधित्वज्ञानस्य व्याप्तिग्रहं प्रत्यहेतुत्वादाह निरुपाधीत्यादि । पृथिवीविशेष्यकेत्यभिधानात्समानाकारसिद्धेरनुमितिविरोधित्वं मूलाभिप्रेतमित्याशयेन प्रकृतसिद्धेरनुमितिसमानाकारत्वमेव नास्तीति व्युत्पादयति पृथिवीत्वमित्यादिना । तदवच्छेदेन पृथिवीत्वावच्छेदेन । इतरभेदो भासत इति पूर्वेणाऽन्वयः । पृथिवीत्वेन पक्षतायामप्युक्तदिशा सिद्धसाधनासम्भवात्सर्वेति पक्षविशेषणं प्रथमत आह सर्वेति चेति । तथा चानुमितौ न सर्वत्वं प्रकार इति भावः । ननु पृथिवीत्वत्वं पृथिवीतरावृत्तित्वे सति सकलपृथिवीवृत्तित्वं तथा च तावतैव पृथिवीत्वहेतोः पक्षधर्मतालाभादुपनयस्य कथास्थले वैयर्थ्यभिया तादृशपृथिवीत्वं हेतुरेव ने-

त्पदार्थोपस्थित्यादिकं विना न तद्ग्रहसम्भवः, तत्सत्त्वे च तत एव व्याप्तिग्रहसम्भवे व्यतिरेकसहचारज्ञानस्य हेतुत्वे मानाभावः। न च व्यभिचारशङ्कानिवर्त्तकत्वेनैवान्वयव्यतिरेकसहचारग्रहयोरुपयोगित्वम्, तद्ग्रहेऽपि शङ्कातादवस्थ्यात्, अधिकरणविशेषे च तन्निवृत्तौ साध्यवत्त्वसाधनाभाववत्त्वयोरन्यतरग्रहस्यैव तन्त्रत्वात्, व्यतिरेकव्याप्त्युपन्यासेऽर्थान्तरादितादवस्थ्याच्च। यत्तु सहचार-

---

स्येतमाह अत्र चेति। न त्विति। व्यतिरेकव्याप्तेर्गमकत्वमभ्युपेत्य कदाचिद्वैयर्थ्यवारणेऽप्यनतिप्रयोजनकत्वादिति भावः। सकलपृथिवीवृत्तित्वस्य हेतौ प्रवेशेऽपि न क्षतिः यद्रूपावच्छिन्ने व्याप्तिर्गृहीता तद्रूपावच्छिन्नस्य पक्षधर्मताया उपनयादेव लाभात्साकल्यस्य व्यापकतानतिरेकेण पृथिवीत्वव्यापकत्वपर्यवसन्नसकलपृथिवीवृत्तित्वे पक्षधर्मत्वस्याप्रवेशाच्चेत्यावेदयितुमपिकार उक्तः। पदार्थोपस्थित्यादीत्यादिना बाधविरहाद्युपग्रहः। तत्सत्त्वे तावत्पदार्थोपस्थित्यादिसत्त्वे। तद्ग्रहेऽपीति। जलादौ धूमाभाववन्ह्यभावयोः सहचारग्रहेऽपि तप्तायःपिण्डे व्यभिचारसंशयादिति भावः। ननु यदधिकरणव्यक्तौ सहचारधीस्तदन्तर्भावेण व्यभिचारग्रहं प्रति तस्य विरोधित्वं वाच्यमत आह अधिकरणविशेषे चेति। साधनसाध्याभावान्यतरवत्तया निर्णीताधिकरणे चेत्यर्थः। तन्निवृत्तौ व्यभिचारशङ्कानिवृत्तौ। साध्यवत्त्वेति। साधनवत्त्वेन निश्चितेऽधिकरणे साध्यवत्त्वग्रहस्य साध्याभाववत्तया निश्चितेऽधिकरणे च साधनाभाववत्त्वग्रहस्यैव व्यभिचारशङ्कानिवर्तकत्वादित्यर्थः। ननु व्यतिरेकसहचारज्ञानत्वेन व्यभिचारधीविरोधिज्ञानत्वेन च व्यतिरेकसहचारग्रहस्यान्वयव्याप्तिबुद्धावहेतुत्वेऽपि विशेषणज्ञानविधया हेतुत्वमस्त्येव तथा चान्वयसहचारग्रहाजन्यव्यतिरेकसहचारग्रहजन्यानुमितित्वरूपं केवलव्यतिरेकित्वं सुवचमेव, न चान्वयसहचारग्रहाजन्यत्वमन्वयव्याप्तिग्रहस्य न सम्भवतीति वाच्यम्। यत्रान्वयव्याप्तिघटकवस्तूनां प्रत्येकोपस्थितौ विशिष्टे विशेषणमिति न्यायेनान्वयव्याप्तिधीस्तत्रैवान्वयसहचारत्व-

शेष्यकबुद्धेर्व्यतिरेकिसाध्यत्वाच्च। यद्वा व्यतिरेकव्याप्ति-

---

मात्रलाभायैव सर्वत्रोदाहरणोपन्यास इति। तन्न। अर्थान्तराद्या-
पत्तेर्दुर्वारत्वात् यच्छब्दादिवैयर्थ्याच्च। व्युत्पादयिष्यते च तस्य
व्याप्तिबोधकत्वम्। न चान्वयिन इव व्यतिरेकिणोऽप्युदाहरणात्
स्वरससिद्धान्वयव्याप्तिधीरानुभविकी, येन तदर्थमपि प्रकारान्त-
रमास्थेयमत आह यद्वेति। साध्याभावेति। नन्विच्छादौ साध्ये
आत्मत्वादेर्व्यतिरेकित्वं न स्यात्, स्याच्च संयोगादेरात्मत्वे तथा-

---

प्रकारकग्रहाजन्यत्वसम्भवात् तादृशव्याप्तिग्रहस्याप्यनुमितिहेतुता-
याः प्राचीनसम्मतत्वादित्यस्वरसादाह व्यतिरेकेति। अर्थान्तरेति।
अन्वयव्याप्तिज्ञानस्यैवानुमितिहेतुत्वं व्यतिरेकव्याप्तिग्रहस्य तत्रा-
ऽनुपयुक्तत्वादिति भावः। मिश्रमतमुपन्यस्यति यत्त्विति। सहचा-
रमात्रपदेन व्याप्तिव्युदासः। सर्वत्र अन्वयिनि व्यतिरेकिणि च।
अर्थान्तरादीति। सहचारग्रहस्य कारणीभूतान्वयव्याप्तिग्राहकतया
कथञ्चिदनुमितावुपयुक्तत्वेपि तदानीमनाकाङ्क्षितत्वात्प्रथमतस्तदुप-
न्यासेऽप्राप्तकालत्वमावश्यकमित्याशयेन आदिपदमुपात्तम्।अर्थान्त-
रादिरूपं निग्रहस्थानमुक्त्वा अधिकरूपं तदाह यच्छब्दादीति।यत्तदा-
दिशब्दं विनैव सहचारलाभसम्भवादिति भावः। अथाधिकस्यापि
यदादिशब्दस्य कथकसम्प्रदायानुरोधेन प्रयोगान्न वैयर्थ्यम्, अन्यथा
लाघवात्साध्यव्याप्यो हेतुरित्येवोदाहरणशरीरं तन्मतेपि स्यादत आ-
ह व्युत्पादयिष्यत इति। तस्य उदाहरणस्य। वीप्सितपदानां
व्याप्तावनुशिष्टत्वात्तद्बोधने बाधकाभाव इति भावः। अथान्वयि-
न इव व्यतिरेकिणोप्युदाहरणस्य लक्षणयान्वयव्याप्तिबोधकत्वात्त-
दुपन्यासे अर्थान्तरत्वादेर्नावकाश इत्यत आह न चेति। स्वरससिद्धे-
ति।तथात्वे निरूढलक्षणयाप्युपपत्तिः स्यात् तस्याः शक्तितुल्यत्वात्,
आधुनिकलक्षणया प्रयोगस्य तु जल्पे असम्भवात्, अन्यथा विवादस्य
पर्यवसानापत्तेरिति भावः। तदर्थमपि अन्वयव्याप्तिबोधार्थमपि। प्र-

कारान्तरं लक्षणादिकल्पनमान स्यादिति।इच्छाद्यभावस्य तद्व्यापक-त्वादिति भावः।आत्मत्वे साध्य इतीति पूर्वेणान्वयः।संयोगादेरिति। यद्यपि समवायेन संयोगस्य हेतुत्वे अतिव्याप्तिशङ्कापि नास्ति स-मवायावच्छिन्नसंयोगाभावस्य साध्याभाववद्घटादिनिष्ठसंयोगस्व-रूपाभावप्रतियोगित्वेन साध्याभावव्यापकत्वाभावात्। तथापि व्यधिकरणसम्बन्धेन हेतुतायामिदमतिप्रसङ्गाभिधानं द्रष्टव्यम्। स्वरूपादिसम्बन्धावच्छिन्नसंयोगसामान्याभावस्य आत्मत्वाद्यभाव-व्यापकत्वनियमात्संयोगादेरित्यादिपदेन अवृत्तिगगनादेः संग्रहः। न च यत्सम्बन्धेन साध्याभावव्यापकीभूताभावस्य प्रतियोगित्वं तत्सम्बन्धेन वृत्तिमत्त्वमात्रविवक्षयैव व्यधिकरणस-म्बन्धेन संयोगादिहेताववृत्तिगगनादिहेतौ च अतिव्याप्तिवारणस-म्भवादग्रे साधनवैयधिकरण्यप्रवेशो व्यर्थ इति वाच्यम्। तथासति गुणत्वादौ साध्ये विषयित्वादिसम्बन्धेन घटत्वादिहेतावव्याप्तिप्रस-ङ्गात्। विषयित्वादिसम्बन्धस्य वृत्त्यनियामकत्वात् तत्सम्बन्धावच्छि-न्नप्रतियोगित्वाप्रसिद्धेः। साधनाभावे हेत्वसामानाधिकरण्योक्तौ तु सम्बन्धान्तरेण हेत्वभावमादायैव लक्षणसम्भवः।वस्तुतः साध्याभा-वव्यापकत्वमवश्यं प्रतियोगिवैयधिकरण्यघटितं वाच्यम्। अन्यथा धूमाभावाभावस्यापि साध्याभाववति कालिकसम्बन्धेन वर्तमान-त्वात् वन्हिमान् धूमादित्यादावव्याप्तिप्रसङ्गात्। न च साध्याभा-वव्यापकतायां साध्याभाववन्निष्ठत्वमभावस्य दैशिकविशेषणतयो-पादेयमतो नैष दोषः। द्रव्यं सत्त्वादित्यादावतिव्याप्त्यापत्तेः। सत्त्वा-द्यभावानां साध्याभाववति दैशिकविशेषणतया वर्तमानस्याभावाभा-वस्य प्रतियोगित्वात्। तथा चात्मत्वादिसाध्यके समवायेनापि सं-योगादिहेतावतिव्याप्तिः सम्भवत्येव, संयोगादेः स्वरूपसम्बन्धेन प्र-तियोगिव्यधिकरणसाध्याभाववन्निष्ठत्वाभावात् तादृशाभावान्तर-स्य च प्रतियोगितायाः संयोगाभावे विरहादिति नव्याः। यत्तु द्रव्य-भिन्नं संयोगवदन्यत्वादित्यत्र संयोगस्वरूपस्य संयोगवदन्यत्वाभा-वस्य द्रव्यभिन्नत्वाभावव्यापकत्वसिद्ध्यर्थं साध्याभावव्यापकत्वम-वश्यं प्रतियोगिवैयधिकरण्यघटितमतः समवायावच्छिन्नसंयोगा-भावस्यापि तद्घटितात्मत्वाभावव्यापकत्वमस्त्येवेति संयोगादिहे-तावतिव्याप्त्युपन्यासः सहजत एव सम्यागिति।तत्तुच्छम्। उत्पत्ति-

त्वमिति चेन्न । साध्यतावच्छेदकावच्छिन्नसाधनासमानाधिकरण-
त्वेन साध्याभावस्य साधनतावच्छेदकावच्छिन्नसाधनासमानाधिक-
रणत्वेन च साधनाभावस्य विशेषितत्वात्।संयोगाभावे साध्ये वि-
भागाभावः केवलान्वयी । प्रतियोगिवैयधिकरण्यावच्छिन्ने च तत्र
स तादृशो व्यतिरेक्यपि । व्याप्यव्यापकभावश्च साध्याभावत्व-

———

कालावच्छेदेनापि घटादौ संयोगवदन्यत्वाभावोपगमात् तस्य संयो-
गात्मकत्वाभावात् । अन्यथा संयोगवदन्यत्वस्यैव तदानीं घटादौ स-
त्त्वेन व्यभिचारित्वापातादिति दिक् । साध्यतावच्छेदकेत्यादि । प्र-
तियोग्यसामानाधिकरण्यस्य प्रतियोग्यंशे यत्किञ्चित्त्वयावत्त्वविक-
ल्पग्रस्तत्वात्तदपहाय साध्यहेत्वोरेवाऽसामानाधिकरण्यं निवेशितम्।
तत्र च सत्त्वासमानाधिकरणसाध्याभावव्यापकीभूताभावप्रतियो-
गितया विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेः, द्रव्यं विशि-
ष्टसत्त्वादित्यादौ च सत्त्वासामानाधिकरण्यविशिष्टहेत्वभावस्य सा-
ध्याभावव्यापकत्वविरहादव्याप्तेश्च साध्यत्वसाधनत्वयोरवच्छेद-
कावनुप्रवेशितौ । इदं त्ववधातव्यम् । अव्याप्यवृत्तिसाध्य-
कादिस्थले साध्यासामानाधिकरण्यव्यापकीभूतसाधनासमानाधिक-
रणत्वकत्वं न तु साध्याभावसाधनाभावयोः प्रवेशः, वैयर्थ्यात् ।
साध्यासमानाधिकरणत्वस्य व्यापकत्वस्य च स्वरूपसम्बन्धेन लाभा-
र्थमेव तदुपादानात् । न चैवं साध्याभावत्वादिकं चेत्युत्तरग्र-
न्थविरोधः, व्याप्यवृत्तिसाध्यकस्थले केवलसाध्याभावमात्रस्यैव
निवेशनीयतया तदभिप्रायेणैव तद्ग्रन्थावतारात् । साध्या-
धिकरणत्वाभावव्यापकस्वाधिकरणत्वाभावकत्वे तात्पर्यान्नोक्त-
ग्रन्थविरोधः इत्यपि कश्चित् । ननु संयोगाभाववान् विभा-
गाभावादित्यादावव्याप्तिः साध्यासमानाधिकरणसाध्याभावाद्य-
प्रसिद्धेरतस्तस्याः अलक्ष्यत्वमाह संयोगाभाव इति । तत्र संयोगा-
भावे साध्ये इत्यनुषज्यते । सः विभागाभावः । तादृशः प्रतियोगि-
वैयधिकरण्यविशिष्टः । व्यतिरेक्यपीति । संयोगाभावासामानाधि-
करण्याप्रसिद्धावपि संयोगादिवैयधिकरण्यावच्छिन्नसंयोगाद्यभा-

रेवान्वयेन गम्यगमकभावः, साध्याभावव्यापकसाधनाभावाभावेन साधनेन साध्याभावाभावस्य साध्यस्य साधनात् व्यापकाभावेन व्याप्याभावस्यावश्यम्भावात् ।

---

साधनाभावत्वाभ्यां बोध्यः,तेन न व्यभिचारिण्यतिप्रसङ्गः। साध्याभावत्वादिकञ्च वैज्ञानिकं न तु वास्तवम् । तेन मेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिभ्रमादनुमानम् । व्यापकीयत्वेनाभावस्य ज्ञानाद्व्याप्यीयत्वेनाभावस्य सिद्धिं पुनरप्रसिद्धसाध्यकसाधारणीमाह व्यापकाभावेनेत्यादिना । अभावौ अभाववत्त्वनिश्चयौ । अवश्य-

---

वस्यासामानाधिकरण्यं घटत्वादावेव सुलभमिति भावः । न च संयोगवैयधिकरण्यावच्छिन्नसंयोगाभावे साध्ये विभागवैयधिकरण्यावच्छिन्नतदभावस्य द्विक्षणावस्थायिन्यविभक्तद्रव्य एव व्यभिचारित्वमिति वाच्यम् । तादृशद्रव्यसत्त्वे प्रमाणाभावात् । भावे वा संयोगविभागपदयोस्तद्विशेषपरत्वादेव व्यभिचारविरहात् । केचित्तु तत्र विभागाभावे संयोगाभाव इत्येवं व्याख्ययोक्तदोषं परिजह्रुः। ननु जातिवृत्तित्वविशिष्टद्रव्यत्वाभावं प्रति सत्त्वाभावत्वेन द्रव्यत्वाभावत्वविशिष्टं प्रति च मेयत्वादिना सत्त्वाभावस्य व्यापकत्वात् द्रव्यं सत्त्वादित्यादावतिव्याप्तिरत आह व्याप्येति। तेनेति । साध्याभावव्यापकाभावेत्याद्याकारकविशिष्टविषयताकज्ञानस्यैव हेतुत्वादिति भावः। ननु व्यापकाभावेन व्याप्याभावस्यावश्यंभावो व्यापकाभावस्य व्याप्याभावनियतत्वं तस्य च प्रदर्शनं व्यतिरेकव्याप्तिज्ञानाधीनानुमितावनुपयुक्तमतः प्रकारान्तरेण ग्रन्थमवतारयति व्यापकीयत्वेनेति। अप्रसिद्धेति। पूर्वोक्तस्तु हेत्वभावे साध्याभावत्वावच्छिन्नस्य व्यापकत्वग्रहः साध्यघटितमूर्तिकतया नाप्रसिद्धसाध्यकस्थले सम्भवतीति भावः । ननु व्यापकाभावनिश्चयस्य व्याप्याभा-

काशाच्च । नैवम् । अत्र हि व्यतिरेकव्याप्तिरन्वयस्य पक्षधर्म्मत्वमिति व्याप्तिधीजन्यमपि बहिःसत्त्वज्ञानं नानुमितिः तस्या व्याप्तपक्षधर्म्मताज्ञानजन्यतानियमात् । न च साध्याभावव्यापकाभावप्रतियोगित्वेन पक्षधर्म्मस्य ज्ञानमनुमितिप्रयोजकं तच्चेहाप्यस्तीति वाच्यम् । केवलान्वयिनि तदसम्भवात् तदपेक्षया साध्यव्याप्यत्वज्ञानस्य लघुत्वाच्च । अथ व्यतिरेकसहचाराद्धेतोरेव व्याप्तिर्गृह्यते एवञ्चान्वयस्य व्यतिरेकस्य उभयस्य वा सहचाराद्व्याप्तिग्रहत्रैविध्येऽनुमानत्रैविध्यम्, अत एव धूमो दशाविशेषेऽन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति चेत् । अस्तु तावदेवं तथापि जीविदेवदत्ताभावो गृहे वर्त्तमानो न बहिःसत्त्वलिङ्गं देवदत्तावृत्तित्वात् बहिःसत्त्वगृह-

---

न स्यादित्यर्थः । अत्र हीति । व्यतिरेके हेत्वभावे । व्याप्तिः व्यापकताज्ञानम् । अन्वयस्य हेतोः । पक्षधर्मत्वं पक्षधर्मताज्ञानमित्यर्थः । व्याप्तिधीजन्यमिति । व्यतिरेकव्याप्तिधीजन्यमित्यर्थः । व्याप्तेति । अन्वयव्याप्तिप्रकारकपक्षधर्मताज्ञानेत्यर्थः । केवलान्वयिनीति । तव मत इति शेषः । साध्यव्याप्यत्वेति साध्यस्यान्वयव्याप्तिज्ञानस्येत्यर्थः । यद्यप्येवमपि यत्र नान्वयव्याप्तिग्रहः व्यतिरेकमात्रप्रतिसन्धानं तत्रापत्त्यवकाशः, न च तत्रार्थनिश्चय एव जनयिष्यत इति वाच्यम्, अनुभवविरोधात्, तथापि तुष्यतु दुर्जन इति न्यायेनाह अस्त्विति । गृहे वर्त्तमान इति । गृहवृत्तित्वविशिष्ट इत्यर्थः । देवदत्तावृत्तित्वादिति।पक्षीभूतस्य देवदत्तस्य तदनधिकरणत्वादित्यर्थः । बहिःसत्त्वगृहनिष्ठाभावयोः बहिःसत्त्वगृहवृत्तित्वविशिष्टाभावयोः । व्यधिक-

निष्ठाभावयोर्व्यधिकरणत्वेन नियतसामानाधिकरण्यरूप-व्याप्त्यभावाच्च, उपरि सविता भूमेरालोकवत्त्वादित्यत्र भूमेरुपरिसन्निहितसवितृकत्वेनानुमानात् । नापि गृहनिष्ठाभावप्रतियोगित्वम्, तत्प्रतियोगित्वस्य देवदत्तधर्मतया तदसन्निकर्षे प्रत्यक्षेण ज्ञातुमशक्यत्वात् । अत एव विशेष्यासन्निकर्षात्तृतीयलिङ्गपरामर्शोऽपि न प्रत्यक्षेण ।

---

रणत्वेनेति । गृहाधिकरणदेशभेदस्यापि बहिःपदार्थघटकत्वादिति भावः । नियतेति । अत एव गृहवृत्तिदेवदत्ताभावोऽपि न लिङ्गं गृहमात्रवृत्तिपदार्थे तस्य सत्त्वेनाव्याप्यत्वादिति भावः । ननूपरि सविता भूमेरालोकवत्त्वादित्यत्र भूमिनिष्ठालोकसंयोगस्य कथमुपरिदेशो संयोगसम्बन्धेन सवित्रनुमापकत्वं पक्षावृत्तित्वादव्याप्यत्वाच्चेत्यत आह उपरीति।उपरिसन्निहितेति।सवितृसंयुक्तोपरिदेशकत्वेनेत्यर्थः । तथा च तत्र भूमिः पक्षः सवितृसंयुक्तोपरिदेशकत्वं साध्यम् उपर्य्यवच्छेदेनालोकसंयोगो हेतुरिति भावः । ननु जीवित्वे सति गृहानिष्ठाभावप्रतियोगित्वमेव लिङ्गं भवतापि तन्निष्ठव्यतिरेकव्याप्तिज्ञानस्यैवार्थापत्तिजनकत्वस्वीकारादित्याशङ्कते नापीति । लिङ्गमित्यनुषञ्जनीयम् । ज्ञातुमशक्यत्वादिति । तथा च लिङ्गज्ञानाभावात् न व्याप्तिग्रह इति भावः । ननु सन्निकृष्टस्थले जीवित्वे सति गृहनिष्ठाभावप्रतियोगित्वस्य बहिःसत्त्वव्याप्यत्वं गृहीतं तदेवेदानीं स्मर्य्यतेऽन्यथा भवन्मतेऽपि व्यतिरेकव्याप्तिज्ञानाभावात् कथमर्थापत्तिः, अपि च गृहनिष्ठाभावप्रतियोगित्वं न हेतुः किन्तु प्रतियोगितासम्बन्धेन गृहनिष्ठाभाव एव हेतुर्वाच्यः स च देवदत्तस्यासन्निकृष्टत्वेऽपि गृहस्य सन्निकृष्टतया ग्रहीतुं शक्य इत्यतो व्याप्तिग्रहाभावेऽपि देवदत्तस्यासन्निकृष्टतया न पक्षविशेष्यकपरामर्शसम्भव इत्याह अत एवेति । अस्मन्मते च व्यतिरेकव्याप्तिस्मरणं गृहे जीविनो देवदत्तस्याभावनिश्चयश्च अर्थापत्तिहेतुक इति भावः । शब्दानु-

न च व्यतिरेकव्याप्तिगृहनिष्ठाभावयोर्ज्ञानं सहकार्य्यासाद्य मनसैव जन्यत इति वाच्यम् । सहकारिण एव मानान्तरत्वप्रसङ्गात् । अथ व्याप्तिज्ञानानन्तरं स्मर्य्यमाणधूमात् कथमनुमितिः उक्तन्यायेन तत्रापि लिङ्गपरामर्शाभावादिति चेत, न कथञ्चित् । कथं तर्हि वह्निज्ञानम्, पक्षधर्मधूमस्मृतिसहितात् धूमो वह्निं विना नास्तीत्यनुपपत्तिज्ञानादिति गृहाण। अत एव दृश्यमानो धूमो वह्निं विनानुपपन्न इति यदा ज्ञायते तदार्थापत्तिरेव, यदा त्वनुपपत्तिज्ञानं विना व्याप्यत्वेन प्रतिसन्धीयते तदानुमानं त्वयापि तत्र त्रिविधानुमानस्वीकारात, तस्मा-

---

मानादिकञ्च न सार्वत्रिकमिति हृदयम् । गृहनिष्ठाभावयोर्ज्ञानमिति । देवदत्तस्मरणञ्चेत्यपि बोध्यम् । अभावप्रत्ययानुरोधेन तस्यावश्यकत्वात् परामर्शः । व्याप्तिज्ञानानन्तरमिति । वन्हिव्याप्तिरिति स्मरणानन्तरमित्यर्थः । स्मर्य्यमाणेति । पक्षवृत्तिधूमस्मरणादित्यर्थः । असन्निकृष्टपक्षस्थल इति शेषः । उक्तन्यायेति । विशेष्यस्यासन्निकृष्टत्वेनेत्यर्थः । धूमो वन्हिं विनेति । वन्ह्यभावव्यापकीभूताभावप्रतियोगी धूम इति व्यतिरेकव्याप्तिज्ञानादित्यर्थः । दृश्यमानो धूम इति। वन्ह्यभावव्यापकीभूताभावप्रतियोगी धूम इति यदा ज्ञायत इत्यर्थः । अनुपपत्तिज्ञानं विना व्यतिरेकव्याप्तिज्ञानं विना । व्याप्यत्वेन अन्वयव्याप्यत्वेन। तदाऽनुमानमिति । यदा तु व्यतिरेकान्वयव्याप्त्युभयप्रतिसन्धानं तत्रैवमेव विज्ञानमुभयात्मकम् अनुमितित्वादेरस्मन्मते जातित्वाभावात् फलबलादेव सामग्र्या वा अन्यत्र प्रतिबन्धकत्वं कल्प्यत इति भावः । त्वयापीति । तत्र वन्हिमान् धूमादित्यत्र । त्रिविधेति । व्याप्तिज्ञानभेदेन त्रिविधानुमितिस्वीकारात् इत्यर्थः । परन्तु

द्व्यतिरेकव्याप्तिमुपजीव्य जीवद्देवदत्ताभावो बहिःसत्त्वं कल्पयति। उच्यते। देवदत्तासन्निकर्षेऽपि तस्य गृहनिष्ठाभावप्रतियोगित्वं प्रत्यक्षेण गृह्यते, तथा हि गृहे देवदत्तस्याभाव इति प्रत्यक्षं देवदत्तं षष्ठ्यर्थञ्चाभावसम्बन्धं प्रतियोगित्वलक्षणं गोचरयति सम्बन्धज्ञानस्य

———

भवता यद्व्यतिरेक्यनुमितितया अभिमतं तदेवास्माकमर्थापत्तिरिति शेष इति भावः। व्यतिरेकव्याप्तिमिति। व्यतिरेकव्याप्तिज्ञानं सहकार्यासाद्येत्यर्थः। देवदत्ताभावः देवदत्ताभावनिश्चयः। बहिःसत्त्वं कल्पयतीति। बहिःसत्त्वं निश्चाययतीत्यर्थः। न तु व्यतिरेकपरामर्शः, विशेष्यीभूतदेवदत्तासन्निकर्षेण परामर्शासम्भवादिति भावः। गृहे देवदत्तस्याभाव इति। देवदत्तप्रतियोगिकोऽभाव इति प्रत्यक्षमित्यर्थः। अन्यथा षष्ठ्यर्थप्रतियोगित्वस्य संसर्गविधया भानात् लिङ्गतावच्छेदकीभूतप्रतियोगित्वानुपस्थितौ कथमनुमानं न स्यात्। न चैवं यत्र नेह देवदत्त इति संसर्गविधयैव प्रतियोगित्वभानं तत्रानुमानासम्भवादर्थापत्तिरिष्यत इति वाच्यम्। अर्थापत्तावपि बहिःसत्त्वं विना गृहनिष्ठाभावप्रतियोगित्वस्यानुपलब्धिर्गमिकेति प्रतियोगित्वत्वावच्छिन्नप्रतियोगित्वोपस्थितिं विना तेनाप्यर्थापत्त्यनभ्युपगमादिति। ननु देवदत्तप्रतियोगिकोऽभाव इति प्रत्यक्षस्य देवदत्तविषयकत्वे मानाभावः देवदत्तं साक्षात्करोमीत्यनुव्यवसायाभावात् अभावं साक्षात्करोमीत्यनुव्यवसायात् किन्तु तदव्यवहितपूर्ववर्त्तिस्मरणस्यैव देवदत्तो विषय इत्यत आह सम्बन्धज्ञानस्येति। सम्बन्धिद्वयोपस्थितौ सत्यां सम्बन्धप्रत्यक्षस्येत्यर्थः। अन्यथा संयोगो नास्तीत्यादिशाब्दादिज्ञाने तदुपनयवशात् संयोगवानिति प्रत्यक्षे गुण इति प्रत्यक्षे च व्यभिचारापत्तेरिति ध्येयम्। न चैवं देवदत्तं न पश्यामि किन्तु तदभावं गेहे इत्यनुव्यवसायः कथं सङ्गच्छते इति वाच्यम्। तस्य लौकिकविषयत्वाभावविषयकत्वादिति भावः। ननु सम्बन्धप्रत्यक्ष एव सम्बन्धिद्वयं विषयः प्रतियोगित्वन्तु न प्रतियोग्यभावयोः सम्बन्ध

सम्बन्धिद्वयविषयत्वात्, प्रतियोगिना सममभावस्य सम्बन्धान्तराभावात् गृहनिष्ठाभावप्रतियोगित्वे च प्रत्यक्षोपस्थिते स्मृतव्याप्तिवैशिष्ट्यमपि प्रत्यक्षेण सुग्रहम् । न च देवदत्तविशेष्यकं बहिःसत्त्वव्याप्यगृहनिष्ठाभावप्रतियोगित्वज्ञानं नास्तीति वाच्यम् । पक्षवृत्तिलिङ्गपरामर्शमात्रस्यानुमितिजनकत्वात् अधिकस्य गौरवपराहतत्वात् । अथ वा अनतिप्रसक्तसहकारिवशान्मनसैव स्मृतदेवदत्तविशेष्यकस्तृतीयलिङ्गपरामर्शः । यथा च न सहकारि मानान्तरं तथोपपादितमधस्तात् । ननु मयूरः पर्वतेतरे न नृत्यति नृत्यति चेतिज्ञानानन्तरं पर्वते नृत्य-

---

इत्यत आह प्रतियोगिनेति सम्बन्धान्तराभावादिति । इदमिह नास्तीति प्रतीतेर्नियामकसम्बन्धान्तराभावादित्यर्थः । तथा च सम्बन्धान्तरेण इदमिह नास्तीति प्रतीत्यसम्भवात् प्रतियोगित्वस्य सम्बन्धत्वमावश्यकमिति भावः । यथाश्रुते एककालीनत्वादेरपि सम्बन्धान्तरत्वेन सम्बन्धान्तराभावादित्यसङ्गतेः । पक्षवृत्तीति । तथा च लिङ्गविशेष्यकपरामर्श एवात्र हेतुरिति भावः । अधिकस्य पक्षविशेष्यकत्वस्य । ननु गृहनिष्ठात्यन्ताभावप्रतियोगित्वस्यापि देवदत्तधर्म्मतया असन्निकृष्टत्वात् तद्विशेष्यकोऽपि चाक्षुषः परामर्शोऽसम्भवीत्यस्वरसादाह अथ वेति । पूर्व्वोक्तदोषविरहायाह यथा चेति । पर्वतेतर इति । पर्व्वत इतरो यस्मादिति बहुव्रीहिः तेन न सर्व्वनामकार्यम् । मयूरनृत्यस्य नित्यत्वं साधिकरणत्वं विना अनुपपन्नमिति ज्ञानं प्रासक्ताधिकरणबाधसहकारेण मयूरः पर्व्वते नृत्यतीति ज्ञानं जनयतीति समाधत्ते अधिकरणं विनेति । अनुपपद्यमानम् । अनुपपन्नत्वेन ज्ञायमानम् । नृत्य नृत्यनित्यत्वमित्यर्थः । नृत्याभावबाधानन्तरमिति । पर्व्वे-

तीति ज्ञानमस्ति, न च व्यतिरेकिणस्तत् सम्भवति, पर्व्वत-नृत्यस्य साध्यस्याप्रतीतौ व्यतिरेकव्याप्त्यनिरूपणात्। न च पर्व्वतनृत्याप्रसिद्धौ तेन विनानुपपत्तिप्रतिसन्धानमपि नेति कथमर्थापत्तिरपीति वाच्यम्। अधिकरणं विनानुपपद्यमानं नृत्यं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरमधिकरणं कल्पयतीति चेत्। न। मयूरनृत्यं साधिकरणं नृत्यत्वादिति सामान्यतोदृष्टं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरं पर्व्वतमधिकरणमादाय नृत्यज्ञानं जनयति। यद्वा पर्व्वतेतरे न नृत्यतीतिशब्देन नृत्याभावबोधानन्तरं मयूरो नृत्यतीतिशब्दाज्जायमानं ज्ञानं पर्व्वतनृत्यं गोचरयति प्रसिद्धविशेषबाधसहकृतसामान्यज्ञानजनकप्रमाणस्य प्रसिद्धेतरं पर्व्वतमधिकरणविशेषमादाय ज्ञानजनकत्वनियमात्। अत एवानित्यज्ञानबाधानन्तरं क्षित्यादौ ज्ञानजन्यत्वं सिद्धनित्यत्वमादाय सिद्ध्यतीत्याचार्य्याः। यद्वा

---

तेतरनृत्याभावबोधानन्तरमित्यर्थः। ननु सामान्यतोदृष्टेन साधिकरणकत्वानुमितावपि पर्व्वते नृत्यतीत्येवमाकारकबुद्धिर्न सिद्धैव अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमात् एवं मयूरो नृत्यतीति शब्दात् पर्व्वतेतराधिकरणकनृत्यबाधसहकारेण नृत्यविशेषसिद्धावपि नृत्यस्य पर्व्वतवृत्तित्वं न सिद्धं तदुपस्थापकपदाभावादिति। मैवम्। गुरुमते इतरबाधसहकारेण पदानुपस्थितमपि शाब्दबोधे प्रकारीभूय भासते इति तन्मतेनैव तन्मतनिराकरणात्। स्वमते त्वाह यद्वेति। अन्वयव्यतिरेकी पर्व्वतनृत्यं गोचरयतीत्यनुषज्यते। न चैवं मयूरः

मयूरनृत्यं पर्वताधिकरणकं पर्वतेतरानधिकरणत्वे सति साधिकरणत्वात् पर्वतत्ववदित्यन्वयव्यतिरेकी । अथ वा यः सम्भाविततत्तदितरावृत्तिः सन् तदतिरिक्तवृत्तिर्न भवति स तद्वृत्तिर्भवतीति सामान्येन यत्तदर्थान्तर्भावेन व्याप्त्या नृत्यस्य पर्वतवृत्तित्वं सिद्ध्यति। एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्रापि अप्रसिद्धरात्रिभोजनसाध्यपीनत्वज्ञानं रात्रिभोजनमादाय सिद्ध्यति । अथ यथा अभोजी पीन इत्यत्रायोग्यताज्ञानं तथा पीनो दिवा न भुङ्क्त इत्यत्रापि दिवाभोजनस्य बाधाद्योग्यताघट-

---

पर्वते नृत्यतीति मयूरविशेष्यकप्रतीतिर्न स्यात् इति वाच्यम् । उक्तानुमान एव मनसा तदुपपत्तेरिति भावः। सम्भावितेति । सम्भावना योग्यता । तस्मिन् तदितरस्मिंश्च वर्त्तमानयोग्यः । योग्यतावच्छेदकश्च वृत्तिमत्त्वमेव । तथा च वृत्तिमत्त्वे सतीति फलितार्थः । ननु पीनो देवदत्तो दिवा न भुङ्क्ते इति ज्ञानानन्तरं पीनत्वं भोजनवत्त्वं विना अनुपपन्नमिति ज्ञानात् दिवाभोजनबाधसहकृतात् देवदत्तो रात्रौ भुङ्क्ते इति ज्ञानं जायते तत्रानुमानाद्यसम्भवादर्थापत्तिरिष्यत इत्यत आह एवमिति । देवदत्त इति । अप्रसिद्धरात्रिभोजनदेवदत्त इत्यर्थः । भोजनसाध्यपीनत्वज्ञानमिति । दिवाभोजनबाधसहकृतमिति शेषः। रात्रिभोजनमिति । रात्रिभोजनानुमितिं जनयतीत्यर्थः। यथाश्रुतशब्देन शब्दकल्पनरूपां श्रुतार्थापत्तिं भट्टाभिमतामाशङ्कते अथेति । न योग्यताज्ञानमिति । तन्मतेऽन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वेन पीनत्वान्वये भोजित्वस्य योग्यतात्वेन पीनत्वान्वयेऽभोजित्वस्यायोग्यतात्वादिति भावः। दिवाभोजनस्य बाधादिति योग्यताघटकेत्यत्र हेतुः। योग्यताघटकेति। योग्यतात्मकरात्रिभोजित्वोपस्थितिं विनेत्यर्थः। अन्वयमलभमानमिति । अन्वयबोधं

करात्रिभोजनस्याप्रतीतेः अतो योग्यताघटकोपस्थितिं विना अन्वयमलभमानमिदं वाक्यं योग्यताघटकरात्रिभोजनोपपादकं रात्रौ भुङ्क्त इति वाक्यं कल्पयित्वा तेन सहान्वयबोधं जनयति । न चैवं लाघवाद्रात्रिभोजनमेव कल्पयितुं युक्तम्, शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इतिन्यायेन शब्दोपस्थापितमादाय शब्दस्यान्वयबोधजनकत्वात्, एवञ्च श्रूयमाणशब्दस्यान्वयबोधकत्वं योग्यताघटकोपस्थापकेन शब्देन विनानुपपद्यमानं तं कल्पयित्वा यत्रान्वयबोधं जनयति तत्र श्रुतार्थापत्तिः। द्वारमित्यादौ पिधेहीतिशब्दकल्पनं श्रुतार्थापत्तिरेव।



अजनयदित्यर्थः। इदं वाक्यमिति। पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यमित्यर्थः। रात्रिभोजनोपपादकमिति। रात्रिभोजनोपस्थापकमित्यर्थः। तेन सहेति। तदुपस्थापितरात्रिभोजित्वेन सहेत्यर्थः। अन्वयबोधमिति। पीनो देवदत्तो दिवा न भुङ्क्ते किन्तु रात्रौ भुङ्क्ते इत्यन्वयबोधमित्यर्थः। तन्मते योग्यत्वस्य शाब्दबोधे भाननियमादिति भावः। लाघवादिति। शब्दं कल्पयित्वापि अर्थोपस्थितेरावश्यकत्वादिति भावः। शाब्दी ह्याकाङ्क्षेति। शाब्दबोधोपयोगिनी पदार्थोपस्थितिः शब्देनैव जन्यत इति नियमेनेत्यर्थः। तथा च केवलार्थकल्पनेन योग्यताज्ञाननिर्वाहेऽपि शब्दजन्योपस्थितिं विना रात्रिभोजित्वरूपस्य योग्यत्वस्य शाब्दबोधे भानासम्भवाच्छब्दः कल्प्यते तन्मते शब्दयोग्यताविषयकस्यैव शाब्दबोधस्य जननियमादिति भावः। शब्देन विनेति।शब्दव्यवहारं विनेत्यर्थः। अनुपपद्यमानमिति। अनुपपन्नत्वेन ज्ञायमानमित्यर्थः। द्वारमित्यादाविति। एवमित्यादिः।पिधेहीतिशब्दकल्पनमिति। द्वारमितिवाक्यस्यापि पिधानविशेष्यकद्वारकर्मकत्वा-

शब्दश्च यद्यपि श्रूयमाणो बाधितस्तथाप्यभिप्रायस्थः कल्प्यते यथा गुरुमते स्वर्गकामो यजेतेत्यत्र साक्षात्साधनताबाधे परम्पराघटकस्यानुपस्थित्या परम्परासाधनताज्ञानविरहो योग्यताज्ञानाभावात् प्रसिद्धपदसामानाधिकरण्यानुपपत्तिरिति योग्यताज्ञानाय परम्परासाधनताघटकमपूर्व्वं लिङादिवाच्यं कल्पयति ततः स्वर्गसाधनं याग

---

न्वयबोधजनकत्वं पिधेहीतिशब्दसमभिव्याहारं विनाऽनुपपन्नमिति ज्ञानात् पिधेहिशब्दकल्पनमित्यर्थः । ननु द्वारमिति वाक्यं पिधेहीतिशब्दवदिति ज्ञानमर्थापत्त्या जननीयं तच्च न सम्भवति पिधेहीतिशब्दस्य बाधितत्वादित्यत आह शब्दश्चेति । श्रूयमाणः समभिव्याहारेण श्रूयमाणश्च । बाधित इति । नास्तीत्यर्थः । अभिप्रायस्थ इति । द्वारमिति वाक्यं पिधेहीतिशब्देन सहान्वयबोधं जनयत्वित्येतादृशाभिप्रायविषयः कल्प्यते इत्यर्थः । तथा च तादृशाभिप्रायविषयत्वसम्बन्धेनैव तद्वत्ताज्ञानं अर्थापत्त्या जननीयमिति भावः । योग्यताप्रकारकोपस्थितिं विना शब्दान्वयधीरित्यत्र प्राभाकरसम्मतिमाह यथेति । साक्षात्साधनताबाध इति । स्वर्गं प्रति यागस्य साक्षात्साधनत्वाभाव इत्यर्थः । यागस्य आशुतरविनाशित्वादिति भावः । परम्पराघटकस्येति । परम्पराघटकस्यापूर्व्वस्येत्यर्थः । योग्यताज्ञानाभावादिति । यागे विध्यर्थस्य इष्टसाधनत्वस्यान्वये योग्यताज्ञानविरहादित्यर्थः । साक्षादसाधने साधनत्वान्वये परम्परासाधनत्वस्य योग्यतात्वादिति भावः । प्रसिद्धपदेति । प्रसिद्धपदस्य विधेरर्थेन इष्टसाधनत्वेनान्वयबोधानुपपत्तिरित्यर्थः । योग्यताज्ञानायेति । परम्परासाधनताज्ञानायेत्यर्थः । लिङादिवाच्यमिति । कार्य्यत्वरूपेण लिङादिवाच्यमित्यर्थः । एवञ्च स्वर्गकामोऽग्निष्टोमादिविषयकसाधनकार्य्यवानिति प्रथमतोऽन्वयबोधः । विषयकत्वं जन्यत्वम् । एतच्च यागकामयोः संसर्गविधया भासत इति भावः । अ-

इति ज्ञानं जायते अन्यथा अपूर्वमपि वाच्यं न स्यादिति। उच्यते। बाधकप्रमाणाभावोऽन्वयविरोधिरूपविरहो वा योग्यता अतो दिवा अभोजने रात्रिभोजनाप्रतीतावपि भोजनसाध्यपीनत्वाद्दिवा न भुङ्क्ते इति शब्दाद्धीरुत्पद्यते न प्रतीत्यनुपपत्तिः किन्तु प्रतीतानुपपत्त्या रात्रिभोजनं कल्प्यते अत एवापूर्वमपि न वाच्यमिति वक्ष्यते, तस्मान्नार्थापत्तिरनुमानादतिरिच्यत इति ॥

---

न्यथेति। योग्यताप्रकारकोपस्थितेरपि हेतुत्वे इत्यर्थः। बाधकप्रमाणाभाव इति। ग्राह्याभावनिश्चयाभाव इत्यर्थः। अन्वयविरोधीति। ग्राह्याभावव्याप्यधर्मेत्यर्थः। प्रतीतानुपपत्त्येति। प्रतीतस्य दिवाऽभोजित्वे सति पीनत्वस्य रात्रिभोजित्वं विनाऽनुपपत्त्या रात्रिभोजित्वमनुमीयते इत्यर्थः। अत एवेति। अन्वयप्रयोजकरूपवत्त्वज्ञानस्याहेतुत्वादेवेत्यर्थः। अर्थापत्तिः अर्थापत्तिशब्दवाच्यं ज्ञानम् ॥

इति श्रीमथुरानाथतर्कवागीश—विरचिते तत्त्वचिन्तामणिरहस्ये अनुमानाख्यद्वितीयखण्डरहस्ये अर्थापत्तिरहस्यम्।

---

इतः परमवयवादिग्रन्थस्य जागदीशीव्याख्यैव निवेश्यते।

चिन्तामणेः अवयवः ।

तच्चानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते। तत्र न समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः, अत्रैव वाक्येऽतिव्याप्तेः । किन्त्वनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यं न्यायः । प्रति-

---

दीधित्या अवयवः ।

उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम् । प्र-

---

जागदीश्याः अवयवः ।

मूलोक्तन्यायलक्षणस्याऽग्रे दूष्यतया स्वयं न्यायलक्षणमाह उचितेति । व्युत्क्रमेणोक्तप्रतिज्ञादिपञ्चकातिव्याप्तिवारणार्थमानुपूर्वीकान्तं व्युत्क्रमोक्तप्रतिज्ञादिभिन्नार्थकम् । तेन क्रमोत्पन्नप्रतिज्ञाहेतूदाहरणोपनयनिगमनानां लाभः । प्रतिज्ञाहेतूदाहरणत्रिकाद्यतिव्याप्तिवारणाय पञ्चकपदम् । न चाऽसाधकतासाधकानुमानस्थलीयन्यायाव्याप्तिः तत्र हेत्वाभासात्मकहेतोरसाधकताव्याप्यत्वस्योभयसम्मतत्वादुदाहरणाभावेन तादृशपञ्चकसमुदायत्वाभावादिति वाच्यम् । शिरोमणिमते तत्रापि वादिनः स्वकर्तव्यनिर्वाहार्थमुदाहरणस्याऽऽवश्यकत्वात् । अन्यथा सर्वत्रैवोपनयमात्रस्य

ज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते तेन च विशिष्टवैशिष्ट्यावगाहि मानान्तरमुत्थाप्यते तेन च चरमपरामर्श उत्पाद्यत इति न्यायजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता ।

---

तिज्ञात्वादिकं पुनरुदासीनवाक्यवारकन्यायान्तर्गतत्वशून्यमेवोपा-

---

उद्भाव्यतापत्तेः अनुमित्युपयुक्तव्याप्तिपक्षधर्मतायास्तत एव लाभसंभवात् । यत्तु साध्यादिभेदेन न्यायस्य विभिन्नत्वादुदाहरणविनाकृतं प्रतिज्ञादिचतुष्टत्वमेव न्यायत्वं वाच्यमिति । तन्न । तथा सति कदाचित्तत्रैव समयबन्धवशेन पञ्चावयवप्रयोगेऽव्याप्त्यापत्तेः । समुदायपदन्तु तादृशपञ्चत्वस्य पर्याप्तिसम्बन्धेन यदधिकरणं तस्य क्रमिकत्वलाभार्थम् । तेन क्रमिकप्रतिज्ञाहेत्वादिमात्रे नातिव्याप्तितादवस्थ्यम् । क्रमेण पञ्चभिः पुरुषैः प्रतिज्ञादिपञ्चकाभिधाने न्यायव्यवहाराविरहे त्वेकपुरुषप्रयुक्तत्वमप्यौचित्ये निवेश्यम् । तथा सिद्धसाधनस्थलीयप्रतिज्ञादिसमुदाये न्यायत्वाभावात् सिषाधयिषाकालीनत्वं साध्यसंशयकविप्रतिपत्तिकालीनत्वं वा प्रतिज्ञाविशेषणं वाच्यमित्यपि वदन्ति । ननु न्यायावयवत्वघटितस्य प्रतिज्ञात्वादेर्न्यायनिरुक्तौ प्रवेशादन्योन्याश्रयत्वमत आह प्रतिज्ञात्वादिकमिति । तथा च यादृशयादृशानुपूर्व्यवच्छिन्ने कथकानां प्रतिज्ञाव्यवहारस्तादृशतादृशानुपूर्वीकत्वमेवात्र प्रतिज्ञात्वम् एवं हेतुत्वोदाहरणत्वादिकमपि उक्तक्रमेणैव निरुच्य न्यायलक्षणे निवेश्यम् । अन्यथा पर्वतादौ वन्ह्यादिप्रतिज्ञायाः पर्वतो वन्हिमान् गिरिरग्निमानित्यादिनानाविधानुपूर्वीकत्वेन तेषामेकविधानुपूर्व्याः प्रकृते न्यायलक्षणघटकत्वेऽन्यविधानुपूर्वीकप्रतिज्ञागर्भन्यायाव्याप्तिः, पक्षधर्मिकसाध्यवत्ताबोधकवाक्यत्वेन कथञ्चित्तादृशसकलप्रतिज्ञानामनुगमसम्भवेपि यद्यद्ध-

द्देयमिति नाऽन्योन्याश्रयः । साध्यादिविशेषनियन्त्रिताश्च प्रतिज्ञादयो वाच्या इति न भिन्नसाध्यादिकप्रतिज्ञादिसमुदायेऽतिव्याप्तिः । व्याप्त्यादेरिव साध्याद्यननुगमादननुगमो न्यायादेरि-

---

मवत् तत्तद्वन्हिमत् यथा महानसं यो यो धूमवान् सो सोऽग्निमान् यथा पाकदेशः इत्याद्यनेकविधानुपूर्वीकस्य वन्हिसाध्यकधूमोदाहरणस्य एकोपादानेऽन्यगर्भन्यायाव्याप्तिः, साधनधर्मिकसाध्यव्याप्यताबोधजनकवाक्यत्वेन उदाहरणानामनुगमे धूमो वन्हिव्याप्य इत्यादिवाक्यस्यापि तादृशत्वेन तद्गर्भप्रतिज्ञादिपञ्चके अतिप्रसङ्गादिति ध्येयम् । अत एव पर्वतो वन्हिमान् तस्मादिति क्रमिकवाक्यपञ्चकेऽपि नातिव्याप्तिः, तस्मादित्यादिभागे कथकानां हेतुत्वव्यवहारविरहेण तादृशानुपूर्व्याः प्रकृतन्यायानिरुक्त्यन्तर्गतहेतुत्वाघटकत्वादिति वदन्ति । नाऽन्योन्येति । इदमुपलक्षणम् । न्यायावयवत्वघटितस्य प्रतिज्ञात्वादेः प्रवेशे उचितानुपूर्वीकेत्यस्य वैयर्थ्यमपि स्यात् व्युत्क्रमेणोक्तानां न्यायानन्तर्गतत्वेन प्रतिज्ञात्वाभावादेव तादृशसमुदायेऽतिव्याप्त्यसम्भवादिति ध्येयम् । ननु न्यायघटितप्रतिज्ञात्वादेरप्रवेशे पर्वतो वन्हिमान् धूमात् यो यो धूमवान् स स्पर्शवानित्यादिभिन्नसाध्यकक्रमिकवाक्यपञ्चकेऽतिव्याप्तिः, न च तस्य उचितानुपूर्वीकत्वमेव नेति वाच्यम्, व्युत्क्रमोक्तप्रतिज्ञादिभिन्नत्वरूपस्यौचित्यस्य तत्रापि सत्त्वादित्यत आह साध्यादीति । तथा च यादृशयादृशानुपूर्व्यवच्छिन्ने तत्पक्षसाध्यकप्रतिज्ञाव्यवहारस्तादृशान्यतमानुपूर्वीकत्वमेव प्रकृते प्रतिज्ञात्वम् । एवं यादृशयादृशानुपूर्व्यवच्छिन्ने तत्पक्षकतद्धेतुकतत्साध्यकहेत्ववयवत्वव्यवहारस्तादृशान्यतमानुपूर्वीकत्वमेव प्रकृते हेतुत्वम् ।उदाहरणत्वादिकमपि उक्तदिशैव निरुच्य निवेशनीयमिति भावः। न चैवं पर्वतस्तेजस्वी वन्हिमत्त्वात् यो योऽग्निमान्स दीप्तिमान् छविव्याप्यहुताशनवांश्चायं तस्माद्द्युतिमानित्यादिसमुदायस्यापि तेजःसाध्यकन्यायत्वापत्तिः, इष्टत्वात् । साध्यादिवाचकपदानामेकानुपूर्वीकत्वस्य अतन्त्रत्वात् । अन्यथा घटो नेतराणीत्यादिप्रतिज्ञाघटितन्यायाव्याप्ति-

ध्यत एव । एतेन प्रतिज्ञानिगमनयोरुदाहरणावयवान्तरयोश्च न सम्भूयैकार्थप्रतिपादकत्वं प्रागेव तु पञ्चानामवयवानाम्, परन्तु प्रतिज्ञाहेत्वोः कथञ्चिव । उपनयनिगमनयोरेकवाक्यताव्यवहारस्तु

———

प्रसङ्गादिति ध्येयम् । ननु साध्यादिभेदेन न्यायनिरुक्तेरननुगमो दोष इत्यत आह व्याप्त्यादेरिति । तथा च लक्ष्यस्याप्यननुगतत्वेन लक्षणस्याप्यननुगतत्वाददोषः इति भावः । अत्र यद्यपि आनुपूर्व्याः क्रमिकतत्तद्वर्णविशिष्टचरमवर्णत्वपर्यवसन्नतया हेत्वाद्यानुपूर्व्यव-च्छिन्नस्य तदीयचरमवर्णस्य प्रतिज्ञाद्यव्यवहितोत्तरत्वासम्भवात् प्रतिज्ञादिपञ्चकस्यात्र क्रमिकत्वं दुर्घटम्, तथापि तत्तच्चरमपूर्वपूर्वव-र्णविशिष्टपूर्ववर्णत्वमपि तत्तदानुपूर्वी विनिगमकाभावादित्याश-येनेदम् । यादृशयादृशानुपूर्व्यवच्छिन्ने तत्पक्षहेतुसाध्यकन्यायव्यवहा-रः कथकसम्प्रदायसिद्धः तादृशान्यतमानुपूर्वीमत्त्वं तत्पक्षहेतुसा-ध्यकन्यायत्वमित्यत्र तात्पर्यम् । इत्थञ्च यादृशयादृशानुपूर्व्यवच्छि-न्ने सामान्यतो न्यायव्यवहारः साम्प्रदायिकः तादृशान्यतमानुपू-र्वीमत्त्वरूपं न्यायसामान्यलक्षणमपि साध्यविशेषाद्यनियन्त्रितं सु-वचमिति ध्येयम् । मूलोक्तलक्षणत्यागे बीजमाह एतेनेति । समा-हितमित्यग्रेऽन्वयः । प्रतिज्ञानिगमनयोरिति । ननु प्रतिज्ञार्थधर्मिको निगमनार्थप्रकारको बोधः सम्भवत्येव वन्हिमान् पर्वतस्तस्माद्व-न्हिमानित्यन्वये बाधकाभावात् दण्डवान् रक्तदण्डवानित्यादिबो-धानुरोधेन तद्विशिष्टे विशेषणान्तरावच्छिन्नस्य तस्याऽन्वये नि-राकाङ्क्षितत्वाभावादत आह उदाहरणेति । प्रागेव सुतराम् । प-ञ्चानामिति । तथा च प्रतिज्ञादिभिरेकवाक्यतया स्वार्थविशिष्ट-ज्ञानं जन्यते इति मूलमसङ्गतमिति भावः । एकविशेषनिषेधस्य विशेषान्तरविधिव्युत्पन्नत्वात् तमाह परन्त्विति । कथञ्चिदिति । उपनयस्थेदंपदस्य निगमनेऽनुषङ्गपक्षे तयोरपि प्राचां मते निराका-ङ्क्षतया परस्परमन्वयबोधासम्भवादिति भावः । यद्यपि धूमाद्व-न्हिमत्पर्वताभिन्नो यो यो धूमवान् धूमव्यापकवन्हिमान् तदभि-न्नो वन्हिव्याप्यधूमवानयं तस्माद्वन्हिमानिति क्रमेण पञ्चावयवा-

विशिष्टैकार्थप्रतिपत्तिपरतामात्रेण । तादृशपरामर्शप्रयोजकत्वञ्च यदि तद्विषयतत्तत्पदार्थसार्थोपस्थापकतया, तदोदाहरणोपनययो-

---

नां सम्भूय विशिष्टवैशिष्ट्यबोधजनकत्वं वन्ह्यादिसाध्यकन्यायस्थले सम्भवत्येव, तथापि चैत्रः पचति चैत्रत्वात् यो यश्चैत्रः स पचतीत्यादावुक्तक्रमेण पाककर्तृत्वादिविशिष्टविशेष्यकान्वयबोधासम्भवात् तादृशन्यायव्याप्तौ तात्पर्यम्, कृत्यवच्छिन्नविशेष्यकशाब्दबोधं प्रति नामजन्याया स्तिङन्यपदजन्याया वा कृत्युपस्थितेस्तन्त्रत्वात् । पक्ता चैत्रो गच्छतीत्यादाविव पचति चैत्रो गच्छतीत्यादावपि पाककर्तृत्वावच्छिन्ने चैत्रे गतिमत्त्वस्याऽन्वयबोधापत्तेः। यो यः पचति स ज्ञातः इत्यादौ यत्पदेनैव लक्षणया पक्तृत्वावच्छिन्नः प्रत्याय्यत इति तद्धर्मिकपक्तृत्वव्यापकीभूतज्ञातृत्वान्वयो नानुपपन्नः। वीप्सितार्थविधेयकान्वयबोधातिरिक्तस्थल एव उक्तव्युत्पत्त्यादरे तु तत्र पक्तृत्वस्य तिङर्थत्वेऽपि न क्षतिः, फलानुरोधित्वात्कल्पनायाः। वस्तुतो व्यतिरेक्युदाहरणगर्भन्यायस्थल एव उक्तक्रमेण विशिष्टवैशिष्ट्यबोधो दुर्घटः । [ एवमुदाहरणमात्रस्योद्देश्यविधेयभावेन स्वार्थबोधं प्रति स्वरूपायोग्यत्वे कस्यापि न्यायस्य न विशिष्टवैशिष्ट्यान्वयबोधजनकत्वमित्युक्तमेवेति स्मर्तव्यम् । ] दृष्टान्तस्य न्यायघटकत्वपक्षे तूदाहरणस्य विशिष्टवैशिष्ट्यान्वयो दुर्घटः यथा महानस इत्यादिदृष्टान्तस्य कुत्राप्यनन्वितत्वादिति ध्येयम्। नन्वेवं पञ्चावयवानामेकवाक्यताव्यवहारस्तान्त्रिकाणां कथं स्यादित्यत आह एकेति । विशिष्टेति । विशिष्टैकार्थप्रतीतीच्छाप्रयोज्यत्वमात्रेणेत्यर्थः । मात्रपदेन तादृशप्रतिपत्तिजनकत्वव्यवच्छेदः । ननु प्रतिज्ञादिपञ्चवाक्यैरिति मूलस्य प्रतिज्ञादिभिरेकवाक्यतापन्नत्वज्ञानसहकारेण प्रत्येकं स्वस्वार्थविशिष्टज्ञानं जन्यते तेनाऽवान्तरवाक्यार्थज्ञानरूपेण प्रतिज्ञार्थे हेत्वर्थस्य उपनयार्थे निगमनार्थस्य विशिष्टवैशिष्ट्यावगाहि यन्मानं महावाक्यार्थज्ञानं तदुत्थाप्यते जन्यते इत्यर्थकरणान्नासङ्गतिरतो मूलोक्तलक्षणे दोषमाह तादृशपरामर्शेति । अनुमितिचरमकारणपरामर्शेत्यर्थः । तद्विषयेति । परामर्शविषयेत्यर्थः । तत्तत्पदार्थसार्थो व्याप्तिपक्षधर्मतेति । तदुपस्थापकतया तद्विषयकतये-

अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञा-नजनकशाब्दज्ञानजनकवाक्यत्वमवयवत्वम् । अत एव वह्निव्याप्यधूमवानयमितिवाक्ये तदवयवे च न न्याय-तदवयवलक्षणातिव्याप्तिः । तेन परामर्शस्य, तदवयवेन परामर्शजनकस्य जननात् । यत्तु संक्षेपतः परामर्शप्र-योजकवाक्यत्वेन विशेषाभावात् सोऽपि न्याय एवेति ।

---

रेव तत्पर्यवस्यति । अथ तदानुकूल्यमात्रेण, तदा को वह्निमान् पर्वतो वह्निमान् कुतो धूमवत्त्वादित्यादेरपि तथात्वमित्यादिकं स-माहितम् ।

अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वं प्रति-ज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं वा वक्तव्यम् । उभ-

---

त्यर्थः । तेन शाब्दबोधनिष्ठस्यैव प्रयोजकत्वस्य मूलेऽभिधानान्नास-ङ्गतिः । सर्वदा उदाहरणस्य परामर्शविषयीभूतपक्षानुपस्थापकत्वा-दुपनयपर्यन्तानुसरणम् । तदिति । मूलोक्तपरामर्शजनकशाब्दधी-जनकत्वमित्यर्थः । तथा चाऽसम्भव एव लक्षणस्य दोषः उदाहरणा-दावतिव्याप्तिर्वा इति भावः । तदानुकूल्यमात्रेणेति । परामर्शविषयी-भूतार्थविषयत्वमात्रेणेत्यर्थः । तादृशपरामर्शप्रयोजकत्वमिति पूर्वे-णान्वयः । इत्यादेरित्यादिना न्यायसमानार्थकस्य तावद्विसदृशवा-क्यस्तोमस्य परिग्रहः । तथात्वं परामर्शप्रयोजकशाब्दधीजनक-त्वम् । इत्यादिकमित्यादिना प्रतिज्ञाद्येकैकस्मिन्नतिप्रसङ्गोपग्रहः । मूलोक्तावयवलक्षणस्याप्युक्तदोषग्रस्तत्वात्स्वयं तल्लक्षणमाह अ-वयवत्वं त्विति । अत्र प्रतिज्ञासमानानुपूर्वीकस्य उदासीनवा-क्यस्य वारणाय सत्यन्तम् । न्यायान्तर्गतत्वगर्भप्रतिज्ञात्वादिकमु-पादाय तदन्यतमत्वोक्तौ न्यायान्तर्गतत्वस्य पञ्चधा प्रवेशे गौरवं

स्यादतः सकृदेव पार्थक्येन निवेशितमिति ध्येयम् । न च प्रकृतपक्षहेतुसाध्यकैकविधन्यायान्तर्गतत्वस्योक्तावन्यानुपूर्वीकतादृशन्यायावयवेऽव्याप्तिरिति वाच्यम् । प्रकृतपक्षहेतुसाध्यकन्यायसामान्यं यद्घटितं तदन्यत्वस्य विवक्षितत्वात् । यादृशयादृशानुपूर्व्यवच्छिन्नस्य प्रकृतपक्षहेतुसाध्यकन्यायत्वं तादृशतादृशानुपूर्व्याः प्रत्येकानन्तर्गतं यत्तदन्यत्वे सति इति तु फलितार्थः । यत्तु प्रकृतपक्षहेतुसाध्यकयावन्न्यायविषयिताव्यापकविषयिताकत्वमेव प्रकृतन्यायान्तर्गतत्वमिति । तन्न । उदासीनवाक्याविषयके यावन्न्यायविषयकैकज्ञाने मानाभावेनाऽसम्भवापत्तेः । प्रतिज्ञाद्येकदेशेऽतिव्याप्तिवारणाय विशेष्यदलम् । तत्र प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिस्वरूपमेव तद्भिन्नभेदस्य तदात्मकत्वात् तथा च यदात्मकं यत्र प्रतिज्ञाद्यन्यतमत्वं तस्य ताद्रूप्येण न्यायावयवत्वं साध्यसम्बन्धितावच्छेदकयद्रूपवत्त्वं यस्य तस्य ताद्रूप्येण साध्यव्याप्यतावत् । अन्यथा सत्ताया एकत्वादिविशिष्टसत्ता द्रव्यत्वव्याप्येतिवत् शुद्धसत्ता द्रव्यत्वव्याप्येति व्यवहारापत्तेः साध्यसम्बन्धितावच्छेदकीभूतविशिष्टसत्तात्वस्यैव शुद्धसत्तायां सत्त्वात् । एवञ्च क्रमिकतत्तद्वर्णविशिष्टचरमवर्णत्वपर्यवसितस्य प्रतिज्ञात्वादेरन्तिमवर्णवृत्तित्वेऽपि न तन्मात्रेऽवयवव्यवहारः । यादृशयादृशानुपूर्व्यवच्छिन्ने तान्त्रिकाणां प्रकृतपक्षहेतुसाध्यकप्रतिज्ञाहेत्वादिव्यवहारः तादृशतादृशानुपूर्व्यन्यतमत्वे तात्पर्यम् । यत्तु यादृशयादृशवर्णस्तोमे तान्त्रिकाणां प्रतिज्ञादिव्यवहारः तादृशतादृशवर्णस्तोमान्यतमत्वमेव प्रतिज्ञाद्यन्यतमत्वं वाच्यमतो नैकवर्णेऽतिप्रसङ्गः इति । तत्तुच्छम् । तथासति प्रतिज्ञादिघटकेषु सर्वेष्वेव वर्णेषु प्रत्येकं क्रमिकतावद्वर्णसमुदायात्मकस्य प्रतिज्ञादेर्भेदसत्त्वात्तद्भिन्नभेदात्मकस्य प्रतिज्ञाद्यन्यतमत्वस्य प्रतिज्ञाद्यवयवमात्र एवाऽसम्भवापत्तेः। नन्वेवं रमाधवः पूज्यो रमाधवत्वादित्यादौ प्रतिज्ञाघटकस्य माधवः पूज्य इत्यस्य हेतुघटकस्य माधवत्वादित्यस्य च निरुक्तप्रतिज्ञाद्यन्यतमत्वात्समादायाऽतिव्याप्तिः एवं पर्वतो धूमाद्गुणवान् धूमादित्यादौ धूमजगुणत्वेन साध्यतायां प्रतिज्ञादिपञ्चानामेवावयवानां घटिकायां धूमादित्यानुपूर्व्यामपि । न चोक्तलक्षण एव प्रतिज्ञाद्यघटकत्वे सतीत्यपि विशेषणं देयमतो नैष दोषः, तथा सत्यपि प्रतिज्ञात्वादिपर्यवसितेन प्रतिज्ञाद्यन्यतमत्वेनावयवानामि-

तन्न । कथायामाकाङ्क्षाक्रमेणाभिधानमिति प्रथमं विशिष्टवैशिष्ट्य आकाङ्क्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते । अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः, आकाङ्क्षाविरहस्तुल्य एव । अन्ये तु पञ्चा-

---

यश्च प्रतिज्ञाहेतू हेतूदाहरणे उदाहरणोपनयौ उपनयनिगमने इति

---

तरभेदसाधने प्रतिज्ञात्वादेरेव गमकत्वसम्भवेऽन्यतमत्वांशस्य व्यर्थविशेषणत्वेन लक्ष्यत्वानुपपत्तेः । ( न चान्यतमत्वमत्र न प्रतिज्ञात्वादिरूपं किन्त्वतिरिक्तो भेद इति वाच्यम् । तावतापि यत्र पर्वतत्वाद्यवच्छेदेन वन्हेः साध्यतायां तत्सामानाधिकरण्येन यथाऽयं पर्वत इति दृष्टान्तोपन्यासः तत्र पर्वतो वन्हिव्याप्यधूमवानित्यन्तस्य उदाहरणोपनयघटकभागद्वयस्यापि पर्वतधर्मिकसाध्यव्याप्यवत्ताबोधकत्वेन प्रतिज्ञाद्यन्यतमत्वात् प्रतिज्ञाद्यघटकत्वाच्च तत्रातिव्याप्तिः ) इत्यस्वरसाल्लक्षणान्तरमाह प्रतिज्ञाद्यघटकत्वे सतीति । प्रतिज्ञाद्येकदेशेऽतिव्याप्तिवारणार्थं सत्यन्तम्। अत्र च स्वान्यप्रतिज्ञाविषयताव्यापकविषयताकत्वेन स्वविषयिताशून्यज्ञानावृत्तिस्वान्यप्रतिज्ञाविषयताकत्वेन वा प्रतिज्ञाघटकत्वं निरुच्य तदन्यत्वं निवेश्यं प्रतिज्ञाविषयतायामपि तद्विषयिताव्यापकत्वादसम्भवः स्यादतः स्वान्येति प्रतिज्ञाविशेषणम् । एवं हेत्वादिघटकत्वमपि निर्वाच्यम् । यद्यपि सर्वेषामेव पदार्थानां प्रतिज्ञादिघटकत्वात्तदन्यत्वं न प्रतिज्ञादावपि, तथापि प्रतिज्ञात्वान्ययद्धर्मावच्छिन्नविषयित्वं प्रतिज्ञाविषयताव्यापकं तद्धर्मानवच्छिन्नन्यायान्तर्गतविषयितावत्त्वं वाच्यम् । एवं हेत्वाद्यघटकत्वमपि निर्वाच्यम् । प्रतिज्ञाहेतुसमुदायादावतिव्याप्तिवारणार्थमुभयघटकभागद्वयाघटितत्वमिति । ननु प्रतिज्ञादेरपि स्वीयदलद्वयघटकभागद्वयघटितत्वादसम्भवोऽव्याप्तिर्वा इत्यत आह उभयश्चेति । न चैवं निगमने-

वयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यत इति तद्धी-
जनकवाक्यत्वं न्यायत्वम्, एवं प्रतिज्ञाद्यवयवादपि

---

विशिष्य वक्तव्यमिति। प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयक-
ज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वं तत्त्वमित्यपि केचित् । तस्ये-

---

ऽव्याप्तिः उपनयस्थायंपदघटितस्य अयं तस्माद् वन्हिमानिति
निगमनस्योपनयघटकायंपदेन निगमनघटकवन्ह्यादिपदेन च
घटितत्वादिति वाच्यम् । अन्वयबोधार्थमयंपदस्याऽनुषङ्गेऽपि
तदन्तर्भावेण निगमनत्वाभावात् तस्माद्वन्हिमानित्येव निगमनाका-
रत्वात् निगमनाघटकं सत् यदुपनयघटकं यच्चोपनयाघटकं सत् नि-
गमनघटकं तदुभयाघटितत्वं वा लक्षणे निवेश्यम् । तथा चायं-
पदस्य उपनय इव निगमनेऽपि घटकत्वाददोषः । न च प्रतिज्ञाघट-
कहेतुघटकोभयाघटितत्वादित्यादिना प्रवेशेऽपि प्रतिज्ञोपनयसमुदा-
येऽतिव्याप्तिस्तादृशोभयाघटितत्वादिति वाच्यम् । उदासीनवाक्य-
वारणार्थमवश्यमनुषञ्जनीयेन न्यायान्तर्गतत्वे सतीत्यनेनैव तादृशा-
समुदायस्य वारणात् न्यायविषयिताव्यापकविषयिताप्रतियोगि-
त्वरूपस्य प्रकृतपक्षहेतुसाध्यकन्यायसामान्यं यद्घटितं तदन्यत्व-
रूपस्य वा न्यायान्तर्गतत्वस्य प्रतिज्ञोपनयसमुदायस्य कुत्राप्यस-
त्त्वात् । केचित्तु प्रतिज्ञाहेत्विन्यत्र हेतुपदं प्रतिज्ञाघटकान्यपरं त-
था च प्रतिज्ञाघटकप्रतिज्ञाघटकान्योभयाघटितत्वे सतीत्यर्थलाभा-
न्नोक्तदोषः । एवं हेतूदाहरणेत्यादावपि उदाहरणाद्यन्तिमपदं हेत्वा-
दिघटकान्यपरं नातो हेतूपनयसमुदायादावतिव्याप्तिरित्याहुः । तच्चि-
न्त्यम् । कस्य चिदवयवलक्षणमाह प्रतिज्ञादीति । तत्तद्विशिष्टावि-
षयकेत्यादेस्तन्मात्रविषयकेत्यर्थः । तेन प्रतिज्ञाहेतुसमुदायस्य प्र-
तिज्ञार्थज्ञानजनकत्वेऽपि न तत्राऽतिव्याप्तिः । वाक्यत्वं न्यायान्तर्गत-
वाक्यत्वम् । तेन उदासीनवाक्ये नातिव्याप्तिः । अत्र तादृशान्यतम-
बोधजनकत्वं तत्स्वरूपयोग्यत्वमेव वाच्यम् अन्यथा सभाक्षोभादि-

प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्धीजनकशब्द-त्वमेव तत्तल्लक्षणमिति । तन्न । ज्ञानविशेषजनकत्वं तत्तज्ज्ञानजनकत्वं वा न्याये प्रतिज्ञादौ चानतिप्रसक्तम-नुगतरूपमन्तरेण दुर्निरूपमिति तत्स्वीकारे तस्यैव ल-क्षणत्वात्, अन्यथा जातिसङ्करप्रसङ्गः ॥

---

वेति। तथा च तादृशजातौ साधकाभाव इति भावः । बाधकमप्याह अन्यथेति । न्यायजन्यज्ञाने पञ्चावयवजन्यत्वात् पञ्चाद्रित्र्यादिजन्ये द्वित्र्याद्या एकैकजन्ये चैकैका जातय इति सङ्कर इत्यर्थः । तत्र तत्र भिन्नभिन्नजातिकल्पने सुतरां मानाभावादिति भावः । केचित्तु यदि चानुगतं कारणमन्तरेणापि तादृशजातिमत्त्वसम्भवस्तदा क-दाचित् प्रतिज्ञादिजन्येऽपि हेत्वादिजन्यवृत्तिर्हेत्वादिजन्ये च प्रति-

---

वशाद्बोधाजनकप्रतिज्ञादावव्याप्त्यापत्तेः, तथा च चित्रभानुः प्रमे-यो द्रव्यत्वादित्यादौ प्रतिज्ञैकदेशे भानुः प्रमेय इत्यत्रातिव्याप्तिः तस्यापि तादृशविशिष्टार्थबोधस्वरूपयोग्यत्वादित्यस्वरसः केचि-दित्यनेन सूचितः । नन्वेकलक्षणस्य लक्षणान्तरादूषकत्वात् तस्यै-वेतिमूलमसङ्गतमत आह तथा चेति । तादृशजाताविति । न्याय-प्रयोज्यायां प्रतिज्ञादिप्रत्येकप्रयोज्यायाञ्च जाताविर्थः । साधका-भाव इति । अन्यथा प्रतिज्ञाव्यवहारसम्भवाज्जातिसाधकाभाव इ-त्यर्थः । बाधकमिति । प्रतिज्ञादिप्रत्येकप्रयोज्यायां जातावित्यादिः । न्यायप्रयोज्यजातेः प्रतिज्ञादिप्रयोज्यजातिव्याप्यत्वोपगमे साङ्कर्या-सम्भवादिति ध्येयम् । पञ्चेति । जातय इत्यग्रेऽन्वयः । प्रतिज्ञादिप-ञ्चवाक्यैरेकबोधजननपक्षेऽपि साङ्कर्यार्थमाह द्वित्रादीति । ननु द्वित्रादिजन्ये प्रत्येकजन्ये च शाब्दबोधे विरुद्धा एव नानाजात-यो वाच्यास्तत्कुतः साङ्कर्यमत आह तत्रेति । सुतरामिति । प्रति-

ज्ञादिजन्यवृत्तिर्जातिः स्यादिति सङ्कर इत्यर्थः। एवं सर्वेषां सर्व-
जातीयत्वमेकजातीयत्वं वा स्यादित्यपि द्रष्टव्यमित्याहुः॥

साध्यनिर्देशः प्रतिज्ञेति सूत्रम्। साध्यो विधेयधर्मविशिष्टो धर्मी
तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवन्हित्वा-
दिविशिष्टवैशिष्ट्यज्ञानजनको न्यायावयव इति पर्य्यवसितोऽर्थः।
उदाहरणाच्च साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानं न पक्षतावच्छे-
दकविशिष्टे, उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेद-

———

ज्ञाव्यवहारानुरोधेन प्रत्येकजन्यबोधवृत्तिवैजात्यसत्त्वेपि द्वित्रादि-
जन्यबोधे तद्विरुद्धजातेः कल्पकाभावादिति भावः। मिश्रमतमाह
के चित्त्विति। मूलस्थमन्यथापदं व्याकरोति यदि चेति। कदा-
चिदिति साङ्कर्य्यसम्पत्तये। ननु नियामकाभावान्मिथो व्यभिचार
एव नास्ति कुतः सङ्कर इत्यत आह एवमिति। ननु समनियत-
नानाजातेरनङ्गीकारात्सर्वजातीयत्वमसङ्गतमत आह एकजातीय-
त्वं वेति। तथा च सर्वमेव लक्षणमवयवान्तरेऽतिव्याप्तमिति भा-
वः। सङ्करपदस्य मुख्यार्थायोगोऽत्राऽस्वरसः॥

वक्ष्यमाणार्थस्य शब्दाल्लाभार्थमाह साध्य इति। अत्र ज-
नकान्तेन हेत्वादेरवयव इत्यनेनोदासीनवाक्यस्य व्युदासः। न च
पर्वतो वन्हिमानितिप्रतिज्ञायां वन्हिमत एव तादात्म्येन प्रकार-
त्वान्न पक्षे साध्यतावच्छेदकीभूतवन्हित्वविशिष्टवैशिष्ट्यावगाहि-
धीजनकत्वं नामार्थयोर्भेदान्वयस्याऽव्युत्पन्नतया पर्वते वन्हेः संयो-
गेन प्रकारत्वाभावादिति वाच्यम्। भेदार्थकविभक्तीनामिव तद-
र्थकमतुबादीनामपि समभिव्याहारवशेन नामार्थयोर्भेदान्वयस्य प्रा-
च्यैरुपगमात् तन्मत एवैतल्लक्षणकरणादिति भावः। पक्षतावच्छे-
दकविशिष्टेत्यस्य व्यावृत्तिमाह उदाहरणाच्चेति। न च यत्र पर्व-
तत्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तत्सामानाधिकरण्येन पर्वत-
स्य दृष्टान्तता तत्र उदाहरणेऽतिव्याप्तिरिति वाच्यम्। पक्षताव-
च्छेदकनिष्ठावच्छेदकत्वाद्यवगाहितायाः अपि विशिष्य प्रवेशनी-

तत्र प्रतिज्ञा न साध्यनिर्देशः, साध्यपदेऽतिव्याप्तेः। किन्तूद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यम्। अन्यूनानतिरिक्तपदं वि-

———

कविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदासः। किन्त्वित्यादि। प्रकृतन्यायबहिर्भूतवाक्यवारणाय सत्यन्तं प्रकृतन्यायावयवत्वपर्य्यवसितार्थकम्। उद्देश्येति। प्रकृतेत्यर्थः। वन्हिसाध्यकन्यायोपनयस्य वन्हिव्याप्यधूमसाध्यकानुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकस्य

———

यत्वादिति भावः। साध्यतावच्छेदकेत्यस्य फलमाह उपनयाच्चेति। द्रव्यव्याप्यधूमवान्पर्वत इत्युपनयाच्चेत्यर्थः। यत्र येन सम्बन्धेन साध्यता तत्र तेनैव साध्यवैशिष्ट्यावगाहित्वं बोध्यम्। तेन यत्र विषयतासम्बन्धेन ज्ञानस्य साध्यतायां समवायेनैव ज्ञानं हेतुः तत्र ज्ञानव्याप्यज्ञानवानयमित्युपनये नातिप्रसङ्गः, सिषाधयिषया च न न्यायप्रयोग इति भावः। तयोः उदाहरणोपनययोः। सर्वमिदमापाततः। प्रतिज्ञासहकारेण हेत्ववयवस्यापि प्रकृतपक्षधर्मिकस्वार्थविशिष्टप्रकृतसाध्यबोधकतया तत्रातिप्रसङ्गस्य दुर्वारतापत्तेः। परन्तु तद्वारणाय प्रकृतपक्षधर्मिकप्रकृतसाध्यान्वयबोधत्वावच्छिन्नं प्रति जनकत्वमेव लक्षणं वाच्यम्, अत्र च प्रकृतपक्षसाध्ययोरेकमात्रस्योपादाने प्रतिज्ञामात्रेऽसम्भवापत्तिरतो द्वयमुपात्तमित्येव तत्त्वम्। [ननु प्रकृतपक्षधर्मिकयत्किञ्चित्प्रकारकशाब्दत्वावच्छिन्नं प्रति यत्किञ्चिद्धर्मिकप्रकृतसाध्यप्रकारकशाब्दत्वावच्छिन्नं प्रति वा जनकत्वं कुतो न निवेशितमित्याशङ्क्यैव उदाहरणाच्चेत्यादिको ग्रन्थ इति न कश्चिद्दोषः।] बहिर्भूतवाक्यस्येति। प्रतिज्ञासमानार्थकस्येति शेषः। तस्यापि कथञ्चित्परामर्शप्रयोजकशाब्द-

वारणाय प्रकृतद्वयम्। तथा च यादृशसाध्यपक्षकन्यायावयवत्त्वं तादृशसाध्यपक्षकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं

---

धीजनकत्वात् यथाश्रुते सत्यन्तदलेन वारणासम्भवादाह प्रकृतन्यायेति। साध्यव्याप्यवत्त्वानुमितेरपि कदाचिदुद्देश्यत्वादुपनयेतिव्याप्तिरतो व्याचष्टे प्रकृतेत्यर्थ इति। वन्हिसाध्यकेत्यादिः। न्यायावयवत्वे सति प्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्दधीजनकत्वोक्तौ वन्हिव्याप्यधूमसाध्यकप्रतिज्ञालक्षणस्य वन्हिसाध्यकोपनयेऽतिव्याप्तिः तस्यापि न्यायावयवत्वात् वन्हिव्याप्यधूमसाध्यकानुमितिसमानाकारकबोधजनकत्वात् च अतः प्रकृतद्वयमित्यर्थः। इदन्तु चिन्त्यते। वन्हिसाध्यकोपनयस्य व्यावृत्तये प्रकृतद्वयमित्यसङ्गतं साध्यादिभेदेन प्रतिज्ञायां विभिन्नतया वन्हिसाध्यकप्रतिज्ञालक्षणे यत्किञ्चिन्न्यायावयवत्वे सति वन्हिसाध्यकानुमित्यन्यूनानतिरिक्तविषयकबोधजनकत्वमात्रस्यैव सम्यक्त्वेन तत्र प्रकृतन्यायावयवत्वपर्यन्तप्रवेशे वैयर्थ्यात्। प्रकृतन्यायावयवत्वे सति अनुमित्यन्यूनानतिरिक्तविषयकशाब्दधीजनकत्वोक्तौ च वन्हिसाध्यकप्रतिज्ञालक्षणस्य तत्साध्यकोपनयेतिव्याप्तिः तस्यापि वन्हिव्याप्यधूमसाध्यकानुमितिसमानाकारबोधजनकत्वात् च किन्तु वन्हिव्याप्यधूमसाध्यकप्रतिज्ञालक्षणस्य वन्हिसाध्यकोपनयेऽतिव्याप्तिवारणार्थमेव प्रथमं प्रकृतपदम्, द्वितीयन्तु तस्यैव लक्षणस्य वन्हिव्याप्यधूमसाध्यकोपनयेऽतिव्याप्तिवारणार्थम्, तादृशोपनयस्यापि यत्किञ्चिदनुमितिसमानाकारकबोधजनकत्वात्। न च वन्हिसाध्यकप्रतिज्ञालक्षणे अनुमित्यंशे यत्प्रकृतत्वं यच्च वन्हिव्याप्यसाध्यकप्रतिज्ञालक्षणे न्यायावयवत्वांशे प्रकृतत्वं तदुभयं वन्हिसाध्यकोपनयस्य वारणाय इत्यर्थकरणान्नाऽसङ्गतिरिति वाच्यम्। तथाप्येकलक्षणस्थप्रकृतद्वयस्य व्यावृत्त्यननुधावने सन्दर्भविरोधित्वापत्तेरिति ध्येयम्। प्रकृतेत्यस्यार्थं व्याकरोति यादृशपक्षसाध्यकेति। यद्धर्मावच्छिन्नसाध्यपक्षकेत्यर्थः। न च तद्धर्मावच्छिन्नसाध्यकन्यायावयवत्वे सति तद्धर्मावच्छिन्नसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दधीजनकत्वमेव तद्धर्मावच्छिन्नसाध्यकप्रतिज्ञात्वमस्तु तद्धर्मावच्छिन्नपक्ष-

पर्य्यवसितार्थः। धूमादालोकवान् पर्वतो वन्हिमान् धूमादित्यादा-वनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणाय अन्यूनेति। निगमन-

---

प्रवेशो व्यर्थ इति वाच्यम्। तद्धर्मावच्छिन्नसाध्यकानुमितिविषय-त्वसमनियतविषयताकत्वपर्यवसितस्य तद्धर्मावच्छिन्नसाध्यकानुमि-त्यन्यूनानतिरिक्तविषयत्वस्याऽप्रसिद्ध्या प्रतिज्ञामात्र एवाऽसम्भवाप-त्तेः। प्राञ्चस्तु बुद्धिविषयत्वं धूमज्ञानजन्यज्ञानीयं धूमादित्यादिन्या-यस्थलीयहेत्ववयवे विषयत्वमात्रपक्षकधूमज्ञानजन्यज्ञानीयत्वसाध्य-कप्रतिज्ञालक्षणस्याऽतिव्याप्तिवारणार्थमवश्यं तद्धर्मावच्छिन्नपक्षकत्वे-न न्यायावयवो विशेषणीयः। अन्यथा तत्रापि धूमज्ञानजन्यज्ञानत्व-त्वावच्छिन्नसाध्यकन्यायावयवत्वस्य विषयत्वत्वावच्छिन्नपक्षकधू-मज्ञानजन्यज्ञानीयत्वत्वावच्छिन्नसाध्यकानुमितिसमानाकारकशाब्द-धीजनकत्वस्य च द्वयोः सत्त्वेनातिव्याप्त्यापत्तेः। बुद्धिविषय-त्वत्वावच्छिन्नपक्षकन्यायावयवस्य हेतोर्विषयत्वत्वावच्छिन्नपक्षक-न्यायावयवत्वाभावादेव व्युदासात्। इत्थञ्चानुमित्यंशेऽपि तद्धर्माव-च्छिन्नपक्षकत्वं देयम्। अन्यथा वन्हिविषयत्वत्वावच्छिन्नपक्षकोप-दर्शितप्रतिज्ञालक्षणस्य तत्र हेत्ववयवेऽतिव्याप्त्यापत्तेः तस्यापि वि-षयत्वत्वावच्छिन्नपक्षकप्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञा-नजनकत्वादित्याहुः। तच्चिन्त्यम्। हेतोरिति। न चोक्तस्थले अनुमितावालो-कनिष्ठमेव धूमज्ञानज्ञाप्यत्वं विषयः हेत्ववयवजन्ये च बोधे वन्हिनिष्ठ-मपि धूमज्ञानज्ञाप्यत्वं भासत इत्यतिरिक्तविषयकत्वादेव उक्तहे-तावतिव्याप्त्यसम्भव इति वाच्यम्। अत एवाऽस्वरसादादिपदेन ज्ञेयाद्वाच्यत्वात्सर्वं प्रमेयं ज्ञेयादित्यादिस्थलीयहेतोरुपग्रहात् प्रकृता-नुमितिविषयताबहिर्भूतविषयताशून्यत्वरूपस्य प्रकृतसाध्यव्याप्य-विषयकत्वरूपस्य वा वक्ष्यमाणानतिरिक्तविषयत्वस्य धूमादालोक-वान् पर्वतो वन्हिमान् धूमादित्यादिस्थलीयहेतावप्यनपायाच्च। केचित्तु हेत्ववयवजन्यबोधस्य धूमज्ञानजन्यज्ञानविषय इत्याकार-कस्य आलोकेतरस्मिन् बाधदशायामुक्तस्थलेऽप्यन्यूनपदस्य व्यावृ-त्तिरिति व्याचक्षते। यत्तु धूमात्तेजस्वी पर्वतो वन्हिमान् धूमा

वारणाय अनतिरिक्तेति। यद्यपि निगमने साक्षात्पक्षवाचकं पदं न श्रूयते, तथापि न्यूनताभङ्गाय उपनयस्थायमादिपदस्याऽनुषङ्गात्तथा बोध्यम्। इत्थमेव च प्रसक्तामतिप्रसक्तिं निगमनञ्चेत्यादिना निराकरिष्यति। तदर्थश्च निगमनमन्यूनानतिरिक्तविषयकज्ञानजनकं सन्न परामर्शहेतुर्येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि

---

दित्यादिस्थलीयहेतावतिव्याप्तिवारणार्थमेव अन्यूनपदम्, तत्र वन्हिनिष्ठस्यैव धूमज्ञानज्ञाप्यत्वस्याऽनुमितौ हेतुजन्यबोधे च भानादिति। तत्तुच्छम्। तत्रापि प्राथमिकेन हेतुजन्यबोधेनाकाङ्क्षादिसाम्याद्धूमज्ञानज्ञाप्यत्वत्वेन द्रव्यत्वादिनिष्ठस्य धूमज्ञानज्ञाप्यत्वस्य वि[illegible]षयीकरणादनतिरिक्ताविषयकत्वासम्भवात्। ननु निगमनस्य पक्षतावच्छेदकरूपेण पक्षाबोधकत्वादन्यूनपदेनैव तद्वारणं सम्भवतीत्यत आह यद्यपीति। सम्बन्धित्वप्रकारेण पक्षबोधकं सत्त्वादिकमेव निगमनेऽस्तीत्यतः साक्षादिति। पक्षतावच्छेदकरूपेणेत्यर्थः। न्यूनतेति। निगमनस्य प्रतिज्ञासमानाकारबोधजनकतायामेव पुनरुक्तताप्रतिसन्धानादबाधितत्वादिरूपबोधकत्वं तस्य लभ्यते नान्यथा इति भावः। अयमादीत्यादिपदादियमिति स्त्रीलिङ्गे, नपुंसकलिङ्गे चेदमित्यस्य परिग्रहः। तथेति। अन्यूनविषयकत्वमित्यर्थः। इत्थमेव चेति। अयमादिपदानुषङ्गादन्यूनविषयकज्ञानजनकत्वेनैवेत्यर्थः। ननु निगमनस्य कथञ्चित्परामर्शप्रयोजकत्वान्न परामर्शहेतुरिति मूलासङ्गतिरित्यत आह तदर्थश्चेति। न परामर्शहेतुरिति। इदञ्च सत्यन्तमूलस्य यथाश्रुतार्थमभिप्रेत्य। वस्तुतः परामर्शपदस्य ज्ञानवाचकतया निगमनं नान्यूनानतिरिक्तविषयकज्ञानहेतुरित्येवार्थो बोध्य इति ध्येयम्। येनेति। सत्यन्तस्य प्रकृतन्यायावयवार्थकतया व्याख्यातत्वादिति भावः। निरुक्तेति। प्रकृतानुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकत्वे सति प्रकृतन्यायावयवत्वरूपमित्यर्थः। तदपि निगमनमपि। अबाधितत्वादीत्यादिपदात्सत्प्रतिपक्षस्य सङ्ग्रहः। अबाधितत्वादेरपदार्थतया निगमनबोध्यत्वासम्भवादाह तद्बोधेति। विशिष्टेति। व्याप्तिविशिष्टपक्षधर्मताविशिष्टहे-

व्याप्नुयात्, अबाधितत्वादेस्तद्बोधौपयिकविशिष्टहेतुसम्बन्धस्य वा बोधकतया तस्यातिरिक्तविषयकज्ञानजनकत्वादिति । यत्तु पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यत्र पृथिवीतरेभ्यो भिद्यते न तत्र पृथिवीत्युदाहरणवारणाय तदिति । तत्तुच्छम् । तेन पृथिव्यामितरभेदस्याविषयीकरणात् तात्पर्य्यभ्रमेण तादृशबोधजनकत्वस्यातिप्रसक्तत्वात् । न च तावताप्युदाहरणस्य तथात्वसम्भवः, यत्रेत्यादेरनन्वयात् । यदि च निगमने नाऽयमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टलाभादिति विभाव्यते, तदा

---

तोर्थः साध्ये ज्ञानज्ञाप्यत्वलक्षणः सम्बन्धस्तद्बोधकतयेत्यर्थः । अत्र च निगमनस्याऽनुवादकत्वप्रतिसन्धानोत्तरमेवाऽबाधितत्वादेर्मानसग्रहोत्पत्त्या कथञ्चित्तद्बोधौपयिकत्वं बोध्यम् । मिश्रमतमुपन्यस्यति यत्त्विति । तदिति । अनतिरिक्तपदमित्यर्थः । तेन उक्तोदाहरणेन । पृथिव्यामिति । पृथिवीतरत्वावच्छिन्नभेदाभावस्यैव तेनाऽबोधनात् तथा चाऽनुमितिन्यूनविषयकत्वादन्यूनपदेनैव वारणं सम्भवतीति भावः । ननूक्तस्थलेपि तात्पर्यभ्रमेण पृथिव्यामितरभेदप्रकारकबोधः सम्भवत्येवेत्यत आह तात्पर्येति । तादृशबोधेति । अनुमित्यन्यूनविषयकबोधेत्यर्थः । अतिप्रसक्तत्वात् अवयवान्तरेपि सत्त्वात् । नन्ववयवान्तरे तत्सत्त्वेपि न क्षतिः, तस्यातिरिक्तविषयकबोधजनकतया अनतिरिक्तपदेनैव तद्वारणसम्भवादत आह न चेति । तावतापीति । तात्पर्यभ्रमेणापीत्यर्थः । तथात्वस्य अन्यूनविषयकबोधजनकत्वस्य सम्भवः । यत्रेत्यादेरिति । तात्पर्यभ्रमादप्येकदेशस्यैवानुमित्यन्यूनविषयकज्ञानजनकत्वं न तु समुदितोदाहरणस्य, तस्य च न्यायावयवार्थकेन सत्यन्तदलेनैव वारणं सम्भवतीति भावः । नायमादीति । तथा चान्यूनविषयकत्वाभावादेव निगमनव्युदासात्तद्वारणार्थमनतिरिक्तपदं व्यर्थमिति भावः । नन्वेवं न्यूनतातादवस्थ्यमत आह वाक्येति । उपनयनिगमनस्वरूपवाक्ययोरेकवाक्यताबलाद्विशिष्टवैशिष्ट्यान्वयबोधबलादेव विशिष्टस्य प्रकृतसाध्यविशिष्टप्रकृत-

हेतौ साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेऽपि साध्यवत्त्वभानात् पक्षे हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताबोधकस्योपनयस्य, यत्र च पक्षसाध्ययोस्ताद्रूप्येण दृष्टान्तत्वहेतुत्वा-

---

पक्षस्य लाभादित्यर्थः। तथा च विनाप्यनुषङ्गमबाधितत्वादिबोधकस्य पुनरुक्तत्वस्य लाभान्न न्यूनत्वमिति भावः। यत्र पक्षतावच्छेदकधर्मावच्छेदेन साध्यासिद्धिरुद्देश्या तत्र तदवच्छेदेनैव साध्यस्य पुनरुक्तत्वज्ञानमबाधितत्वादिग्रहोपयोगि, तच्च वाक्यैकवाक्यतया बोधान्न सम्भवति वन्हिव्याप्यधूमवत्पर्वतत्वावच्छेदेन वन्हिमत्त्वग्रहेऽपि पर्वतत्वावच्छेदेन वन्हिमत्त्वाग्रहादन्वयितावच्छेदकधर्मावच्छेदेनैवान्वयस्य व्युत्पन्नत्वादित्यनुषङ्गस्यैव सम्यक्त्वमित्यावेदयितुं यदि चेत्युक्तम्। सामान्यतः अधिकरणत्वप्रकारेण। उपनयस्येति। वारणादित्यग्रेऽन्वयः। न च पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वरूपमेवाऽन्यूनविषयकत्वं निरुच्य उपनयवारणसम्भवादिदमसङ्गतमिति वाच्यम्। यत्राधिकरणं प्रमेयं ज्ञेयत्वादित्यादिक्रमेण न्यायस्तत्रोपनयस्य पक्षतावच्छेदकविशिष्ट साध्यवैशिष्ट्यावगाहित्वनियमादधिकरणत्वावच्छेदेन प्रमेयत्वासिद्धेरुद्देश्यत्वादेव सिद्धसाधनायोगादिति भावः। अथानुमित्यन्यूनविषयत्वमेवाऽवश्यं पक्षविशेष्यकसाध्यप्रकारकत्वं वाच्यं तथा च तत्रैव पक्षनिष्ठमुख्यविशेष्यकत्वनिवेशेनोपनयवारणसम्भवात्तदर्थं विशेषणान्तरमयुक्तम्, स्वव्यापकसाध्यकत्वस्य साध्यवदन्यावृत्तित्वस्यैव वाऽनुमितिहेतुत्वमते साध्यसामानाधिकरण्यांशस्य उपनयाविषयतया तत्राऽतिव्याप्त्ययोगश्चेत्यत आह यत्र चेति। ताद्रूप्येणेति। पक्षतावच्छेदकसाध्यतावच्छेदकरूपाभ्यामित्यर्थः। तथा च पर्वतो वन्हिमान् धूमात् यो यो धूमवान् स स वन्हिमान् यथा पर्वतः इत्यादिस्थलीयोदाहरणस्य पर्वतो वन्हिमान् वन्हेरित्यादिस्थलीयस्य वन्हिव्याप्यवन्हिमांश्चायमित्युपनयस्य च वारणायाऽनतिरिक्तपदम्। तत्रापि यद्रूपेण पक्षत्वं तदन्यरूपेणैव दृष्टान्तमते निरुक्तोदाहरणेतिव्याप्त्यसम्भवादुपनयपर्यन्तानुसरणम्। यस्तु दृष्टान्तस्योदाहरणाघटकत्वपक्षे तत्रातिव्याप्त्यस-

भ्यामुपन्यासस्तादृशसिषाधयिषया च न्यायप्रयोगस्तत्रोदाहरणो-
पनययोः, यत्र वा पर्वतत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यतायामेत-
त्पर्वतत्वादिना दृष्टान्तस्योपन्यासस्तत्रोदाहरणस्य सत्यन्तस्य चा-



म्भवादुपनयपर्यन्तानुधावनमिति । तत्तुच्छम् । तथासत्यग्रे सामा-
नाधिकरण्येन दृष्टान्तमुपादाय उदाहरणेऽतिव्याप्तिप्रदर्शनस्य सन्द-
र्भविरोधापत्तेः । न च साध्यहेतुतुल्यन्याय एवाऽसम्भवीति कुतस्त-
दुपनयेऽतिव्याप्तिः उद्देश्यतावच्छेदकविधेययोरैक्येन यो यो वन्हि-
मान् स स वन्हिमानित्युदाहरणस्य निराकाङ्क्षत्वेनासम्भवादिति
वाच्यम् । यद्योगात्प्राथम्यलब्धस्य वन्हिव्यापकत्वविशिष्टवन्हेरेव
विधेयतया दण्डवान् रक्तदण्डवानित्यादेरिवोक्तोदाहरणस्यापि सा-
काङ्क्षत्वसम्भवात्, व्यापकत्वस्य तत्र संसर्गमर्यादया भानमतेपि
संयोगमात्रेण वन्हिमति व्यापकत्वविशिष्टसंयोगेन वन्हिमत्त्वान्वये
बाधकाभावात्, एकसम्बन्धेनैव उद्देश्यतावच्छेदस्य विधेयतायां नि-
राकाङ्क्षत्वादिति ध्येयम्।ननूक्तस्थले पक्षे साध्यसन्देहविरहान्न्याय-
प्रयोग एव नास्ति कुत्रोदाहरणातिव्याप्तिरत आह सिषाधयिषेति।ननु
सिषाधयिषया न्यायप्रयोगो विवादग्रस्त इत्यत आह यत्र वेति।पर्वत-
त्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे सिद्धसाधनापत्तेः पर्व-
तत्वावच्छेदेनेत्युक्तम्।यद्रूपेण पक्षत्वं तदन्यरूपेणैव दृष्टान्तवचनमिति
प्रवादरक्षार्थमेतत्पदम्।उदाहरणस्येति। यद्यपि यत्र पर्वतत्वावच्छेदेन
जातिमत्त्वस्योद्देश्यतायां जातिमत्पर्वतस्य तादात्म्येन हेतुत्वं तत्रा-
वयवमात्रेतिव्याप्त्यसम्भवादुदाहरणमात्रोक्तिरङ्गता, तथापि पक्षमु-
ख्यविशेष्यकसाध्यवत्तावगाहित्वरूपस्याऽन्यूनविषयकत्वस्य प्रवेशोऽ-
वयवान्तरातिव्याप्त्यसम्भवात्तन्मात्रानुसरणमिति भावः। ननु यन्म-
ते दृष्टान्तमनन्तर्भाव्यैवोदाहरणशरीरं तन्मते नोदाहरणेऽतिव्याप्तिः
सम्भवतीत्यत आह सत्यन्तस्य चेति । ननूक्तदृष्टान्तस्य पर्वतत्वसा-
मानाधिकरण्येन वन्हिमत्त्वबोधकत्वेप्यनुमितिविषयीभूतस्य पर्वत-
त्वावच्छेदेन वन्हिमत्त्वस्याऽबोधकत्वादन्यूनपदेनैव तद्वारणं सम्भ-
वतीत्यत उक्तं सत्यन्तस्य चेत्यपि वदन्ति । परमेश्वरो देव.सौदामिनी

वयत्वाघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्यायमादिनिगमनान्तभागस्य वारणाय तत् । यद्यपि सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताप्रसिद्धिः, न च कोऽप्यप्रसिद्ध्या प्रमेयं न वेति विप्रतिपत्तेः

---

द्रव्यमित्यादि प्रतिज्ञैकदेशस्य मेश्वरो देवः दामिनी द्रव्यमित्यादेरपि प्रकृतानुमितिसमानाकारबोधजनकत्वात्तत्रातिव्याप्तिरत उक्तमवयवाघटकेति। अवयवाघटकत्वे सति यन्न्यायान्तर्गतं तत्त्वे सतीत्यर्थः। हेत्वन्तस्य प्रतिज्ञादिहेत्वन्तभागस्य ।न्यायस्य पूर्वप्रतीके व्यावृत्तिमुक्त्वा परप्रतीकेऽपि तामाह अयमादीति । हेत्वघटितत्वोक्त्यापि हेत्वन्तभागस्य वारणसम्भवादाह अयमादीत्यपि कश्चित् । न चोपनयादिनिगमनान्तभागेऽप्यतिव्याप्तिसम्भवादयमादिपर्यन्तानुसरणं व्यर्थमिति वाच्यम् । पक्षतावच्छेदकमात्रावच्छिन्नविशेष्यकसाध्यप्रकारत्वरूपान्यूनविषयकत्वविवक्षयापि तद्वारणसम्भवादिति भावः। तत् अनतिरिक्तपदम् । न च साध्यतावच्छेदकधर्ममात्रावच्छिन्नविधेयताकत्वरूपमन्यूनविषयकत्वं निरुच्यैव प्रतिज्ञादिहेत्वन्तभागादेर्वारणसम्भवादनतिरिक्तपदं व्यर्थं तत्र धूमज्ञानज्ञाप्यवन्हित्वावच्छिन्नस्यैव विधेयत्वादिति वाच्यम् । विशिष्टवैशिष्ट्यविषयतातिरिक्तशाब्दधीविषयत्वस्याऽनङ्गीकारात्ताद्दशविषयतायाः प्रकृतेपि सत्त्वादनतिरिक्तपदसार्थकत्वार्थमेव तावद्दूराविवक्षणाच्च । वस्तुतः प्रतिज्ञासहकारेण हेत्ववयवस्य उपनयसहकारेण निगमनस्य अनुमित्यन्यूनविषयकत्वात् सत्यन्तस्यावयवार्थकत्वेपि हेतुनिगमनयोर्वारणार्थमेवाऽनतिरिक्तपदं देयम्. न ह्यन्यूनविषयकशाब्दत्वावच्छिन्नजन्यतानिरूपितं जनकत्वं निरुक्तौ निविष्टं येन केवले हेतौ निगमने चातिव्याप्तिर्न स्यादिति युक्तमुत्पश्यामः। यद्यपीति। सर्वस्य पक्षत्वे व्यतिरेकिणः साध्यस्यांशतो बाधितत्वात्तत्साध्यको न सन्न्यायः इति केवलान्वयिनः साध्यतयोल्लेखः । अभिधेयपदं सम्पातायातम् । सर्वत्वावच्छिन्नस्यैव पक्षत्वे प्रकृते दोषसम्भवादतिरिक्तेति । प्रकृतानुमितिविषयतातिरिक्तेत्यर्थः । तद्विषयतायाः केवलान्वयित्वादिति भावः। न चेति । वाच्यमित्यग्रेऽन्वयः । कोटीति।

संशयस्य चायोगान्न तादृशी प्रतिज्ञा प्रकृतानुमितिविषयतासम-व्याप्तविषयताकत्वं प्रकृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम् । सकलाभिधेयनिष्ठधर्मवत्सकलाभिधेय-निष्ठात्यन्ताभावाप्रतियोग्याकाशाभाववद्वा इदं द्रव्यमित्यादौ वि-शिष्टपक्षबोधके उपनयेऽतिव्याप्तेः । तथापि प्रकृतपक्षे प्रकृतसाध्य-

---

प्रमेयत्वाभावरूपेत्यादिः । सन्दिग्ध एव न्यायप्रवृत्तेर्विप्रतिपत्तेरना-वश्यकत्वादाह संशयस्य चेति । सन्दिग्धसाध्यके धर्मिण्येव न्या-यप्रवृत्तेरिति भावः । ननु खण्डशः प्रत्येकपदार्थप्रसिद्ध्यैव सर्वं प्रमेयं न वा इत्याकारकसंशयः सम्भवत्येव सर्वसदृशः पर्वतो वह्निमान् इत्यादिप्रतिज्ञान्तरेऽव्याप्तितादवस्थ्यञ्च तत्र कोऽप्यप्रसिद्धेर्वक्तुम-शक्यत्वादत आह प्रकृतेति । प्रकृतानुमितिविषयतासमव्यापकवि-षयताकत्वमित्यर्थः । सामानाधिकरण्यांशस्य वैयर्थ्येनाऽप्रविष्टत्वा-दिति ध्येयम् । सर्वपक्षोपनयमात्रेऽतिव्याप्तिरतः कल्पान्तरमाह प्रकृ-तानुमितीति । वक्तव्यमित्यस्यान्यूनानतिरिक्तदलेनेत्यादिः । सकला-भिधेयवृत्तिधर्मवदिदं द्रव्यमिति योजना । अभिधेयेति सम्पाताया-तम् । संशयकोटिप्रसिद्ध्यर्थं द्रव्यत्वस्य व्यतिरेकिणः साध्यतयोल्ले-खः । अत्रानुमिताविव उपनयेऽपि वस्तुमात्रस्यैव प्रकारत्वात्तत्राति-व्याप्तिरिति भावः । ननु निरवच्छिन्नप्रकृतानुमितिप्रकारत्वसमव्या-पकनिरवच्छिन्नप्रकारताकत्वं वाच्यं तथा चानुमितौ स्वरूपतो-ऽप्रकाराणामभावत्वप्रतियोगित्वादीनामुक्तस्थलीयोपनये व्याप्तिघटक-तया स्वरूपतः प्रकारत्वान्न तत्रातिव्याप्तिरत आह सकलाभिधेय-निष्ठेति । तथा च सकलाभिधेयनिष्ठाभावप्रतियोग्याकाशाभाववादिदं द्रव्यमाकाशादित्यादितादात्म्यसम्बन्धावच्छिन्नहेतुकस्थलीयोपनयेऽ-तिव्याप्तिः तत्राऽनुमितावुपनये च स्वरूपतः प्रकाराणां तुल्यत्वादिति भावः । समव्याप्तत्वं विहाय समसंख्यप्रकारत्वोक्तौ न कोपि दोष इति ध्येयम् । प्रकृतपक्ष इत्यादि । पक्षतावच्छेदकधर्मावच्छिन्न-विशेष्यतानिरूपितसाध्यतावच्छेदकधर्मावच्छिन्नप्रकारकत्वमित्यर्थः ।

वैशिष्ट्यविषयत्वं तदन्यूनविषयत्वम् । प्रकृतपञ्चम्यर्थपक्षकप्रति-
ज्ञादिस्थले तु पक्षे प्रकृतसर्थस्य वैशिष्ट्यबोधको हेतुर्न तु प्रकृतसा-

---

तदन्यूनविषयकत्वं प्रकृतानुमित्यन्यूनविषयकत्वम् । अत्र यदि नि-
रुक्तविषयताविलक्षणविषयताशून्यत्वरूपमनतिरिक्तविषयकत्वं नि-
वेश्यते, तदा पक्षदिशि प्रकृतत्वानुक्तौ वन्हिमद्द्रव्यं तेजस्वी पर्वतो
वन्हिमान् वन्हिमद्द्रव्यादित्यादिस्थलीये तादात्म्येन हेत्ववयवेऽति-
व्याप्तिः तस्यापि द्रव्यत्वेनैव पक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वात् ।
यदि तु प्रकृतव्याप्त्यविषयकत्वरूपमेवाऽनतिरिक्तविषयकत्वं निवे-
श्यते, तदा पर्वतो वन्हिमान् वन्हिमद्द्रव्यादित्यादिस्थलीयहेतावति-
व्याप्तिवारणार्थं तद्बोध्यम् । साध्यीयप्रकृतत्वस्य व्यावृत्तिं स्वय-
मेवाह प्रकृतपञ्चम्यर्थेति । ज्ञापकत्वादिरूपो यः पञ्चम्यर्थः त-
त्पक्षकेत्यर्थः । तथा च हेतुत्वं वाच्यवत् प्रमेयत्वादित्यादौ हे-
त्ववयवस्य पञ्चम्यर्थहेतुत्वे प्रकृतपक्षे वाच्यविशेषे मेयत्व-
स्वरूपसाध्यस्य वैशिष्ट्यावगाहित्वेऽपि साध्यतावच्छेदकीभूतवा-
च्यत्वप्रकारेणैव तद्वैशिष्ट्यानवगाहनान्नातिव्याप्तिः, हेतुत्वं वा-
च्यवत् वाच्यादित्यादिकन्तु न न्यायः सिद्धसाधनादिति
भावः । इदञ्च व्याप्त्यविषयत्वरूपमनतिरिक्तविषयकत्वं लक्षणं प्र-
विष्टमित्यभिप्रेत्योक्तम् । प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिता-
विलक्षणविषयताशून्यत्वरूपस्य तस्य प्रवेशे तु ज्ञापकं प्रमेयत्वात्
वाच्यत्ववन्निष्ठधर्मवत् प्रमेयत्वादित्यादौ पर्वतो वन्हिमत्पर्वतात्ते-
जस्वी वन्हिमत्पर्वतादित्यादौ च हेत्ववयवस्य वारणाय प्रकृतत्वं
वाच्यमिति ध्येयम् । अत्र च प्रकृतसाध्यवैशिष्ट्यविषयकत्वं सा-
ध्यतावच्छेदकधर्मावच्छिन्नविधेयताकत्वपर्यवसितं ग्राह्यम् । तेन न-
व्यमते ज्ञानज्ञाप्यत्वस्यैव हेतुपञ्चम्यर्थत्वाद्विषयत्वं धूमज्ञानजन्यज्ञा-
नीयं धूमादित्यादौ हेत्ववयवस्य प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्याव-
गाहिबोधजनकत्वेऽपि न तत्रातिव्याप्तिः । ज्ञानज्ञाप्यत्वरूपपञ्चम्यर्थै-
कदेशस्य ज्ञानजन्यज्ञानस्य तदर्थविषयतायां विधेयत्वेनाऽनन्वयात्
वृत्तिद्वयोपस्थाप्ययोरेवोद्देश्यविधेयभावेनान्वयस्य व्युत्पन्नत्वादिति

ध्यस्य । तादृशविषयताविलक्षणविषयताशून्यत्वं प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्यविषयकत्वं वा तदनतिरिक्तविषयत्वम् । वन्हिव्याप्यालोकवत्सधर्मा पर्वतो वन्हिमान् धूमात् इन्धनव्या-

---

वदन्ति । तादृशेति । प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयताविलक्षणविषयताशून्यत्वमर्थः । तादृशविषयताविलक्षणविषयत्वमत्र न तादृशविषयताभिन्नत्वं सर्वस्यैव प्रतिज्ञाजन्यबोधस्य तादृशविशिष्टविषयताभिन्नसाध्यादिप्रत्येकविषयतावत्त्वेन प्रतिज्ञामात्र एवाऽसम्भवापत्तेः । किन्तु तादृशविषयताव्यापकत्वम्, तथा च तत्र साध्यपक्षयोः प्रकृतत्वानुक्तौ प्रतिज्ञायामसम्भवः स्यात् तज्जन्यबोधविषयतामात्रस्यैव सामान्यतः साध्यवत्पक्षावगाहित्वाव्यापकत्वात् अतस्तदुपात्तम् । ननु ज्ञानभेदेन स्वरूपसम्बन्धात्मिकानां प्रतियोगिताव्यक्तीनां भेदात् प्रतिज्ञाजन्यबोधानामपि न तादृशविषयत्वाव्यापकविषयताशून्यत्वमित्यसम्भवः समानाकारज्ञानीयविषयतानामैक्यस्य विवादग्रस्तत्वात् अतः प्रकारान्तरमाह प्रकृतहेतुकेति । अन्वयव्याप्तित्वेन प्रवेशे व्यतिरेकिनिगमनेऽतिव्याप्तिरतः सिद्ध्यौपयिकान्तम् । प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतसाध्यानुमितित्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतविषयिताशून्यत्वमर्थः । तेन वन्हिव्याप्यधूमवन्निरूपितसंयोगेन पर्वते वन्हेः साध्यतायां पर्वतो वन्हिमान् धूमादित्यादिस्थलीयप्रतिज्ञायां सम्बन्धमर्यादया वन्हिधूमयोर्व्याप्त्यवगाहित्वेपि न तत्राऽव्याप्तिः । यद्यपि विवक्षेयं न्यायावयवत्वगर्भनिरुक्तावेव अन्यथा तद्दानेपि हेत्वन्तभागेतिव्याप्तिरिति वक्ष्यते तथा च निगमनस्थयिमादिपदाघटितत्वकल्पने अन्यूनपदेनैव तद्वारणसम्भवः, तथापि अन्वयव्याप्तीनामपि नानात्वादेकोपादानेऽन्यामन्तर्भाव्य पक्षतावच्छेदकसामानाधिकरण्येन दृष्टान्तवत्युदाहरणेऽतिव्याप्तिवारणार्थमुक्तानुगमस्यावश्यकत्वादिति भावः । प्रकृतहेतुप्रवेशस्य फलमाह वन्हिव्याप्येति । वन्हिव्याप्यालोकवत्पर्वतत्वेन पक्षत्वे तद्रूपावच्छिन्ने वन्हेः संशयासम्भवान्न्याय एव नावतरतीत्यतः सधर्मेति । यत्तु व-

व्यधूमवान् पर्वतो वन्हिमान् धूमादित्यादौ तस्याः संग्रहाय प्रकृ-
तहेतुसाध्ययोरुपादानम् । वन्हिव्याप्यधूमवान् पर्वतो वन्हिमान्

---

न्हिव्याप्यालोकवत्तया गृहीते पर्वते वन्हिसाध्यकहेत्वाकाङ्क्षा
न सम्भवत्यतः सधर्मपदमिति । तत्तुच्छम् । पर्वतधर्मि-
कवन्हिसिद्ध्यौपयिकहेत्वाकाङ्क्षानुपपत्तावपि वन्हिव्याप्यालोकवत्प-
र्वतत्वावच्छिन्नधर्मिकवन्ह्यनुमित्युपयुक्तहेत्वाकाङ्क्षायां बाधकाभावा-
त्, प्रकृतपक्षे प्रकृतसाध्यवत्त्वं कुत इत्याकाङ्क्षयैव हेतुप्रयोगात् इति ।
प्रकृतत्वेन साध्यप्रवेशस्य फलमाह इन्धनव्याप्येति । तस्याः प्रति-
ज्ञायाः । इदन्तु बोध्यम् । सत्यन्तस्य न्यायावयवार्थकत्वपक्ष एवायं
कल्पोऽभिहितः, तेन अवयवाघटकन्यायान्तर्गतस्य हेत्वन्तभागस्य प्र-
कृतव्याप्त्यविषयकत्वेपि न तत्रातिव्याप्तिः । न चैवमनतिरिक्तपदवै-
यर्थ्यम् अन्यूनविषयकत्वाभावेनैवावयवान्तरव्युदासादिति वाच्यम् ।
पर्वतत्वावच्छेदेन वन्हेः साध्यतायामेतत्पर्वतत्वेन दृष्टान्तवत्युदाह-
रणेतिव्याप्तिवारकत्वात् । न च तथापि पर्वतो वन्हिमान् वन्हिम-
त्पर्वतादित्यादौ हेत्ववयवेतिव्याप्तिः तस्यापि व्याप्त्यविषयकत्वे-
नाऽनतिरिक्तविषयकत्वात् पक्षे साध्यवैशिष्ट्यावगाहित्वेनाऽन्यूनवि-
षयकत्वाच्च, पर्वतत्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वादेव सिद्धसा-
धनासम्भवादिति वाच्यम् । पक्षमुख्यविशेष्यकसाध्यवैशिष्ट्याव-
गाहित्वरूपान्यूनविषयकत्वाविवक्षयैव तद्वारणात् पञ्चम्यर्थहेतुत्व-
स्यैव तन्मुख्यविशेष्यत्वादिति दिक् । केचित्तु सत्यन्तस्यावयवाघ-
टकन्यायान्तर्गतत्वार्थकत्वेपि हेत्वन्तभागेतिव्याप्तिः तत्रावयवाघटक
इत्यत्रावयवोऽघटको यस्य अवयवस्याऽघटकमित्येकत्र समासद्वयाश्रये-
णाऽवयवद्वयाघटितत्वे सत्यवयवाघटकत्वस्य लाभात् प्रथमेन हेत्व-
न्तस्य द्वितीयेन च चित्रभानुः प्रमेय इत्यादिप्रतिज्ञैकदेशे भानुः प्र-
मेय इत्यादावतिव्याप्तिवारणादित्याहुः । नन्वेवं वह्निव्याप्यधूमवत्प-
र्वतो वह्निमान् धूमादित्यादौ प्रतिज्ञायामव्याप्तिः स्यात् प्रकृतव्याप्ति-
विषयकत्वात्, पक्षतावच्छेदकीभूतव्याप्तिभिन्नाया एव व्याप्तेर्विधेय-
कोटिनिविष्टतया उपनयस्योद्देश्यतावच्छेदकविधेययोरैक्यासम्भवेन
निराकाङ्क्षत्वायोगादत आह वह्निव्याप्येति । संयोगेन साध्यतास्थ-

धूमात् सत्तादिव्याप्यद्रव्यत्ववदिदं सत्तादिमद्द्रव्यत्वादित्यादिस्तु न प्रयोगः, विशिष्टपक्षोपस्थापकादेव तादृशव्याप्तिप्रतीतावाकाङ्क्षाविरहेणोदाहरणानुत्थानात्, अन्यथातिप्रसङ्गात् । अत एव नैकदोभयव्याप्त्युपन्यासोऽपि । यदि च मैत्रः पचति अयं गौरित्यादेरेव प्रतिज्ञाया यथोपवर्णितविशिष्टज्ञानजनकत्वं तादात्म्येन गोः साध्यत्वात् गोत्वत्वाद्यनुपस्थित्या गोत्वादेः साध्यत्वानुपपत्तेः

---

लेऽव्याप्तिमुक्त्वा समवायेन साध्यतास्थले तामाह सत्तादीति । अन्यथा विनाप्याकाङ्क्षामभिधाने । अतिप्रसङ्गादिति । हेत्ववयवद्वयस्याप्युद्भावनप्रसङ्गादित्यर्थः । अत एव आकाङ्क्षाविरहादेव । नैकदेति । समयबन्धं विनेत्यादिः । तेनाऽन्वयव्यतिरेकोभयव्याप्तिबोधकोदाहरणाकाङ्क्षाप्रयोजकावयवत्वेन मणिकृता वक्ष्यमाणस्य नासङ्गतिः, समयबन्धानुरोधेन व्याप्तिद्वयबोधकोदाहरणसम्भवादिति ध्येयम् । उभयव्याप्तीत्यत्र व्याप्तिपदमेकजातीयव्याप्तिपरमतो नाऽसङ्गतिरिति परमार्थः । यदि मीमांसकमतेनैव मया पक्षे साध्यं साधनीयमित्यादिसमयबन्धवशाद् धूमलिङ्गान्वयव्याप्तिं पक्षतावच्छेदककोटौ निवेश्य व्यतिरेकव्याप्त्या धूमहेतोरुदाहरणोत्थानसम्भवस्तदा तत्रत्यप्रतिज्ञायामव्याप्तिरिति तु चिन्तनीयम् । यदि चेति । सूक्ष्ममीक्ष्यत इत्यन्वयः । खलेकपोतन्यायेनैव शाब्दधीस्वीकारे पचतीत्यादेः पाककृतित्वावच्छिन्नसाध्यबोधकत्वासम्भवात् वैयाकरणमते पाककर्तुरेव तादात्म्यसम्बन्धेन तत्र साध्यत्वाच्चाह अयं गौरिति । आदिना घटो नेतराणि इत्यादेः सङ्ग्रहः । ननु व्युत्पत्तिविरोधादयं गौरित्यादिप्रतिज्ञायाः पक्षे साध्यीभूतगोत्वविशिष्टज्ञानजनकत्वात्कथं तत्रोपदर्शितज्ञानजनकत्वमत आह तादात्म्येनेति । गोत्वादेः साध्यतायां स्वयं बाधकमाह गोत्वत्वादीति । अनुपस्थित्येति । गवादिपदादनुपस्थित्येत्यर्थः । तथा च साध्यतावच्छेदकरूपेण साध्यवत्त्वबोधकस्यैव वाक्यस्य प्रतिज्ञात्वान्न तस्य गोत्वसाध्यकप्रतिज्ञात्वसम्भवः इति । ननु शुद्धगोत्वादेः साध्यतायां निरवच्छिन्नतद्बाधकवाक्यस्यैव प्रतिज्ञात्वं स्थगयतीत्यत आह पदा

पदार्थतावच्छेदकजातौ हेत्वर्थान्वयायोगाच्च, वन्हिमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वन्हेः संयोगात्मकः सम्बन्धो भासते तथैव वन्हिव्याप्यधूमवानित्याद्युपनयसङ्गमात् शाब्दभाने तु वन्हिमतोऽभेद एवं भेदे साध्ये भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्ममीक्षते, तदा यादृशपक्षसाध्यिकाः पक्षे यादृशयादृशविशि-

---

र्थतावच्छेदकेति। घटादन्य इत्यादावेकदेशेपि पञ्चम्यर्थान्वयाज्जातावित्युक्तम्। ननु पर्वतो वह्निमानित्यादिस्थलेऽनुमितौ तादात्म्येन वह्निमानेव साध्यमित्यत आह तथैवेति। वन्हौ साध्यतायामित्यर्थः। अन्यथा वन्हिमद्व्याप्यवांश्चायमित्येवोपनयः स्यादिति भावः। अभेद इति। भासत इति पूर्वेणान्वयः। तथा च वन्ह्यादिसाध्यकप्रतिज्ञाया वन्ह्यादिसाध्यकानुमित्यन्यूनविषयकज्ञानाजनकत्वात्तत्राव्याप्तिरिति भावः। ननु साध्यपक्षभेदेन प्रतिज्ञाया भिन्नत्वाद्वन्ह्यादिसाध्यकस्थले साध्यवद्भेदबोधकत्वमेवाऽन्यूनविषकत्वं वाच्यमत आह एवमिति। तथा च भिद्यत इत्यत्र भेदाश्रयत्वप्रकारकस्य भिन्नमित्यत्र च तादात्म्येन भेदाश्रयप्रकारकस्य बोधस्य जनिकायां भेदसाध्यकप्रतिज्ञायामेकविधबोधस्यःउपादानेऽन्यादृशबोधजनिकायां तस्यामव्याप्तिरिति भावः। यादृशपक्षसाध्यकेति। बहुवचनं तथाविधयावत्प्रतिज्ञालाभार्थम्। अन्यथा पृथिवीपक्षकेतरभेदसाध्यकप्रतिज्ञायास्तादृशप्रतिज्ञास्थलीयकतिपयबोधानिवर्तनीयसंशयनिवर्तकत्वेन तत्राव्याप्तिप्रसङ्गात्। एवञ्च यत्पक्षिका यत्साध्यिका यावत्यः प्रतिज्ञाः प्रकृतपक्षे यादृशयादृशबोधजनकत्वेन सम्प्रदायसिद्धा इत्युक्तावसम्भवः स्यादतो यादृशपक्षसाध्यकेति यादृशत्वेन पक्षसाध्ययोर्द्वयोरुपादानमिति ध्येयम्। पक्ष इति। प्रकृतपक्षतावच्छेदकविशिष्टधर्मिणीत्यर्थः। तेन रूपान्तरावच्छिन्ने पक्ष एव साध्यस्य यादृशो बोधस्तदनिवर्तनीयसंशयनिवर्तकत्वेपि प्रतिज्ञासु नाऽसम्भवः। वस्तुतः पक्षतावच्छेदकविशिष्ट इत्यपहायात्रापि यादृशधर्मावच्छिन्नधर्मिणीत्येव वक्तुमुचितम्, अन्यथा संयोगेन वन्ह्यवच्छिन्न एव पर्वते द्रव्यत्वस्य साध्यतायां वन्हिमत्पर्वतो द्रव्यमित्यादिप्रतिज्ञायां वन्हि-

मद्भिन्न एव द्रव्यत्वबोधजनकत्वेनाऽव्याप्तेरिति ध्येयम् । तादृशानामिति । प्रकृतपक्षविशेष्यकतद्धर्मावच्छिन्नविधेयताकबोधानामित्यर्थः । तावद्बोधनिवर्त्यत्वं न कस्यापि संशयस्य अत उक्तमन्यतमेनेति । अपिशब्दः सामान्याभावलाभार्थः । तेन कृतेः साध्यतायां कृतिप्रकारकबोधानिवर्त्यस्य कर्तृसंशयस्य निवर्तको यः कर्तृप्रकारको बोधस्तज्जनकत्वेपि चैत्रः कर्ता इति प्रतिज्ञायां नाव्याप्तिः । अनिवर्तकेत्यन्तेन अनतिरिक्तविषयकत्वं व्युत्पादितम् । तत्प्रयोजनञ्च हेत्वन्तभागस्य वारणमित्युक्तमेव, तावद्बोधानिवर्त्यो यो वह्निर्धूमज्ञानज्ञाप्यो न वा इति संशयस्तन्निवर्तकत्वात् हेत्वन्तभागस्य । यद्यपि हेत्वन्तभागजनितस्य पर्वतो धूमज्ञानज्ञाप्यवन्हिमानित्याकारकबोधस्यापि तावदन्यतमबोधान्तर्गतत्वात् वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयस्यापि तावदन्यतमबोधनिवर्त्यत्वादतिव्याप्तितादवस्थ्यम्, तथापि केवलप्रतिज्ञाव्यक्तीनां यादृशयादृशशाब्दधीजनकत्वं तादृशतादृशशाब्दसामान्यं यत्र यत्र प्रतिबन्धकं तदन्यसंशयानिवर्तकत्वं विवक्षितम् । तथा च वह्निर्धूमज्ञानज्ञाप्यो न वेति संशयस्य केवलप्रतिज्ञाजन्यबोधेनाऽप्रतिबन्धान्न हेत्वन्तभागेऽतिप्रसङ्गः । इदन्तु चिन्त्यते । यद्यप्येवमपि संशयपदं व्यर्थं प्रकृतपक्षसाध्यकप्रतिज्ञाव्यक्तीनां यादृशयादृशशाब्दधीजनकत्वं तादृशतादृशशाब्दसामान्यं यत्र यत्र प्रतिबन्धकं तदन्यानिवर्तकत्वमात्रस्यैव सम्यक्त्वात् । न चैतत्कालीनं वह्निमत्तया पर्वतस्य शाब्दज्ञानं जायतामितीच्छाया अपि प्रतिज्ञाजन्यशाब्दसामान्याप्रतिबध्यत्वात्तन्निवर्तकं यदेतत्कालीनं वह्निमत्तया पर्वतस्य शाब्दज्ञानं तज्जनिकायामिदानीन्तनप्रतिज्ञायामव्याप्तिवारवारणार्थं संशयपदमिति वाच्यम् । ज्ञानपदेनापि उक्तेच्छामादायाव्याप्तिवारणसम्भवे संशयत्वप्रवेशस्य तथाप्यनौचित्यात् । किञ्चैतत्कालीनस्य प्रतिज्ञाजन्यतादृशशाब्दस्य निरुक्तेच्छानिवर्तकत्वेपि तदनिवर्तकस्य कालान्तरोत्पन्नस्यैव वह्निमत्तया पर्वते शाब्दस्य स्वरूपयोग्यतया इदानीन्तनप्रतिज्ञायां लक्षणसम्भवान्नाव्याप्तिशङ्कापि, यत्र चेत्यादिना ग्रन्थकृतैवाग्रे तादृशशाब्दस्वरूपयोग्यताया निवेशनीयत्वात् । एतेन प्रतिज्ञाजन्यशाब्दमात्रस्य न समानाकारशाब्दं प्रति विरोधित्वं बुभुत्सासत्त्वे शाब्दज्ञानान्तरोत्पादेन बुभुत्साविरहविशिष्टसमानाकारशाब्दत्वेनैव शाब्दधीविरोधित्वात्, तथा च प्रतिज्ञाजन्य-

ष्टार्थबोधिकाः प्रतिज्ञाः सम्प्रदायप्रसिद्धाः तादृशानां बोधानाम-
न्यतमेनाप्यनिवर्त्यस्य संशयस्यानिवर्त्तको यस्तावद्बोधानामन्य-
तमो बोधस्तज्जनकत्वं वक्तव्यम्। एवञ्च तादात्म्येन गवि साध्ये

---

शाब्दसामान्यं यत्र यत्र प्रतिबन्धकं तदन्यस्य समानाकारशाब्दस्यैव
निवर्तकत्वं प्रतिज्ञाजन्यबोधस्येत्यसम्भवापत्तिरतः संशयपदमित्य-
पास्तम्। तत्रापि बुभुत्साकालीनशाब्दबोधस्यैव तादृशशाब्दसामा-
न्यानिवर्तनीयबोधानिवर्तकतया तत्स्वरूपयोग्यतयैव प्रतिज्ञामात्रे ल-
क्षणमसम्भवादिति दिक्। धूमादालोकवान्पर्वतो वह्निमान् धूमादि-
त्यादौ हेत्ववयवस्य वारणाय लक्षणोपात्तस्यान्यूनविषयकत्वदलस्य
निष्कर्षमाह तावतां बोधानां चान्यतमबोधेति। वक्तव्यमिति। अ-
न्यूनानतिरिक्तविषयकत्वदलेनेत्यादिः। अत्र कल्पे सत्यन्तस्य न्या-
यान्तर्गतत्वमेवार्थो न तु न्यायावयवार्थः, तावदन्यतमबोधानिवर्त्य-
संशयानिवर्तकत्वदलस्य वैयर्थ्यापत्तेः। अवयवान्तरस्य तावद्बोधा-
न्यतमबोधजनकत्वविरहाद्विशेष्यदलेनैव वारणसम्भवात्। न च
यत्रानुमित्सया पर्वतो वह्निमान् वह्नेरित्यादिकन्यायस्तत्र उपनयादि-
वारकतया निवर्तकान्तसार्थक्यम्, अनुमित्सया न्यायप्रयोगानभ्युप-
गमात्। अन्यथा हेतुत्वं प्रमेयवत्प्रमेयादित्यादौ हेत्ववयवातिव्या-
प्तेर्दुर्वारतापत्तेरिति ध्येयम्। यादृशतादृशत्वयोरनुगतयोरभावाद्वि-
शेषतः पर्यवसन्नं लक्षणमाह एवञ्चेति। पक्षे इदन्त्वादिविशिष्टे।
गवाभेदस्येति। अभेदसम्बन्धेन गौरित्यर्थः। बोधाः, विशिष्य वक्त-
व्या इत्यग्रेणान्वयः। तथाच तादात्म्येन गोप्रकारकेदंधर्मिकशाब्द-
सामान्यानिवर्तनीयसंशयानिवर्तकबोधजनकत्वे सत्यवयवाघटक-
प्रकृतन्यायान्तर्गतत्वं प्रकृतन्यायावयवत्वं वा तादात्म्येन गोसाध्य-
केदंपक्षकप्रतिज्ञात्वं निर्वाच्यम्। इदंधर्मिकतादृशगोप्रकारकत्व-
पर्यवसितमन्यूनविषयकत्वं तु बोधस्य न देयं विशेषणं वैयर्थ्यात्
धूमादालोकवान्पर्वतो वह्निमान् धूमादित्यादिस्थलीयनिरुक्तावेव हे-
तुवारणार्थं तस्य प्रवेश्यत्वात्। न चायं गौरितिप्रतिज्ञाजन्यबोधस्य
तादृशशाब्दसामान्यानिवर्तनीयेदन्त्वधर्मिकैकत्वसंशयं प्रति निवर्त-

पक्षे गवाभेदस्य संयोगेन समवायेन वा वन्हौ वन्हिमदभेदस्य समवायेन पाकस्य कृतौ पाककृतिमत्त्वस्य पाककर्त्रभेदस्य विशेषणतयेतरेभ्यो भेदे इतरभेदवत्त्ववत्त्वस्येतरान्याभेदस्येतरभेदवत्त्वस्ये-

---

कत्वादव्याप्तिरिति वाच्यम् । एकत्वाविषयकप्रतिज्ञाजन्यबोधमादाय लक्षणसङ्गमादिति भावः । समवायेनेति । संयोगान्यवृत्तिनियामकसम्बन्धेनेत्यर्थः । तेन कालिकसम्बन्धेन वह्नेः साध्यत्वे कालो वह्निमानितिप्रतिज्ञाया अपि वह्निमदभेदमादायैव निर्वाच्यत्वान्न न्यूनतेति ध्येयम् । वह्नाविति । साध्य इति पूर्वेणान्वयः । एवमग्रेपि । वह्निमदभेदस्येति । तथा च पर्वतधर्मिकवह्निमत्प्रकारकशाब्दसामान्यानिवर्तनीयसंशयानिवर्तकबोधजनकत्वमन्तर्भाव्यैव संयोगादिसम्बन्धेन वह्निसाध्यकपर्वतपक्षकप्रतिज्ञात्वं निर्वाच्यम् । न च तादात्म्येन वह्निमत्साध्यकप्रतिज्ञायामतिव्याप्तिः तत्रापि पर्वतो वह्निमानित्येव प्रतिज्ञाशरीरत्वादिति वाच्यम् । प्रकृतन्यायावयवार्थकेन मूलोक्तसत्यन्तदलेनैव तद्वारणादिति भावः । पाककृतेः साध्यतायां चैत्रः पचति चैत्रः पक्तेत्येवं प्रतिज्ञाद्वैविध्याद्बोधद्वयं दर्शयति समवायेत्यादिना । कृतिमत्त्वस्येति । चैत्रः पचतीत्यत्र आख्यातार्थकृतेरेव चैत्रे प्रकारत्वात् । पाककर्त्रभेदस्येति । चैत्रः पक्तेत्यत्र कृदर्थस्य कर्तुरेव चैत्रे तादात्म्येन प्रकारत्वात् । तथा च चैत्रधर्मिको यः पाककृतिप्रकारको यश्च तादात्म्येन पक्तृप्रकारको बोधस्तदन्यतरानिवर्तनीयसंशयानिवर्तकतदन्यतरबोधजनकत्वमन्तर्भाव्य चैत्रपक्षकपाककृतिसाध्यकप्रतिज्ञात्वं वाच्यमिति भावः । अत्र चैत्रः पाककृतिमानित्येवं कृतीयस्यापि प्रतिज्ञाप्रकारस्यासम्भवाद्बोधद्वयोपादानमसङ्गतम् । न च तादृशवाक्यस्य साध्यतावच्छेदकीभूतपाककृतित्वेन साध्यस्यानुपस्थापकत्वान्न पाककृतिसाध्यकप्रतिज्ञात्वसम्भवः पाकपदस्य पाकसम्बन्धिनि लाक्षणिकत्वादिति वाच्यम् । तादृूप्येणानुपस्थापकत्वेपि तदवच्छिन्नसाध्यकप्रतिज्ञात्वे बाधकाभावात् । अन्यथा प्रतियोगितासम्बन्धेन इतरतो भेदस्य साध्यतायामितरभिन्नेति प्रतिज्ञायाः पश्चादुपदर्शनानुपपत्तेः तत्रापि इतरपदस्येतरप्रति-

रभिन्नाभेदस्य च बोधा विशिष्य वक्तव्या इति दिक्। तावद्बोधानिवर्त्त्यसंशयानिवर्त्तकतावद्बोधनिवर्त्त्ययावत्संशयानिवर्त्तकबोध-

---

यौगिके लाक्षणिकत्वादिति चिन्तनीयम्। पृथिव्यादावितरभेदस्य साध्यतायां चतुर्विधस्यैव प्रतिज्ञाजन्यबोधस्य सम्भवात्तत्रान्यतमत्वेनोपादेया इत्याह विशेषणतयेत्यादिना। इतरभेदवत्त्ववत्त्वस्येति। पृथिवी इतराद्भिद्यते इत्यत्राख्यातार्थस्य आश्रयत्वस्यैव पृथिव्यां प्रकारत्वादिति भावः। इतरान्याभेदस्येति। पृथिवी इतरान्या इत्यत्र अभेदसम्बन्धेन पृथिव्यामितरान्यस्यैव प्रकारत्वादिति भावः। इतरभेदवत्त्वस्येति। पृथिवी नेतराणीत्यत्र पृथिव्यामितरभेदस्य नञर्थस्य साक्षात्प्रकारत्वादिति भावः। इतरभिन्नाभेदस्येति। पृथिवी इतरभिन्नेति प्रतिज्ञामाभिप्रेत्येदम्। न च पृथिवी इतरान्येति प्रागुक्तक्रमेणैवास्य गतार्थत्वम्, तत्रान्यत्वप्रकारेणैव भिन्नस्योपस्थानात्, इह तु भिद्धात्वर्थभिदाश्रयत्वस्यैव निष्ठार्थाश्रयस्यैवाश्रयत्वरूपेण पृथिव्यामभेदेन भानात्ततो वैलक्षण्यादिति भावः। कस्य चिल्लक्षणमुपन्यस्यति तावदिति। यत्पक्षकयत्साध्यकप्रतिज्ञाव्यक्तयो यादृशयादृशबोधजनकतया सम्प्रदायसिद्धास्तावद्बोधेत्यर्थः। अत्राऽनिवर्तकान्तं चरमबोधस्य विशेषणं हेत्वन्तभागेऽतिव्याप्तिवारणार्थम्। तत्रापि पृथिवी इतरेभ्यो भिद्यते इति प्रतिज्ञाजन्यबोधस्य तावद्बोधानिवर्त्यस्वसमानाकारकानुमितिनिवर्तकत्वादतः संशयपदं प्रत्यक्षार्थकम्। धूमादालोकवान्पर्वतो वन्हिमानित्यादिस्थलीयहेतोर्वारणाय निवर्तकान्तम्। धूमादालोकवानित्यादिप्रतिज्ञाजन्यबोधनिवर्त्यस्य हेतुत्वं धूमीयं न वेत्याकारकसंशयस्य निवर्तकबोधजनकत्वं धूमादित्येवं तदीयहेत्ववयवस्यापीत्यतो यावदिति। तथा च तत्र प्रतिज्ञाजन्यबोधनिवर्त्ययावत्संशयान्तर्गतस्य साध्यसंशयस्यैवानिवर्तकत्वान्न हेतोरतिव्याप्तिरिति भावः। पृथिवी इतरेभ्यो भिद्यते इति प्रतिज्ञाजन्यबोधस्य तावद्बोधस्य प्रत्येकनिवर्तनीययावदन्तर्गतायाः पृथिवी इतरान्येत्येवमसमानाकारानुमितेः अप्रतिबन्धकत्वादव्याप्तिरतः संशयपदं पूर्ववदर्थकम्। स्वसमानाकारस्य निश्चयस्यैव विरोधित्वादितरभेदादिसाध्यकस्थले तावद्बोधानिवर्त्यो न कोपि सं-

जनकत्वं वाच्यमित्यपि कश्चित् । चैत्रः पचति घटो नेतराणीति प्रतिज्ञायां साध्ये विषयित्वानुयोगित्वयोः सम्बन्धविधयैवानुमवे-शाद्यथोपदर्शितसाध्यगमकतौपयिकव्याप्तिविशिष्टहेतुमत्त्वस्य च पक्षे उपनेयत्वात् तथाचायमित्याकारः सुवच एव प्राचामुपनयः, नव्यानां पुनरनन्यगतिकतया तद्व्याप्यहेतुमांस्तद्वान् वेत्याकारः, यो-

---

शयः इत्यस्वरसात्कश्चिदित्युक्तम् । ननु यद्रूपेण साध्यत्वं तदवच्छिन्नव्याप्यवत्ताबोधकस्य उपनयस्याऽसम्भवाच्चैत्रः पचतीत्यादिप्रतिज्ञैव नास्ति तत्र मूलोक्तानुमित्यन्यूनानतिरिक्तविषयकत्वस्य व्युत्पादनं प्रागुक्तं विफलमत आह चैत्रः पचतीत्यादि । चैत्रः पचतीत्यत्र पाककृतित्वावच्छिन्नव्याप्यवत्ताबोधकपक्तृत्वव्याप्यचैत्रत्ववानयमित्याकारकोपनयसम्भवादाह घटो नेतराणीति । विषय इति । पचतीत्यत्र तिङर्थकृतौ पाकस्य विषयित्वं संसर्गस्तथा नेतराणीत्यत्र नञर्थभेदे इतरस्यानुयोगित्वं सम्बन्ध इति भावः । यथोपदर्शितेति । यद्रूपेण साध्यं प्रतिज्ञायामुपदर्शितं तदवच्छिन्नसाध्येत्यर्थः । उपनेयत्वात् उपनयेन दर्शयितुमुचितत्वात् । अन्यथा वन्हित्वेन साध्यतायां तेजोव्याप्यवत्त्वेन पक्षस्य उपनयप्रसङ्गादिति भावः । सुवच एवेति । यद्रूपेण साध्यत्वं तदवच्छिन्नव्याप्यवत्त्वस्यैव तथाशब्देन बोधयितुं शक्यत्वादिति भावः । यो यश्चैत्रः पचतीत्यादिक्रमेणोदाहरणसम्भवादुपनयपर्यन्तानुसरणम् । ननु तथापि मणिकारादीनां नव्यानां मते पाककृतिव्याप्यवांश्चायमित्युपनयस्यासङ्गतिरेव यादृशेन पाकीयकृतित्वादिना साध्यत्वं तदवच्छिन्नसाध्यव्याप्यवत्त्वस्य तेनाऽनुपस्थापनादत आह नव्यानामिति । तद्व्याप्यहेतुमानित्यतो हेतौ व्याप्यस्याऽभेद एव भासते न तु व्याप्तिमत्त्वमनुमित्युपयुक्तञ्च तदेव इत्यतः प्रकारान्तरमाह तद्वान् वेति । ननूक्तक्रमेणाप्युपनये पूर्वोपस्थापितत्वाविशेषात्पक्षादेरपि तच्छब्देन परामर्शः स्यादत आह योग्यतेति । प्रमेयं वाच्यमभिधेयत्वादित्यादिस्थले पक्षपरामर्शेऽपि योग्यतासम्भवादादिपदमुपात्तम् । तेन तात्पर्याद्युपग्रहः । तदा तच्छब्देन । साध्यस्येति, प्रथमे । तद्व्याप्येति, द्वितीये । अत्र

ग्यतादिवशाच्च तदा साध्यस्य तद्व्याप्यस्य वा परामर्शः। क्वचित्तु वह्निमान्नवेति विप्रतिपत्तौ तदधीनसंशये च वन्हिमत्तदन्योन्याभावयोस्तादात्म्यविशेषणत्वाभ्यां कोटित्वेन जिज्ञासितत्वात्तादात्म्येन वन्हिमानेव साधयितुमुचितो न तु वन्हिः, अजिज्ञासि-

———

पाककृतिव्याप्यचैत्रत्ववांश्चायमित्याद्युपनयेऽपि न क्षतिः। कृतिपदेन लक्षणया साध्यतावच्छेदकीभूतपाकीयकृतित्वप्रकारेण साध्यस्योपस्थितिसम्भवादत्र लक्षणाया आवश्यकत्वात्। अन्यथा नामार्थस्य कृतेर्धात्वर्थव्याप्तौ भेदेनान्वयस्य सम्भवात् पाकपदस्य तात्पर्यग्राहकतयैवोपयोगात्। न च तथापि चैत्रत्वादित्यादिहेतौ व्याप्यस्याभेदान्वयात् तत्र व्याप्तिमत्त्वालाभः, तथापि तद्वानयमित्युपनयादनुमित्युपयुक्तस्य पक्षे हेतुमत्त्वस्याऽलाभेन तुल्यत्वात्, पक्षे हेतुमदभेदस्यैव तेन बोधनादिति चिन्त्यम्। तादात्म्येन वन्हिमतः साध्यतायामेव पर्वतो वन्हिमानित्याकारिका प्रतिज्ञा वन्हेः साध्यतायान्तु पर्वतस्तथा इत्यादिरूपैव सा तथा च यादृशेत्यादिविवक्षां विना मूलोक्तानुमित्यन्यूनानतिरिक्तविषयत्वेनैव सामञ्जस्यमित्येवं केषाञ्चिन्मतं सयुक्तिकमुपन्यस्यति केचित्त्विति। विप्रतिपत्तिवाक्यस्य निर्विषयत्वात् वह्निमदादेर्न तत्कोटित्वसम्भवः शाब्दसंशयस्याप्यसिद्धान्तत्वेन व्यापारानुबन्धितत्कोटित्वस्याप्यभावादाह तदधीनसंशये चेति। जिज्ञासितत्वात् तादृशसंशयाधीनजिज्ञासाविषयत्वात्। न तु वह्निरिति। साधयितुमुचित इति पूर्वेणान्वयः। न च विप्रतिपत्तिवाक्याद्वह्निमत इव वह्नेरप्युपस्थितत्वाद्वन्हिर्वन्हिमद्भेदकोटिकसंशयोत्पत्त्या वन्हेरपि जिज्ञासितत्वसम्भवः इति वाच्यम्। विप्रतिपत्तिवाक्यस्य यद्धर्मावच्छिन्नविधेयताकबोधजनकत्वं तद्धर्मावच्छिन्नस्यैव प्रतिज्ञायामपि विधेयत्वनियमात्। अन्यथा वन्हिसामग्रीमान् नवेति विप्रतिपत्तिवाक्यस्थलेऽपि वन्हेः साध्यत्वप्रसङ्गात्। अत एवावृत्तौ सैव प्रतिज्ञा इति मूले वक्ष्यते इति भावः। ननु वन्हिमतः साध्यत्वे वन्हेरुपनयप्रदर्शनविरोध इत्यतस्तदपि परित्यजन्नाह तथा चेति। प्राचीननव्ययोर्मतभेदेन प्रकारद्वयम्। अर्थान्तरादिति। वन्हिव्या-

तत्वात्, तथा च तथा चायमित्याकारो वन्हिमद्व्याप्यो धूमवांश्चायमित्याकारो वा उपनयो न तु वन्हिव्याप्यधूमवांश्चायमित्याकारोऽर्थान्तरत्वादिति प्राहुः। यत्र चान्तरा तादृशबोधो न जातस्तत्रापि तादृशाकाङ्क्षायोग्यतादिशालित्वरूपं तज्जननयोग्यत्वमक्षतम्, तल्लाभश्च जातिविशेषोपस्थापकशाब्दवाक्यशब्दयोरुपसन्दानादेवेति। अन्यूनेत्यादि । तथा चोद्देश्यानुमितिसमानविषयकलिङ्गा-

---

त्युपन्यासस्य वन्हिमत्सिद्धावनुपयुक्तत्वादिति भावः। प्राहुरिति। यादृशपक्षकत्यादिविवक्षां विनापि मूलोक्तसामञ्जस्यं प्रकर्षः। ननु यत्र सभाक्षोभादिवशात्प्रतिज्ञया बोधो न जनितस्तत्राव्याप्तिरत आह यत्र चेति। तादृशाकाङ्क्षा इति। तादृशबोधानुकूलाकाङ्क्षा इत्यर्थः। योग्यतादीत्यादिना आसत्त्यादेः परिग्रहः । न चैवं ह्रदो वन्हिमानित्यादिप्रतिज्ञायामव्याप्तिः योग्यताविरहादिति वाच्यम्। सन्न्यायान्तर्गतप्रतिज्ञाया एव लक्ष्यतया तत्राऽव्याप्तेरदोषत्वादिति भावः। नन्वेवं शाब्दवाक्यपदयोर्वैयर्थ्यं योग्यताज्ञानादेस्तादृशबोधजनकत्वेऽपि आकाङ्क्षादिमत्त्वविरहेण वारणादत आह तल्लाभश्चेति । तथा चोक्तपदद्वयसान्निध्यादेव स्वरूपयोग्यत्वलाभान्न तयोर्व्यर्थत्वमिति भावः। ननु अन्यूनानतिरिक्तपदत्यागे उद्देश्यानुमितिविषयकशाब्दज्ञानजनकवाक्यत्वं लक्षणं भविष्यति तच्च न सम्भवति असम्भवात् प्रतिज्ञाजन्यबोधस्यानुमित्याविषयकत्वादित्यत आह उद्देश्येति। समानविषयकेति। अन्यूनानतिरिक्तपदत्यागादुद्देश्यानुमितिविषयकपदेन उद्देश्यानुमितिविषयो विषयो यस्येति व्युत्पत्त्या तत्समानविषयकत्वलाभादिति भावः। अत्र कल्पे सत्यन्तस्य अवयवाघटकन्यायान्तर्गतत्वं नार्थः तथा सति वन्हिः शुक्लभास्वरस्तेजस्त्वाद्रूपवत्त्वादित्यादौ तेजस्त्वव्याप्यरूपवत्त्वहेतुकन्याये तेजस्त्वादित्यन्तस्य दुर्वारतापत्तेः, किन्तु न्यायावयवत्त्वमेवेत्याशयेन प्राग्व्याख्यातस्यापि सत्यन्तस्य अर्थो न्यायावयवत्वरूपः पुनरुदितः। समानविषयकान्तस्य फलमाह व्यतिरेकिणीति। यो यो निर्वन्हिः

विषयकशाब्दज्ञानजनकन्यायावयवत्वमर्थः । व्यतिरेकिणि ह्रदो निर्धूम इत्यादौ निर्वन्हित्वहेतुके यथा ह्रदभिन्नमित्यादिदृष्टान्तवतो ह्रदावृत्तिधर्मशून्यत्वादिहेतुके वोदाहरणस्य वारणाय समानविषयकान्तं पक्षविशेष्यकार्थकम् । उपनयवारणाय लिङ्गाविषयकेति ।

---

स निर्धूमो यथा ह्रद इत्युदाहरणस्य लिङ्गाविषयत्वविरहादेव व्युदासाद्व्यतिरेकिणीत्युक्तम् । तथा च यो यो धूमवान् स वन्हिमान् यथा ह्रदभिन्नमित्युदाहरणस्य निर्वन्हित्वरूपलिङ्गाविषयकत्वमस्त्येवेति भावः । पक्षविषयकत्वं त्यक्त्वा पक्षविशेष्यकत्वपर्यन्तस्याग्रे विवक्षणीयस्य व्यावृत्तिमभिधातुं यथा पर्वत इत्यादिदृष्टान्तमुपेक्ष्य दृष्टान्तान्तरमाह यथा ह्रदेति । दृष्टान्तवत इति । उदाहरणस्य इत्यग्रेन्वयः । तथा च प्रतियोगिविधयैव निरुक्तोदाहरणस्यापि पक्षविषयकत्वात्पक्षविशेष्यकत्वं वाच्यमिति भावः । दृष्टान्तमनन्तर्भाव्यैव उदाहरणशरीरमिति मतेपि पक्षविशेष्यकत्वपर्यन्तप्रवेशार्थं स्थलान्तरमाह ह्रदावृत्तीत्यादि । ह्रदो निर्धूमो ह्रदावृत्तिधर्मशून्यत्वादित्यादौ यो यो धूमवान् स ह्रदावृत्तिधर्मवानित्युदाहरणस्यापि लिङ्गाविषयकस्य ह्रदात्मकपक्षविषयकत्वात्पक्षविशेष्यकत्वप्रवेशस्तद्वारणार्थमावश्यक इति भावः । पक्षविशेष्यकेति । तन्मुख्यविशेष्यकेत्यर्थः । न च वृक्षस्तत्कपिसंयोगशून्यः तत्कपिविभागरहितत्वादित्यादिस्थलीयस्य यस्तत्कपिसंयोगवान् स तत्कपिविभागवानिति व्यतिरेक्युदाहरणस्य तत्कपिसंयोगवत्त्वप्रकारेणैव पक्षीभूतवृक्षविशेष्यकज्ञानजनकत्वात्तत्रातिव्याप्तिरिति वाच्यम् । कथितसाध्यसाधनयोः केवलान्वयितया व्यतिरेकव्याप्त्यसम्भवेन उदाहरणस्यैव तादृशस्यासत्त्वात्तत्रातिव्याप्त्ययोगादिति भावः । उपनयेति । यद्यपि निगमनस्यापि पक्षविशेष्यकज्ञानजनकत्वादुपनयमात्रोक्तिरयुक्ता तस्माद्वन्हिमानित्यादौ वन्हिमत्त्वेन पर्वतस्यैव विशेष्यत्वात् । न च पक्षतावच्छेदकधर्मावच्छिन्नविशेष्यकत्वप्रवेशेनैव तद्वारणसम्भवात्तदुपनयपर्यन्तानुसरणमिति वाच्यम् । हेतुत्वं प्रमेयं ज्ञेयत्वादित्यादौ हेत्ववयवस्यापि वारणीयत्वसम्भवात् इत्थमपि न्यून-

यद्यपि प्रकृतलिङ्गाविषयत्वं पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् गन्धवती तथा गन्धादिसादावव्यापकम्, न चात्रोपनयासम्भवः इदमा गन्धवत्त्वेन परामृष्टे हेतुभूतगन्धवत्त्वान्वयायोगादिति वाच्यम् । साध्याभावव्यापकगन्धाभावाभावत्वेनान्वयात् । अत एव व्यतिरेकिणि न च नेयं पृथिवीत्यादिकः प्राचां प्रयोगः । यदि

———

तानुद्धारात् । तथापि निगमनादौ न सर्वत्रातिव्याप्तिसम्भवः तस्माद्भिद्यते इत्यादावभावात् उपनये तु सर्वत्र पक्षधर्मिकज्ञानजनकत्वात्तन्मात्रोक्तिरिति भावः । वस्तुमात्रस्यैव लिङ्गत्वात्सामान्यतस्तद्विषयकत्वमसम्भवदुक्तिकमतः प्रकृतपदं प्रक्षिप्य शङ्कते यद्यपीति । ननु लिङ्गतावच्छेदकरूपेण यल्लिङ्गविशेषणकत्वं तद्भावो वाच्यः तथा चोक्तप्रतिज्ञायां पृथिवीत्वत्वप्रकारेण पृथिवीत्वस्याप्रवेशान्नाव्याप्तिः विशेषणत्वनिवेशाच्चोक्तस्थल एव तादात्म्येन पृथिव्याः साधनत्वेपि नाप्रसङ्ग इत्यत आह गन्धवतीत्यादि । तथा इतरेभ्यो भिद्यते । अव्यापकमिति । लिङ्गतावच्छेदकीभूतं यद्गन्धत्वं ताद्रूप्येणैव लिङ्गस्य प्रतिज्ञायां निविष्टत्वादिति भावः । ननूक्तस्थले न्यायासम्भवात्प्रतिज्ञैव नास्ति कुत्राव्याप्तिरित्याशङ्क्य निराचष्टे न चेति । वाच्यमित्यग्रेन्वयः । गन्धवत्त्वान्वयेति । गन्धवत्त्वप्रकारेणाभेदान्वयबोधस्यायोगादित्यर्थः । उद्देश्यतावच्छेदकविधेययोरैक्याद्दण्डवान् . रक्तदण्डवानित्यादिवन्निराकाङ्क्षत्वादिति भावः । साध्याभावेति।तथा चेतरभेदाभावव्यापकीभूतस्य गन्धाभावस्याऽभाववती चेयमित्याकारकमुपनयशरीरमतो न निराकाङ्क्षत्वमिति भावः । अत एवेति । यद्रूपेण हेतुत्वं तदवच्छिन्नाभावाभावत्वप्रकारेणैव व्यतिरेक्युपनयस्य हेतुमत्त्वबोधकत्वादेवेत्यर्थः । न च नेयमिति । यद्यप्युक्तप्रयोगाद्व्याप्त्यवच्छिन्नस्य हेतोर्न पक्षधर्मताबोधः, तथापि पक्षधर्मताबोधमात्रमुपनयस्य फलं व्याप्तिबोधस्य उदाहरणादेव वृत्तत्वादतो व्याप्तिबोधार्थं न तत्र पदान्तरप्रक्षेप इति प्राचामाशयः । ननु व्याप्तस्य हेतोः पक्षसत्त्वं न वा इत्याकाङ्क्षायामभिधा-

च दण्डवान् रक्तदण्डवानित्यस्यान्वयो नानुपपन्नस्तद्विशिष्टे शुद्धतद्विशिष्टान्वयस्यैवाव्युत्पन्नत्वादित्युपेयते, तदा नानुपपत्तिगन्धोऽपि।

---

नीयस्योपनयस्यावश्यं हेतुतावच्छेदकावच्छिन्नहेतुमत्तया पक्षबोधकत्वम्, अन्यथा तादृशाकाङ्क्षाया अनिवृत्तेरत आह यदि चेति। शुद्धेति। विशेषणान्तरानवच्छिन्न इत्यर्थः। तदेति। प्रकृतेपि गन्धविशिष्टव्यतिरेकव्याप्तिविशिष्टगन्धवत्त्वावच्छिन्नस्यैवाऽन्वयेन व्युत्पत्त्यभङ्गादिति भावः। प्राच्यैः खलेकपोतन्यायेनैव सर्वत्रान्वयबोधस्योपगमात् तन्मते च दण्डवान् रक्तदण्डवानित्यत्रापि रक्तत्वविशिष्टदण्डत्वावच्छिन्नस्य न दण्डेऽत्यन्वयः किन्तु दण्डवति दण्डस्तत्र रक्तत्वं विशेष्ये विशेषणमिति न्यायेन युगपदेव भासत इत्यवश्यं तन्मते निराकाङ्क्षत्वमित्याशयेन यदि चेत्युक्तम्। पक्षाविशेषणत्वेनेति। इदमत्र चिन्त्यते। किमिदं पक्षाविशेषणत्वेन लिङ्गाविषयकत्वं न तावत्पक्षविशेषणतान्यलिङ्गविषयत्वाभावः, प्रागुक्तदोषतादवस्थ्यात्, गन्धवती इतरेभ्यो भिद्यते इति प्रतिज्ञायामपि पक्षविशेषणतान्यगन्धत्वांशे विशेष्यतारूपस्यैव गन्धात्मकहेतुविषयत्वस्य सत्त्वात् प्रकारत्वविशेष्यत्वयोरिव विशेष्यतात्वयोर्मिथो निरूप्यनिरूपकत्वाभावेन पक्षनिष्ठविषयत्वानिरूपितलिङ्गविषयत्वाभावस्यापि वक्तुमशक्यत्वात्। न च पक्षविशेषणतातिरिक्तं यद्धेतुतावच्छेदकधर्मावच्छिन्नविषयत्वं तदभावोऽर्थः प्रोक्तप्रतिज्ञायान्तु गन्धनिष्ठगन्धत्वांशे विशेष्यत्वस्य गन्धत्वानवच्छिन्नत्वान्नाव्याप्तिरिति वाच्यम्। सुरभिगन्धवती इतरेभ्यो भिद्यते गन्धादित्यादिप्रतिज्ञायामव्याप्तितादवस्थ्यात् तत्र सौरभांशे गन्धत्वावच्छिन्नस्य विशेष्यत्वस्य पक्षविशेषणतातिरिक्तगन्धत्वावच्छिन्नविषयतारूपत्वात्। नापि प्रकृतपक्षविषयत्वानन्तर्गतलिङ्गविषयत्वाभावोऽर्थः, तथासति प्रमेयत्वनिष्ठहेतुत्वं वाच्यं प्रमेयत्वादित्यादौ हेतावतिव्याप्तिप्रसङ्गात्। एवं दधि द्रव्यमित्यादिप्रतिज्ञायां वक्ष्यमाणाव्याप्तेरसङ्गत्यापत्तेः तत्रापि पक्षविषयत्वानन्तर्गतत्वे सति साध्यविषयत्वानन्तर्गतं यल्लिङ्गविषयत्वं तदभाववत्त्वेनाऽव्याप्त्यसम्भवात्। सा-

पक्षाविशेषणत्वेन तदविषयत्वञ्चायं वन्हिसामग्रीमान् वन्हेरित्यादौ पक्षाविशेषणत्वेन साध्याविशेषणत्वेन च तदविषयत्वं दधि द्रव्यं दध्नः प्रमेयत्वमभिधेयं प्रमेयत्वात् गोत्वाभावो न सास्नादिमान् गोत्वाभावादित्यादावव्यापकमतिव्यापकञ्चोपनयस्य । तथापि पक्षतावच्छेदकविशिष्टपक्षे यत्साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्या-

———

ध्याविशेषणत्वेन लिङ्गाविषयत्वस्याप्युक्तक्रमेणैव निर्वाच्यत्वात् । अन्यथाऽयं वन्हिसामग्रीमान् वन्हेरित्यादावप्युक्तदिशैवाव्याप्तितादवस्थ्यादिति सङ्क्षेपः । वन्हेरित्यादाविति । अव्यापकमित्यग्रेऽन्वयः । पक्षेत्यादि । तथा चोक्तप्रतिज्ञाद्वये पक्षसाध्ययोर्विशेषणतयैव लिङ्गस्य विषयत्वान्नाऽव्याप्तिरिति भावः । दधि द्रव्यमित्यत्र प्रतिज्ञायां विशेष्यत्वेनैव लिङ्गस्य भानात् पक्षसाध्ययोरविशेषणत्वेन यल्लिङ्गविषयत्वं तदभावविरहादव्याप्तिरित्यर्थः । न चात्र समवायेन दध्नो हेतुत्वात्तदन्वयानुरोधादन्त्यावयविभिन्नं दध्येव प्रतिज्ञायां बोध्यते, अन्यथा भागासिद्धिप्रसङ्गात् तथा च पक्षसाध्ययोरविशेषणत्वेन लिङ्गतावच्छेदकावच्छिन्नयावल्लिङ्गविषयकत्वविवक्षयैव नाऽव्याप्तिरिति वाच्यम् । तादात्म्यसम्बन्धेन तत्र दध्नो हेतुतया तथाप्यप्रतीकारात् इति भावः । व्यतिरेकिपक्षकप्रतिज्ञायामव्याप्तिमुक्त्वा केवलान्वयिपक्षिकायां तामाह प्रमेयत्वमिति । न च केवलान्वयिसाध्यके विवादाभावात्प्रतिज्ञैव नास्ति कुत्राऽव्याप्तिरिति वाच्यम् । केवलान्वयित्वाग्रहदशायां विवादसम्भवादिति भावः । ननु नीलधूमत्वेनेव प्रमेयत्वत्वेन हेतूकृत्यापि न न्यायो व्यर्थविशेषणत्वात् विषयतात्वस्यैव व्याप्यतावच्छेदकत्वादिति कुतस्तत्रत्यप्रतिज्ञायामव्याप्तिरत आह गोत्वाभावेति । अत्र च गोत्वाभावस्य स्वरूपसम्बन्धेन स्वस्मिन्नपि सत्त्वान्न पक्षधर्मत्वहानिः । ननु पक्षसाध्ययोरविशेषणत्वेन यल्लिङ्गप्रकारकत्वं तदभावो वाच्यः तथा चोक्तप्रतिज्ञाभ्रमेपि लिङ्गस्य प्रकारत्वाभावान्नाऽव्याप्तिरत आह अतिव्यापकञ्चेति । सर्वत्रैवोपनये लिङ्गस्य पक्षविशेषणतयैव भानादतिव्याप्तिरित्यर्थः । न चोपनयमात्रस्यैव हेतुव्यापकत्वांशे पक्षाविशे-

वगाहित्वं तद्बहिर्भावेण लिङ्गविषयत्वस्याभावो वाच्यः । वस्तुतो लिङ्गं लिङ्गत्वं तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्व्याप्तिविषयत्वं तच्छून्य-

---

षणत्वेन लिङ्गप्रकारकत्वाज्ञातिव्याप्तिरिति वाच्यम् । साक्षात्परम्परासाधारणपक्षविशेषणत्वस्यैव प्रवेश्यतया व्याप्तिविशेषणतया भातस्याप्युपनये पक्षविशेषणत्वात् । अन्यथा धूमसधर्मा पर्वतो वन्हिमान् धूमादित्यादिप्रतिज्ञायामव्याप्तितादवस्थ्यात् तत्र धूमस्य पक्षे साक्षादविशेषणत्वात् साध्यवदन्यावृत्तित्वादिव्याप्तेर्लिङ्गाघटकत्वात्तद्धर्मोपनयेऽतिप्रसक्तेस्तथाप्यवारणाच्चेति भावः । तथापीत्यादि । गन्धवती इतरेभ्यो भिद्यते गन्धादित्यादौ पर्वतो वन्हिसामग्रीमान् वन्हेरित्यादौ च प्रतिज्ञायाः सङ्ग्रहार्थमवच्छेदकत्वस्योपादानम् । अत्र च यत्र गन्धवत्त्वावच्छेदेन साध्यसिद्धेरुद्देश्यतायां गन्धादिकं हेतुस्तत्रत्यप्रतिज्ञायामव्याप्तिवारणार्थं यद्रूपेण पक्षत्वं तन्निष्ठावच्छेदकत्वादेरप्यवगाहितायाः क्व चिन्निवेशो वोध्यः । निरुक्तावगाहिताबहिर्भूतं यद्विषयित्वं तदभावस्योक्तौ प्रागुक्तस्य पक्षविशेष्यकत्वदलस्य वैयर्थ्यादत उक्तं लिङ्गविषयत्वस्येति । अखण्डाभावघटकतया च लिङ्गपदस्य न वैयर्थ्यमिति भावः । अत्रापि यत्पक्षसाध्यकप्रतिज्ञाव्यक्तीनां यादृशयादृशविषयिताकबोधजनकत्वं साम्प्रदायिकं तादृशविषयिताबहिर्भूतलिङ्गविषयित्वाभावः फलितार्थो ग्राह्यः । तेन गन्धवती इतरेभ्यो भिद्यते गन्धादित्यादौ प्रतिज्ञायाः पक्षे साध्यवैशिष्ट्यावगाहिज्ञानाजनकतया तादृशविषयिताबहिर्भूतलिङ्गविषयिताकत्वस्य तत्र सत्त्वेपि नाव्याप्तिरिति ध्येयम् । ननूक्तविषयिताबहिर्भावो न तद्भिन्नत्वं तादृशीं विषयितामादायैवोक्ताव्याप्तितादवस्थ्यात्, अत एव न तद्विषयित्वाव्यापकत्वमपि तद्बहिर्भावः, प्रतिज्ञाभेदेन स्वरूपसम्बन्धात्मनो लिङ्गविषयित्वस्य भेदादुक्तदोषतादवस्थ्यात् अत आह वस्तुत इति । ननु लिङ्गत्वं व्याप्यत्वं तथा च व्याप्यवान्पर्वतो वन्हिमान् धूमादित्यत्र प्रतिज्ञायामव्याप्तिरत आह तथा चेति । तच्चेति । तादृशव्याप्तिविषयकत्वञ्चेत्यर्थः । हेतुभूतेति । हेतुभूतो योऽभावस्तत्प्रतियोगितावच्छेदकं

त्वमर्थः । तच्च हेतौ साध्यव्याप्यतावगाहित्वं हेतुभूताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्याभावव्यापकतावगाहित्वञ्च । द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववान् गुणात् गुणव्याप्यरूपवानयं स्पर्शवान् रूपादित्यादौ प्रतिज्ञासंग्रहायाऽवच्छेदकद्वयोपादानम् । अन्यूनानतिरिक्तपदमिति च मूलमुद्देश्यानुमित्यन्यूनानतिरिक्तविषयभागपरम् । हेतुत्वमभिधेयं मेयत्वादित्यादौ पक्ष-

---

पक्षेत्वभावत्वं तदवच्छिन्नेत्यर्थः । हेतौ साध्याभावव्यापकीभूताभावप्रतियोगित्वावगाहित्वमित्युक्तौ ह्रदो निर्धूमो निर्वह्नित्वादित्यादौ यो यो निर्धूमत्वाभाववान् स वह्निमानिति व्यतिरेक्युदाहरणेऽतिव्याप्तिः तस्य निरुक्तव्याप्त्यविषयत्वादतो वक्रोक्तिः । तेन तत्रापि हेतुभूतं यन्निर्वह्नित्वं तत्प्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्ने साध्याभावव्यापकत्वावगाहित्वान्नातिव्याप्तिः । इदमुपलक्षणम् । साध्याभावोपि साध्यीभूताभावप्रतियोगितावच्छेदकावच्छिन्नत्वेनोपादेयः, तेन धूमाभावाभावत्वेन साध्याभावाप्रवेशेपि नोक्तस्थलीयोदाहरणेऽतिप्रसङ्गः । वस्तुतो यावत्यो व्याप्तिविषयिताः प्रकृतसाध्यहेतुकानुमित्यौपयिकाः प्रत्येकं तत्तद्विषयित्वाभावकूटवत्त्वमेव प्रवेश्यम् । तेन नानाविधानां व्याप्तिविषयितानामनुगतधर्माभावेपि नोपनयाद्यतिव्याप्तिरिति ध्येयम् । प्रकृतहेतुतावच्छेदकेत्यस्य फलमाह द्रव्यत्वव्याप्येति । अत्र हेतुतावच्छेदकीभूतं यद्गुणत्वं तदवच्छिन्ने द्रव्यत्वव्याप्त्यभावान्नाव्याप्तिरिति भावः । द्रव्यत्वव्याप्यसंयोगवानयमित्युक्तौ विवादात् संशयाद्यसम्भवात्संयोगवद्वृत्तीत्युक्तम् । प्रकृतसाध्यतावच्छेदकेत्यस्य फलमाह गुणव्याप्येति । तथा चात्र स्पर्शत्वावच्छिन्नं यत्प्रकृतसाध्यं तद्व्याप्त्यलाभान्नाव्याप्तिरिति भावः । नन्वेवं निरुक्तव्याप्तिविषयिताशून्यत्वदलेनैव व्यतिरेक्युदाहरणस्यापि वारणसम्भवात्पक्षविशेष्यकार्थकं समानविषयकान्तदलं व्यर्थमतस्तत्परित्यागे मूलस्य तात्पर्यमाह अन्यूनेति । ननु तद्दलत्यागे धूमादिहेत्ववयवेऽतिव्याप्तिरत आह हेतुत्वमिति । वारणायेति । तत्र हेत्ववयवस्य पक्षविशेष्यकत्वात्समानविषयकत्वदलेन

म्यर्थपक्षकहेतुवारणाय पञ्चम्यन्तान्यत्वस्य हेत्वन्यत्वस्य वावश्यं वाच्यत्वात्। संख्यातिरिक्तसुबर्थस्य प्रातिपदिकार्थे विशेष्यत्वेनैवान्वयात् प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च भेदेन साक्षा-

---

तद्वारणायोगादिति भावः। ननु पञ्चम्याऽन्यत्वोक्तौ वन्हिरन्यो धूमादित्यादिप्रतिज्ञायामव्याप्तिरत आह हेत्वन्यत्वस्य वेति। ननु हेतुत्वपक्षकस्य प्रमेयत्वादित्यादिहेतौ पक्षविशेष्यकज्ञानजनकत्वे सत्येव हेत्वन्यत्वविशेषणं वाच्यं तत्रैव किं मानमतस्तत्र प्रमाणमाह सङ्ख्येत्यादि। विभक्त्यर्थस्य संसर्गाविधयैव भानसम्भवादित्यत आह सङ्ख्यातिरिक्तेति। तथा चोक्तनियमबलादेव प्रकृतहेतोः पक्षविशेष्यकज्ञानजनकत्वमावश्यकमिति भावः। यत्तु ननु सुबर्थमात्रस्य प्रकृत्यर्थविशेषणतयैव भानात्प्रमेयत्वादित्यादिहेतुवाक्येन प्रमेयत्वं हेतुतावदित्येव बोधजननात्पक्षविशेष्यकत्वदलेनैव तद्वारणं सम्भवत्यतः सङ्ख्यातिरिक्तेत्यादीति। तत्तुच्छम्। तादृशशङ्कया ग्रन्थावतारणे पर्वतो वन्हिमान् पर्वतादित्यादौ हेत्ववयवे तथाप्यतिव्याप्तितादवस्थ्यात् तस्याप्युक्तक्रमेणाशङ्कया पक्षविशेष्यकज्ञानजनकत्वसम्भवादिति ध्येयम्। सुबर्थसङ्ख्यायाः प्रकृत्यर्थविशेषणतयैवान्वयात् तत्र व्यभिचारवारणार्थमतिरिक्तान्तम्। जानातीत्यादौ तिङर्थवर्तमानत्वस्य यजेतेत्यादौ च तिङर्थकार्यत्वादेः प्रकृत्यर्थविशेषणतयैव भानाद्विभक्त्यर्थेत्यपहाय सुबर्थेत्युक्तम्। ननु चैत्र गच्छेत्यादौ सुबर्थस्य सम्बोध्यत्वादेः प्रकृतत्यर्थचैत्रादौ विशेषणत्वेनैव भानादुक्तनियमो व्यभिचारीत्यत आह प्रातिपदिकेति। भेदेन तादात्म्यान्यसम्बन्धेन। वक्ष्यमाणत्वादिति। अन्यथा घटो रूपमोदनः पचतीत्यतोपि घटीयत्वेन रूपस्य ओदनीयत्वेन पाकस्य बोधापत्तेः, तथा च हेतुत्वमभिधेयं भिद्यते वा प्रमेयत्वादित्यादौ हेतुत्वसम्बधेन प्रमेयत्वस्य नामोपस्थाप्याभिधेयत्वे धातूपस्थाप्यभेदे वा अन्वयासम्भवादवश्यं हेत्ववयवस्य हेतुतारूपपक्षविशेष्यकान्वयबोधजनकत्वमिति भावः। ननु कर्मत्वादिरूपभेदसंसर्गेण नामार्थस्यान्वयबोधे नाम्नः कर्मत्वाद्यर्थकविभक्त्यन्तस्य तन्त्रत्वादेवोक्तातिप्र-

दन्वयस्याव्युत्पत्तेर्वक्ष्यमाणत्वात् । चैत्रस्येदं न मैत्रस्य मैत्रस्येदं न चैत्रस्य द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादिसम्बन्धाभावबोध-

---

सङ्गस्य वारणसम्भवात् पञ्चम्यर्थहेतुत्वादिविशिष्टस्य प्रमेयत्वादेर्हेतुत्वादिसम्बन्धेनैवाऽभिधेयत्वादावन्वये बाधकाभाव इत्यत आह चैत्रस्येत्यादि । तथा च चैत्रस्येदं मैत्रस्वत्वाभाववदित्यन्वयबोधे विभक्त्यर्थस्य स्वत्वादेर्नामार्थविशेष्यतया भानमावश्यकं, न हि स्वत्वान्वितस्य मैत्रस्यैव स्वत्वसम्बन्धेनाभावस्तत्र धनादौ प्रतीयते, स्वत्वादेर्वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याऽसम्भवात् । न वा स्वत्वविशिष्टमैत्रस्य संयोगादिसम्बन्धेनैवाभावस्तत्र भासते, नेदं चैत्रस्येत्यपि प्रसङ्गात् चैत्रस्वामिकेऽपि धने संयोगादिसम्बन्धेन चैत्रस्याभावसत्त्वात् एतदर्थमेव चैत्रस्येत्यभिधानादिति भावः । ननु नञा चैत्रात्यन्ताभावस्य बोधने चैत्रात्मकनाम्नः प्रथमान्तत्वं तन्त्रमतः संयोगादिना चैत्रात्यन्ताभावस्य चैत्रीयधने सत्त्वेऽपि नेदं चैत्रस्येति न प्रयोग इत्यत आह मैत्रस्येदं न चैत्रस्येति । तथा चोक्तस्थल एव चैत्रात्यन्ताभावबोधस्वीकारे प्रथमान्तताव्युत्पत्तौ व्यभिचार इत्यवश्यं चैत्रादिस्वत्वाभाव एव बोधनीयः, अन्यथा उक्तक्रमेणाऽतिप्रसङ्गादिति भावः । ननु नेदं चैत्रस्येत्यादिषष्ठ्या प्रतियोगित्वस्य नञा च भिन्नस्याभिधानान्मैत्रादिधने स्वत्वसम्बन्धेन चैत्रान्यत्ववत्त्वमेव प्रतीयेत इति यदि ब्रूयात्तदाह द्वयोरिदमिति । नेदं चैत्रस्येत्यनुषञ्जनीयम् । तथा चोक्तक्रमेण चैत्रमैत्रयोरिदं न चैत्रस्येति वाक्यस्यापि योग्यतापत्तिः उभयस्वामिकस्य सुतरां चैत्रभिन्नस्वामिकत्वादतस्तदयोग्यत्वार्थं चैत्रस्वत्वाभावबोधने विभक्त्यर्थविशेष्यकत्वमावश्यकमिति भावः । उक्तक्रमेण शाब्दबुद्ध्युपगमे अयोग्यस्य वाक्यस्य योग्यतापत्तिं बाधिकामुक्त्वा योग्यस्यापि वाक्यस्याऽयोग्यतापत्तिं बाधिकामाह नेदमेकस्यापीति । अत्रैकपदं प्राणिसामान्यपरम् । तथा च प्राणिभिन्नस्य स्वत्वसम्बन्धेन धनादौ असत्त्वान्नेदमेकस्यापीति वाक्यमयोग्यं स्यादतस्तद्योग्यत्वार्थं प्राणिस्वत्वाभावबोधने विभक्त्यर्थविशेष्यकत्वमावश्यकमिति भावः । नन्वेतावता षष्ठ्यर्थस्य प्रकृत्यर्थविशेष्यतया भानसिद्धावपि पञ्चम्य-

स्य विना विभक्त्यर्थविशेष्यतामनुपपत्तेः चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुयोगिनि सप्तमीं सुबर्थस्याप्यभावान्वयात् । हेतुविषयकज्ञानजनकत्वव्याप्यावयवतावच्छेदकरूपशून्यत्वे सत्युदाहरणान्यन्यायावयवत्वं तत्त्वम्, तादृशञ्चावच्छेदकं हेतुत्वादिक-

---

र्थहेतुत्वस्य तथात्वं नायातमत आह इत्यादाविति । तथा च पर्वतो वन्हिमान् धूमान्न तु जलादित्यादौ वन्ह्यादेर्जलादिज्ञाप्यत्वाभावबोधानुरोधादेव तथात्वमिति भावः । मैत्रादिसम्बन्धाभावबोधस्येति, पाठः तस्यैव प्रागुक्तत्वात्, चैत्रादिसम्बन्धाभावेति पाठ तु चैत्रादिसम्बन्धस्य सान्निध्यात्तदभावस्य च बोधो ग्राह्यः । वस्तुतः चैत्रस्येदं न किन्तु मैत्रस्येति योजनया चैत्रादिसम्बन्धाभावस्यैव बोधः प्रक्रान्त इति नानुपपत्तिलेशोपि । ननु नेदं चैत्रस्येत्यादौ स्वत्वान्वितस्य चैत्रस्यैव स्वत्वसम्बन्धेनाभावो नञा बोध्यते वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वप्रवादस्य निर्युक्तत्वादित्यतः स्वत्वस्येव चैत्रस्यात्यन्ताभावो बोधयितुमशक्य इत्याह चैत्रो न पचतीत्यादि । तथा च विभक्त्यर्थात्यन्ताभावबोधने नञा सप्तम्यनपेक्षणात् अस्माकं मते चैत्रस्वत्वात्यन्ताभावस्य बोधो न दुर्घटः, प्रातिपदिकार्थस्य तु चैत्रादेः स्वत्वादिसम्बन्धेन धनादावभावस्य बोधो न सम्भवति नामार्थस्यात्यन्ताभावबोधने नञा सप्तम्यपेक्षणात्, अन्यथा घटः पटो नेत्यादावपि पटादेरत्यन्ताभावप्रतीतिप्रसङ्गादिति निगर्वः । हेतुविषयकेत्यादि । हेतुविषयकज्ञानजनकत्वव्याप्यं यदवयवतावच्छेदकं हेतुत्वोपनयत्वादि तच्छून्यत्वे सतीत्यर्थः । हेतुविषयकज्ञानजनकत्वस्य समानाधिकरणं प्रतिज्ञात्वमादायाऽसम्भवः स्यादतो व्याप्यपदम् । हेतुविषयकज्ञानजनकत्वव्याप्यं तत्तत्प्रतिज्ञाव्यक्तित्वमादायाव्याप्तेर्वारणाय अवयवतावच्छेदकेति । उदाहरणत्वस्य हेतुविषयकज्ञानजनकत्वनियतत्वात्तमादायोदाहरणेऽतिव्याप्तिरत उक्तमुदाहरणान्येति । उदासीनव्युदासाय न्यायावयवेति । अत्र हेतुविषयकत्वमवश्यं प्रकृतहेतुविषयकत्वं वाच्यम्, अन्यथा वस्तुमात्रस्यैव हेतुत्वसम्भवात्प्रतिज्ञायाम-

हाय लिङ्गाविषयकत्वं वा ज्ञानविशेषणम् । तेनोदाहरणादिव्युदासः । निगमनञ्च न परामर्शहेतुः, अबाधितासत्प्रतिपक्षत्वज्ञानजनकत्वात् । हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा । लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयववाक्यत्वं वा, इतरावयवानां लिङ्गविषयकज्ञानजनकत्वात् । प्रतिज्ञात्वं जातिः अनुग-

———

मिति केचित् । हेत्वभिधानेति । जिज्ञासाजनकत्वं तद्योग्यता । वाक्यत्वं न्यायावयवत्वम् । लिङ्गेत्यादि । लिङ्गाविषयेति पूर्वोपदर्शितार्थकम् । अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गीति ।

———

सम्भवापत्तेः तथा च सर्वसाधारणस्योपनयत्वादेरपि धूमादिप्रकृतहेतुविषयकज्ञानजनकत्वनियतत्वात्तद्व्यतिव्याप्तिः । यदि च सर्वसाधारणमुपनयत्वादिकं नास्त्येवाऽवयवविभाजकं परन्तु तत्तत्साध्यत्वादिघटितं तत्तथेति विभाव्यते, तदा प्रतिज्ञात्वमपि तत्तद्धेतुकतत्तत्साध्यकत्वादिनैव निर्वाच्यं तथा च यत्साध्यहेतुकप्रतिज्ञायां हेतुविषयकत्वनैयत्यं तत्राव्याप्तिरित्यस्वरसः केचिदित्युक्त्वा सूचितः । जिज्ञासानुपधायकप्रतिज्ञायामव्याप्तिरत आह तद्योग्यतेति । योग्यता चात्र प्रकृतहेत्ववयवप्राग्वर्तित्वरूपा ग्राह्या । ननु प्रतिज्ञैकदेशादेरपि तादृशवाक्यत्वात्तत्रातिव्याप्तिरत आह न्यायावयवत्वमिति । प्रकृतेत्यादिः । गन्धवती भिद्यते गन्धादित्यादिस्थलीयप्रतिज्ञायामव्याप्तिमाशङ्क्याह पूर्वोपदर्शितेति । प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयताबहिर्भावेण यल्लिङ्गविषयत्वं तदभावार्थकमित्यर्थः । तेन चोपनयादेर्व्युदासः । भावहेतुकोदाहरणस्य लिङ्गाविषयकत्वदलेनैव वारणसम्भवादाह अभावहेतुक इति । तथा च ह्रदो निर्धूमो निर्व-

ताननतिप्रसक्तताान्त्रिकव्यवहारादिति केचित् । तन्न । देवदत्तप्रभवत्वादिना जातिसङ्करप्रसङ्गात् । प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकं वाक्यं प्रतिज्ञेत्यपि न, तज्जनकत्वं जनकत्वज्ञानं वा नानुगतरूपमन्तरेण सम्भवतीत्युक्तस्याऽनुसरणीयत्वात् । एतेन शब्दोऽनित्य इति लिङ्गिधीपरवाक्यजन्यज्ञानवृत्तिकृतकत्वादित्यादिवाक्यजन्यज्ञानावृत्तिजातियोगिज्ञानजनक-

---

लिङ्गि साध्यम्।तद्विषयकं तद्वद्विशेष्यकम्।तेनेदं जलं निःस्नेहत्वप्रकारकप्रमाविषयत्वशून्यत्वात इदं द्रव्यं जलान्यत्वप्रकारकप्रमाविष-

---

न्हित्वादित्यादिस्थलीयस्य यो यो धूमवान् स वन्हिमानित्युदाहरणस्य वारणायेत्यर्थः । लिङ्गिपदस्य पक्षपरत्वे पूर्वस्माद्भेदापत्तिरतो व्याचष्टे लिङ्गि साध्यमिति । यद्यपि लिङ्गिविषयकं लिङ्गवद्विशेष्यकमित्येव व्याख्यातुमुचितं तावतैवाग्रिमदोषव्युदासात्, तथाप्यग्रिमव्याख्यायां लिङ्गिपदस्य साध्यपरत्वार्थं ग्रन्थगौरवापत्तिभियैवात्र लिङ्गि साध्यमित्युक्तमिति ध्येयम् । तेनेति । साध्यवन्मुख्यविशेष्यकत्वपर्यन्तविवक्षणेनेत्यर्थः । अन्यथा इदं जलमित्यादिस्थलीयस्य यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषय इत्युदाहरणस्यापि जलत्वं साध्यं जलात्मकञ्च साध्यवन्तमवगाहमानत्वात्तत्रातिप्रसङ्गापत्तेरिति भावः । स्नेहवत्त्वप्रकारकप्रमाविषयत्वस्य हेतुतायामुदाहरणस्य लिङ्गाविषयकत्वदलेनैव वारणसम्भवान्निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावो हेतुरुक्तः । शीतस्पर्शादिसमवायिकारणतावच्छेदकीभूतजलत्वजातेर्द्व्यणुकपर्यन्तस्थायित्वमते जलारम्भकपरमाणावुक्तहेतोः साध्यव्यभिचारादाह इदं द्रव्यमिति । यत्तु निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावो जलत्वमेव स्नेहानामनन्तत्वेन तथात्वा-

वाक्यं प्रतिज्ञेति निरस्तम् । ननु प्रतिज्ञा न साधनाङ्गं विप्रतिपत्तेः पक्षपरिग्रहे तत्र प्रमाणाकाङ्क्षायां हेत्वभिधानस्य प्राथम्यादिति चेन्न । विप्रतिपत्त्यग्रे समयबन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वाऽऽकाङ्क्षायां शब्दानित्यत्वं साध्यं, न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे ।

---

यत्वशून्यत्वादित्यादौ यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषय इत्याद्युदाहरणे नातिप्रसङ्गः । लिङ्गाविपर्ययस्य पूर्वोक्तव्याप्यत्वा-

---

योगात् तथा च यन्न जलमित्युदाहरणस्य जलत्वरूपलिङ्गविषयकत्वादेव नातिप्रसङ्गः अतः स्थलान्तरमाह इदं द्रव्यमितीति । तन्न । निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावस्याऽतिरिक्तत्वात् । अन्यथा तुल्यन्यायेन जलान्यत्वप्रकारकप्रमाविषयत्वाभावस्यापि जलत्वस्वरूपत्वे यन्न द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषय इत्युदाहरणस्यापि जलत्वस्वरूपलिङ्गविषयकत्वेनैव वारणसम्भवादिति ध्येयम् । जन्यजलस्य पक्षत्वे निःस्नेहत्वप्रकारकप्रमाविषयत्वशून्यत्वं स्वरूपासिद्धम् उत्पत्तिकालावच्छेदेन निःस्नेहत्वस्य तत्र सत्त्वादतो हेत्वन्तरमाह जलान्यत्वेति । तथा चोक्तस्थलीयस्य यन्न द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषय इत्युदाहरणस्य द्रव्यत्वरूपसाध्यविषयकत्वेपि तद्वन्मुख्यविशेष्यकत्वाभावान्नातिव्याप्तिरिति भावः । ननु विषयत्वं प्रमेयत्वज्ञानजन्यज्ञानीयं प्रमेयत्वादित्यादिस्थलीयहेतावतिव्याप्तिः, तादृशानुपूर्व्याः सम्प्रदायविरोधेन न्यायाघटकतया कथञ्चिद्वारणे ह्रदो निर्धूमो निर्वह्नित्वादित्यादिस्थलीये यत्र धूमस्तत्र वह्निरिति व्यतिरेक्युदाहरणेऽतिव्याप्तिः तस्य साध्यवन्मुख्यविशेष्यकत्वात् यत्र धूमस्तत्र वह्निरि-

न च वादिवाक्येऽनुपस्थितमपि योग्यतया अन्वेति, अतिप्रसङ्गात्। न च विप्रतिपत्तितः साध्योपस्थितिः, तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थया चान्तरितत्वात् परविप्रतिपत्तिं समयबन्धञ्च विना स्थापनाया अभावात् विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च। आवृत्तौ तु सैव प्रतिज्ञा। न चावयवान्तराद्धेत्वन्वययोग्या साध्योपस्थितिः। ना-

---

विषयार्थकत्वे हेतुवारणाय लिङ्गीति। लिङ्गिविषयत्वञ्च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भावेण वाच्यमतेन वह्निमान् वन्हिसामग्रीमत्त्वात् अयं हेतुरिदं वा हेतुत्वं तत्त्वेन प्रतीयमा-

---

त्याकारकस्यैवोदाहरणस्य मिश्रैर्व्यवस्थापितत्वादित्यतः प्रकारान्तरमाह लिङ्गाविषयेत्यस्येत्यादि। पूर्वोक्तेति। प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकेत्यर्थः। ननु साध्यवद्विशेष्यकत्वरूपस्य प्रागुक्तलिङ्गिविषयत्वस्य निवेशे घटः प्रमेयो द्रव्यत्वादित्यादौ हेतावतिव्याप्तिः पञ्चम्यर्थस्यापि प्रमेयत्वेन साध्यवत्त्वादतः साध्यतावच्छेदकरूपेण साध्यविषयकत्वरूपं तद्वाच्यं तच्च वन्हिमान् वन्हिसामग्रीमत्त्वादित्यादिहेतावतिप्रसक्तमत आह लिङ्गिविषयत्वञ्चेति। प्रकृतेत्यादि। प्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारकतानिरूपितहेतुत्वत्वावच्छिन्नविशेष्यकत्वस्य बहिर्भूतमव्यापकं यत्साध्यविषयत्वं तादृशविशेष्यताबहिर्भूतविषयताकत्वमिति यावत्, साध्यप्रवेशे वैयर्थ्यादिति ध्येयम्। हेतुतावच्छेदकावच्छिन्नेत्यस्य फलमाह वन्हिमानित्यादि। वन्हिसामग्रीमत्त्वादित्यत्र हेतुप्रकारकहेतुत्वत्वावच्छिन्नविशेष्यत्वाव्यापकसाध्यविषयिताकत्वेपि हेतुतावच्छेदकावच्छिन्नप्रकारित्वा-

प्यन्वयवान्तरेणाऽऽक्षेपात्, साध्यान्वये तदभिधानं तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात् । तस्मात् प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेपः । अन्ये तु शब्दानित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः तथापि प्रमाणमात्रे नाकाङ्क्षा किन्तु विशिष्टे, विशिष्टन्तु विशेषणं साध्यमनभिधाय न शक्याभिधानम् । न च

---

नत्वादिसाध्ये हेतौ नातिप्रसङ्गः । लिङ्गविषयकज्ञानजनकत्वानियं-

---

व्यापकसाध्यविषयिताकत्वविरहान्नातिव्याप्तिरिति भावः । हेतुत्वत्वावच्छिन्नविशेष्यताप्रवेशस्य फलमाह अयं हेतुरिति । अयं हेतुत्ववान् हेतुत्वेन प्रमीयमाणत्वादित्यादौ हेत्ववयवस्य पञ्चम्यर्थविधेयहेतुतावच्छेदकावच्छिन्नप्रकारित्वाव्यापकसाध्यविषयितावत्त्वेपि तादृशविषयित्वस्य हेतुत्वत्वावच्छिन्नविशेष्यत्वाव्यापकत्वविरहान्नातिव्याप्तिरिति भावः । ननु पक्षांशे साध्यावगाहित्वविवक्षयैव उक्तहेतोर्वारणसम्भवान्निरुक्तविषयिताबहिर्भावेण साध्यविषयितापर्यन्तानुधावनमफलमत आह इदं वेति । तथा चेदं हेतुत्वं हेतुतात्वेन प्रमीयमाणत्वादित्यादौ हेतुत्वत्वसाध्यकस्य हेत्ववयवस्य पक्षीभूतहेतुत्वांशे पञ्चम्यर्थतावच्छेदकीभूतहेतुतात्वरूपसाध्यावगाहित्वात्तत्राऽतिव्याप्तिरेव स्यात् यदि नोक्तविवक्षा स्यादिति भावः । नन्वेवमपि यत्रायं वह्निमानित्यादौ विषयितासम्बन्धेन बुद्ध्यवच्छिन्नस्यैव समवायेन हेतुत्वं तत्र बुद्धिमत इत्यादौ हेत्वयवेऽतिव्याप्तिः तस्य मतुबर्थबुद्धिसम्बन्धित्वप्रकारेणैव हेतुत्वावगाहितया हेतुतावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितहेतुत्वविशेष्यताबहिर्भावेणैव साध्यावगाहित्वात्, तथाऽयमेको धूमादित्यत्रापि हेतावतिव्याप्तिः तस्या निरुक्तविषयिताबहिर्भावेण प्रकृत्यर्थधूमे एकत्वरूपसाध्यावगाहित्वादिति चेन्न । यत्साध्यकहेत्ववयवानां यादृशयादृशविष-

वस्तुतो यत्साध्यं तत्र प्रमाणं वदेति मध्यस्थनियोगः, वादिद्वयमध्ये तदसम्भवात् । तस्मात्साध्याभिधानं विना न हेतोराकाङ्क्षा न वान्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति ॥

---

तावयवतावच्छेदकरूपवत्त्वं तत्त्वमित्यादिकं तादृशावच्छेदकरूपान्तरापरिचये दुर्ग्रहत्वादनुपादेयम् ॥

---

यिताकबोधजनकत्वं सम्प्रदायसिद्धं तादृशतादृशविषयिताबहिर्भावेण साध्यावगाहित्वस्य विवक्षितत्वादुक्तहेतूनामतथात्वादिति भावः । लिङ्गेत्यादि । उपनयादिवारणार्थमनियतान्तं प्रकृतहेतुविषयकज्ञानजनकत्वाव्याप्त्यर्थकम् । प्रतिज्ञात्वस्यापि क्वचिल्लिङ्गज्ञानजनकत्वसमानाधिकरणत्वादानियतत्वानुसरणम् । अप्रसिद्धहेतुकोदाहरणस्थले लिङ्गज्ञानजनकत्वानियतस्योदाहरणत्वस्य वारणाय लिङ्गविषयकेत्यादि । प्रकृतसाध्यविषयकज्ञानविषयकत्वनियतेनेति तदर्थः । इदं जलं निःस्नेहत्वाभावादित्यादौ यन्न जलं तन्निःस्नेहत्ववदित्याद्युदाहरणे तत्तदुदाहरणत्वमादायातिप्रसङ्गवारणार्थमवयवतावच्छेदकेत्युक्तम् । दुर्ग्रहत्वादित्याद्युपलक्षणम् । यत्साध्यकप्रतिज्ञायां लिङ्गविषयकत्वानियमस्तत्र प्रागुक्तरीत्या अव्याप्तश्चेत्यपि द्रष्टव्यम् ॥

इति जागदीश्या अवयवग्रन्थे प्रतिज्ञालक्षणम् ।

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां साधनता-व्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम्, अन्यथाऽना-काङ्क्षाभिधाने निग्रहापत्तेः, लोके तथैवाकाङ्क्षानिवृत्ति-रिति व्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यासः। हेतुत्व-ञ्चानुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानज-नकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम्,

---

अनुमितीत्यादि। जनकान्तं न्यायावयवार्थकं निगमनवार-णाय। साध्याविषयेत्यादि। साध्याविषयत्वञ्च प्रकृतहेतुतावच्छेद-कावच्छिन्नहेतुविशिष्टहेतुत्वविषयताबहिर्भावेण पूर्वोपदर्शितसाक्षात्प-

---

न्यायावयवार्थकमिति। न च न्यायान्तर्गतत्वमात्रं सम्यक् तावता-प्युदासीनस्य धूमादित्यादिवाक्यस्य वारणसम्भवादिति वाच्यम्। निगमनैकदेशे तस्मादित्यत्रातिव्याप्त्यापत्तेरिति भावः। उपनया-दीनां वक्ष्यमाणहेतुविभक्तिमत्त्वेनैव वारणसम्भवादाह निगमनेति। ननु वन्हिमान् वन्हिसामग्रीमत्त्वादित्यादौ हेतावव्याप्तिः तस्य सा-ध्याविषयकज्ञानजनकत्वाभावादत आह साध्याविषयत्वञ्चेति। प्र-कृतेति। तथा च हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितहेतुत्व-त्वावच्छिन्नविशेष्यताबहिर्भावेण यत्साध्यविषयकत्वं तच्छून्यज्ञा-नजनकत्वमर्थः। न च तादृशविशेष्यताबहिर्भूतविषयताशून्यत्वस्यैव सम्यक्त्वे साध्यप्रवेशो व्यर्थ इति वाच्यम्। अखण्डाभावत्वात्। न च तथाप्यनतिप्रयोजकत्वम्, हेतुविभक्तिमत्त्वपदसार्थक्यस्यैवाऽति-प्रयोजकत्वात्। अन्यथा तद्वारणीये व्यतिरेक्युदाहरणादौ निरुक्तवि-शेष्यताबहिर्भूतविशेष्यतावत्त्वादेवातिव्याप्तिविरहेण तद्वैयर्थ्यापत्तेः। न चेदमेकं धूमादित्यादिहेतावव्याप्तिः तस्य हेतुविशिष्टहेतुत्वविष-यताबहिर्भावेणैकत्वरूपसाध्यावगाहित्वादिति वाच्यम्। धूमादावे-

रम्परासाधारणप्रकृतपक्षविशेषणत्वेन वा, तेन पूर्वोपदर्शितहेतौ नाव्याप्तिः । इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात् अयं

---

कत्वादेरयोग्यतानिश्चयकालीनस्य केवलधूमादिहेतुताबोधस्य जनकतामादायैव तत्र लक्षणसम्भवादिति भावः । नन्वेवमपि यत्रायं वन्हिमानित्यादौ विषयितासम्बन्धेन बुद्ध्यवच्छिन्नस्यैव समवायेन हेतुत्वं तत्र वन्हिमत इत्यादौ हेतावव्याप्तिः तस्य हेतुप्रकारकहेतुत्वाविषयताबहिर्भावेण मतुबर्थसम्बन्धांशे बुद्धिरूपसाध्यावगाहित्वादत आह पूर्वोपदर्शितेति । प्रतिज्ञालक्षणोपदर्शितेत्यर्थः । तथा च यत्पक्षकयत्साध्यकप्रतिज्ञाव्यक्तीनां पक्षोद्देश्यकसाध्यनिष्ठयादृशयादृशविशेषणताकबोधजनकत्वं साध्यनिष्ठतादृशविशेषणताशून्यबोधजनकत्वमर्थः स चोक्तहेतावप्यस्तीति नाव्याप्तिः । तत्र साक्षात्पक्षविशेषणत्वेन यत्साध्यविषयकत्वं तच्छून्यत्वमात्रोक्तौ तस्माद्विद्यत इत्यादिनिगमनेऽतिव्याप्तिः तत्राख्यातार्थद्वारैव प्रतिज्ञायाः पक्षधर्मिकसाध्यविशेषणकज्ञानजनकत्वादतः परम्परेत्युक्तम् । तन्मात्रोक्तौ च तस्मात्पचतीत्यादिनिगमनेऽतिव्याप्तिः तत्र साक्षादेव प्रतिज्ञायाः पक्षे साध्यप्रकारकज्ञानजनकत्वादतो द्वयमुपात्तम् । न च साध्यनिष्ठतादृशविशेषणत्वानां प्रातिस्विकरूपेण प्रवेशादननुगमः, तादृशविशेषणत्वाभावकूटस्याननुगतत्वात् पक्षनिष्ठमुख्यविशेष्यतानिरूपितसाध्यनिष्ठविशेषणताकत्वेन कथञ्चिदनुगमयितुं शक्यत्वाच्च । न चैवं तस्मात्पचतीत्यादिनिगमनेऽतिव्याप्तिरिति वाच्यम् । स्वस्यापि स्वघटकतया साध्यनिष्ठविषयतायामपि तादृशविशेषणतात्वादिति भावः । पूर्वोपदर्शितेति । वन्हिमान् वन्हिसामग्रीमत्त्वादित्यादावित्यर्थः । यद्यपि हेतुविभक्तिमत्त्वानुक्तौ ह्रदो निर्धूमो निर्वन्हित्वादित्यादौ व्यतिरेक्युदाहरण एवातिप्रसङ्गः, तथापि अग्रे विवक्षणीयतदर्थस्य व्यावृत्त्यर्थं स्थलान्तरमाह इदमिति । दण्डसंयोगेति । संयोगपदं साध्याविशेष्यस्य वारणाय । द्रव्यपदञ्च दण्डगुणादौ व्यभिचारस्य वारणाय । अजन्यत्वस्यैव हेतुत्वसम्भवेऽपि अखण्डाभावतया दण्डसंयोगाजन्यत्वे व्यर्थविशेषणत्वाभावः । ननूक्तस्थलीयस्य यद्दण्डाज्जातं तद्दण्डसंयोगाजन्यद्रव्यत्वाभावव-

न धूमादालोकवान् आर्द्रेन्धनशून्यत्वादित्यादौ व्यतिरेकिण्युदाहरणस्य हेतुत्वपक्षकसाध्यान्वितस्वार्थबोधकेदम्पदशालिन उपनयस्य च वारणाय हेतुविभक्तिमदिति। तदर्थश्च प्रकृतसाध्यान्वयबो-

---

दित्युदाहरणस्य ज्ञापकत्वरूपहेतुत्वप्रतिपादकविभक्तिमत्त्वमात्रेणापि वारणसम्भवादग्रे साध्यान्वयिस्वार्थबोधक्षणेत्यादिपर्यन्तविवक्षा व्यर्थेत्यत आह अयं न धूमादिति। अन्वय्युदाहरणस्य साध्याविषयकत्वदलेनैव वारणसम्भवादाह व्यतिरेकिणीति। न्याय इति शेषः। यद्यप्युक्तस्थलीयस्य धूमादालोकव्यापकीभूताभावप्रतियोग्यार्द्रेन्धनशून्यत्ववानयमित्याकारकोपनयस्यापि वारणसम्भवादुदाहरणमात्रानुसरणमयुक्तम्, तथापि अग्रे हेतुत्वपक्षकोपनयस्य वारणेनैव उपनयान्तरस्य वारणमर्थतः सिद्धमतो न तस्य पृथगुपन्यास इति ध्येयम्। ननु प्रकृतसाध्यान्वितस्वार्थोपस्थापकपदवत्त्वेनाप्युक्तोदाहरणस्य वारणसम्भवाद्विभक्तिपर्यन्तानुसरणं व्यर्थमत आह हेतुत्वपक्षक इति। घटादिपक्षकोपनयस्य विभक्तिपदाप्रवेशेऽपि प्रकृतसाध्यान्वितस्वार्थबोधकहेतुत्वार्थकपदवत्त्वाविवक्षयापि वारणसम्भवात् हेतुत्वपक्षकोपनयानुसरणम्। न चोपनयमात्रस्यैव प्रागुक्तसाध्याविषयकत्वदलेनैव वारणादिदमयुक्तम्, पूर्वोपदर्शितेत्यादिद्वितीयकल्पोक्तसाध्याविषयकत्वस्योपनयेऽपि सम्भवात्। प्रकृतहेतुविशिष्टहेतुत्वविषयिताबहिर्भावेण साध्याविषयकत्वकल्पे तु हेतुत्वं न रूपं गुणभिन्नत्वादित्यादिस्थलीयस्य रूपत्वव्यापकाभावप्रतियोगिगुणान्यत्ववदिदमित्येवं व्यतिरेक्युपनयस्य वारणार्थं विभक्तिपदम्, तस्यापि तस्मान्न रूपमित्याकारकनिगमनोपस्थापितसाध्यान्वितस्वार्थबोधकहेतुत्वार्थकेदम्पदवत्त्वादिति वदन्ति। यथाश्रुतमूलेन वारयितुमशक्यत्वादाह तदर्थश्चेति। अयं धूमाद्वह्निमान् आलोकादित्यादिस्थलीयस्य धूमाद्वह्निव्याप्यालोकवानयमित्युपनयस्यापि वह्निस्वरूपसाध्यान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वात्तत्रातिव्याप्तिरतः प्रकृतपदम्। तथा च तत्र धूमज्ञानज्ञाप्यवह्नित्वावच्छिन्ने पञ्चम्यर्थहेतुत्वस्यान्वयान्नातिव्याप्तिः। ननु प्रकृतहेतुविशिष्टहेतुत्वविष-

धनक्षमार्थोपस्थितिजनकहेतुविभक्तिमत्त्वम् । हेत्विति सम्पातायातम्।यदि च पर्वते पर्वतभिन्नत्वप्रकारकज्ञानस्य विशेष्यतया अभाव-

---

यतावहिर्भावेण साध्याविषयकत्वस्य प्रवेशकल्पे मूलोक्तहेतुपदं व्यर्थं प्रकृतसाध्यान्वितार्थोपस्थितिजनकविभक्तिमत्त्वस्यैव सम्यक्त्वादत आह हेत्वितीति । पूर्वोपदर्शितत्यादिः । द्वितीयसाध्याविषयकत्वकल्पे तु हेतुत्वबोधकार्थकं हेतुपदं देयमेव।अन्यथा गुणाभावो गुणशून्यो द्रव्यभिन्नत्वादित्यादिस्थलीयस्य गुणव्यापकीभूताभावप्रतियोगिद्रव्यान्यत्ववानयमित्याकारकव्यतिरेक्युपनयस्यापि पक्षीभूतप्रकृतसाध्यान्वितैकत्वोपस्थितिजनकप्रथमाविभक्तिमत्त्वात्तत्रातिव्याप्त्यापत्तेः । वस्तुतः प्रथमकल्पेपि हेतुपदादेव प्रकृतसाध्यान्वितस्वार्थोपस्थितिहेतुत्वस्य लाभान्न तद्वैयर्थ्यं सामान्यशब्दस्य विशेषपरताया व्युत्पत्तिसिद्धत्वादिति परमार्थः । ननु पर्वतस्तत्पुरुषीयपर्वतभिन्नत्वप्रकारकनिश्चयस्य विशेष्यतयाऽभाववान् तत्पुरुषीयतादृशनिश्चयाभावादित्यादिस्थलीयस्य यो यस्तत्पुरुषीयपर्वतभिन्नत्वप्रकारकनिश्चयवान् स त पुरुषीयतादृशनिश्चयवान् यथा तत्पुरुषीयतादृशनिश्चयाभावादुत्पन्न ज्ञानमित्युदाहरणस्यापि प्रकृतहेतुविशिष्टहेतुत्वविषयतावहिर्भावेणोत्पन्नज्ञानांशे प्रकारतावच्छेदकतया साध्यावगाहित्वेपि पूर्वोपदर्शितसाक्षात्परम्परासाधारणसाध्याविषयकत्वात् प्रकृतसाध्यान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वाच्च द्वितीयकल्पे तत्रातिव्याप्तिरित्याशङ्कते यदि चेति । पर्वत इति । पक्ष इति शेषः । पर्वतभिन्नत्वेति । तत्पुरुषीयपर्वतभिन्नत्वप्रकारकनिश्चयस्येत्यर्थः । यथाश्रुते तादृशज्ञानत्वावच्छिन्नाभावस्य ज्ञानानुत्पादकतया वक्ष्यमाणदृष्टान्तासङ्गतेर्विशेष्यतासम्बन्धेन तादृशनिश्चयत्वावच्छिन्नाभावादेव पर्वतत्वादिप्रकारकज्ञानस्योत्पादात् । अत एव वस्तुमात्रस्यैव सर्वं पर्वतभिन्नमित्याकारकभ्रमविशेष्यत्वात्साध्याप्रसिद्धिरित्यपि दूषणं समाहितम्, तादृशभ्रमशून्यपुरुषस्यैव साध्येऽन्तर्भावात् प्रमेयावच्छेदेन विशेष्यतया तादृशज्ञानाभावस्य पर्वते सम्भवाच्चेति ध्येयम् । पर्वतत्वादिहेतुतायामुदाहरणस्य प्रकृतसाध्यान्वितस्वार्थबोधकविभक्तिमत्त्वविरहादेव व्युदासः स्याद्-

स्य साध्यत्वं हेतुत्वञ्च सिषाधयिषया च न्यायप्रयोगस्तत्र यथा तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यतिरेक्युदाहरणेऽतिव्याप्तिरित्युच्यते, तदाऽवयवान्तरोपस्थितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम्, उदाहरणान्यत्वेन वा विशेषणीयम्। के

---

तः साध्यस्यैव हेतुत्वमुक्तम्। ननु साध्यस्यैव हेतुत्वे विवादाङ्गसंशयाभावान्न्याय एव नास्ति कस्योदाहरणेऽतिव्याप्तिराशङ्कित इत्यत आह सिषाधयिषेति। इदञ्च स्वरूपसम्बन्धेनैव साध्यसाधनभावमभिप्रेत्योक्तं स्वरूपकालिकादिसम्बन्धाभ्यां तादृशज्ञानाभावस्य साध्यसाधनस्थलेऽनुमित्सां विनापि न्यायप्रयोगसम्भवादिति ध्येयम्। तादृशज्ञानाभावादिति। तत्पुरुषीयपर्वतभिन्नत्वप्रकारकनिश्चयाभावादित्यर्थः। अन्वय्युदाहरणस्य साक्षात्परम्परासाधारणपक्षविशेषणतया साध्याविषयकत्वदलेनैव वारणसम्भवादाह व्यतिरेकीति। न चैतदुदाहरणवारणार्थमेव मूलोक्तं हेतुपदं ज्ञापकत्वरूपहेतुत्वबोधकार्थकमस्तु प्रकृतस्थलीयपञ्चम्याः कारणमात्रबोधकत्वादिति वाच्यम्। यत्र पर्वतभिन्नत्वज्ञानाभावज्ञाप्यस्यैव ज्ञानस्य यथा पर्वतभिन्नत्वज्ञानाभावादिदं ज्ञानमित्येवं प्रकारेण दृष्टान्तता तादृशोदाहरणे तथाप्यतिव्याप्तितादवस्थ्यादिति भावः। दृष्टान्तस्योदाहरणघटकत्वं न सर्वसम्मतमतो यदि चेत्युक्तम्। यत्तु प्रकृतसाध्यविशेष्यकस्वार्थान्वयबोधजनकत्वविवक्षयैव कथितोदाहरणव्युदासम्भवात् यदि चेत्युक्तमिति। तत्तुच्छम्। साध्यविशेष्यकान्वयबोधप्रवेशे विभक्तिपदव्यर्थतापत्तेः, उपनयस्थायपदस्य साध्यप्रकारकान्वयबोधं प्रत्येव हेतुत्वेन तत्रातिप्रसङ्गाभावादिति ध्येयम्। अवयवान्तरेति। न च अवयवान्तरेण प्रतिज्ञादिना साध्यविधया वस्तुगत्योपस्थापितो यः पर्वतभिन्नत्वप्रकारकज्ञानाभावस्तदन्वितस्यैव स्वार्थस्यान्वयबोधकत्वमुक्तोदाहरणस्थपञ्चम्या अप्यस्तीत्यतिव्याप्तितादवस्थ्यमिति वाच्यम्। अवयवान्तरस्थपदसाकाङ्क्षविभक्तिमत्त्वस्य विवक्षितत्वादिति भावः। वक्तव्यमिति। हेतुविभक्तिमत्त्वदलेनेति शेषः। अवयवान्तरादिप्रवेशमपेक्ष्य लाघवादाह उदाहरणे-

चित्तु साध्यविषयकधीजनकत्वानियतहेतुविभक्तिमत्त्वनियतावच्छे-
दकरूपवत्त्वं समुदितलक्षणार्थ इत्याहुः । तच्चिन्त्यम् । हेतुत्वप्रतिपा-
दकेति विभक्त्यर्थेति । हेतुत्वविशेष्यकान्वयबोधजनकन्यायावयवत्व-
मित्यर्थः । हेतुत्वं प्रमेयत्वस्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति । त-
स्मादितरेभ्यो भिद्यते इत्यादिनिगमनवारणाय हेतुत्वेति विशे-
ष्येति च । घटो दण्डाद्वह्निर्धूमादित्यादिकं तु न प्रतिज्ञा, तदवृत्ते-

---

ति । साध्येत्यादि । अत्राऽनियतान्तं निगमनत्वस्य, नियतत्वान्तमुदा-
हरणत्वस्य, अवच्छेदकान्तञ्च व्यतिरेक्युदाहरणत्वस्य व्युदासाय बो-
ध्यम् । सर्वसाधारणस्य हेतुत्वनिगमनत्वादेर्दुर्वचत्वान्नेदं युक्तमि-
त्याशयेनाह तच्चिन्त्यमिति । अत्र निगमनादेरपि हेतुत्वप्रतिपादक-
विभक्तिमत्त्वात्तत्रातिव्याप्तिरतो व्याचष्टे विभक्त्यर्थेति । विभक्त्य-
र्थीभूतं यद्धेतुत्वं तद्विशेष्यकान्वयबोधजनकेत्यर्थः । हेतुत्वमित्या-
दि । यद्यपि नामोपस्थाप्यस्यापि हेतुत्वस्य विभक्त्यर्थत्वात्तद्दोषता-
दवस्थ्यम्, तथापि विभक्तिजन्योपस्थितिसहकारेण हेतुत्वविशेष्यक-
बोधजनकत्वं विवक्षितम् । न चेदं हेतुत्वमित्यादिस्थलीयस्य तस्मा-
द्धेतुत्वमित्यादिनिगमनस्यैवमप्यवारणं तस्य पञ्चमीजन्यहेतुत्वोप-
स्थितिसहकारेणैव तादृशबोधजनकत्वादिति वाच्यम् । हेतुत्वविधे-
यकबोधजनकत्वेनापि विभक्तिजन्योपस्थितेर्विशेषणीयत्वात्, तथा
च तस्माद्धेतुत्वमित्यादौ पञ्चम्यर्थहेतुत्वस्य साध्यीभूतहेतुत्वांशे वि-
धेयतयैव भानात्तद्वारणमिति भावः । भिद्यत इत्यादिना तस्मात्पच-
तीत्यादिनिगमनस्यापि सङ्ग्रहः, तस्यापि आख्यातविभक्त्यर्थविशेष्य-
कबोधजनकत्वादिति भावः । ननु घटो दण्डादित्यादिप्रतिज्ञास्थली-
यस्य तस्माद्दण्डादित्यादिनिगमनस्यापि पञ्चम्यर्थहेतुत्वविशेष्यकबो-
धजनकत्वात्तत्रातिव्याप्तिरत आह घटो दण्डादिति । ननु घटो द-
ण्डादित्यत्र जनकत्वमेव पञ्चम्यर्थः इति तत्रत्यलक्षणस्य ज्ञापकत्व-
लक्षणहेतुत्वविशेष्यकबोधजनकत्वाभावादेव वारणं भविष्यतीत्यत
आह वह्निर्धूमादिति । तदवृत्तेरिति । पञ्चम्यर्थहेतुताया दण्डादिवृ-
त्तित्वेन घटावृत्तेरिति भावः । स्वावृत्तेरपि स्वस्य तादात्म्येन स्वनि-

हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं वा, उदाहरण-
प्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकन्यायावयवत्वं वा,

---

रतदात्मनश्च तद्धर्मव्यापकत्वायोगात् सम्प्रदायविरोधाच्च तेन तत्र-
त्यनिगमने नातिव्याप्तिरिति भावः। उदाहरणेति। क्वचिज्जि-
ज्ञासानुत्पादेऽपि तद्योग्यतासत्त्वान्नाव्याप्तिः। अनुक्तोदाहरणस्य-

---

पृधर्मव्यापकत्वादाह अतदात्मन इति। तथा च तादात्म्येतरवृत्त्य-
नियामकसम्बन्धेन व्यापकत्वविरहादुक्तक्रमेण न्याय एव नास्ति क-
स्य निगमनेतिव्याप्तिरिति भावः। ननु वृत्त्यनियामकसंयोगादिना-
पि गगनादेः पृथिवीत्वादिव्यापकत्वस्य स्वयमेवोक्तत्वात् व्याप्यत्वस्य
पञ्चम्यर्थत्वमते वन्ह्यादौ तादृशसाध्यस्य सत्त्वाच्चेदं न युक्तमत
आह सम्प्रदायेति। न च विवादाङ्गस्य संशयादेः शाब्दप्रमोपयु-
क्तस्य चाकाङ्क्षादेः सम्भवेपि वन्हिर्धूमादित्यादिप्रतिज्ञानङ्गीकारः
साम्प्रदायिकानां निर्बीजमिति वाच्यम्। एकसुबर्थेन समं सामा-
न्यत एव सुबर्थान्तरान्वयस्याऽव्युत्पन्नतया प्रतिज्ञानिविष्टपञ्चम्यर्थो-
पस्थापितधूमव्याप्यत्वादिसाध्ये हेत्ववयवान्तर्गतपञ्चम्यर्थान्वयस्यैव
उपनयानङ्गीकारबीजत्वात्। अन्यथा गृहे घटस्य इत्यादितोपि घट-
सम्बन्धो गृहवृत्तिरित्याकारकबोधप्रसङ्गात्। अत एव धने चैत्रस्य
इत्यादितोपि चैत्रस्वत्ववद्धने इत्येव बोधो न तु चैत्रस्वत्वं धनवृत्ति
इत्याकारको बोधः सप्तम्यर्थाधेयत्वस्य षष्ठ्यर्थस्वत्वेऽन्वयस्याऽव्यु-
त्पन्नत्वात्। न च क्रयाच्चैत्रस्य धनमित्यादितः क्रयजन्यचैत्रस्वत्वस्य
धनादौ प्रतीत्यनुरोधात्सुबर्थेन समं स्वार्थमुख्यविशेष्यकान्वयबो-
धजनकत्वमेव सुपामव्युत्पन्नं कल्प्यते तथा च वन्हिर्धूमादिति प्र-
तिज्ञायां पञ्चम्यर्थस्य पक्षविशेषणतया मुख्यविशेष्यत्वाभावात् तत्र
हेत्वन्तर्गतपञ्चम्यर्थस्याऽन्वये बाधकाभाव इति वाच्यम्। तावता
तस्माद्धूमादित्येवं निगमनान्तर्गतयोः पञ्चम्यर्थयोः परम्परान्वय-
सम्भवेन सम्प्रदायविरोधस्यावश्यकत्वात्। तत्र धूमव्याप्यत्वादिसा-

साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा, प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्त्तकज्ञानजन-

---

लेऽपि तादृशयोग्यतासत्त्वान्न्यायावयवेति । उदाहरणत्वञ्चेह न न्यायगर्भं वैयर्थ्यात् । साध्याविषयेत्यादि । अयं न दण्डादण्डसंयोगाजन्यद्रव्यत्वादित्यादौ प्रतिज्ञानिगमनयोर्वारणाय साध्याविषयेत्यादि व्याख्यातार्थम्।उपनयविशेषवारणाय हेतुपञ्चम्यन्तेति।हेत्विति हेतुत्वबोधकार्थकं हेतुपञ्चम्योर्वैकल्पिकमुपादेयम्।उपनयस्य

---

ध्यस्य मुख्यविशेष्यतयैव भानादिति भावः । तादृशयोग्यतासत्त्वादिति । धूमादितिवाक्यात्मकेत्यादिः । उदाहरणत्वञ्चेति । न्यायगर्भोदाहरणत्वप्रवेशेऽपि अनुक्तोदाहरणस्थले तादृशयोग्यतासत्त्वेनातिव्याप्तेर्न्यायावयवत्वस्यावश्यकत्वादिति भावः । वैयर्थ्यादिति। प्रकृतव्याप्तितात्पर्यकत्वभागस्यैव सम्यक्त्वादिति भावः।प्रतिज्ञादीतरस्य हेतुपञ्चम्यन्तत्वेनैव वारणादाह अयं न दण्डादित्यादि। यथाश्रुतसाध्याविषयकत्वस्य वन्हिमान् वन्हिसामग्रीमत्त्वादित्यादिहेतावव्याप्तेराह व्याख्यातार्थमिति । तथा च प्रकृतहेतुविशिष्टहेतुत्वविषयताबर्हिभावेण यत्साध्यविषयकत्वं तदभावो ग्राह्यः अन्वय्युपनयस्य निरुक्तसाध्याविषयकत्वदलेनैव वारणादाह उपनयविशेषेति । तथा च ह्रदो निर्धूमो निर्वन्हित्वादित्यादिस्थलीयस्य धूमव्यापकीभूताभावप्रतियोगिनिर्वन्हित्ववानयमित्याकारकव्यतिरेक्युपनयस्य वारणायेत्यर्थः । यद्यप्युक्तस्थलीयोदाहरणस्यापि हेतुपञ्चम्यन्तत्वेन वारणं सम्भवति, तथाप्यग्रे वक्ष्यमाणोदाहरणान्यत्वेनैव तद्वारणसम्भवादुपनयमात्रानुसरणम् । ननु पञ्चम्यन्तत्वस्यैव सम्यक्त्वाद्धेतुपदं व्यर्थमत आह हेत्वितीति । वैकल्पिकमिति । तथा च निरुक्तसाध्याविषयकत्वविशेषितं हेतुत्वप्रतिपादकान्तावयवत्वं पञ्चम्यन्तावयवत्वं वा लक्षणार्थः । ननु हेतुत्वं निर्धूमं निर्व-

चान्तेऽनुसन्धीयमाना प्रथमैवान्तः । यथा दण्डादित्यादेः स्वपरस्यापि दृष्टान्तस्य पञ्चम्यन्तत्वेऽन्वयायोगात् । कस्यचिद्व्यतिरेकिण उदाहरणस्य पञ्चम्यन्तत्वसम्भवे तु तद्वारणं पूर्ववत् । अत्र चार्थवद्भागस्य हेतुपञ्चम्यन्तत्वं बोध्यम् । तेन निरर्थतसिलन्तवह्निप्रमात इत्यादौ नाव्याप्तिः । पञ्चम्यादेस्तसिलाद्यादेशवादिनां नये तु नानुपपत्तिगन्धोऽपि । केचित्तु हेतुपञ्चम्यन्तत्वं हेतुत्वप्रतिपादकप-

---

न्हित्वादित्यादिस्थलीयस्य व्यतिरेक्युपनयस्यापि हेतुत्वप्रतिपादकमिदंपदमन्तर्भूतमिति तत्रातिव्याप्तिरत आह उपनयस्य चेति । ननु घटो वाक्यभिन्नः शब्दान्यत्वादित्यादिस्थलीयस्य यद्यद्वाक्यं स शब्दो यथा दण्डादित्युदाहरणस्यापि पञ्चम्यन्तत्वात्तत्रातिव्याप्तिरत आह यथा दण्डादित्यादेरिति । दृष्टान्तस्येति । प्रथमैवाऽन्त इति पूर्वेणान्वयः । ननु यथा दण्डादिति दृष्टान्तस्य पञ्चम्यन्तत्वे को दोष इत्यत आह पञ्चम्यन्तत्वे इति । अन्वयायोगादिति । समासातिरिक्तस्थले नामार्थयोरभेदान्वयबोधे नाम्नः समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः । इदञ्च वस्तुगतिमनुरुद्ध्योक्तम् । स्वपरदृष्टान्तस्य पञ्चम्यन्तत्वेपि वक्ष्यमाणोदाहरणान्यत्वेनैव तत्रातिव्याप्त्यसम्भवादिति ध्येयम् । अथायं गोभिन्नो द्रव्यान्यत्वादित्यादिस्थलीयस्य या या गौस्तद्द्रव्यं यथा पशुलाङ्गूलवत्त्वादित्याद्युदाहरणस्यापि हेतुपञ्चम्यन्तत्वात्तत्रातिव्याप्तिरत आह कस्यचिदिति । उदाहरणस्य दृष्टान्तघटितत्वं न सर्वसम्मतमित्याशयेनाह सम्भवे त्विति । पूर्ववदिति । उदाहरणभिन्नत्वविवक्षयेत्यर्थः । ननु वन्हिमान् वन्हिप्रमातः इत्यादिहेतावव्याप्तिः तस्य तसिलन्तत्वेन पञ्चम्यन्तत्वविरहादत आह अत्र चेति । तथा च तसिलो निरर्थकतया लुप्तपञ्चम्यन्तभागस्यैवाऽर्थवत्त्वान्नाव्याप्तिः पञ्चम्यन्तपदेन पञ्चमीभिन्नस्वघटकयावत्पार्थकोत्तरपञ्चमीघटितस्योक्तत्वादिति भावः । पञ्चम्यास्तसिलिति सूत्रस्य पञ्चम्याः स्थाने तसिलित्यर्थमभिप्रेत्याह पञ्चम्यादेरिति । आदिपदाभ्यां सप्तम्यादेस्त्राद्यादेशस्य परिग्रहः । नानुपपत्तीति । आदेशस्मारितायाः पञ्चम्या एवाऽन्तेनुसन्धीयमानत्वादिति भावः ।

दृशाल्गित्वं, पूर्ववत्साध्याविषयकज्ञानजनकत्वञ्च इतरनैरपेक्ष्येण प्रकृतहेतुत्वविशिष्टसाध्यविषयकज्ञानाजनकत्वं, साध्यञ्चेह न विव-

———————

न च सर्वेभ्य इत्यत्र पञ्चम्याः स्थाने तस्निआदेशे बहुत्वे सुप्येकार-प्रसङ्गे सर्वेत इत्येव प्रयोगः स्यान्नतु सर्वत इति वाच्यम् । तन्मते तसिलादिभिन्न एव बहुत्वे स्यादिति स्वतः परतो वेत्कारस्यानुना-सिकत्वादिति भावः । यथाश्रुतेन धूमादालोकवान्पर्वतो वन्हिमान् धूमादित्यादिस्थलीयप्रतिज्ञादेर्वारणासम्भवादाह पूर्ववदिति । प्रकृ-तसाध्यविशेष्यकप्रकृतहेतुविशिष्टहेतुत्वप्रकारकान्वयबोधजनकपद-वत्त्वमित्यर्थः । न च सर्वत्र प्रतिज्ञायामतिव्याप्तिः साध्यविशेष्यक-प्रकृतहेतुत्वप्रकारकान्वयबोधजनकसाध्यवाचकपदवत्त्वादिति वा-च्यम् । साध्यवाचकपदान्यत्वस्य तादृशपदे निवेश्यत्वात् । न च साध्यस्य हेतुतास्थले हेतावव्याप्तिरिति वाच्यम् । तत्र साध्यवा-चकपदान्यस्य तादृशान्वयबोधजनकपञ्चमीपदस्यैव सत्त्वादिति विभावनीयम् । न च प्रकृतहेतुविशिष्टदलं व्यर्थम्, आलोकाद्वन्हिमतः सधर्मा पर्वतो वन्हिमानित्यादिप्रतिज्ञायामतिव्याप्तिवारकत्वादिति भावः । इत्थञ्च धूमाद्वन्हिमतः सधर्मा पर्वतो वन्हिमानित्यादिप्रति-ज्ञायास्तस्माद्वन्हिमानित्यादिनिगमनस्य वा व्युदासार्थमेव साध्या-विषयकत्वदलम्, तच्च वन्हिमान् वन्हिसामग्रीमत्त्वादित्यादौ हेतावव्याप्तमतो व्याचष्टे साध्याविषयकेत्यादि । प्रतियोगितानवच्छेदकेत्या-दौ मध्यस्थतत्रापि समुदितान्वयस्य व्युत्पत्तिसिद्धत्वादिति भावः । इतरेत्यादि । हेत्ववयवमात्रस्यैव प्रतिज्ञैकवाक्यतया हेतुत्वविशिष्ट-साध्यज्ञानजनकत्वादसम्भवापत्तितो नैरपेक्ष्यान्तम् । पर्वतो धूम-ज्ञानज्ञाप्यवन्हिमान् धूमाद्वन्हिसामग्र्या इत्यादिहेतावव्याप्तिः तस्या-पि अवयवान्तरनैरपेक्ष्येण हेतुत्वविशिष्टसाध्यज्ञानजनकत्वादतः प्र-कृतपदम् । तथा च इतरनैरपेक्ष्येण प्रकृतहेतुविशिष्टहेतुत्वप्रकारक-साध्यधर्मिकज्ञानजनकत्वमर्थः स चोक्तहेतावस्त्येव तत्र हेतुभूत-सामग्रीविशिष्टहेतुत्वस्य वन्ह्यावप्रकारत्वादिति भावः । वैयर्थ्या-दिति । यद्यपि प्रकृतहेतुविशिष्टहेतुत्वप्रकारकसाध्यधर्मिकज्ञानजन-कत्वाभावस्याऽखण्डत्वान्न वैयर्थ्यम्, तथाप्यसत्प्रयोजनत्वे तात्प-

कहेतुविभक्तिमद्वाक्यत्वं वा, पञ्चम्यन्तलाक्षणिकपदवद्-नुमितिपरवाक्यत्वं वा। हेतुपदेन ज्ञाने लक्षणा॥अन्यथा लिङ्गस्याहेतुत्वेन हेतुविभक्त्यर्थानन्वयात् तथैवाकाङ्क्षानिवृत्तेः। अनुमितिहेतुज्ञानकारणधूमवत्त्वादितिशब्दजन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वं हेतुत्वमित्यन्ये।जातिं विना केन रूपेण ज्ञानस्यानुमितिजनकत्वं वाक्यविशेषजन्यत्वस्यापि जन्यतावच्छेदकरूपापरिचये दुर्ग्रहादित्यपरे।

---

क्षितं वैयर्थ्यादित्याहुः। पञ्चम्यन्तेति। अनुमितिपरवाक्यत्वम् अवयवत्वम्।हेतुत्वादौ पञ्चमी लाक्षणिकी। वृक्षाद्विभजत इत्यादौ लाघवेनाऽवधित्वे अवधिमत्त्वे वा शक्तत्वात् द्रव्यानिष्ठमवधित्वमिव

---

येम्। अत्र उदक्षरत्वमेवाऽस्वरसः केचिदित्युक्त्या सूचितः। ननु उदासीनस्यापि धूमादिति वाक्यस्याऽनुमित्यनुकूलत्वेन कथञ्चिदनुमितिपरत्वात्तत्रातिव्याप्तिरतो व्याचष्ट अवयवत्वमिति। एतदनन्तरमेव पञ्चम्यन्तेतीति पाठो युक्तः। लक्षणद्वय एवानुमितिपरत्वस्य निविष्टत्वेन पूर्वत्रैव तस्य व्याख्यातुमौचित्यात् तावतैवोत्तरत्र तदर्थलाभसम्भवादिति ध्येयम्। ननु निगमनस्य पञ्चाद्विवक्षणीयलाक्षणिकपदवत्त्वाभावादेव व्युदाससम्भवे तद्वारणार्थं पञ्चम्यन्तपदं व्यर्थमतः पञ्चमीरूपं पदमादायैव निगमनस्य लाक्षणिकपदवत्त्वं व्यवस्थापयितुमाह हेतुत्वादाविति। हेतुत्वं ज्ञापकत्वम्। आदिना ज्ञाप्यत्वादेः परिग्रहः। अवधित्व इति। तथा च वृक्षनिष्ठं यदवधित्वं निरूपकतासम्बन्धेन तद्वान् यो विभागस्तदाश्रयत्वमित्याकारोऽन्वय-

विभागनिष्ठमवधिमत्त्वमपि सम्बन्धविशेषः । स चातिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् । तत्सम्बन्धाग्रहे च व्यवहारः शक्तिभ्रमात् वृक्षादपैति पतति इत्यादौ लाघवाद्विभागे शक्तिस्तज्जनकत्वञ्च

---

बोधः । ननु निरूपकतासम्बन्धेनावधित्वस्य विभागेऽन्वये घटीयविभागेऽप्ययं विभागो न घटादिति प्रयोगः स्यात् संयोगादिसम्बन्धेनैव घटनिष्ठावधित्वस्य तत्राऽसत्त्वात् निरूपकतासम्बन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वादत आह अवधिमत्त्वे वेति। तथा च घटनिरूपितं यदवधिमत्त्वं स्वरूपसम्बन्धावच्छिन्नतदभावस्य घटीयविभागे विरहान्नोक्तप्रयोग इति भावः । ननु विभागनिष्ठे अवधिमत्त्वे प्रमाणाभाव इत्यत आह द्रव्येत्यादि । अवधित्वमिवेति । इवार्थः सादृश्यं तच्चानुभूयमानत्वेन, तथा चानुभव एव तत्र प्रमाणमिति भावः । सः सम्बन्धविशेषः । अतिरिक्त इति।विभागादित्यादिः । अनतिरिक्तो वेति । न चैवं जनकत्वादेः स्वरूपसम्बन्धत्वमते तत्रापि पञ्चम्याः शक्तिः स्यादिति वाच्यम् । तथात्वेपि क्षत्यभावात् । अत एव हेतुमत्त्वे शक्तावपीत्यादि स्वयमग्रे वक्ष्यते । ननु ज्ञापकत्वादिरूपहेतुत्वादौ पञ्चम्याः शक्त्यभावे शक्यसम्बन्धाप्रतिसन्धानदशायां धूमाद्वन्हिमानित्यादितस्तत्प्रतीतिः कथं स्यादत आह तत्सम्बन्धेति । हेतुत्वादौ अवधिमत्त्वादिरूपशक्यस्य सम्बन्धस्य इत्यर्थः । अवधितानिरूपकत्वातिरिक्तमवधिमत्त्वं यदि विभागनिष्ठं नानुभवसिद्धं तदा विभागापेक्षया गुरुत्वात्तस्य शक्यत्वं दुर्घटमित्याशयेनाह वृक्षादपैतीति । ननु विनापि पञ्चम्यन्तसमभिव्याहारमपैतिशब्दाद्विभागावच्छिन्नक्रियाप्रतीतेः वृक्षादपैतीत्यत्रापि विभागो धातुलभ्य एव पञ्चम्यास्तु विभागान्वितमाधेयत्वमवधितानिरूपकत्वं वाऽर्थः इत्यतः स्थलान्तरमाह पततीत्यादि । वृक्षादित्यर्थः । अत्र गुरुत्वजन्यतावच्छेदिका पतनत्वजातिरेव पतेः शक्यतावच्छेदिका विभागावच्छिन्नक्रियात्वस्य तदपेक्षया गुरुत्वादतो नोक्तक्रमावसरः । ननु वृक्षात्पततीत्यतो वृक्षनिष्ठविभागजनकपतनानुकूलकृतिमानिति बोधो जायते तत्र धात्वर्थपतनादौ विभागवत्त्वस्य बाधितत्वात् विभागजनकत्वमेव पञ्चम्यर्थो वोध्यः तत्कुतो ज्ञापकत्वाद्य-

क्रियायाः सम्बन्धसम्बन्धिक्रिया भासत इत्यपि वदन्ति । अतो निगम-
नेऽतिव्याप्तिरतः पञ्चम्यन्तेति । तस्मादित्यत्र च तत्पदे न लक्षणा
शक्त्यैव तादृशज्ञानोपस्थितिसम्भवात्, पर्वतो वह्निमान् वह्निसा-

---

पेक्षया लाघवमत आह तज्ज्ञानकत्वञ्चेति । न चैवं वृक्षात्पततोऽपि नेदं
पतनं वृक्षादिति प्रयोगः स्यात् पतनस्य सम्बन्धान्तरेण वृक्षावधि-
कविभागाभाववत्त्वात् जनकत्वस्य वृत्त्यनियामकतया तत्सम्बन्धेन
विभागाभावस्य बोधयितुमशक्यत्वादिति वाच्यम् । तत्र नञ्सम-
भिव्याहृतपञ्चम्या विभागजनकत्वे लाक्षणिकत्वादिति भावः । अत
इति लाक्षणिकपञ्चमी । विशिष्टनिगमनवारणाय पञ्चम्यन्तेतीति ।
अन्यथा तस्माद्वह्निमानित्यादिनिगमनस्यापि पञ्चमीस्वरूपलाक्षणि-
कपदवत्त्वात्तत्राऽतिव्याप्तिः स्यादित्याशयः । न च तस्माद्वह्निमानि-
त्यादावपि ज्ञानजनकत्वलक्षणं हेतुत्वं जन्यज्ञानविषयत्वलक्षणं ज्ञा-
प्यत्वं वा न पञ्चम्यर्थः येन विभागाद्यपेक्षया गुरुत्वेन लक्षणा स्यात्
किन्तु ज्ञानमात्रं तदर्थः तच्छब्दोपस्थापितस्य धूमादिज्ञानस्य जनक-
त्वादिसम्बन्धेन पञ्चम्यर्थज्ञानेऽन्वयादेव धूमज्ञानादौ ज्ञापकत्वा-
दिलक्षणस्य हेतुत्वादेर्लाभसम्भवादिति वाच्यम् । विभागत्वस्येव
ज्ञानत्वस्य लघुत्वेऽपि तदवच्छिन्ने पञ्चम्याः स्वारसिकभूरिप्रयोगाभा-
वेन लक्षणाया एवाऽऽवश्यकत्वात् । अन्यथा घटादिपदस्यापि पटादौ
शक्त्यापत्तेः पटत्वस्यापि घटत्वतुल्यत्वादिति भावः । ननु पञ्चम्यन्त-
लाक्षणिकपदवत्त्वोक्तावपि निगमनेऽतिव्याप्तिरेव तन्निविष्टतच्छब्दस्य
पञ्चम्यन्तत्वात् धूमादिज्ञानलाक्षणिकत्वाच्चेत्यत आह तस्मादिति ।
शक्त्यैवेति । यद्यपि धूमादिलघुधर्मशक्तस्य तच्छब्दस्य धूमज्ञानत्वा-
दिगुरुधर्मेण बोधने लक्षणैव युक्ता, तथापि प्रत्येकशक्तया धूमस्य
ज्ञानस्य तच्छब्दादुपस्थितौ व्युत्पत्तिवैचित्र्यादेकवाक्यस्थल इव ना-
नार्थयोरपि तयोर्मिथोऽन्वयादेव धूमज्ञानस्य लाभसम्भवान्न विशि-
ष्टे तत्पदस्य लक्षणेत्याशयः । नन्वेवं यत्र तस्मादित्येव हेतुः प्रयुज्यते
तत्राव्याप्तिः तच्छब्दस्य पञ्चम्यन्तत्वेऽपि लाक्षणिकत्वाभावादत आ-
ह पर्वतो वह्निमानिति । अत्र तच्छब्दस्य प्रक्रान्तपरामर्शकत्व-

अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वमन्वयिहेतुत्वम् । एतदेव व्यतिरेव्याप्त्यभिधायकपदप्रक्षेपाद्व्यतिरेकिहेतुत्वम् । अन्वयव्यतिरेकोदाहरणाकाङ्क्षा-

---

मग्रीमान् वा तस्मादित्यादिकस्तु न न्यायप्रयोगः सम्प्रदायविरोधात् इति वदन्ति । यत्तु हेत्वन्वयानुरोधात् वन्हिमानित्यादावपि ज्ञानलक्षणेति । तन्न । पञ्चम्या ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणयैवोपपत्तौ तत्र लक्षणायां मानाभावात् । अत एवोक्तम् आवृत्तौ सैव

---

नियमाद्वह्निपरामर्शे साध्याविशेषः स्यादतः साध्यान्तरमाह वन्हिसामग्रीमान्वेति । सम्प्रदायविरोधादिति । हेत्वादेरसाधारणशब्देनैव कथायामुल्लेखः, अन्यथाऽविज्ञातार्थनिग्रहस्थानापत्तेः इत्याचार्यैरभिधानादिति भावः । पञ्चम्यन्तपदानुक्तौ पर्वतो वन्हिमानित्यादिप्रतिज्ञायामप्यतिव्याप्तिः तत्रापि ज्ञेयवन्हित्वप्रकारेण लाक्षणिकस्य वन्हिपदस्य सत्त्वात्, अन्यथा हेत्ववयवार्थस्य धूमज्ञानजन्यत्वादेर्वन्हावसत्त्वेन तत्र हेत्वर्थान्वयासम्भवादिति प्राचीनमतं निरस्यति यत्त्वित्यादिना । ज्ञानलक्षणेति । ज्ञानप्रकारेण ज्ञेयवन्ह्यादौ लक्षणेत्यर्थः । तेन लक्ष्यतावच्छेदके लक्षणाविरहेपि न क्षतिः । ज्ञापकत्व इति प्राचां मतेन, ज्ञाप्यत्व इति स्वमतेन । अनयोस्तत्त्वं पुनरग्रे दर्शयिष्यते । उपपत्ताविति । हेत्वर्थान्वयस्येत्यादिः । तत्र प्रतिज्ञान्तर्गतसाध्यपदे । मानाभावादिति । जनकत्वादिबोधार्थं पञ्चम्या लक्षणाया आवश्यकत्वे तत्रैव ज्ञानजनकत्वादिलक्षणौचित्यादिति भावः । अत एव प्रतिज्ञासु साध्यपदेन लक्षणाविरहादेव । आवृत्ताविति । अन्यथा बोधितधर्मप्रकारेण बोधितार्थस्य प्रतिपत्तये पुनः पदानुसन्धानस्यैवानुचितत्वात् बोधितवन्हिस्वरूपस्य पर्वतो वन्हिमान्नवेत्यादिविप्रतिपत्तिस्थले वह्निपदस्य ज्ञेयवह्नित्वप्रकारेण बोधने आवृ-

प्रयोजकतथाभूतावयवत्वमन्वयव्यतिरेकिहेतुत्वम् । यद्वा पक्षसपक्षसतो विपक्षासतो हेतुवचनमन्वयव्यतिरेकि । अत्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरणपक्षसपक्षस-

———

प्रतिज्ञेति । अत एव च व्याचक्षते यतो द्रव्यं गुणाः कर्मेत्यत्र हेतुत्वं यथासम्भवमुत्पादकत्वं ज्ञापकत्वञ्चेति । अत एव लोके किं वन्हिमदिति प्रश्ने तद्गृहं वन्हिमदित्युत्तरिते कुत इति जिज्ञासा धूमवत्त्वादित्युत्तरञ्च । न हि तत्र ज्ञाने प्रश्नः, येन लक्षणया ज्ञानेनोत्तरयेत् । न वा परकीयभाविप्रश्नानुरोधात् अजिज्ञासि-

———

त्त्वाभावप्रसङ्गादिति भावः । ननु सुब्विभक्तौ निरूढलक्षणान्यलक्षणाविरहात्पञ्चम्याः कुतो ज्ञापकत्वादौ लक्षणेत्यत आह अत एवेति । व्याचक्षते प्रकाशकृतः । तथा च ज्ञापकत्वादावपि पञ्चम्या निरूढलक्षणेति भावः । यथासम्भवमिति । द्रव्यादावुत्पादकत्वं जात्यादौ च ज्ञापकत्वमेव हेतुत्वमित्यर्थः । ननु वाक्यार्थमर्यादया लब्धस्यैव ज्ञापकत्वलक्षणहेतुत्वस्य उपदर्शितत्वेनापि प्रकाशव्याख्यानिर्वाहाज्ज्ञापकत्वस्य पञ्चम्यर्थत्वे मानाभाव इत्यत आह अत एवेति । ज्ञापकत्वस्य पञ्चम्यर्थत्वादेवेत्यर्थः । जिज्ञासेति।जिज्ञासावाक्यमित्यर्थः । तथा च ज्ञापकत्वस्य पञ्चम्यर्थत्वाभावे कुतो वह्निमानित्यतः किंनिष्ठज्ञापकताकवह्निमानित्यन्वयबोधो न स्यादिति भावः । ननु वह्नेरुत्पादकत्वे एव जिज्ञासा न तु ज्ञापकत्वे ज्ञानविषयस्येति यदि ब्रूयात्तदा बाधकमाह धूमवत्त्वादित्युत्तरञ्चेति । तथा च वह्न्युत्पादकत्वजिज्ञासायां धूमवत्त्वादित्युत्तरं न स्यात् वह्निस्वरूपस्य धूमस्योत्पादकत्वेन बाधादित्यवश्यं ज्ञापकत्व एव जिज्ञासेति भावः । ननु वह्निज्ञाने प्रश्नविरहेऽपि कुत इत्युत्तरकालीनजिज्ञासानुरोधादेव तद्गृहं वह्निमदित्युत्तरवाक्यं ज्ञेयवह्नित्वप्रकारेण बोधं जनयिष्यतीत्यत आह न वेति । अर्थान्तरत्वापत्तेरिति भावः । ननु कुत इत्यन-

हेतुवचनं केवलान्वयि । यद्वा अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्वमन्वयिहेतुत्वम् । एतदेवाऽप्रतीतान्वयसाधनेतिविशेषणाद्व्यतिरेकिहेतुलक्षणम् । कथायां धूमादित्यत्र प्रयोक्तव्यं

---

ताभिधानं, न वा कुत इति प्रश्ने ज्ञातमेतदित्यध्याहार्य्यं मानाभावात् । दाहो दहनात् न जलात् जलं स्पर्शवत् रूपात् न गन्धा-

---

न्तरं ज्ञातमित्यध्याहारात्पञ्चम्या जनकत्वबोधकतयैव सर्वसामञ्जस्ये तस्य ज्ञापकत्वार्थकत्वे मानाभाव इत्यत आह न वा कुत इत्यादि । मानाभावादित्युपलक्षणम् । ज्ञातपदार्थस्य ज्ञानविषयस्य पूर्ववाक्यस्थवह्न्यावन्वयायोगाच्चेत्यपि बोध्यम् । नामार्थयोरभेदान्वये नाम्नोः समानविभक्तिकत्वस्य तन्त्रत्वादिति ध्येयम् । ज्ञापकत्वं परित्यज्य ज्ञाप्यत्वे वेति यदुक्तं तत्र सदृष्टान्तमनुशयमाह दाह इत्यादि । तथा च दाहो दहनान्न तु जलादित्यत्र यथा जन्यत्वमेव पञ्चम्यर्थो न तु जनकत्वं तथा सति जलनिष्ठजनकत्वस्येव दहननिष्ठजनकत्वस्यापि स्वरूपादिसम्बन्धावच्छिन्नाभावस्य दाहे सत्त्वाद्दाहो न दहनादित्यपि प्रयोगापत्तेः, निरूपकतासम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नाभावस्य दुर्वचत्वात्, तथा जलं स्पर्शवत् रूपान्न तु गन्धादित्यत्रापि ज्ञाप्यत्वमेव पञ्चम्यर्थो न तु ज्ञापकत्वं तथा सति गन्धनिष्ठस्येव रूपनिष्ठस्यापि ज्ञापकत्वस्य स्वरूपादिसम्बन्धेनाभावस्य स्पर्शे सत्त्वाज्जलं स्पर्शवन्न रूपादित्यपि प्रयोगापत्तेः, निरूपकत्वस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नज्ञापकत्वाभावस्याऽप्रसिद्धत्वेन बोधयितुमशक्यत्वादित्याखण्डनार्थः । ननु जलं स्पर्शवन्न गन्धादित्यत्र तन्मतेऽपि नञा स्पर्शे गन्धज्ञाप्यत्वस्याभावो न बोध्यते ग-

न तु धूमवत्त्वादिति, मतुपो व्यर्थत्वात् । सामान्यवत्त्वे सति बाह्यकरणप्रत्यक्षत्वादित्यपार्थकं विभक्त्युपस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यानन्व-

---

नापि शब्दादित्यादौ नञ अन्वयानुरोधात् जन्यत्वरूपं हेतुमत्त्वं जन्यज्ञानविषयत्वरूपञ्च ज्ञाप्यत्वमर्थः । एवञ्च हेतुमत्त्वे शक्तावपि

---

न्धेनापि घटादौ स्पर्शस्यानुमानात् गन्धज्ञाप्यत्वस्यैव स्पर्शे सत्त्वात् । अन्यथा घटः स्पर्शवान्न गन्धादित्यपि प्रयोगापत्तेः । परन्तु पञ्चम्यर्थेन गन्धज्ञाप्यत्वेनान्वितस्य स्पर्शादेर्गन्धवन्निरूपितसमवायादिसंसर्गेणैव मतुबादिसाकाङ्क्षतया गन्धज्ञाप्यत्वादिविशिष्टस्पर्शस्य तादृशसम्बन्धेन यदधिकरणं तद्भिन्न एव नञा जलादौ बोध्यते, कथितक्रमेण आकाङ्क्षानुपगमे जलं स्पर्शवद्गन्धादित्यादिवाक्यस्यापि प्रामाण्यापत्तेः । एवञ्च ज्ञापकतायाः पञ्चम्यर्थत्वमतेपि गन्धनिष्ठज्ञापकताकस्पर्शस्य गन्धवन्निरूपितसमवायेन यदधिकरणं तद्भेदस्यैव नञा जले धर्मिणि बोधनसम्भवान्नोक्तस्थलीयनञर्थान्वयानुरोधात् ज्ञाप्यत्वस्य पञ्चम्यर्थत्वं सिद्ध्यतीत्यत आह नापि शब्दादिति । तथा च शब्दादितिपञ्चम्युपस्थापितस्य शब्दज्ञाप्यत्वस्य शब्दव्यापकत्वविशिष्टस्वरूपसम्बन्धेनैव साध्यसाकाङ्क्षत्वात् स्पर्शस्य च शब्दाव्यापकतया तादृशसम्बन्धेन तत्र ज्ञाप्यत्वस्यान्वयासम्भवान्नेह शब्दज्ञाप्यस्पर्शस्य यदधिकरणं तद्भेदो नञा बोधयितुं शक्यते किन्तु शब्दव्यापकत्वविशिष्टस्वरूपसम्बन्धेन ज्ञाप्यत्वस्यैवाभावः स्पर्शे धर्मिणि बोध्यते शब्दव्यापकत्वविशिष्टनिरूपकत्वस्य वृत्त्यनियामकतया तादृशसम्बन्धेन शब्दनिष्ठज्ञापकत्वाभावस्य बोधनायोगात् । न च स्वरूपसम्बन्धमात्रेणैव पञ्चम्यर्थस्य शब्दादिज्ञाप्यत्वस्य साध्यसाकाङ्क्षत्वम्, स्पर्शवान् शब्दादित्यादिवाक्यस्यापि प्रमाणतापत्तेः । व्याप्त्यादिभ्रमवशात् शब्देनापि स्पर्शस्य ज्ञापनादिति भावः । ननु

यादिति केचित्। तन्न। सतिसप्तमीबलात् सामान्य-

---

ज्ञाप्यत्वे लक्षणैव। न च धूमाद्वन्हिमतः सधर्म्मा पर्वतो वन्हिमा-
नित्यादौ प्रतिज्ञायां पर्वतो धूमाद्वन्हिमानित्यादौ च तत्रत्यनि-

---

दाहो दहनादित्यादिप्रयोगसत्त्वाद्विभागादिकमिव जन्यत्वमपि प-
ञ्चमीशक्यमस्तु नव्यमते जन्यत्वस्यातिरिक्तत्वेन गौरवानवकाशा-
दित्यतः तत्रेष्टापत्तिमाह एवञ्चेति। जन्यतायां पञ्चम्याः प्रयोगस-
त्त्वे चेत्यर्थः। हेतुमत्त्वे जन्यत्वे। ज्ञाप्यत्वे लक्षणैवेति। तावतैव नि-
गमनवारकतया पञ्चम्यन्तपदस्य सार्थक्यसम्भवादिति भावः। ननु
प्रकृतसाध्यान्वितस्वार्थबोधकत्वेन पञ्चम्यर्थविवक्षणे धूमादालोक-
वत्पर्वतो वन्हिमानिति प्रतिज्ञायां नातिव्याप्तिः सम्भवतीत्यत आह
धूमाद्वह्निमत इत्यादि। न चोक्तवाक्यादेव प्रथमतो वह्नेर्धूमज्ञा-
प्यत्वावगमात् कुत इत्याकाङ्क्षाविरहे त्ववयवासम्भवान्न तादृशी
प्रतिज्ञेति वाच्यम्। किंज्ञाप्यो वन्हिरित्याकाङ्क्षाविरहेऽपि धूमज्ञान-
ज्ञाप्यवन्हिमत्सधर्मपर्वतं किंज्ञाप्यो वन्हिरित्येवं क्रमेण हेत्वाकाङ्क्ष-
यैव हेतोः प्रयोगात्। अत एव पर्वतो द्रव्यमित्यत्र प्रतिज्ञायां पर्वते
द्रव्यत्वं किंज्ञाप्यमित्याकाङ्क्षायां पृथिवीत्वादेरेव हेतुत्वेनोपन्यासो
न तु महानसत्त्वादेः। अन्यथा द्रव्यत्वं किंज्ञाप्यमित्याकाङ्क्षया महा-
नसत्वादेरपि तत्र हेतुत्वेनोद्भावनापत्तेः तस्यापि महानसे द्रव्यत्व-
ज्ञापकत्वात्। न चैवं धूमाद्वन्हिमत्पर्वतो वन्हिमान् धूमादित्यादि-
क्रमेणापि न्यायः स्यात् वन्हिमात्रस्य धूमज्ञाप्यत्वावगमेऽपि धूमज्ञा-
प्यवन्हिमत्पर्वतत्वावच्छिन्ने किंज्ञाप्यो वन्हिरित्याकाङ्क्षया हेतूत्थान-
सम्भवादिति वाच्यम्। तत्रोद्देश्यतावच्छेदकविधेययोरैक्येन निरा-
काङ्क्षत्वादेव तादृशप्रतिज्ञाविरहेण तद्घटितन्यायासम्भवात्। न
हि ज्ञातवन्हिमान् पर्वतो वन्हिमानित्यादिवाक्याद्वन्ह्यादिविधेयकः
कदाप्यन्वयबोधः। ननु प्रकृतपक्षधर्मिकस्वार्थान्वयबोधकपदोप-
स्थापितं यत्साध्यं तदन्वितस्वार्थबोधकत्वे पञ्चमीविशेषणादेव धू-
माद्वन्हिमत इत्यादिप्रतिज्ञाया अपि व्युदासः सम्भवतीत्य आह प-

वत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य च सामानाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात् तथैव व्युत्पत्तेः, न ह्ययमर्थोऽस्मान्नावगम्यते इति ॥

———

गमने चातिव्याप्तिः, प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयवत्वस्य

———

वेत इत्यादि । इत्यादौ । प्रतिज्ञायामित्यनुषज्यते । तत्रत्यनिगमने तस्माद्धूमाद्वन्हिमानित्याकारेऽत्रापि धूमादित्यस्यैव निरुक्तपञ्चम्यन्तलाक्षणिकपदस्य सत्त्वादिति भावः । प्रकृतेत्यादि । प्रकृतपक्षधर्मिकस्वार्थबोधकपदोपस्थापितं यत्प्रकृतसाध्यं तद्धर्मिकस्वार्थबोधिका या पञ्चमी तदन्तलाक्षणिकपदावयवत्वमित्यर्थः। अत्र धूमाद्वन्हिमतः सधर्मेत्यादिप्रतिज्ञावारणार्थमुपस्थापितान्तम् । तत्रापि पक्षमात्रोक्तौ मतुबर्थसम्बन्धित्वेनैव पक्षे धर्मिणि वन्हिपदस्य प्रकृतसाध्यबोधकत्वात्तद्दोषतादवस्थ्यमतः प्रकृतपदम् । न च प्रकृतपक्षान्वितस्वार्थबोधकेनाऽन्तिमपदेनोपस्थापितं यद्वन्हिस्वरूपं प्रकृतसाध्यं तत्रैव धूमपदोत्तरपञ्चम्याः स्वार्थबोधकत्वान्नोक्तप्रतिज्ञाव्युदास इति वाच्यम् । प्रकृतपक्षधर्मिकप्रकृतसाध्यान्वयबोधसाकाङ्क्षं यत्प्रकृतसाध्यबोधकं पदं तत्साकाङ्क्षा या पञ्चमी तदन्तलाक्षणिपदवत्त्वे तात्पर्यात् । न च समवायेन नीलरूपावच्छिन्नपर्वते संयोगेन वन्हिसाध्यतास्थले नीलपर्वतो वन्हिमानित्यादिप्रतिज्ञायाः प्रकृतपक्षधर्मिकप्रकृतसाध्यप्रकारकबोधस्याऽजनकत्वात्तत्रत्यहेतावव्याप्तिः नीलरूपवतो वन्हिमतश्च तादात्म्येनैव पर्वते प्रकारीभूय भानादिति वाच्यम् । नव्यमते नीलाभिन्नपर्वते तादात्म्येन वन्हिमतः साध्यतायामेवोक्ताकारप्रतिज्ञास्वीकारात् तन्मते चैतल्लक्षणकरणादिति भावः । पर्वतो धूमाद्वन्हिमानित्यादिप्रतिज्ञाया अपि तादृशपदोपस्थापितान्वितस्वार्थबोधकपञ्चम्यन्तपदवत्त्वात्तद्वारणार्थं प्रकृतसाध्यपदम् । तथा च तत्र साध्यतावच्छेद-

विवक्षितत्वात् । यत्तु अयमात्मा ज्ञानादित्यादावव्याप्तिः शक्त्यैव ज्ञानोपस्थितिसम्भवेन लक्षणाविरहादिति । तन्न । यद्विषयकज्ञानस्य हेतुत्वादिकमवगतं तस्य व्याप्त्यादिजिज्ञासायामुदाहरणादिप्रयोगः, न चेह ज्ञानविषयत्वेनोपस्थितिर्विना लक्षणाम्, अन्यथा सुखा

---

कीभूतधूमज्ञाप्यवन्हित्वावच्छिन्ने धूमज्ञाप्यत्वरूपस्य पञ्चम्यर्थस्याऽन्वयाप्रतिप्रसङ्गः । निरुक्तसाध्यान्वितस्वार्थबोधकलाक्षणिकपदवत्त्वोक्तौ निगमनातिव्याप्तिः तस्यापि प्रकृतसाध्यान्वितहेतुत्वलाक्षणिकपञ्चमीसत्त्वादतः पञ्चम्यन्तपदम् । न च साध्यान्वितस्वार्थबोधकसुबन्तलाक्षणिकपदवत्त्वोक्त्यापि तत्कारणसम्भवात्पञ्चमीपर्यन्तानुसरणं व्यर्थमिति वाच्यम् । तादात्म्येन रक्तसाध्यकस्य घटो रक्तस्तद्घटत्वादित्यादिन्यायस्य निगमने तस्माद्रक्त इत्याकारेऽतिव्याप्त्यापत्तेः तस्यापि प्रकृतसाध्यान्वितस्वार्थबोधकं यत्प्रथमैकवचनं तदन्तलाक्षणिकरक्तपदवत्त्वात् गुणशक्तरक्तपदस्य गुणिपरत्वे लाक्षणिकत्वात् । निरुक्तपञ्चम्यन्तपदवत्त्वमात्रोक्तौ तु तादृशतच्छब्दमादाय पुनर्निगमनेतिव्याप्तिरतो लाक्षणिकत्वेत्युक्तम् । न चैवमयं देशः क्रियावान् पाकादित्यत्र हेतावव्याप्तिः पाकशब्दस्य शक्तिविरहेण पाकज्ञानलक्षणत्वासम्भवात् अन्यत्रक्लृप्तपचधातोरेव प्रतीतेरिति वाच्यम् । पञ्चम्यन्तपदेन पञ्चमीसाकाङ्क्षपदस्योक्तत्वात् पाकादित्यादौ भावकृदन्तस्य पचादिधातोरपि स्वोत्तरविभक्तिसाकाङ्क्षत्वेन तत्र लक्षणासम्भवात् । यत्तु तत्र पाकशब्दान्तर्गतककारस्यैव पाकज्ञाने लाक्षणिकत्वान्नातिव्याप्तिः,एकाक्षरकोशतस्तस्यापि शक्तत्वावधारणात् वर्णान्तरस्य तत्र तात्पर्यग्राहकत्वेनैव साफल्यात्, एवमन्यत्रापीति । तच्चिन्त्यम् । अत्र निरुक्तौ प्रगल्भोक्तं दूषणं निरस्यति यत्त्वित्यादिना । ज्ञानादित्यादिना धिय इत्यादिहेतूपग्रहः । ननु ज्ञानादित्यत्र ज्ञानपदं न शक्तं सुबन्तशब्दस्य कुत्राप्यशक्तत्वात् धातोस्तु शक्त्या ज्ञानोपस्थापकत्वेपि तस्य निरुक्तपञ्चम्यन्तत्वाभावात् तथा च ज्ञानपदान्तर्गतस्य नशब्दस्य ज्ञाने लक्षणाऽऽवश्यकीत्यत आह इत्यादाविति । तथा चायमात्मा धियः इत्यादौ धीशब्द-

देरपि व्याप्त्याद्युपदर्शनप्रसङ्गात् । केचित्तु पञ्चम्यन्तलाक्षणिक-पदवत्त्वनियतावच्छेदकरूपवत्त्वं तादृशपदवत्त्वव्यभिचार्य्यवयवतावच्छेदकशून्यावयवत्वं वा विवक्षितमित्याहुः । नव्यास्तु पञ्चम्या ज्ञानज्ञाप्यत्वलक्षणयैवोपपत्तौ न प्रातिपदिकेऽपि लक्षणा आकाङ्क्षावैचित्र्याच्च पदार्थैकदेशेऽपि ज्ञाने प्रातिपदिकार्थो विषयत्वेनान्वेति कर्तृकृतीव कृतौ धात्वर्थः, यद्धर्मविशिष्टश्च हेतुः प्रयु-

---

स्य शक्त्यैव धीविषयकज्ञानोपस्थापकत्वात्तादृशहेत्ववयवाव्याप्तिरावश्यकीति भावः । अन्यथेति । वस्तुगत्या यद्विषयज्ञानस्य हेतुत्वमवगतं तत्रैव तद्भिन्नेऽपि व्याप्त्यादेरुपदर्शनीयत्व इत्यर्थः । तत्र अयमात्मा ज्ञानादित्यादौ । सुखादेरपीति । ज्ञानविषयकज्ञानस्येव सुखादिविषयज्ञानस्यापि ज्ञानत्वप्रकारेण हेतुत्वावगमादिति भावः । केचिदित्यादि । अत्र प्रतिज्ञात्वादिवारणाय नियतान्तम् । तत्रापि पञ्चम्यन्तपदवत्त्वस्य लाक्षणिकपदवत्त्वस्य वा नियतत्वोक्तौ निगमनेऽतिव्याप्तिरतः पञ्चम्यन्तत्वविशिष्टलाक्षणिकपदवत्त्वस्यैव नियम उक्तः । प्रतिज्ञात्वादेरपि पटो न दण्डादित्यादिप्रतिज्ञायां तादृशपदवत्त्वसामानाधिकरण्यान्नियतेति । तत्तत्प्रतिज्ञात्वव्युदासार्थमवयवतावच्छेदकेति । हेतुत्वरूपस्य तादृशावच्छेदकस्य प्रथमं गृहीतुमशक्यत्वादाह तादृशेति । यत्साध्यकप्रतिज्ञादौ तादृशपदवत्त्वनैयत्यं तत्रातिव्याप्तिरित्यस्वरसः केचिदित्युक्त्या सूचितः । प्रगल्भदूषणं निरस्य स्वयं मूललक्षणं दूषयति नव्यास्तु इत्यादिना । न प्रातिपदिकेपीति । मानाभावादिति शेषः । तथा च हेतोः पञ्चम्यन्तलाक्षणिकपदवत्त्वाभावादसम्भव इति भावः । ननु ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थत्वे तदेकदेशे ज्ञाने धूमादेरन्वयो न स्यान्निराकाङ्क्षत्वादत आह आकाङ्क्षेति । कर्तृकृतीति । पाचक इत्यादौ ण्वुलाद्यर्थस्य कर्तुरेकदेशभूतायां कृतौ धात्वर्थपाकादिर्यथाऽन्वेतीत्यर्थः । यद्यपि गन्तव्यो ग्राम इत्यादौ कर्मकृतोऽप्येकदेशान्वयित्वम्, तथापि विषयतासम्बन्धेनैकदेशान्वयित्वमेव प्रकृते सादृश्यमित्याशयेन कर्तृकृदुपन्यासः । धूमादिपदे लक्षणायां बाधकमाह यद्धर्मविशिष्टश्चेति । हे-

ष्यते आकाङ्क्षाबलात् तद्धर्मविशिष्टस्यैव व्याप्यत्वमुपदर्श्यते, अन्यथा यथार्थधूमज्ञानादित्यादिप्रयोगेऽपि धूमादेर्व्याप्यत्वोपदर्शनप्रसङ्ग इति प्राहुः ॥

---

तौ यद्धर्मावच्छिन्नो हि हेत्ववयवान्तर्गतधूमादिप्रातिपदिकेन बोध्यते कुतोऽस्य गमकत्वमित्याकाङ्क्षावशात्तदवच्छिन्नस्यैव व्याप्यत्वमाकाङ्क्षावशादुदाहरणेन प्रदर्श्यत इति नियमाद्धूमस्य व्याप्यतयोपन्यासो नाऽसङ्गत इत्याह अन्यथेति । तत्रस्थपञ्चम्यन्तप्रातिपदिकेन यद्विषयज्ञानं बोध्यते तस्यैव व्याप्तेः प्रदर्शनीयत्वे इत्यर्थः । यथार्थधूमज्ञानादिति । धूमयथार्थज्ञानविशेष्यत्वादित्यर्थः । धूमस्य व्याप्यतारक्षार्थं यथार्थपदम् । धूमादेरिति । हेत्वन्तर्गतधूमज्ञानपदेन तद्विषयकस्य ज्ञानस्यैव बोधनादिति भावः । यद्यपि हेतुघटकपञ्चम्यन्तप्रातिपदिकेनोपस्थापिते यद्धर्मावच्छिन्नविषयकज्ञाने तादृशपञ्चम्या ज्ञापकत्वं बोध्यते तदवच्छिन्नस्यैव व्याप्यत्वं प्रदर्श्यत इत्युक्तौ नैष दोषः यथार्थधूमज्ञानादित्यत्र प्रातिपदिकेन लक्षणया यथार्थधूमज्ञानविषयकज्ञानत्वेनोपस्थापित एव ज्ञापकत्वबोधनात् यथार्थधूमज्ञानत्वावच्छिन्नस्यैव व्याप्तेः प्रदर्शनस्यौचित्यात् । तथापि पञ्चमीलक्षणाध्रौव्ये तस्यामेव ज्ञानज्ञाप्यत्वे लक्षणया सर्वसामञ्जस्ये प्रातिपदिके लक्षणान्तरकल्पने गौरवम्, एवं हुंफडितिनिरर्थकशब्दस्य हेतुतास्थले तस्य लाक्षणिकत्वानुपपत्तिः शक्तिविरहादित्येव मूलं बाधकमित्यवधेयम् ॥

इति जागदीश्यां हेतुलक्षणम् ।

---

इतः परमुदाहरणोपनयनिगमननिरूपणपरं मूलमननुरुद्ध्यैव स्वातन्त्र्येण दीधितिकृता सर्वेषां लक्षणं कृतं तदनुससार च जगदीश इत्यवधेयम् ।

हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम् । तत्रानुमितिहेतुलिङ्गपरामर्शपरवाक्य-

---

इतरान्वितस्वार्थबोधकत्वे सति स्वकीयं यदन्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति अन्त्यपदवत्त्वे सति स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकान्यत्वे च सति वा न्यायावयवत्वं

---

न्यायतदवयवयोरिव प्रतिज्ञादीनामपि स्वातन्त्र्येण लक्षणमाह इतरान्वितेत्यादि । अत्रोदाहरणस्यापि स्वीयं यदन्त्यभिन्नं धूमवानित्यादिपदं तदर्थविशेष्यकान्वयबोधजनकत्वात्तद्वारणार्थं प्रथमसत्यन्तम् । स्वाघटकपदाकाङ्क्षादिमत्पदघटितत्वे सतीति तदर्थः । अवयवान्तरस्य व्युदासार्थमाह स्वकीयमिति । भवति हि पर्वतो वह्निमानित्यादौ स्वीयान्त्यपदाभिन्नं यत्पर्वत इति पदं तदर्थविशेष्यकान्वयबोधजनकत्वं प्रतिज्ञाया इति लक्षणसमन्वयः । अन्त्यभिन्नत्वं नान्त्यसामान्यभेदः शब्दमात्रस्यैव कुतश्चिदन्त्यतया प्रतिज्ञाया असम्भवापत्तेः, किन्तु स्वघटकपदप्राक्क्षणवृत्तित्वम् । तथा च स्वकीयं यत्पदं स्वघटकपदप्राग्वर्तिपदं तदर्थविशेष्यकान्वयबोधजनकत्वे सतीत्यर्थः । तत्र स्वकीयमित्यनुक्तौ स्वघटकपदप्राक्क्षणवृत्त्युपनयस्थायंपदार्थविशेष्यकान्वयबोधजनके निगमनेऽतिव्याप्तिः स्यादतस्तदुक्तम् । न चोपनयस्थेदंपदस्यैव निगमनेऽप्यन्तर्भावात्तद्दोषतादवस्थ्यम्, तदनन्तर्भावमत एवैतल्लक्षणकरणात् । स्वीयमित्यनेन स्वेतराघटकस्य विवक्षितत्वान्नोक्तदोष इत्यप्याहुः । स्वघटकपदप्राक्क्षणवृत्तीत्यनुक्तौ स्वघटकान्त्यपदार्थविशेष्यकान्वयबोधजनकयोरुपनयनिगमनयोरतिव्याप्तिस्तदुपात्तम् । न च स्वकीयं यदाद्यपदं तदर्थविशेष्यकत्वमुक्त्वाप्युपनयादिव्युदाससम्भवादन्त्याभिन्नत्वपर्यन्तप्रवेशो व्यर्थः । स्वघटकपदध्वंसाधिकरणक्षणावृत्तित्वरूपस्याऽऽद्यत्वस्य निरुक्तान्त्यभिन्नत्वापेक्षया गुरुत्वात्, नीलः

जन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम् । सामान्यलक्षणे साध्यसाधनसम्बन्धबोधकत्वं साध्यसाधनाभावसम्बन्धबोधकत्वञ्च विशेषलक्षणद्वयम् । न्यायावय-

---

पर्वतो वह्निमानित्यादिप्रतिज्ञायामव्याप्तिप्रसङ्गाच्च । तत्र नीलपदस्यैवाद्यत्वेन तदर्थमुख्यविशेष्यकान्वयबोधजनकत्वाभावात् । मुख्यविशेष्यतापर्यन्तप्रवेशस्तु इदं द्रव्यं गुणाद्यन्यत्वे सति सत्त्वादित्यादिहेतोर्वारणार्थम् । अन्यथा तस्यापि स्वीयं यत्स्वघटकप्राग्वर्तिपदं तदर्थविषयकबोधजनकत्वेनातिव्याप्तिप्रसङ्गादिति भावः । अत्रानुयोगिनि स्वत्वघटनयाऽननुगमादनुगतं लक्षणमाह अन्त्यपदवत्त्वे इत्यादि । अत्र स्वीयं यदन्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकं यन्निगमनादिकं तदन्यत्वं धूमादित्यादिहेतावपि गतं तदीयान्त्यभिन्नपदस्याऽप्रसिद्धत्वात् पदशब्देन विभक्त्यन्तस्याऽग्रे वक्ष्यमाणत्वादतस्तद्वारणार्थमन्त्यपदवत्त्वे सतीत्युक्तम् । पदद्वयघटितत्वे सतीति तदर्थः । तावन्मात्रञ्च निगमनादिष्वतिप्रसक्तमतः स्वीयानन्त्येत्यादिकमुक्तम् । अत्राप्यनन्त्यत्वं स्वघटकपदप्राक्क्षणवृत्तित्वं तथा च निगमनस्यापि तादृशायमपदार्थविशेष्यकान्वयबोधजनकत्वेन तादृशान्वयबोधाजनकभिन्नस्य वारणार्थं स्वीयपदम् । न च स्वीयं यदन्त्यपदं तदर्थविशेष्यकान्वयबोधजनकभिन्नमेव किन्नोक्तम् अन्त्यशब्देन स्वघटकपदप्राक्क्षणावृत्तित्वस्य बोधनीयत्वादिति वाच्यम् । गुणाद्यन्यत्वे सति सत्त्वादित्यादिहेतावतिप्रसङ्गात् तस्यापि स्वीयं यत्स्वघटकपदप्राक्क्षणावृत्ति सत्त्वादिति पदं तदर्थविशेष्यकान्वयबोधजनकत्वात्, पञ्चम्यर्थस्यैव तत्र मुख्यविशेष्यत्वात् । अत्राप्युदाहरणवारणार्थमितरान्वितस्वार्थबोधकत्वे सतीत्यनुषञ्जनीयम् । तस्य च स्वाघटकपदाकाङ्क्षादिमत्पदाघटितं यद्यत्तदन्यत्वमुदाहरणभिन्नत्वमेव वार्थो नातः स्वत्वाननुगमतादवस्थ्यम् । नन्वितरान्वितस्वार्थबोधकत्वे सतीत्यनेनैव हेतूपनयानिग-

वद्दृष्टान्तवचनमुदाहरणमिति तु न। दृष्टान्तप्रयोगस्य सामयिकत्वेनाऽसार्वत्रिकत्वात्, यो यो धूमवान् सोऽग्निमानित्येव व्याप्तिप्रतीतेः। नापि प्रकृतानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानविषयव्याप्त्युपनायकं वचनं तत्, उपनयातिव्याप्तेः। अत उपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम्। एतदेवान्वयव्यतिरेकव्याप्तिविषयत्वविशेषितं विशेषलक्षणद्वयमित्यन्ये। अत्र च व्यभिचारवारणाय वीप्सामाहुः। यत्र च सा-

---

प्रतिज्ञात्वम्। प्रतिज्ञाहेत्वोरुपनयननिगमनयोश्चार्थौ परस्परमन्वितौ न तूदाहरणस्य केनापि। विभक्त्यन्तं पदं तेन निगमने नातिव्याप्तिः।

---

मनानां व्युदाससम्भवात्स्वीयं यदन्त्यभिन्नं पदमित्यादिकं व्यर्थमत आह प्रतिज्ञाहेत्वोरिति। नन्वेवं तावन्मात्रमेवास्तु इतरान्वितेत्यादिकं व्यर्थमत आह न तूदाहरणस्येति। केनापीति। अन्वय इति शेषः। तथा च तद्वारणार्थमेवेतरान्वितेत्यादिकमिति भावः। ननु पदत्वं शक्तिमत्त्वं तथा च तस्मात्पाचक इत्यादिनिगमने लक्षणद्वयस्याप्यतिव्याप्तिः तस्यापि ण्वुलाद्यात्मकं यत्स्वीयान्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वात् प्रथमाविभक्तेरेव तत्रान्तिमपदत्वादत आह पदं विभक्त्यन्तमिति। स्वीयं यत्स्वघटकपदप्राग्वर्ति पदं तदर्थविशेष्यकेत्यत्रोभयत्रैव पदं विभक्त्यन्तरूपं ग्राह्यमित्यर्थः। न च स्वीयं यत्स्वघटकस्य विभक्त्यन्तपदस्य प्राग्वर्ति शक्तपदं तदर्थविशेष्यकत्वप्रवेशेनैव उक्तनिगमनव्युदासादन्तिमपदस्य विभक्त्यन्तरूपस्य प्रवेशो व्यर्थ इति वाच्यम्। कायपूर्वभागसाध्यकस्य अयं पूर्वकायो मस्तकत्वादित्यादिन्यायस्य निगमने तस्मात्पूर्वकाय इत्या-

मानाधिकरण्यादेव व्याप्तिस्तत्र न वीप्सा, केवलान्वयि-न्यभेदानुमाने च वीप्सायामपि व्यभिचारतादवस्थ्यमि-ति तु वयम्। वीप्सा च यत्पदे न तु तत्पदेऽपि, त्रि-रूपोपस्थितयोरपि तत्पदेन परामर्शाद् बुद्धिस्थवाच-कत्वादिति न व्युत्पत्तिविरोधः, यथा यद्यत् पापं प्रति-जहीत्यत्र।इदञ्च साध्यसाधनोभयाश्रयाविकलानुपदर्शि-तान्वयविपरीतोपदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतो-पदर्शितव्यतिरेकभेदादाभासरूपमिति ॥

---

कारेऽतिव्याप्त्यापत्तेः तस्यापि स्वघटकं यद्विभक्त्यन्तं कायपदं तत्प्राग्वर्तिपूर्वशब्दार्थीभूत पूर्वभागविशेष्यकान्वयबोधजनकत्वात्, पूर्वकायादितत्पुरुषस्य पूर्वपदार्थप्रधानत्वात् । इत्थञ्च पूर्वशब्दस्य विभक्त्यन्तत्वाभावान्न तत्राऽतिप्रसङ्गः। अत एव प्रथमस्यैव पदस्य विभक्त्यन्तरूपस्य निवेशादुपनयवारणादाद्यस्याग्रिमस्य च विभ-क्त्यन्तरूपपदस्य निगमनमात्रवारणं प्रयोजनमित्याशयेन निगमन-व्युदास इत्येवोक्तम्। अन्यथा उपनयस्यापि स्वघटकं यत्प्रथमास्व-रूपं पदं तत्प्राक्क्षणवृत्तीदम्पदार्थविशेष्यकबोधजनकतया निरुक्त-लक्षणस्य तत्राप्यतिव्याप्तत्वात् तद्वारणार्थमपि प्रथमाविभक्त्यन्तद-लनिवेशध्रौव्ये निगमनमात्रव्युदासाभिधानं विरुद्ध्यते। न चैवं पूर्व-कायो द्रव्यमित्यादिप्रतिज्ञायामव्याप्तिः पूर्वपदस्य विभक्त्यन्तत्वा-भावेनान्त्यभिन्नपदत्वाभावादिति वाच्यम् । तत्र कायशब्दस्येव पूर्वकायभागस्यापि विभक्त्यन्तत्वात् तदुपस्थाप्यविशिष्टार्थविशे-ष्यतामादायैव लक्षणसामञ्जस्यादिति भावः । यद्यप्येवमपि लक्षण-द्वयस्यैव तस्मान्नेतराणीत्यादिनिगमनातिव्याप्तिः तस्य स्वीयं यद-न्त्याभिन्नं नञ्पदं तदर्थविशेष्यकान्वयबोधजनकत्वात् नञोऽपि वि-भक्त्यन्तत्वस्यानुशिष्टत्वात्। न चाऽव्ययाभिन्नत्वेन श्रूयमाणविभक्ति-

उदाहरणानन्तरं भवतु व्याप्तिस्तथापि व्याप्तं किं पक्षे वर्त्तते न वेत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः। तत्रानुमितिकारणतृतीयलिङ्गपरामर्शजनकावयवत्वमुपनयत्वमिति सामान्यलक्षणम्। साध्यव्याप्यविशिष्टपक्षबोधकावयवत्वं साध्याभावव्यापकाभावप्रतियोगिमत्पक्षबोधकावयवत्वञ्च विशेषलक्षण-

———

प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वम्। निगमनवारणाय उपस्थापितान्तम्। प्रमेयत्वम-

———

कजातीयत्वेन वा पदं विशेषणीयम्, दिवा प्रमेयमित्यादिप्रतिज्ञायामव्याप्तेः दिवाशब्दस्याव्ययत्वात् तदुत्तरविभक्तिमात्रस्यवाश्रूयमाणत्वाच्च। तथाप्यन्त्यभिन्नं यत्पदं तदर्थविशेष्यत्वं स्वीयान्त्यपदार्थानवच्छिन्नत्वेन विशेषणीयमित्यदोषः। केचित्तु अन्त्यभिन्नं पदं नञादिभिन्नत्वेनापि विशेष्यमतो नोक्तदोषः। न चैवं न पटत्वं घटे इत्यादिप्रतिज्ञायामव्याप्तिः पटत्वाभावो घटवृत्तिरित्याकारकबोधे नञर्थस्य विशेष्यत्वादिति वाच्यम्। सुबर्थद्वयोर्मिथोऽन्वयस्याऽव्युत्पन्नतया हेत्वर्थान्वयासम्भवेन घटो दण्डादित्यादेरिव न पटत्वं घटे इत्यादिप्रतिज्ञाया अपि सम्प्रदायविरुद्धत्वात्। वस्तुतो नञादिनिपातानां स्वोत्तरविभक्त्यर्थान्वयित्वस्य अदृष्टचरत्वात्तेषां विभक्त्यन्तत्वे प्रमाणाभावादेव नोक्तातिव्याप्तिः, अत एव भूतले प्रमेयं नेत्यादिको न प्रयोगः। अन्यथा नञः प्रथमान्तत्वे तत्समानविभक्तिकप्रमेयपदसत्त्वात् प्रमेयात्मकोऽभावो भूतलवृत्तिरित्यभेदान्वयमादाय तादृशप्रयोगस्य योग्यतापत्तेरित्याहुः। तच्चिन्त्यम्। कथितरीत्यापि तस्मादन्यो घटादित्यादिनिगमनातिव्याप्तेर्दुरुद्धरत्वादिति दिक्। प्रकृतपक्षेत्यादि। प्रकृतपक्षान्वितस्वार्थबोधकं यत्पदं तदुपस्थापितार्थान्वितो

द्वयम् । उदाहरणान्त एव प्रयोग इति न वाच्यम् । तृतीयलिङ्गपरामर्शस्य व्याप्तिपक्षधर्मतावगाहिनोऽवयवान्तरादलाभात्, तदनभ्युपगमेऽपि पक्षधर्मताया अलाभात् । न च हेतुवचनादेव तदवगमः, तस्य को हेतुरित्याकाङ्क्षायां प्रवृत्तत्वेन हेतुस्वरूपोपस्थापकस्यातत्परत्वात् । वादिवाक्यादेवाक्षेप इति चेन्न । तदर्थस्यासि-

---

भिधेयं प्रमेयत्वात् इत्यादौ प्रकृतार्थपक्षान्वितस्वार्थबोधकपञ्चम्यर्थान्वितो न प्रतिज्ञार्थः अपि तु तदेकदेशार्थः इति स्वार्थविशि-

---

यः स्वार्थस्तद्बोधकावयवत्वमित्यर्थः । ननु इतरान्वितस्वार्थबोधकावयवत्वमेव सम्यक् किमुपस्थापितान्वितेन इत्यत आह निगमनवारणायेति । अन्यथा तस्याप्युपनयार्थान्वितस्वार्थबोधकपदवत्त्वादतिव्याप्त्यापत्तेः इति भावः । स्वार्थप्रकारकबोधजनकत्वविवक्षयाप्युपनयवारणसम्भवान्निगमनपर्यन्तानुसरणम् । साध्यव्याप्यहेतुमत्त्वप्रकारेण पक्षान्वितस्वार्थबोधकं यदिदंपदं तदुपस्थापितान्वितस्वार्थबोधकत्वं निगमनस्यास्त्येव इत्यतः प्रकृतपदम् । तथा चेदंपदस्य पक्षतावच्छेदकविशिष्टपक्षान्वितस्वार्थबोधकत्वाभावात्तदुपादाय निगमने नातिव्याप्तिः । स्वार्थपदमप्यत एव, अन्यथा प्रकृतपक्षान्वितव्याप्यवत्त्वान्वयबोधजनकेन उपनयस्थायम्पदेनोपस्थापितान्वितस्वार्थबोधके निगमन एवातिव्याप्त्यापत्तेः । स्वार्थ इत्युक्तौ तु व्याप्यवत्त्वादेरिदंपदार्थत्वाभावान्न दोषः । स्वयमेव चरमस्वार्थपदस्य व्यावृत्तिमाह प्रमेयत्वमित्यादिना । तदेकदेशार्थ इति । तथा चोक्तप्रतिज्ञावारणार्थमेव द्वितीयं स्वार्थपदमिति भावः । इदमुपलक्षणम् । प्रकृतपक्षान्वितस्वार्थबोधकवन्ह्यादिपदोपस्थापितवन्ह्याद्यन्वितस्य धूमादिव्याप्यत्वस्य तस्मादित्यंशेन बोधके निगमनेऽतिव्याप्तिवारणार्थमपि

च्छत्वेनाऽनाक्षेपकत्वात् । अन्यथा प्रतिज्ञामात्रादेव स-र्व्वाक्षेपेऽवयवान्तरविलयात् । प्रतिपाद्यानां स्वत एव तदवगम इति चेन्न । तेषां व्युत्पन्नाव्युत्पन्नतया सर्व्वत्र तदसम्भवात् प्रतिपादकेन स्वव्यापारस्य निर्व्वाहयितुमुचितत्वाच्च । अन्यथावयवान्तरेऽप्येवं प्रसङ्गादिति ॥

---

ष्टवैशिष्ट्यबोधजनकन्यायावयवत्वं विशिष्टवैशिष्ट्यबोधजनकस्वार्थोपस्थितिजनकन्यायावयवत्वं विशिष्टबोधजनकस्वार्थविशिष्टबोधजनकन्यायावयवत्वं वा तत्त्वम् । एकवाक्यतया हेत्वर्थविशिष्टसाध्यस्य वैशिष्ट्यं भासते न पुनरवयवान्तरार्थविशिष्टस्य कस्यचिदिति । इतरान्वितस्वार्थाबोधकन्यायावयत्वम् उदाहरणत्वम् ।

---

द्वितीयं स्वार्थपदं द्रष्टव्यम् । ननूपनयेऽतिव्याप्तपदमिदं लक्षणं तस्यापि वाक्यैकवाक्यतया प्रकृतपक्षान्वितस्वार्थबोधकं यन्निगमनस्थसाध्यपदं तदुपस्थापितार्थान्वितस्वार्थबोधकत्वात् । न चान्वितस्वार्थबोधकेत्यत्र स्वार्थप्रकारकबोधजनकत्वविवक्षणान्नातिव्याप्तिः उपनयार्थस्य निगमनार्थे विशेष्यत्वेनैव भानादिति वाच्यम् । प्रमेयत्वमित्यादिप्रागुक्तग्रन्थविरोधापत्तेः तत्र प्रतिज्ञैकदेशार्थस्यापि विशेष्यतया एव भानादतिव्याप्त्यसम्भवात्, किञ्च गोत्वाभावः प्रमेयो गोत्वाभावादित्यादिस्थलीये निगमनेतिव्याप्तिः तस्यापि हेतुविधया प्रकृतपक्षान्वितस्वार्थबोधकं यत्प्रमेयत्वव्याप्यगोत्वाभाववानयमित्याकारकोपनयस्थायम्पदं तदर्थान्वितस्वार्थबोधकत्वादित्यतो लक्षणान्तरमाह स्वार्थविशिष्टेत्यादि । निगमनस्यापि धूमादिज्ञाप्यत्वविशिष्टसाध्यवैशिष्ट्यबोधजनकत्वात्स्वार्थपदम् । स्वार्थविशिष्टबोधजनकत्वमपि निगमनेऽतिप्रसक्तमतो वैशिष्ट्यपदम् । विशिष्टवैशिष्ट्येति । विशिष्टवैशिष्ट्यबोधजनिका या स्वार्थोपस्थितिस्तज्जनका-

उपनयानन्तरं निगमनम्। तच्चानुमितिहेतुलिङ्ग-परामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षताधीप्रयुक्तसा-ध्यधीजनकं वाक्यम्। न च व्याप्तिपक्षधर्मतयोश्चतुर्भिरे-वावयवैः पर्य्याप्तेः किं तेनेति वाच्यम्। अबाधितास-त्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्य्यवसानात्। अथा-ऽभिधानाभिधेययोर्व्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादनादेव पर्य्यवसानेनाऽवयवान्तराणां निराकाङ्क्षत्वं विपरीतशङ्का-निवृत्तेरपि तत एव लाभात्, अन्यथा निगमनेनापि तदवारणात्, न हि तद्विशेषदर्शनमनाहार्य्यस्यैव तन्निवर्त्तकम्। सिद्धनिर्देशतया वारयतीति चेन्न। स्वरूपमात्राभिधा-नात् साध्यत्वानुपस्थितौ तस्मादिति हेतुविभक्त्य-नन्वयप्रसङ्गाच्चेति चेन्न। व्याप्तिपक्षधर्मताज्ञानेऽपि

---

अन्वयव्याप्तिबोधकतत्त्वं व्यतिरेकव्याप्तिबोधकतत्त्वञ्च विशेषलक्ष-

---

वयवत्वमित्यर्थः। धूमव्याप्यत्वादिविशिष्टवन्ह्यादिवैशिष्ट्यबोधं प्रत्य-पि विशेषणज्ञानविधया धूमव्याप्यतामात्रबोधस्य हेतुत्वात् धूमादि-त्यादिहेतौ लक्षणसमन्वयः। पदव्यावृत्तिस्तु पूर्ववत्। विशिष्टबो-धेत्यादि। विशिष्टबोधजनको यः स्वार्थविशिष्टबोधस्तज्जनकावयव-त्वमर्थः। पर्वतो व्याप्यवन्हिमानित्येवं विशिष्टबोधे वन्हिर्धूमव्याप्य इति स्वार्थविशिष्टबोधस्य हेतुत्वाद्धूमादित्यादिहेतौ लक्षणसङ्गमः। हे-तौ लक्षणं योजयति एकवाक्यतयेति। प्रतिज्ञैकवाक्यतयेत्यर्थः। कस्य चिदिति। वैशिष्ट्यं भासत इति पूर्वेणाऽन्वयः। अन्वयव्याप्तिबोध-कतामात्रस्य अन्वय्युपनयसाधारणत्वादाह तत्त्वमिति। उदाहरण-

बाधसत्प्रतिपक्षबुद्धेः साध्यज्ञानानुत्पत्तिदर्शनात् तद्-
भावाबोधने समीहितानिर्वाहात् । अथ बाधादिविरहस्य
प्रयोजकत्वं न तु तद्बोधस्य, मानाभावादसिद्धेश्च
इति किमर्थं बाधादिविरहो बोधनीय इति चेन्न ।
यदवगमे सति यन्न भवति तत्तदभावज्ञानसाध्यमिति
व्याप्तेः । न चानन्वयः, तस्मादित्यन्वयबलादेव हेत्व-
नाकाङ्क्षितत्वलक्षणसिद्धत्वज्ञानात्, न त्वन्वयात् पूर्वम्।
इह केचित् यथा तस्मादिति सर्वनाम्ना हेतोः परा-
मर्शः पूर्वोक्ताशेषरूपलाभाय तथा साध्यांशस्यापि तथा
इति सर्वनाम्ना सिद्धस्थल इव विरोधादिवारणाय युक्त

---

द्वयम्। इतरोपस्थापितार्थविशेषणकस्वार्थबोधकन्यायावयवत्वं स्वार्थ-

---

त्वमित्यर्थः । न चान्वयव्यतिरेक्युदाहरणातिव्याप्तिः, व्यतिरेकव्या-
प्त्यबोधकत्वेनापि विशेषणीयत्वात् । वस्तुतः शिरोमणिमते व्याप्ति-
त्रयबोधकमुदाहरणमेव नास्ति कुतोऽस्य गमकत्वमित्याकाङ्क्षाया प्रथ-
मोक्तव्याप्त्यवगमादेव निवृत्तौ व्याप्त्यन्तराभिधानस्य निराकाङ्क्षत-
याऽनौचित्यात् । अत एव प्रतिज्ञालक्षणे स्वयमेवोक्तं नैकदोभयव्या-
प्त्युपन्यासोपीति, अत एव चान्वयव्यतिरेक्युदाहरणस्य विशिष्य
लक्षणाकरणाद्दीधितेर्न्यूनत्वमित्यपि नाशङ्कनीयम् । न चैवमुदाहर-
णस्येव हेत्ववयवस्यापि अन्वयिव्यतिरेकिभेदेन लक्षणद्वयस्यौचित्या-
त्तदकरणे न्यूनतैव ग्रन्थस्येति वाच्यम् । अन्वय्युदाहरणपूर्वावयव-
त्वादिरूपस्यान्वयिहेत्वादिलक्षणस्य अन्वय्युदाहरणादिग्रहोत्तरमर्थ-
वशासम्पन्नत्वात् । अत एव अन्वय्युपनयादेरपि लक्षणं न वक्ष्यते ।
तत्राप्यन्वय्युदाहरणोत्तरावयवत्वादेरेव तल्लक्षणस्याऽर्थतः प्राप्त-

इत्याहुः । तन्न । तथेति स्वरूपे, प्रकारे, सादृश्ये, वा । आद्ये तथा चायमिति प्रक्रमात् तथेति हेतुमानित्यर्थः स्यात्, तथा चानन्वयः, न हि हेतुमत्त्वादेव हेतुमत्त्वमित्यन्वितम् । न द्वितीयः, सामान्येन पक्षस्यापि अन्वयव्याप्तौ प्रवेशात् तत्प्रकारान्वयस्तत्रैवेत्यनन्वयात् । अत एव न तृतीयोऽपि, अभेदानुमाने चान्वयिनि तस्मात्तथेति सादृश्याभावात् बहूनाञ्च प्रक्रमे विशेष्यानन्वयात् वादिवाक्ये च योग्यतान्वयेऽतिप्रसङ्गात् । तस्मादित्यत्र तु विभक्त्यर्थानन्वयादेव नियमः, तस्मादनित्य

———

विशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वं वोपनयत्वम् । अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्वम् । हेत्वर्थश्च

———

त्वादिति भावः । इतरेत्यादि । यद्यपि साध्यांशे हेत्वर्थविशेष्यको यः स्वार्थविधेयको बोधस्तज्जनकत्वं प्रतिज्ञायामतिप्रसक्तम् । न चेतरोपस्थापितार्थविषयकस्वार्थविशेष्यकबोधजनकत्वविवक्षणान्नातिव्याप्तिः प्रतिज्ञार्थस्य वन्हिविशिष्टपर्वतत्वाद्यवच्छिन्नस्य हेत्वर्थविशेष्यकत्वादिति वाच्यम् । विशेषणकान्तवैयर्थ्यापत्तेः स्वार्थविशेष्यकान्वयबोधजनकत्वस्यैव सम्यक्त्वात् । तथापि इतरोपस्थापितार्थनिष्ठविशेषणतानिरूपितस्वार्थनिष्ठविषयताकबोधजनकन्यायावयवत्वमित्यर्थो विवक्षितस्तथा च प्रतिज्ञावारणाय स्वार्थेति, अवयवान्तरवारणाय निरूपितान्तं स्वार्थविषयताविशेषणम् । विशेषणविशेष्यभावव्यत्यासेन लक्षणान्तरमाह स्वार्थेत्यादिना । स्वार्थनिष्ठविषयतानिरूपितेतरप्रकारताकबोधजनकन्यायावयवत्वमित्यर्थः । स्वार्थविशेष्यकत्वप्रवेशे तादृशबोधजनकतामात्रस्यैव सम्यक्त्वे शेषवै-

इत्यभिधाने विशिष्य सिद्धतावगम्यते पूर्वं साध्यतयोक्तस्य समर्थहेतुसम्बन्धेन पुनरुत्कीर्त्तनात्, अन्यथा तद्वैयर्थ्यात् । संशयप्रयोजनादयस्त्ववयवलक्षणाभावादेव नावयवाः, किन्तु न्यायाङ्गतयोपयुज्यन्त इति नाधिक्यम् । कण्टकोद्धारस्य च न सार्वत्रिकत्वं समयविशेषोपयोगित्वादिति ॥

---

प्रतिज्ञार्थे न विशेषणत्वेनान्वेति किन्तु तदेकदेशार्थे इत्युक्तप्रायम् ॥

---

यर्थ्यापत्तेरिति ध्येयम् । अवयवार्थेति । अवयवार्थविशेष्यकस्वार्थप्रकारकबोधजनकावयवत्वमर्थः । स्वार्थप्रकारकबोधजनकत्वं हेतावपीत्यतो विशेष्यकान्तम् । अवयवार्थविशेष्यकबोधजनकत्वमुपनयस्यापीत्यतः स्वार्थप्रकारकेति । ननूपनयलक्षणस्य प्रतिज्ञायामतिव्याप्तिः तस्यापि हेत्वर्थविशेषणकबोधजनकत्वात्, एवं निगमनलक्षणस्य हेतावतिव्याप्तिः तस्यापि प्रतिज्ञार्थविशेष्यकस्वार्थप्रकारकबोधजनकत्वादत आह हेत्वर्थश्चेति । प्रतिज्ञार्थे वन्हिविशिष्टपर्वतादौ । तदेकदेशे वन्ह्यादौ । उक्तप्रायमिति । पञ्चम्यर्थान्वितो न प्रतिज्ञार्थः किन्तु तदेकदेशार्थ इत्येव प्रागुक्तं न तु हेत्वर्थान्वितो न प्रतिज्ञार्थ इत्युक्तमित्याशयेनाह प्रायमिति ॥

इति श्रीजगदीशतर्कालङ्कारविरचिता
अवयवदीधितिव्याख्या समाप्ता ॥

## चिन्तामणेः सामान्यनिरुक्तिः ।

अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ।

तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्,

---

## दीधित्याः सामान्यनिरुक्तिः ।

एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्य्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति ।

अनुमितीति । यथाश्रुतमिदं हेतुदोषाणां लक्षणम् । तद्गत्वञ्च

---

## जागदीश्याः सामान्यनिरुक्तिः ।

परिकरः सहकारी, स च व्याप्तिपक्षधर्मतादिः । तत्प्रसङ्गादिति । तेन हेतुना विरोधादिसम्बन्धेन स्मारितस्योपेक्षाऽनर्हत्वादित्यर्थः । तत्त्वनिर्णयादीत्यादिना विजयादेः परिग्रहः । तत्कार्य्येति । सद्धेतुकार्य्येत्यर्थः । स्वहेतोस्सद्धेतुत्वव्यवस्थयेव प्रतिवादिहेतोराभासत्वव्यवस्थापनयापि तत्त्वनिर्णयाद्युत्पत्तेः, तथा चैककार्य्यकारित्वमपि सङ्गतिः सम्भवतीति भावः ।

ननु निरुक्तयथार्थज्ञानस्य विषयतामात्रं समूहालम्बन-

दुष्टहेतूनाम्। तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति। तत्रा-नुमितिपदम् अनुमितिनिष्ठकार्य्यतानिरूपकसम्बन्धित्वेनानुमिति-तत्कारणज्ञानपरम्, साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याका-

---

विषयतामादायोदासीनेऽतिप्रसक्तमतो यथार्थज्ञाननिष्ठस्यानुमिति-कारणीभूताभावप्रतियोगित्वस्य विषयविधयाऽवच्छेदकत्वमेवार्थो वाच्यः स च ह्रदो वन्हिमान् धूमादित्यादौ बाधितहेतावव्या-प्त इत्यत आह यथाश्रुतेति। ज्ञाननिष्ठानुमितिप्रतिबन्धकताव-च्छेदको यो बाधाद्यात्मको दोषो येन केनापि सम्बन्धेन तद्व-त्त्वमिति वक्ष्यमाणमिश्रोक्तविवक्षादरे तु दुष्टलक्षणमपि सम्भव-तीत्यभिप्रायेणोक्तं यथाश्रुतमिति। तथा च दुष्टहेतोरलक्ष्यत्वात्तत्रा-व्याप्तिर्न क्षतिकरीति भावः। नन्वेवं दुष्टहेतूनां प्रागनुपक्रान्तत्वात्ते च पञ्चेत्यग्रिममूलेन तेषां विभागोऽसङ्गत इत्यत आह तद्वत्त्वं चेति। तादृशविषयवत्त्वं चेत्यर्थः। दुष्टहेतूनामित्यस्य लक्षणमिति पूर्वेणान्वयः। तथा चानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानस्य विषयो य-त्रेति व्युत्पत्त्या दुष्टहेतोर्लक्षणमवगत्यैव तेषामग्रे विभाग इति भावः। तदभिप्रायेणैवेति। दोषलक्षणाभिप्रायेणैवेत्यर्थः। अन्यथा दुष्टहेतूनां लक्ष्यत्वे विरुद्धादिहेतोर्व्यभिचारित्वनियमात् पृथग् विभागो न स्यान्मिथो व्यावर्त्तकानां धर्माणामेव विभाजकत्वादिति भावः। ननु व्यभिचारादीनां ज्ञानस्यानुमित्यप्रतिबन्धकत्वात्तत्राव्याप्तिरत आह तत्रेत्यादि। अनुमितिपदमनुमितितत्कारणपरमित्यन्वयः। अनुमि-तिपदेनानुमितित्वादिप्रत्येकरूपेणोभयबोधने युगपद्वृत्तिद्वयविरोध इत्यत आह अनुमितीति। अनुमितिनिष्ठकार्यताया यन्निरूपकं तत्स-म्बन्धित्वेनेत्यर्थः। तथा चानेन रूपेणाऽजहत्स्वार्थलक्षणेति भावः। निरूपकत्वं चामुकनिष्ठकारणताया इयं कार्येत्यनुभवसाक्षिकस्वरूप-सम्बन्धविशेषः, तत्सम्बन्धित्वञ्चानुमितितत्कारणयोरुभयोरेव। के-चित्तु अनुमितिनिष्ठकार्यतानिरूपकमनुमितिकारणत्वं तत्सम्बन्धि-त्वेनेत्यर्थः। परामर्शे तदाश्रयत्वस्यानुमितौ तन्निरूपितकार्यत्वस्य सत्त्वात्। वस्तुतस्तु अनुमितिनिष्ठकार्यतानिरूपकेत्यत्र बहुव्रीहितो-ऽनुमितिनिष्ठकार्यतानिरूपितसम्बन्धवत्त्वलाभात्तदाश्रयत्वे प्रतियोगित्वे

रानुमितिपरं वा । तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद्व्याप्त्यादिज्ञानेनाऽन्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति । पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमितिप्रतिबन्धादाह यथार्थेति ।

ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि

---

च निरूपकत्वस्यासत्त्वेपि न क्षतिः, निरूपितत्वस्यैव तत्र सत्त्वादित्याहुः ॥ अत्रानुमितिपदस्य लाक्षणिकत्वापातादाचार्यीयमनुमितिमात्रस्यैव लिङ्गोपधानपक्षमनुसृत्य मूलं व्याचष्टे साध्यव्याप्येत्यादिना । मणिकारमताभिप्रायेणैव तद्व्याख्यायान्तु सर्वत्र भ्रमानुमितौ मानाभावेन यत्रोक्तरीत्या विशिष्टानुमितिः कदापि नोत्पन्ना तत्रत्यदोषेष्वव्याप्तिप्रसङ्गात् । अत एव पक्षः साध्यवान् साध्यव्याप्यवांश्चेति समूहालम्बनानुमितिर्नोपात्ता । लिङ्गोपधानमते तु सर्वत्र तादृशानुमितेरावश्यकत्वेन नाव्याप्तिस्तदवस्था । न च ह्रदो वह्निमान् घटत्वादित्यादौ वन्ह्यभाववद्घटेऽतिव्याप्तिः घटत्ववति वन्ह्यभाववत्तानिश्चयस्यापि घटत्ववद्ध्रदो वह्निमानित्यनुमितिविरोधित्वादिति वाच्यम् । साधनवन्निष्ठसाध्याभावस्य व्यभिचारत्वेन मणिकारमते तस्य लक्ष्यत्वादिति ध्येयम् । व्यभिचारादिति । व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपीत्यग्रेणान्वयः । ननु तद्धेतुकानुमितिं प्रति तद्धेतौ व्यभिचारज्ञानाभावस्य हेतुत्वं वाच्यमतो न व्यभिचार इत्यत आह व्याप्त्यादीति । [ यद्वा कारणताघटकानियमांशस्य व्यतिरेकं प्रदर्श्यानन्यथासिद्धत्वाभावमाह व्याप्त्यादीति ] न क्षतिः न व्यभिचारादावव्याप्तिः । पर्वतो निर्वह्निरित्यादि । भ्रमादिति योजना । धूमो वह्नेर्व्यभिचारीत्यग्रेऽन्वयः । यथार्थेतीति । नच पर्वतो निर्वह्निरित्यादिज्ञानस्याप्यंशतो यथार्थत्वात् तद्विषयेऽतिव्याप्तितादवस्थ्यमिति वाच्यम् । यथार्थपदेन भ्रमसामान्यभिन्नत्वस्य विवक्षितत्वादिति भावः ।

साध्यादिघटितव्यभिचारस्य हेत्वाभासपदवाच्यत्वे सा-

यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वम्, ज्ञायमानं सदनुमितिप्रतिबन्धकं यत् तत्त्वं वा हेत्वाभासत्वम् ।

---

प्रत्येकं हेत्वाभासतापत्तिः । अथ विशिष्टविषयकज्ञानं प्रतिबन्धकं तद्घटकश्च न विशिष्टमिति चेत्तर्हि यथार्थेति व्यर्थं भ्रमविषयविशिष्टस्याऽप्रसिद्धत्वादित्यनुशयेनाह यदिति । केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य तदर्थश्च तादृशाभावप्रति-

---

ध्यादेरपि तत्त्वमिष्टमेवेत्यतः प्रत्येकमित्युक्तम् । ननु यादृशविशिष्टविषयकत्वेनानुमितिप्रतिबन्धकत्वं यथार्थज्ञानविषयीभूततादृशविशिष्टत्वं विवक्षितमतः साध्यादौ नातिव्याप्तिरित्याशयेन शङ्कते अथेति । तद्घटकं चेति । व्यभिचारादिघटकीभूतसाध्यादिकं चेत्यर्थः । न विशिष्टं न प्रतिबन्धकतावच्छेदकीभूतविशिष्टस्वरूपमित्यर्थः । [अप्रसिद्धत्वादिति । भ्रमविषयखण्डशःपदार्थविषयकत्वस्य विवक्षणीयप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावात् यथार्थपदं प्रकारान्तरेण सार्थकं कुर्वतां मिश्राणां मतमाह केचित्त्विति । नन्वेवं बाधितेऽव्याप्तिरित्यत आह तत्रेति । ननु एतावतैव कथं यथार्थपदसार्थक्यमत आह ] तृतीयमिवेति । ज्ञायमानं सदित्यादिकमिवेत्यर्थः । ज्ञायमानव्यभिचारादेरिति । साधनधर्मिकज्ञानीयप्रकारत्वविशिष्टसाध्याभाववद्वृत्तित्वादेरित्यर्थः । यद्यपि अनुमितिकारणीभूताभावस्य प्रतियोगि यत्रेति व्युत्पत्त्याऽनुमितिकारणीभूताभावप्रतियोगिज्ञानप्रकारीभूतव्यभिचारादेर्लाभसम्भवात् ज्ञायमानस्य व्यभिचारादेः प्रतिबन्धकत्वाभ्युपगमो न युक्तः, तथापि व्यधिकरणबहुव्रीहिः प्रयोगानुसारितया सर्वत्राव्युत्पन्नत्वादिदमुक्तम् । नन्वेतावता कथमव्याप्तिनिरास इत्यत आह तदर्थश्चेति । प्रथमल-

योगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषयत्वम् । अग्रे च तत्त्वमित्यस्य तद्वत्त्वमित्यर्थः । आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः । लिङ्गमविवक्षितम् । यद्विषयत्वेन यादृशविशिष्टविषयत्वेन ।

---

क्षणार्थश्चेत्यर्थः । तादृशाभावेति । अनुमितिकारणीभूताभावेत्यर्थः । व्यभिचारादय इति फलितार्थकथनं तादृूप्येणाप्रवेशात् । तत्प्रकारकेति । एतन्मते साध्याभाववद्वृत्तित्वमेव व्यभिचारः तथा च वाच्यं प्रमेयत्वादित्यादिसद्धेतोरनुमितिविरोधिनः साध्यासामानाधिकरण्यस्य भ्रमविशेष्यतामादाय प्रमेयत्वादिसद्धेतावतिव्याप्तिवारणाय यथार्थपदम् । न चैवमपि निर्वह्निवृत्तित्वादेः कालिकादिसम्बन्धेन यथार्थज्ञानमादाय, सद्धेतावतिव्याप्तितादवस्थ्यम्, यादृशसम्बन्धेन ज्ञायमानस्य प्रतिबन्धकत्वं तादृशसम्बन्धेन तत्प्रकारकयथार्थज्ञानस्योक्तत्वात् । न च ह्रदो धूमत्ववान् धूमादित्यत्र बाधितहेतावव्याप्तिः पक्षे धूमत्वाभावस्वरूपबाधस्य धूमहेतौ स्वरूपसम्बन्धेन यथार्थज्ञानासम्भवादिति वाच्यम् । साधननिष्ठव्यभिचारादेर्यथार्थज्ञानमादायैव तत्र लक्षणसङ्गमादिति भावः । ननु दुष्टहेतोरेव लक्ष्यत्वे द्वितीयादिनिरुक्तेस्तत्राव्याप्तिर्दोषेतिव्याप्तिश्चेत्यत आह अग्रे चेति । उपधेयसङ्करेऽपीत्यादिग्रन्थासङ्गतेर्लक्षणापत्तेश्चाह आद्यस्यैव वेति । तथा चाग्रिमलक्षणमभिप्रेत्य उपधेयेत्यादिग्रन्थ इति भावः । प्राहुरिति । यथार्थपदसार्थक्यमेवात्र प्रकर्षः । पक्षवृत्तितया ज्ञायमानस्य वह्न्यभावरूपबाधस्य स्वरूपसम्बन्धेनैव यद्यथार्थज्ञानं तद्विषयत्वस्यैव धूमादौ सत्त्वात् पर्वतो वन्हिमान् धूमादित्यादावतिव्याप्तिरित्यस्वरसः केचिदित्युक्त्या सूचितः । यदि च सर्वलिङ्गकानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमेवार्थः सर्वत्रैव दुष्टहेतावन्ततो नित्यज्ञानविषयतामादायैव लक्षणसम्भवात्, तदा अनुमितिप्रतिबन्धकीभूतव्यभिचारादिभ्रमविषयतामादायैव सद्धेतावतिप्रसङ्गवारणाय भ्रमसामान्यभिन्नार्थकं यथार्थपदमावश्यकमिति युक्तमुत्पश्यामः । लिङ्गपदस्य निष्प्रयोजनकत्वादाह लिङ्गमिति । ज्ञानपदप्रयोजनं त्वग्रे वक्ष्यामः । ननु यत्पदस्याखण्डव्यक्तिवा-

तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः । अवच्छेदकत्वञ्चेहानतिरिक्तवृत्तित्वम् । तेन विशिष्टस्यासत्त्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षतिः । विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन । तेन प्रमेयत्वादिविशिष्टे

---

धकतया ह्रदो वह्निमान् धूमादित्यादौ साध्यादिशून्यस्यापि केवलस्य पक्षादेर्दोषत्वं स्यात्तन्निष्ठस्यापि बाधनिश्चयविषयत्वस्यानुमितिप्रतिबन्धकतावच्छेदकत्वादतो व्याचष्टे यादृशेति । यादृशधर्मवन्निष्ठतत्तद्विशिष्टधर्मावच्छिन्नविषयकत्वेनेत्यर्थः । विशिष्टपदस्य फलमाह तेनेति । सद्धेत्वादिनिष्ठ इति तादृशस्य दोषत्वे तेनैव दोषेण हेतोर्दुष्टत्वप्रसङ्गनार्थमुक्तम् । आदिनाऽसद्धेतुपरिग्रहः । नातिप्रसङ्ग इति । साध्याभावनिष्ठायाः साध्यीयत्वविशिष्टाभावत्वविशिष्टविषयताया अनुमितिप्रतिबन्धकताऽनवच्छेदकत्वादिति भावः । नन्वेवमप्यसम्भवः, ह्रदत्वेन नद्यां वन्ह्यभावत्वेन गुञ्जाद्यभावस्य निश्चये सत्यपि ह्रदो वह्निमान् इत्याद्यनुमितेरनुत्पत्त्या ह्रदत्वावच्छिन्नविशेष्यताकवन्ह्यभावत्वावच्छिन्नप्रकारताकनिश्चयत्वादिनैव तादृशानुमितिप्रतिबन्धकतया वन्ह्यभावविशिष्टह्रदादिविषयकत्वस्य प्रतिबन्धकतावच्छेदकत्वविरहादित्यत आह अवच्छेदकत्वमिति । तथा च यादृशधर्मवन्निष्ठतद्विशिष्टधर्मनिरूपितविषयिताया अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वं तादृशविशिष्टधर्मवान् हेतुदोष इत्यर्थः । तादृशधर्मश्च बाधादिस्थले वन्ह्यभावविशिष्टह्रदत्वादिरेवेति भावः । विशिष्टस्यासत्त्वेपीति । वन्ह्याद्यभावविशिष्टह्रदादेर्विषयितासम्बन्धेनासत्त्वेपीत्यर्थः । भ्रमादिति । ह्रदत्वादिरूपेण नद्यादौ वन्ह्यभावत्वेन गुञ्जाद्यभावस्य भ्रमादित्यर्थः । न क्षतिः । नासम्भवः । तादृशेति । स्वातिरिक्तं यादृशमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकं तादृशाघटितत्वेन निरुक्तविशिष्टं विशेषणीयमित्यर्थः । सव्यभिचारादेरपि अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकेन स्वेनैव घटितत्वादसम्भवः स्यादतः स्वातिरिक्तेति । प्रमेयत्वविशिष्टसव्यभिचारादिश्च स्वातिरिक्तेन सव्यभिचारादिनैव तादृशेन घटित इति न

तत्रातिप्रसङ्गः। स्वातिरिक्तत्वं च स्वानवच्छिन्नप्रकारतावच्छेदकत्वम्। तेन सव्यभिचारस्य प्रमेयत्वविशिष्टसव्यभिचाराभिन्नत्वेऽपि न क्षतिः, शुद्धसव्यभिचारस्य विशिष्टसव्यभिचारत्वावच्छिन्नप्रकारतावच्छेदकत्वेनैव तत्रातिप्रसङ्गभङ्गादिति भावः। यद्यप्येवमपि प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्रावृत्तित्वाभाववदवृत्तिप्रमेयत्वरूपसव्यभिचारेऽव्याप्तिः तस्य वृत्तिप्रमेयत्वरूपबाधात्मकेनैव तादृशधर्मान्तरेण घटितत्वात्, तथापि यादृशविशिष्टविषयकत्वं यत्पक्षहेतुसाध्यकानुमितिनिरूपितयत्प्रतिबन्धकतानतिरिक्तवृत्ति स्वातिरिक्तेन तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकेन अघटितं तादृशविशिष्टं तत्पक्षहेतुसाध्यकानुमितौ दोष इति विवक्षितम्। उक्तस्थलीयव्यभिचारस्य तु बाधघटितत्वेऽपि व्यभिचारज्ञानत्वावच्छिन्नं यत्तथाविधानुमितिप्रतिबन्धकत्वं तदनतिरिक्तवृत्तिविषयिताकस्य व्यभिचारस्य व्यभिचारज्ञानत्वावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकेन धर्मान्तरेण अघटितत्वात् न तत्राऽव्याप्तिः, तादृशधर्मान्तरञ्च प्रमेयत्वविशिष्टं स्वमेव सव्यभिचारादिकं सर्वत्र सुलभम्। न चैवमपि साध्याभावविशिष्टपक्षादिविषयित्वस्यानुमितिप्रतिबन्धकताशून्ये संस्कारादौ सत्त्वादसम्भव इति वाच्यम्। मूलस्थेन लिङ्गज्ञानस्येत्यत्र निश्चयपरेण ज्ञानपदेन यादृशविशिष्टविषयकनिश्चयत्वं तादृशप्रतिबन्धकताऽनतिरिक्तवृत्ति इत्यर्थलाभेन तन्निरासात्। प्रतिबन्धकत्वं वा प्रतिबन्धकतावच्छेदकीभूतविषयितावत्त्वं वाच्यम्, तथा च संस्कारादेरपि तादृशविषयितावत्त्वादेव नासम्भवः। संयोगाद्यभावस्य च प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव निर्णयो द्रव्ये संयोगानुमितिविरोधी न त्वव्याप्यवृत्तित्वज्ञानाभावविशिष्टसंयोगाभावमात्रस्य निर्णयस्तथा, येन वृक्षः संयोगी द्रव्यत्वादित्यादौ संयोगाभावविशिष्टवृक्षादावतिव्याप्तिरिति ध्येयम्। प्रमेयत्वविशिष्टसव्यभिचारादाविति॥ अत्र प्रमेयत्वविशिष्टं यत्साध्यव्यभिचारि साधनं तन्नेत्यर्थः कार्यः, न तु प्रमेयत्वविशिष्टं यत्साध्यव्यभिचारित्वं तद्वति साधन इत्यर्थः। तादृशस्य लक्ष्यत्वात्, साधनधर्मिकप्रमेयत्वविशिष्टसव्यभिचारत्वप्रकारकनिश्चयत्वेनापि व्याप्तिबुद्धौ प्रतिबन्धकत्वात्, अन्यथा प्रमेयत्वविशिष्टव्यभिचारवत्तानिश्चयस्य विशिष्टव्यभिचारित्वा-

सव्यभिचारादौ नातिप्रसङ्गः । एवञ्च पक्षतावच्छेदकादिविरहवि-
शिष्टः पक्षः पक्षनिष्ठस्तद्विरहो वा साध्याभाववद्वृत्ति साधनं सा-
धनवद्वृत्तिसाध्याभावो वा हेतुदोषः । येन केनापि सम्बन्धेन
तद्वांश्च प्रकृतो हेतुर्दुष्टः । यादृशधर्मिणि यादृशधर्मवत्ताज्ञान-
मनुमितिप्रतिबन्धकं तस्य धर्मिणस्तादृशधर्मवत्त्वं हेतुदोष इत्यपि

———

शे भ्रमत्वग्रहदशायां हेतौ व्याप्तिग्रहानुत्पादप्रसङ्गात्, यद्रूपाव-
च्छिन्नवत्तानिश्चयत्वेन विरोधित्वं तदवच्छिन्नाभावगर्भस्यैव भ्र-
मत्वग्रहस्योत्तेजकत्वात्, अत एव गृहादौ घटसामान्याभावे
साध्ये गृहस्य घटवत्त्वमिव नीलघटवत्त्वमपि बाध एवेति
वदन्ति । न च ह्रदः प्रमेयवन्हिमान् धूमादित्यादौ गुरुधर्मस्य प्रतियो-
गितानवच्छेदकत्वेन प्रमेयवन्हित्वावच्छिन्नाभावविशिष्टह्रदाद्यप्रसि-
द्ध्या बाधादावव्याप्तिरिति वाच्यम्।तत्र ह्रदो निर्वन्हिरिति ज्ञानस्यापि
प्रतिबन्धकतया निर्वन्हित्वविशिष्टह्रदादेरेव दोषत्वसम्भवात्।वस्तुतो
गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमत एव एतल्लक्षणम्, अन्यथा ह्रदो
दाहजनकद्रव्यवान् द्रव्यादित्यादौ बाधाद्यसम्भवापत्तेः, निर्वन्हित्व-
विशिष्टह्रदादिविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्ति-
त्वात् दाहजनकद्रव्यत्वाद्यवच्छिन्नाभावाप्रसिद्ध्या तद्विशिष्टह्रदादि-
विषयित्वस्य चासम्भवात्।न च तत्र साध्यनिष्ठपक्षवृत्तित्वाभाव एव
बाध इति साम्प्रतम् ह्रदत्वप्रकारकप्रमाविशेष्यो वन्हित्वप्रकारकप्रमा-
विशेष्यवान् [दाहजनकतेजस्वी] द्रव्यत्वादित्यादौ तस्याप्यसम्भवा-
त् ह्रदावृत्तित्वमपेक्ष्य ह्रदत्वप्रकारकप्रमाविशेष्यावृत्तित्वस्य गुरुतया
तदवच्छिन्नाभावस्याप्यप्रसिद्धेरिति ध्येयम्।एवं चेति । विशिष्टविल-
क्षणे चेत्यर्थः।पक्षतावच्छेदकादीत्यादिना साध्यहेत्वोः संग्रहः।असमा-
नप्रकारकस्यापि ज्ञानस्य प्रतिबन्धकतामाहत्याह पक्षनिष्ठेत्यादि । येन
केनापीति । दोषासमानकालीनस्यापि हेतोरेकज्ञानविषयत्वादिसम्ब-
न्धेन तत्सम्बन्धित्वात् विशिष्टदोषाप्रसिद्ध्यैव सम्बन्धसामान्येन
तद्वत्त्वोक्तावपि सद्धेतावतिप्रसङ्गाभावादिति भावः । प्रकृतः प्रकृतहे-
तुतावच्छेदकवत्तया अभिमतः, तेन काञ्चनमयधूमत्वादिप्रकारेण

कश्चित् । अथ पर्वतत्वेन पक्षत्वे वन्हित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहो, ह्रदस्य वन्हिधूमशून्यत्वं, पर्वतस्य महानसीयवन्हिधूमविरहित्वं, मेयत्वस्य केव-

---

हेतुतास्थले हेतुतावच्छेदकविशिष्टहेतोरलीकत्वेपि नाव्याप्तिः । यादृश इति । यद्धर्मविशिष्ट इत्यर्थः।एवमन्यत्रापि । कश्चिदित्यस्वरसः, तद्बीजं तु यादृशधर्मिणि यादृशधर्मवत्ताज्ञानं वस्तुगत्याऽनुमितिप्रतिबन्धकमित्युक्तौ पर्वते ह्रदे च वन्ह्यभाववत्त्वावगाहिसमूहालम्बनमादाय वन्ह्यभावविशिष्टह्रदस्यापि पर्वतो वन्हिमान् धूमादित्यादौ दोषत्वापत्तिः।यादृशधर्मिणि यादृशधर्मवत्तानिश्चयत्वावच्छिन्नानुमितिप्रतिबन्धकत्वमित्युक्तौ चासम्भवः ह्रदत्वेन घटे धर्मिणि अभावत्वेन भावं तत्र च वन्हित्वेन गुञ्जां प्रतियोगिविधयाऽवगाहमानस्यापि ज्ञानस्य ह्रदो वन्हिमानित्यनुमितिप्रतिबन्धकत्वेन ह्रदत्वविशिष्टधर्मिकवन्हिसामान्याभावत्वावच्छिन्नप्रकारताकनिश्चयत्वादिना प्रतिबन्धकत्वविरहादिति ध्येयम् । विशिष्टधूमत्वेनेति । अविच्छिन्नमूलकत्वादिविशिष्टधूमत्वेनेत्यर्थः । पक्षसाध्यहेतुत्वानामवच्छेदकप्रवेशार्थमाह पर्वतादेरिति।आदिना वन्हिधूमयोरुपग्रहः । काञ्चनमयत्वविरह इति । न दोष इति परेणान्वयः । एवमग्रेपि। यथाश्रुतलक्षणं तु काञ्चनमयः पर्वतो वन्हिमानित्यनुमितिं प्रति विरोधित्वमादायैव तत्रातिव्याप्तमिति भावः । अप्रसिद्धपक्षिकामिव प्रसिद्धपक्षिकामप्यनुमितिमादायातिव्याप्तिवारणाय पक्षतावच्छेदकं प्रवेशनीयमित्याशयेनाह ह्रदस्य वन्हिधूमशून्यत्वमिति । तद्धर्मावच्छिन्नपक्षकत्वाप्रवेशे ह्रदो वह्निमानित्याकारकवन्हिसाध्यकधूमलिङ्गकानुमितेः प्रतिबन्धकतावच्छेदकत्वस्य तत्रापि सत्त्वेन तत्रातिव्याप्तिरेवेति भावः । अप्रसिद्धसाध्यहेतुकामिव प्रसिद्धसाध्यहेतुकामप्यनुमितिमादायातिप्रसङ्गवारणं साध्यहेतुतयोरवच्छेदकप्रवेशस्य फलमाह पर्वतस्येति । तद्धर्मावच्छिन्नसाध्यहेत्वोरप्रवेशे पर्वतो महानसीयवन्हिमान् तादृशधूमादित्याद्यनुमितिमादाय तत्प्रतिबन्धकतावच्छेदकत्वस्य महानसीयवन्ह्यभाववत्पर्वते तादृशधूमाभाववत्पर्वते च

लधूमस्य वा वन्हिव्यभिचारो, विशिष्टस्य धूमस्य वा पर्वतीयवन्हिव्यभिचारो न दोषः, न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम्, अतस्तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वं वाच्यं तथा च निर्व-

———

सत्त्वात्तयोरतिव्याप्तिः स्यादिति भावः । व्याप्यत्वांशेऽप्यनुमितौ हेतुविशेषोऽवश्यं निवेशनीय इत्याशयेनाह मेयत्वस्येति । अन्यथा वन्हिव्याप्यमेयत्ववान्पर्वतो वन्हिमानित्यनुमितिव्यक्तिप्रतिबन्धकतावच्छेदकत्वस्य वन्हिव्यभिचारिमेयत्वे सत्त्वात्तत्रातिव्याप्तिः स्यादिति भावः । व्याप्यत्वांशे हेतुतावच्छेदकप्रवेशार्थमाह केवलधूमस्येति । व्याप्यत्वांशेऽप्यनुमितौ साध्यतावच्छेदकप्रवेश आवश्यक इत्यभिप्रेत्याह विशिष्टधूमस्य वेति । अन्यथा पर्वतीयवन्हिव्याप्यविशिष्टधूमवान्पर्वतो वन्हिमानित्याकारकानुमितिप्रतिबन्धकतावच्छेदकत्वस्य पर्वतीयवन्हिव्यभिचारित्वविशिष्टधूमे सत्त्वादतिव्याप्तिः स्यादिति भावः । तत्सम्बन्धेनेति । तेषां पर्वतनिष्ठकाञ्चनमयत्वविरहादीनां यथाकथञ्चित्सम्बन्धेनेत्यर्थः । तत्र पर्वते वन्हेः साध्यत्वे । तस्य विशिष्टधूमस्य । समानधर्मिकज्ञानस्यैव प्रतिबन्धकत्वमते पर्वतत्वेन वन्हिशून्यपर्वतपक्षिकायाः पर्वतो वन्हिमानित्यनुमितेः प्रतिबन्धकतावच्छेदके वन्ह्यभाववत्पर्वतेऽतिव्याप्तिवारणार्थं तत्पक्षकेति। तथा च पर्वतत्वेन वन्हिमत्पर्वतपक्षकानुमितिप्रतिबन्धकतावच्छेदकत्वस्य तत्रासत्त्वान्नातिव्याप्तिः वन्हित्वेन पर्वतावृत्तिवन्हिविषयिकायाः पर्वते वन्हिरित्याकारिकायाः पर्वतो वन्हिमानित्याकारिकाया वाऽनुमितेः प्रतिबन्धकतावच्छेदके पर्वतावृत्तित्वविशिष्टवन्ह्यावतिप्रसङ्गवारणाय तत्साध्यकेति । तथा च वन्हित्वेन पर्वतीयवन्हिसाध्यकानुमितिप्रतिबन्धकतावच्छेदकत्वविरहान्न तत्रातिप्रसङ्गः । एवं धूमत्वेन पर्वतावृत्तिधूमस्य पक्षधर्मत्वावगाहिन्या अनुमितेः प्रतिबन्धकतावच्छेदकपर्वतावृत्तित्वविशिष्टधूमेऽतिप्रसङ्गवारणाय तद्धेतुकेति । इत्थं च पर्वतत्वेनैव निर्वन्हिपर्वतस्य पक्षत्वे वन्हित्वेनैव पर्वतावृत्तिवन्हेः साध्यत्वे धूमत्वेनैव पर्वतावृत्ति-

न्हिः पर्वतो वन्हिमान् पर्वतावृत्तिवन्हिमान् वा तद्व्यभिचारिणः पर्वतावृत्तेर्वा धर्मादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशानुमितेरप्रसिद्धत्वादिति ।

अत्र वदन्ति । यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तस्तदुत्तरम् अनुमितौ अनाहार्य्यमानसज्ञा नेवा पक्ष-

---

धूमस्य हेतुतायां पर्वतो वन्हिमान् धूमादित्यत्रापि वन्ह्यभाव-विशिष्टपर्वतादिकं प्राचां मते हेतुदोष एवेति हृदयमायेन सम्बन्धेन यस्य पर्वतत्वादेः पक्षतावच्छेदकत्वं तेनैव सम्बन्धेन तद्धर्मावच्छिन्नत्वलाभाय तत्पक्षकेत्यादौ तत्पदम् । तेन विषयितया पर्वतत्वाद्यवच्छिन्नं यत् ज्ञानादिकं तत्पक्षकानुमितिप्रतिबन्धकतामादाय समवायेन पर्वतत्वाद्यवच्छिन्नस्य पक्षत्वादिस्थले पर्वतत्वविशिष्टज्ञाननिष्ठवन्ह्यभाववत्त्वादौ नातिप्रसङ्ग इत्याहुः।इत्यादाविति।। इत्यादिन्यायस्थलीयहेतावित्यर्थः। अत्र च निर्वह्निपर्वतत्वेन वह्निमत्पर्वतव्यक्तेः पक्षत्वे आश्रयासिद्धिरेव, निर्वन्हिपर्वतत्वेन निर्वन्हिपर्वतव्यक्तेः पक्षत्वे बाध एव दोषः, पर्वतः पर्वतावृत्तिवन्हिमानित्यत्र तु बाधः, तयोश्च तादृशपक्षसाध्यकानुमित्यप्रसिद्ध्याऽव्याप्तिः, पर्वतो वन्हिमान् वन्हिव्यभिचारिधर्मादित्यत्र वन्हिव्यभिचारित्वविशिष्टवन्हिव्याप्यत्वावगाह्यनुमित्यप्रसिद्ध्या व्यभिचारादावव्याप्तिः, पर्वतो वन्हिमान् पर्वतावृत्तिधर्मादित्यत्र पर्वते प्रकृतहेतुवैशिष्ट्यावगाह्यनुमित्यप्रसिद्ध्या स्वरूपासिद्ध्यादावव्याप्तिरिति द्रष्टव्यम्। तादृशानुमितेरिति । द्वितीयव्याख्यानुसारेणेदम् । तेन पर्वतो वन्हिमान् वन्हिव्यभिचारिधर्मादित्यादावाद्यव्याख्यायामनुमितिप्रसिद्धावपि न क्षतिः । वस्तुतः अनाहार्यपरामर्शस्यैवानुमितिहेतुत्वात् प्रथमकल्पेपि तत्रानुमितेरप्रसिद्धिः ॥

यद्विषयकेति । यद्विषयकनिश्चयस्य विरोधिनी यद्विषयकनिश्चयत्वाभावव्याप्या यद्विषयकनिश्चयावृत्तिरिति यावत् तादृशी या विषयिता तत्प्रतियोगिक इत्यर्थः । एतस्य च द्वयोर्व्यतिरेक इत्यग्रेणान्वयः । तदुत्तरमनुमितौ तादृशनि-

तावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्याव-
गाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्ट-
हेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेक-

---

श्चयोत्तरानुमितिसामान्ये । पक्षतावच्छेदकविशिष्टपक्ष इत्यादि ।
अत्र द्वितीयपक्षपदं पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेद-
कवैशिष्ट्यस्य प्रवेशलाभाय, तेन ह्रदे वन्ह्यभावनिश्चयोत्तरं कालि-
कादिसम्बन्धेन ह्रदत्वादिविशिष्टकालादौ वन्हेस्तद्व्याप्यधूमवत्त्वस्य
चानुमितौ उभयस्य सत्त्वेऽपि न बाधादावसम्भवः । कथितदिशैवा-
ग्रिमयोः साध्यहेतुपदयोर्व्यावृत्तिरवसेया । तथा च यादृशविशिष्ट-
विषयकनिश्चयोत्तरानुमितिसामान्ये यादृशविशिष्टविषयकनिश्च-
यत्वाभावव्याप्यविषयिताप्रतियोगिकः प्रकृतपक्षे प्रकृतसाध्यावगा-
हित्वप्रकृतपक्षधर्मिकप्रकृतसाध्यव्याप्यहेतुमत्तावगाहित्वोभयव्यति-
रेकस्तादृशविशिष्टमेव प्रकृतपक्षसाध्यन्यायस्थलीयप्रकृतहेतौ दोष
इति फलितार्थः । पर्वतधर्मिकवन्ह्यभावव्याप्यवत्तावगाहित्ववन्ह्य-
भावव्याप्यव्याप्यधूमवत्त्वावगाहित्वोभयव्यतिरेकस्य वन्हिविशिष्ट-
पर्वतनिश्चयत्वाभावव्याप्यं यत् पर्वतधर्मिकवन्ह्यभावव्याप्यवत्ताव-
गाहित्वं तत्प्रतियोगिकत्वात्पर्वतो वन्ह्यभावव्याप्यवान् धूमादित्या-
दौ वन्हिविशिष्टपर्वतेतिव्याप्तिरतस्तद्वारणाय सामान्य इत्युक्तम् ।
तथा च वन्हिविशिष्टपर्वतनिश्चयोत्तरमुत्पन्नायां पर्वतो वन्ह्यभाव-
व्याप्यवान् वन्ह्यभावव्याप्यव्याप्यधूमवांश्चेत्याकारिकायामेवानुमितौ
पक्षधर्मिकसाध्यावगाहित्वतादृशसाध्यव्याप्यहेतुमत्तावगाहित्वोभ-
यव्यतिरेकस्यासत्त्वान्न तादृशस्थले वन्हिर्विशिष्टपर्वतो दोषः । त-
त्रापि बाधादिसंशयोत्तरोत्पन्नायां कस्याञ्चिदनुमितौ पक्षधर्मिक-
साध्यावगाहित्वसाध्यव्याप्यहेतुमत्त्वावगाहित्वोभयोः सत्त्वेन ह्रदो
वन्हिमान्धूमादित्यादौ सर्वत्रैव बाधप्रभृतावसम्भवः स्यादतो याद्द-
शनिश्चयपदम् । यद्विषयकनिश्चयस्य पूर्वमनुमितावित्युक्तौ बाधा-
दिनिश्चयपूर्वोत्पन्नानुमितौ साध्यावगाहित्वतद्व्याप्यवत्त्वावगाहि-
त्वोभयोः सत्त्वादसम्भवः स्यादतस्तदुत्तरमित्युक्तम् । निश्चय-
श्चागृहीताप्रामाण्यको निविष्टः, तेन भ्रमत्वेन गृह्यमाणस्य बाधादि-

निश्चयस्योत्तरमुत्पन्नायामनुमितौ कदाचिन्निरुक्तावगाहिताद्वय-सत्त्वेपि नासम्भवतादवस्थ्यम् । निर्वन्हिर्वन्हिमान् धूमादित्यादौ घटविशिष्टगृहादावतिव्याप्तिः तन्निश्चयोत्तरानुमितित्वावच्छेदेनैव निर्वन्हिधर्मिकवन्ह्यवगाहित्वविरहेण निरुक्तावगाहिताद्वयव्यतिरेकस्य सत्त्वादतस्तद्वारणाय विशिष्टविषयकनिश्चयत्वाभावव्याप्य-विषयिताप्रतियोगिक इत्युक्तम् । तथा च निर्वन्हिर्वन्हिमान् वन्हिव्याप्यधूमवान् गृहं च घटवदित्यादिसमूहालम्बन एव व्यभिचारेण निर्वन्हिधर्मिकवन्ह्यवगाहित्वस्य वन्हिव्याप्यधूमवत्त्वावगाहित्वस्य वा घटविशिष्टगृहादिनिश्चयत्वाभावव्याप्यत्वाभावान्निरुक्तावगाहिताद्वयव्यतिरेकस्य घटविशिष्टगृहादिनिश्चयत्वाभावव्याप्यविषयिताप्रतियोगिकत्वमेव नास्तीति न तत्र घटविशिष्टगृहादिकं दोषः, किन्तु वन्ह्यभावादिविशिष्टो निर्वन्ह्यादिरेव तत्र दोषः । न च निर्वन्हिधर्मिकवन्ह्यवगाहिज्ञानसामान्य एव यादृशवस्तुनो न भानं तत्रातिव्याप्तितादवस्थ्यम्, तादृशवस्तुनि मानाभावात् एतदस्वरसेनैव वदन्तीत्यभिधानाच्च । यादृशविशिष्टविषयकज्ञानत्वाभावव्याप्यविषयिताप्रतियोगिक इत्युक्तावसम्भवः पक्षधर्मिकसाध्यसंशयादौ पक्षधर्मिकसाध्यावगाहित्वादेः साध्याभावविशिष्टपक्षज्ञानत्वाद्यभावव्यभिचारित्वादतो निश्चयत्वानुसरणम् । अत्र निश्चयस्तत्तदाहार्यज्ञानभिन्नत्वेन विशेषणीयः, तेनाहार्यस्य साध्याभावादिमत्तया पक्षादिनिश्चयस्य पक्षादिधर्मिकसाध्यादिमत्त्वावगाहित्वेऽपि ह्रदो वह्निमान् धूमादित्यादौ न बाधप्रभृतावसम्भवः । यद्यपि पक्षधर्मिकसाध्यावगाहित्वविशिष्टस्य तादृशसाध्यव्याप्यहेतुमत्तावगाहित्वस्य व्यतिरेकमन्तर्भाव्यापि लक्षणं सुवचम्, तथापि यत्र स्थलविशेषे साध्यतद्व्याप्यहेतुमत्त्वयोः पक्षे समूहालम्बनभ्रमोऽप्रसिद्धः तत्रत्यदोषेऽव्याप्तिप्रसङ्गात् विशिष्टाभावस्यातिरिक्तत्वमते विशेषणाप्रतियोगिकतया साध्याभावव्याप्यवत्पक्षेऽव्याप्तिप्रसङ्गाच्चेति निरुक्तविशिष्टाभावं परित्यज्य द्वयोरित्यनेनोभयाभावो निर्वाशितः । न च समवेतं द्रव्यं मूर्तं स्पर्शवत्त्वादित्यत्र सद्धेतौ असमवेतत्वविशिष्टद्रव्येऽतिप्रसङ्गः समवेतत्वतदभावयोर्द्रव्यधर्मिकैकनिश्चयागोचरत्वादिति वाच्यम्। द्रव्यत्वावच्छेद्यत्वविशिष्टस्वरूपसम्बन्धेन समवेतत्वस्य पक्षतावच्छेदकत्वे तद्दोषस्येष्टत्वात्, स्वरूपस-

स्वन्धमात्रेण समवेतत्वस्य पक्षतावच्छेदकत्वप्रवेशे तु तादृशपक्षधर्मिकसाध्यावगाहित्वस्याऽसमवेतत्वविशिष्टद्रव्यनिश्चयत्वाभावव्याप्यत्वविरहादेव उक्तस्थले समवेतत्वाद्यभावविशिष्टद्रव्यस्य दोषत्वासम्भवात्। द्रव्यं द्विविधं समवेतमसमवेतं चेत्याकारकस्य द्रव्यत्वसामानाधिकरण्येन समवेतत्वतदभावयोर्निश्चयस्य सर्वानुभवसिद्धत्वात्, एकधर्मावच्छेदेनैव विरोधिनोरेकनिश्चयाविषयत्वात्। इदं तु बोध्यम्। अत्रापि प्रमेयत्वविशिष्टव्यभिचारादावतिप्रसङ्गवारणाय तादृशविशिष्टान्तराघटितत्वविशेषणं देयमेव। तस्य च प्रकृतलक्षणाश्रयीभूतं यत् स्वभिन्नं तदघटितान्यत्वं नार्थः प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादौ व्यभिचारस्य तादृशस्वभिन्नबाधादिघटितत्वेनाव्याप्त्यापत्तेः, किं तु तादृशं निरुक्तलक्षणाश्रयीभूतं वस्तुगत्या यद्विशिष्टान्तरं हेत्वाभासत्वविशिष्टाद्भिन्नं तदघटितत्वमेव। वस्तुतो यद्विषयकनिश्चयत्वविरोधियादृशयादृशविषयिताप्रतियोगिको निरुक्तोभयव्यतिरेकस्तदन्यघटितविषयकनिश्चयत्वविरोधितादृशविषयिताप्रतियोगिकस्तथाविधविशिष्टाघटितत्वमेव तादृशविशिष्टान्तराघटितत्वमित्यस्यार्थो बोध्य इति नोक्ताव्याप्त्याद्यवकाशः। यदि च नव्यानां मते साध्याभाववदवृत्तित्वरूपाया एवान्वयव्याप्तेरनुमित्युपयोगित्वात् तादृशव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वमेव लक्षणे निवेश्यते तदा प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यीयतादृशव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्य प्रकृतसाध्यीयव्यतिरेकव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्य च त्रित्वावच्छिन्नाभावो यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयत्वविरोधिविषयिताप्रतियोगिकस्तद्धर्मावच्छिन्न एव तादृशधर्मविशिष्टः प्रकृतपक्षतावच्छेदकविशिष्टपक्षकप्रकृतहेतुसाध्यकन्यायस्थले दोषो वक्तव्य इति प्रमेयत्वविशिष्टसाधनत्वावच्छेदेन साध्यव्यभिचारनिश्चयस्यापि साधनत्वसामानाधिकरण्येन तथाविधव्याप्त्यवगाहित्वसत्त्वात् निरुक्तत्रित्वावच्छिन्नाभावस्य तादृशनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वविरहादेव प्रमेयत्वविशिष्टसव्यभिचारादौ नातिप्रसङ्गः। प्रमेयत्वविशिष्टसव्यभिचारत्वावच्छेदेन साधनवृत्तितानिश्चयस्यापि विरोधिनी न साधनधर्मिकसाध्याव्यभिचारित्वावगाहिता, नव्यानां मते समानधर्मिकस्यैव ज्ञानस्य विरोधि-

त्वादतः साधननिष्ठप्रमेयत्वविशिष्टसव्यभिचारेऽपि नातिप्रसङ्गः । धूमहेतुना द्रव्यत्वसामानाधिकरण्येन वह्नेः साध्यतास्थले तु द्रव्यत्वावच्छिन्नं सर्वं द्रव्यं न वन्ह्यभाववत् किन्तु यत्किञ्चिद्द्रव्यमेवेति न तत्र वन्ह्यभावविशिष्टद्रव्येऽतिप्रसङ्गः । न चैवं द्रव्यत्वावच्छेदेन धूमहेतुना वह्नेः साध्यतास्थले भागासिद्ध्यंशतोबाधयोरव्याप्तिः द्रव्यत्वावच्छिन्ने सर्वत्र धूमस्य वह्नेर्वा सामान्याभावस्यासत्त्वादिति वाच्यम् । निरुक्तत्रित्वावच्छिन्नाभावो यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयत्वविरोधिविषयिताप्रतियोगिकः तद्धर्मावलीढस्यैव तादृशधर्मवतः प्रकृतपक्षतावच्छेदकधर्मावच्छेदेन प्रकृतसाध्यहेतुकदोषनिरुक्तौ निवेश्यत्वात् । न च वह्नित्वावच्छेदेन निर्धूमवृत्तित्वासत्त्वाद्द्रव्यं धूमवद्वह्नेरित्यादौ साध्याभाववद्वृत्तित्वविशिष्टहेतुस्वरूपव्यभिचारेऽव्याप्तिः साध्याभाववन्निष्ठाधिकरणतानवच्छेदकीभूतहेतुतावच्छेदकधर्मवत्त्वस्यैव व्याप्तितया तद्विरोधिनो हेतुतावच्छेदकधर्मवत्त्वावच्छेदेन तादृशाधिकरणतावच्छेदकवत्त्वस्यैव व्यभिचारत्वात् । अन्यथा द्रव्यं विशिष्टसत्त्वादित्यादेरपि व्यभिचारित्वापत्तेरिति परैरपरिशीलितः पन्थाः ।

गुरुचरणास्तु यद्विषयकेत्यादेर्यादृशविशिष्टविषयकनिश्चयवृत्तित्वविशिष्टाया विरोधिविषयितायाः प्रयुक्तो व्यापकः प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वमित्यर्थः । तत्र च विरोधिविषयितायां व्याप्यत्वं न स्वरूपसम्बन्धेन, बाधादेराहार्यनिश्चये निरुक्तावगाहिताद्वयसत्त्वेनाऽसम्भवापत्तेः, किन्तु स्वाश्रयोत्तरानुमितित्वसम्बन्धेन स्वाश्रयोत्तरानाहार्यमानसज्ञानत्वसम्बन्धेन वा तथात्वम्, एतल्लाभार्थमेव तदुत्तरमनुमितावनाहार्यमानसज्ञाने वेत्युक्तम् । न च विषयिताया विरोधित्वं यदि प्रतिबन्धकतावच्छेदकत्वं तदा निर्वन्हिर्वन्हिमानित्यादौ घटाद्यभावविशिष्टभूतलादेरपि दोषत्वापत्तिः तन्निश्चयनिष्ठविषयिताया अपि भूतलं घटवदित्यादिधीप्रतिबन्धकतावच्छेदकत्वात्, एवं पर्वतान्यः पर्वतो दहनान्यदहनवानित्यादौ पर्वतान्यत्वाद्यभावविशिष्टपर्वतादिरूपाश्रयासिद्धावव्याप्तिः तद्विषयितायाः कुत्रापि बुद्धौ प्रतिबन्धकतानवच्छेदकत्वात् पर्वतः पर्वतान्य इत्याकारकबुद्धेराहार्यत्वेनाऽप्रतिबध्यत्वादिति वाच्यम् । निरु-

क्तोभयाभावप्रतियोगिनी अवगाहिता यदंशे यन्निरूपिता तदंशे तदभावनिरूपितविषयिताया एव प्रकृते विरोधिविषयितापदेनोक्तत्वात्। घटाभावविशिष्टभूतलादिविषयितायाश्चाऽतथात्वेन निर्वन्हिर्वन्हिमानित्यादौ निर्घटत्वविशिष्टभूतलादावतिव्याप्त्यभावादिति प्राहुः। तच्चिन्त्यम्। साध्याभावव्याप्यविशिष्टपक्षात्मकसत्प्रतिपक्षाव्याप्तिप्रसङ्गात्, एवं काञ्चनमयपर्वतः काञ्चनमयवन्हिमानित्यादौ काञ्चनमयत्वाद्यभावविशिष्टपर्वतादिरूपाश्रयासिद्धौ लक्षणसङ्गमनेऽपि काञ्चनमयत्वाद्यभावव्याप्यविशिष्टपर्वतादिरूपाश्रयासिद्धावव्याप्तिप्रसङ्गाच्च। यत्र यो यादृशहेत्वाभासस्तत्र तद्व्याप्यमपि तादृशहेत्वाभास इत्यादिना दीधितिकृता तस्याप्यग्रे लक्ष्यतायाः स्वीकर्तव्यत्वात्। किं चैवं यद्विषयकानाहार्यनिश्चयनिष्ठविरोधिविषयितायाः स्वरूपसम्बन्धेन निरुक्तोभयाभावव्याप्यत्वं तत्त्वं हेतुदोषत्वमित्यस्यैव सम्यक्के स्वाश्रयोत्तरानुमितित्वादिसम्बन्धेन विरोधिविषयिताया व्याप्यत्वाभिधानमपि सन्दर्भविरुद्धं स्यात्। एतेन निरुक्तोभयाभावप्रतियोगिन्यवगाहिता यदंशे यन्निरूपिता तदंशे तदभावेन तदभावव्याप्येन वा निरूपितैव विषयिता प्रकृते विरोधिविषयिता वक्तव्या अतो न सत्प्रतिपक्षाद्यव्याप्तिरित्युक्तावपि न निस्तारः, पक्षनिष्ठसाध्याभावादेस्तावतापि संग्रहायोगाच्चेति दिक्।

यत्तु प्रयुक्तत्वं व्यापकत्वं, यद्विषयकनिश्चयनिष्ठविरोधिविषयिताया उभयाभावव्याप्यत्वं च स्वाश्रयनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन, तादृशसम्बन्धलाभायैव तदुत्तरमनुमितावित्युक्तम्। एवं च विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तादृशोभयाभाव इति यावत्, एवं च निर्वन्हिर्वन्हिमानित्यादौ दोषादिविषयितायां स्वरूपसम्बन्धरूपोभयाभावप्रयोजकत्वासम्भवेऽपि तादृशविषयितायां निरुक्तविरोधित्वस्य निवेशिततया तत्र लक्षणं सुसमन्वयमेव, तादृशाप्रयोजकत्वस्याऽनिवेशात्। न चैवं तत्र वस्तुमात्रेऽतिव्याप्तिर्दुर्वारैव तादृशोभयाभावस्य विरोधिविषयकसमूहालम्बनघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकताया अक्षतत्वादिति वाच्यम्। विरोधिविषयितानतिरिक्तवृत्तिर्यद्विषयिता तच्छालिनिश्चयस्य निश्चयान्तेन विवक्षितत्वात्। घटादिविषयितायास्तत्र निरु-

कविरोधिविषयितानतिरिक्तवृत्तित्वविरहात् । न चैवं विरोधिविषयितानतिरिक्तवृत्तिर्यदीयविषयिता तावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यम् । यत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यादेः साध्यता तत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यभावादिमत्त्वस्य विषयितया निरुक्तविरोधिविषयितानतिरिक्तवृत्तितया तत्रातिव्याप्तिवारकतया शेषसार्थक्यात्, तदुपादाने तादृशवन्ह्यभावादिमत्त्वविषयकनिश्चयानन्तरं पर्वतत्वादिसामानाधिकरण्येन वन्ह्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनाऽतिव्याप्त्यनवकाशादिति। तत्तुच्छम् । निर्वन्हिः पर्वतो वन्हिमानित्यादौ यत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यभावादेः पक्षतावच्छेदकता तत्र पर्वतत्वादिसामानाधिकरण्येन वन्ह्यादिमत्त्वस्य विशिष्टपक्षग्रहाविरोधित्वेनाश्रयासिद्ध्यनात्मकस्य निरुक्तविरोधिविषयितानतिरिक्तवृत्तिविषयिताकतया तत्रातिव्याप्तेः । तादृशोभयाभावप्रतियोगितावच्छेदकगर्भे यद्रूपविशिष्टं येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविशते तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकानुमितित्वावच्छिन्ननिरूपितप्रतिबन्धकतावच्छेदकत्वरूपाविरोधित्वस्य विषयितायां निवेशे शेषवैयर्थ्यम्, उक्तरीत्या निर्वन्हिर्वन्हिमानित्यादिस्थलीयदोषे अव्याप्तिश्च । यद्विषयकनिश्चयस्य विरोधिनी प्रतिबध्यतावच्छेदिका या विषयिता तत्प्रयुक्तः तद्घटितप्रतियोगिक इत्यर्थस्तु न युक्तः । पर्वतः पर्वतान्यो धूमादित्यादौ पर्वतान्यत्वाभावविशिष्टपर्वताद्यात्मकबाधप्रभृतावव्याप्तिप्रसङ्गात्, पर्वतान्यत्वाभावविशिष्टपर्वतनिश्चयस्य प्रतिबध्यतावच्छेदकाविषयित्वाप्रसिद्धेः तदुत्तरमनुमितावित्यादिदलस्य व्यर्थतापत्तेश्च, यद्विषयकनिश्चयप्रतिबध्यतावच्छेदकविषयिताघटितप्रतियोगिकः पक्षधर्मिकसाध्यावगाहित्वसाध्यव्याप्यहेतुमत्त्वावगाहित्वोभयव्यतिरेकस्तत्त्वमित्यस्यैव सम्यक्त्वात्।एतेन यद्विषयकनिश्चयनिष्ठया यद्विरोधिविषयितया प्रयुक्तस्तदुत्तरमनुमितौ निरुक्तावगाहिताद्वयव्यतिरेकस्तत्त्वमेवार्थः, प्रयुक्तत्वञ्च काष्ठादौ दाहाद्यभावो मणित्वाद्यवच्छिन्नप्रयुक्त इत्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, स च क्वचिदेव किञ्चिन्निरूपित इति नातिप्रसङ्गशङ्कापीति कस्यचित् प्रलपितमप्यपास्तम् । तादृशस्वरूपसम्बन्धे मानाभावात् ।

तत्त्वं हेतुदोषत्वम् । पक्षतावच्छेदकवैशिष्ट्यादिकश्च वैज्ञानिकं न तु वास्तवं ग्राह्यम् । व्याप्तिश्चान्वयतो व्यतिरेकतश्च

———

मणिप्रयुक्तो दाहाभाव इत्यादौ च मण्यभावजन्यदाहप्रतियोगिकत्वरूपस्यैव मणिप्रयुक्तत्वस्य दाहाद्यभावे अवगाहनात् । अस्तु वा स्वरूपसम्बन्धविशेषः प्रयुक्तत्वम्, अन्यथा इन्धन इव जलेऽपि मणिप्रयुक्तो दाहाभाव इत्यादिप्रतीत्यापत्तेः, तथापि निश्चयपदस्य विरोधिपदस्य तदुत्तरमनुमितावित्यादिभागस्य च वैयर्थ्यं दुर्वारमेव, यद्विषयकनिष्ठविषयिताप्रयुक्तः पक्षधर्मिकसाध्यावगाहित्वसाध्यव्याप्यहेतुमत्तावगाहित्वयोर्व्यतिरेकस्तत्त्वं हेत्वाभासत्वमित्यस्यैव सम्यक्त्वादित्यास्तां विस्तरः ॥

ननु यादृशदोषव्यक्तीनां निश्चयस्योत्तरक्षणे सामग्रीविरहेण कस्यापि वस्तुनोऽनुमितिर्नोत्पन्ना तादृशव्यक्तिष्वनुमितिगर्भलक्षणस्याव्याप्तिरत आह अनाहार्यमानसज्ञाने वेति । तदुत्तरमित्यनुषज्यते । तथा च यादृशविशिष्टविषयकनिश्चयोत्तरानाहार्यमानसज्ञानत्वावच्छेदेन तादृशप्रयुक्तत्वविशिष्टनिरुक्तावगाहिताद्वयव्यतिरेकस्तादृशविशिष्टो हेतुदोष इत्यर्थः । दोषमात्रस्यैव निश्चयोत्तरमन्ततस्तन्निश्चयस्यैव मानसज्ञानसम्भवात् अत्र कल्पे न कुत्राप्यव्याप्तिसम्भावनेति भावः । अत्रापि बाधनिश्चयोत्तरमुत्पन्नस्याहार्यमानसज्ञानस्य निरुक्तावगाहिताद्वयसत्त्वादसम्भवस्य वारणार्थमनाहार्यपदम् । मानसपदं त्वव्याप्तिवारणार्थमेव । अन्यथा बाधनिश्चयोत्तरमुत्पन्नदोषविशेषादिजन्यानाहार्यज्ञाने निरुक्तावगाहिताद्वयस्य सत्त्वेन क्वचिद्बाधप्रभृतावव्याप्तिप्रसङ्गात् । न च अहं गौरो ज्ञानित्वादित्यादिस्थलीयबाधे तथाऽप्यव्याप्तिः सत्यपि नाहं गौर इत्यादिबाधनिश्चये तदुत्तरं दोषवशादहं गौर इति पक्षधर्मिकसाध्यवत्त्वावगाहिमानसज्ञानोत्पादादिति वाच्यम् । मानसपदस्य दोषविशेषाद्यजन्यपरत्वादिति ध्येयम् । ननु काञ्चनमयोऽयं पर्वतः तादृशवह्निमांस्तथाविधधूमादित्यादौ पक्षतावच्छेदकविशिष्टपक्षादेरप्रसिद्धत्वादाश्रयासिद्ध्यादावव्याप्तिरत आह पक्षतावच्छेदकवैशिष्ट्यादिकं चेति । वैज्ञानिकम् विज्ञानीयविषयता-

वाच्या । तादृशावगाहित्वप्रसिद्धिराहार्य्यज्ञान एवाभ्युपेतव्याऽनन्यगतिकत्वात् । एवञ्च वस्तुमात्रनिश्चयादनन्तरं निर्वन्हित्वादिविशिष्टे वन्हेरग्रहेऽपि न क्षतिस्तस्य विरोध्यविषयकत्वात्, एवं

---

रूपमान तु वास्तवमासमवायादिसम्बन्धरूपमित्यर्थः । गुणीयसंयोगेन पर्वते वन्हिः साध्यत्वे तु तत्सम्बन्धावच्छिन्नवन्ह्यभावादिकं न हेत्वाभासः, तस्याऽप्रसिद्धत्वात्, किन्तु संयोगे गुणीयत्वाभावः स च हेतुमन्निष्ठाभावीयगुणीयसंयोगावच्छिन्नप्रतियोगितानवच्छेदकं वन्हित्वमित्येवं व्यापकताज्ञानं प्रति विरोधित्वाद्धेत्वाभासलक्षणाक्रान्त इति । अन्वयव्याप्तिमात्रस्य निवेशे व्यतिरेकव्याप्तिग्रहप्रतिबन्धके अनुपसंहारिण्यव्याप्तिरत आह व्याप्तिश्चेति । इत्थं च प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य साध्यान्वयव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वस्य साध्यव्यतिरेकव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्य च त्रित्वावच्छिन्नाभाव एव लक्षणघटक इति भावः । ननु निर्वन्हिर्वन्हिमान् धूमादित्यादौ बाधाद्यव्याप्तिः, निर्वन्हिधर्मिकवन्हिमत्त्वादिज्ञानस्यालीकतया पक्षधर्मिकसाध्यावगाहित्वाप्रसिद्धेरत आह तादृशावगाहितेति । यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्त इत्यस्य फलमाह एवं चेति । वस्तुमात्रनिश्चयेति । घटविशिष्टगृहाद्यात्मकवस्तुनिश्चयेत्यर्थः । अनन्तरमित्यत्र अनुमिताविति शेषः । निर्वन्हित्वविशिष्ट इति । निर्वन्हित्वविशिष्टधर्मिकवन्ह्यवगाहित्वविरहेऽपीत्यर्थः । न क्षतिःन घटादिविशिष्टगृहादावतिव्याप्तिः । तस्येति । तस्य निर्वन्हिधर्मिकवन्ह्यवगाहित्वस्य, विरोध्यविषयकत्वात् घटविशिष्टगृहाद्यात्मकं यद्वस्तुमात्रं तन्निश्चयत्वविरोधिविषयितान्यत्वादित्यर्थः । पटानधिकरणमित्यादौ पदमध्यस्थनञापि समुदितार्थस्य प्रतियोगितयाऽन्वयस्य व्युत्पन्नत्वात्, तथा च तत्रत्यस्य निरुक्तावगाहिताद्वयव्यतिरेकस्य घटविशिष्टगृहादिनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वमेव नास्तीति वस्त्वन्तरे नातिव्याप्तिरिति भावः । यादृशविशिष्टविषयकत्वं प्रकृतपक्षहेतुसाध्यकानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वं हेतुदोषत्वमिति प्रागुक्तलक्षणस्य त्यागे अनुशयान्तरमप्याह एवमिति । उक्तरीत्या विरोधिविषयिताप्रयुक्तत्वस्य नि-

साध्यनिश्चयोत्तरं तस्याननुमितावपि मानसज्ञानाविरोधित्वाच्च ।

---

वेशान इत्यर्थः । साध्यनिश्चयेत्यस्य पक्ष इत्यादिः । तस्य साध्यस्य । अननुमितावपीति । न क्षतिरिति पूर्वेणान्वयः । पक्षधर्मिकसाध्यावगाहित्वस्य साध्यव्याप्यहेतुमत्त्वावगाहित्वस्य वा साध्यविशिष्टपक्षनिश्चयत्वाभावव्याप्यत्वविरहेण तादृशावगाहिताद्वयव्यतिरेकस्य साध्यविशिष्टपक्षनिश्चयत्वाविरोधिविषयिताप्रतियोगिकत्वविरहादेव प्रकृतलक्षणस्य साध्यविशिष्टपक्षे नातिव्याप्तिः, प्रागुक्तलक्षणस्य तु पक्षधर्मिकसाध्यविधेयकानुमितित्वावच्छिन्नं प्रति प्रतिबन्धकत्वमादायैव तत्रातिव्याप्तिरावश्यकीति भावः । यद्यप्यनुमित्साकालीनसाध्यनिश्चयोत्तरानुमितौ निरुक्तावगाहिताद्वयस्य सत्त्वात् यादृशविशिष्टविषयकनिश्चयोत्तरानुमितित्वावच्छेदेन निरुक्तावगाहिताद्वयव्यतिरेक इत्येतावतैव साध्यविशिष्टपक्षस्य वारणं सम्भवति, तथापि यत्साध्यवत्तया यत्पक्षनिश्चयोत्तरं कदापि तत्साध्यवत्तया तत्पक्षस्य नानुमितिस्तत्साध्यविशिष्टतत्पक्षेऽतिव्याप्तिर्विरोधिविषयिताप्रयुक्तत्वदलेनैव वारयितुं शक्यत इत्याशयेनेदम् । अत एव द्वितीयकल्पे यद्विषयकनिश्चयोत्तरानाहार्यमानसज्ञानत्वावच्छेदेन निरुक्तावगाहिताद्वयव्यतिरेक इत्यतोऽपि सिद्धसाधनसामान्यवारणं सम्भवतीत्याह मानसेति । साध्यनिश्चयोत्तरमित्यनुषज्यते । तेन पक्षधर्मिकसाध्यावगाहित्वसाध्यव्याप्यहेतुमत्त्वावगाहित्वयोः साध्यनिश्चयोत्तरमानसज्ञानाविरोधित्वात्तादृशमानसज्ञानेऽपि समावेशादित्यर्थः । तथा च सिद्धसाधनोत्तरमानसत्वावच्छेदेन निरुक्तावगाहिताद्वयस्य व्यतिरेको नास्तीति न कुत्रापि साध्यविशिष्टपक्षेऽतिप्रसङ्ग इति भावः । अत्र वदन्तीत्युक्त्वाऽस्वरसः सूचितः । तद्बीजं तु सर्वत्र सर्ववस्तूनां भ्रमे मानाभावात् यत्र यस्य यद्व्याप्यवत्त्वस्य वा भ्रमो नास्ति तत्र तस्य साध्यतास्थले तदभावविशिष्टतद्वस्तुरूपबाधप्रभृतावव्याप्तिः निरुक्तावगाहिताद्वयस्याप्रसिद्ध्या तद्व्यतिरेकस्य तत्राऽलीकत्वात् । किञ्च यत्र संयोगेन पर्वतत्वादेः पक्षतावच्छेदकत्वं यत्र वा पर्वतत्वादिप्रकारेणैव ह्रदादेः पक्षत्वं तत्र पर्वतो वन्हिमान् धूमादित्यादावाश्रयासिद्ध्यादावव्याप्तिः, एवं व-

तादृशि पक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम् । ज्ञानविरोधि-

---

न्हिमत्पर्वतो निर्वन्हित्वव्याप्यवान् धूमादित्यादौ पर्वतो निर्वन्हित्वव्याप्यजलत्ववान् निर्जलत्वादित्यादौ च वन्हिविशिष्टपर्वतस्य हेत्वाभासत्वापत्तिः, निरुक्तोभयाभावस्याऽनाहार्यनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वात् तस्य निश्चयोत्तरानुमितित्वावच्छेदेन वर्तमानत्वाच्च । वस्तुतः पर्वतो वन्हिमान् धूमादित्यादौ महानसीयान्यवन्हेर्बाधभ्रमदशायामुत्पद्यमानायां पर्वतो महानसीयवन्हिमानित्यनुमितौ विरोधित्वेन पर्वतो महानसीयवन्ह्यभाववानित्याद्यवच्छिन्नबाधश्चिन्तामणिकृताग्रे वक्ष्यत इति तत्राप्युक्तलक्षणाव्याप्तिरिति द्रष्टव्यम् । केषाञ्चिल्लक्षणमाह तादृशपक्ष इत्यादि । प्रकृतपक्षे प्रकृतसाध्यवत्त्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वस्य चावगाहिनो ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानं तत्त्वं हेतुदोषत्वमित्यर्थः । ह्रदो वन्हिमान् वन्हिव्याप्यधूमवांश्चेत्यादिज्ञानस्य विरोधिविषयकत्वं ह्रदो निर्वन्हिरित्येवंविधबाधादिज्ञानस्यास्तीति तत्र लक्षणसमन्वयः । ननु विषयस्य पक्षधर्मिकसाध्यतद्व्याप्यवत्तावगाहिज्ञानविरोधित्वं तादृशज्ञानसमानविषयकज्ञानप्रतिबन्धकग्रहविषयत्वरूपमेवाग्रे वक्ष्यते तथा च तावन्मात्रस्य सम्यक्त्वे यद्विषयकं ज्ञानं तादृशविरोधिविषयकमित्यत्र विषयत्वद्वयादिप्रवेशे गौरवमतस्तथैवाह तादृशज्ञानविरोधित्वं वेति । पक्षधर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानविरोधित्वं वेत्यर्थः । प्रतिबन्धकत्वरूपस्य तादृशज्ञानविरोधित्वस्य सव्यभिचारादावसम्भवाद्व्याचष्ट तज्ज्ञानेत्यादि । तद्विषयविषयकेति । पक्षधर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानविषयकग्रहप्रतिबन्धकीभूतग्रहविषयत्वमित्यर्थः । तादृशज्ञानप्रतिबन्धकग्रहविषयत्वमात्रोक्तौ निर्वन्हि. पर्वतो वन्हिमान् धूमादित्यादौ बाधाद्यव्याप्तिः तादृशसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानस्याहार्यतया तत्प्रतिबन्धकग्रहाप्रसिद्धेः अतस्तादृशज्ञानविषयविषयकग्रहप्रतिबन्ध-

त्वञ्च तद्विषयत्विषयकग्रहविरोधिग्रहविषयत्वम् । एवंविधैव रीतिरु-
त्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित्। केचित्तु
यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति

---

कत्वं निवेशितम्, तथा च निर्वन्हिः पर्वतो वन्हिमानित्याकारकज्ञा-
नसमानविषयकस्य पर्वतो वन्हिमानिति ज्ञानस्य प्रतिबन्धको यः
पर्वतो निर्वन्हिरित्याकारकग्रहस्तद्विषयत्वमादायैव तत्र लक्षणस्य
सङ्गमः । न च वन्हिमान्वन्हिव्याप्यधूमवांश्चायं पर्वतः पटवानित्या-
कारस्य साध्यतद्व्याप्यवत्त्वावगाहिज्ञानसमानविषयकग्रहस्य प्रति-
बन्धकं पर्वतो निष्पट इत्याकारकज्ञानमादाय तद्विषयस्य निष्पटत्व-
विशिष्टपर्वतादेर्धूमादिसद्धेतुस्थले दोषत्वापत्तिरिति वाच्यम् । पक्ष-
धर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानत्वाव्यापकविषयिताशून्य-
ग्रहप्रतिबन्धकग्रहविषयत्वस्य विवक्षितत्वात् । उक्तसमूहालम्बनस्य
च तादृशज्ञानत्वाव्यापकीभूतपटाद्यवगाहितावत्त्वेनाऽतिव्याप्त्यभा-
वादिति भावः । अग्रिमग्रन्थतात्पर्यार्थमाह एवंविधैवेति । आहार्य-
व्याप्तज्ञानमुपादाय तत्समानविषयकग्रहविरोधित्वघटितैव रीतिरु-
पादेयेत्यर्थः । अन्यथा पर्वतो धूमवान् धूमव्यभिचारिवन्हेरित्यादौ
प्रकृतहेतुकव्याप्तिग्रहविरोधित्वाप्रसिद्ध्या तत्रत्यव्यभिचारादावव्या-
प्तिप्रसङ्गादिति भावः । यत्र स्थलविशेषे साध्यतद्व्याप्ययोः पक्षे स-
मूहालम्बनभ्रमो न कस्यापि जातः तत्रत्यदोषेऽव्याप्तिः एवं पर्वतः
पर्वतान्यो धूमादित्यादौ बाधादावव्याप्तिश्चेत्यादिदोषः केचिदित्यु-
क्त्या सूचितः । द्वयोर्बहूनां च निर्धारणे तरतमयोर्विधानादन्यतर-
त्वाद्युक्तेरसार्वत्रिकत्वादाह तावदन्यान्यत्वमिति । न च गगनवत्प्र-
मेयो वन्हिमान् धूमत्वादित्यादौ गगनाभावविशिष्टप्रमेयरूपाश्रया-
सिद्धिमन्तर्भाव्याऽन्यान्यत्वं दुर्वचं निर्गगनप्रमेयान्याप्रसिद्धेरिति
वाच्यम् । प्रमेयनिष्ठस्य गगनाभावस्यैव तत्राश्रयासिद्धित्वेन तम-
न्तर्भाव्यान्यान्यत्वस्य सुप्रसिद्धत्वात् । यत्तु वन्ह्यभावविशिष्टह्रदा-
द्यात्मकबाधप्रभृतीनां तद्रूपेण दोषाणामपि ह्रदत्वादिमात्रेणाऽदोष-
त्वाद्यत्र स्थले यादृशयादृशरूपेण दोषव्यवहारः प्रामाणिकस्तत्र

तावदन्यान्यत्वम्। एकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम्। स च अतिरिक्त एवान्योन्याभाव इति न वैयर्थ्यम्। पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण। व्यभिचारादेः साध्यादिभेदानियन्त्रितत्वात् शब्दाभेदमात्रस्य चाकिञ्चित्करत्वादिति प्राहुः।

स्यादेतत्, शब्दोऽनित्यः शब्दत्वात् इत्यत्रासाधारणेऽव्याप्तिः

---

तावदन्यान्यरूपवत्त्वमेव दोषत्वं वाच्यं तथा च गगनाभावविशिष्टप्रमेयस्यापि ताद्रूप्येण दोषत्वमक्षतमेवेति। तन्मन्दम्। यथाकथञ्चित्सम्बन्धेन तादृशान्यतमरूपवत्त्वस्यातिप्रसक्तत्वात्, अनुगतानतिप्रसक्तैकसम्बन्धेन तद्वत्त्वस्य च सर्वत्र दोषे वक्तुमशक्यत्वादिति ध्येयम्। ननु ह्रदाद्यात्मकपर्वतो वन्हिमान् धूमादित्यत्र आश्रयासिद्धेरेव दोषत्वात्तावदन्यान्यत्वाप्रसिद्धिरत आह एकेति। दोषविभाजकैकरूपमात्रस्थले इत्यर्थः। तेन पक्षानिष्ठह्रदान्यत्वस्य ह्रदत्वाभावव्याप्यविशिष्टपक्षस्य वाश्रयासिद्धत्वादेकव्यक्तिमात्रदोषस्थलाप्रसिद्धावपि न क्षतिः। ननु दोषपक्षकेतरभेदानुमाने बाधत्वादेरेव हेतुत्वसम्भवे बाधाद्यन्यतमत्वस्य हेतुतायां व्यर्थविशेषणत्वान्नेदं लक्षणमत आह स चेति। न वैयर्थ्यं धूमप्रागभाववद्विह्नधर्मिकत्वादिति भावः। न चैकस्मिन्हेतौ द्वौ त्रयश्चत्वार एव वा दोषा इति तावदन्यान्यत्वमेव लक्षणं वाच्यम्, तथा च तदवान्तरधर्मेण पञ्चधा अग्रे विभागानुपपत्तिः सामान्यतोऽवगतस्यैव विशेषरूपेण विभागस्य सम्प्रतिपन्नत्वादत आह पञ्चविधेति। तथा च यत्र ह्रदो वन्हिमान् घटत्वादित्यादिस्थले व्यभिचारविरोधासिद्धिसत्प्रतिपक्षबाधाः पञ्चैव दोषाः सन्ति तत्र तावदन्यान्यत्वस्यैव दोषलक्षणत्वात्तदवान्तररूपैः पञ्चभिरग्रे विभागस्य न व्याघात इति भावः। ननु विशिष्य दोषानुपादाय तावदन्यान्यत्वस्य लक्षणत्वे सर्वत्र हेतावननुगतलक्षणाभाव इत्यत आह व्यभिचारादेरिति। तथा च लक्ष्यस्य अननुगतत्वादत्र लक्षणाननुगमेऽपि न क्षतिरिति भावः।

दोषमात्रस्यैव स्वमते नित्यत्वादृशाविशेष इत्यादिग्रन्थस्य सङ्गतौ लक्षणार्थयोजकत्वासम्भवादलक्ष्यताप्रदर्शनाभिप्रायेण तमुत्थापयति

दशाविशेषे हेत्वोरेवाऽसाधारणसत्प्रतिपक्षयो-राभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् ।

---

सर्वसाध्यवद्व्यावृत्तेस्तत्राभावात्, एवं शब्दोऽनित्यः कृतकत्वात् इत्यस्य सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्व-त्ताविरहादित्याशङ्कां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष इति । हेत्वोः सद्धेत्वोः । असाधारणः पक्षमात्रवृत्तिः । सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा । तयोर्दशाविशेषे हेतौ सर्वसाध्य-वद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायामा-भासत्वात् अनुमित्यजनकत्वात् तद्बुद्धेर्हेत्वादौ साध्यवद्व्यावृत्तत्वादि-बुद्धेः प्रतिबन्धकत्वं परमायाति न तु तद्विषयस्य दोषत्वम् अस-त्त्वात् । अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वं स्यात् ।

---

स्यादेतदित्यादिना । अव्याप्तिरिति । दुष्टलक्षणस्येत्यादिः । साधन-निष्ठस्य सर्वसाध्यवद्व्यावृत्तत्वस्य दोषतया तदप्रसिद्ध्यैव तद्वत्त्वरू-पस्य दुष्टहेतुलक्षणस्याव्याप्तिरित्यत आह सर्वेत्यादि । तत्र शब्दत्वे । अद्रव्यद्रव्यत्वादावपीति । असमवेतद्रव्यत्वादावपीत्यर्थः । शब्दवृत्ति-त्वविशिष्ट इत्यादिः । पक्षवृत्तित्वविशिष्टस्यैव साध्याभावव्याप्यस्य सत्प्रतिपक्षतया केवलस्य तस्यादोषत्वादत आह पक्षस्येति । तद्व-त्त्वविरहादिति । नित्यत्वव्याप्यासमवेतद्रव्यत्ववत्त्वविरहादित्यर्थः । अलक्ष्यत्वं स्फुटीकर्तुमाह सद्धेत्वोरिति । ननु तयोरदुष्टत्वे कथम-साधारणादिपदेनोल्लेख इत्यतो व्याचष्टे असाधारण इत्यादि । स तथा सत्प्रतिपक्षपदबोध्यः । दुष्टत्वरूपस्याभासत्वस्यानङ्गीकाराद-न्यथा व्याचष्टे अनुमित्यजनकत्वादिति । हेत्वोरेवेत्येवकारः प्रतिब-न्धकत्वमित्यनन्तरं योज्य इत्याशयेन तादृशैवकारार्थं व्याकरोति परमायातीत्यादिना । असत्त्वात् अप्रसिद्धत्वात् । अन्यथेति । प्रतिब-

कोहि साध्याभावतद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः । निर्युक्तिकस्तु प्रवादो न श्रद्धेयः । यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः । तच्च द्विविधम् । विषयरूपं साधारण्यादि । बाधे च प्रमितसाध्याभाववत्वान् पक्षः । तद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात् । अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकम् । तद्वत्त्वञ्च ज्ञानस्यैव

———

न्धकज्ञानाविषयीभूतस्य विशिष्टस्यासत्त्वस्थले दोषाभ्युपगम इत्यर्थः । तस्यापि बाधभ्रमविषयस्यापि । असाधारण्यादिभ्रमदशायां सद्धेत्वोरपि प्राच्यैर्लक्ष्यत्वस्वीकारादुक्तव्याख्यानमसङ्गतमित्यत आह निर्युक्तिकस्त्विति । सत्प्रतिपक्षासाधारण्यानुपसंहारित्वानामनित्यदोषत्वमङ्गीकुर्वतां मतमुत्थापयति यत्त्विति । द्वितीयलक्षणमनुसृत्याह तद्वत्त्वमिति । यद्विषयत्वेनेत्यत्र विषयशब्दस्य स्वरूपपरत्वाद्यद्रूपेण ज्ञानस्यानुमितिप्रतिबन्धकत्वमित्यर्थलाभादिति भावः । यथार्थपदघटितप्रथमलक्षणमनुसृत्याह तत्प्रकारकेति । अनुमितिप्रतिबन्धकतावच्छेदकप्रकारकेत्यर्थः । मूलस्थप्रतियोगिपदस्य प्रतियोगितावच्छेदकपरत्वादिति भावः ।(तथा चानुमितिकारणीभूताभावप्रतियोगितावच्छेदकप्रकारकप्रमाविषयत्वं प्रथमलक्षणार्थ इति भावः । वस्तुतः प्रकारकत्वविवक्षणेऽपि यथाश्रुतमूलासङ्गतिः ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमते तेषां ताद्रूप्येणैव साध्याभावज्ञानस्यानुमितिप्रतिबन्धकत्वोपगमादितिभावः ।) यद्यपि प्रथमलक्षणं व्याख्याय द्वितीयं व्याख्यातुमुचितं तथापि ग्रन्थलाघवार्थं व्यतिक्रमेण व्याख्यातमित्यवधातव्यम् । तच्चेति । प्रतिबन्धकतावच्छेदकं चेत्यर्थः । विषयरूपमिति । प्रतिबन्धकज्ञानस्येत्यादिः । ननु साध्याभावप्रमैव बाध इति तत्र विषयतया प्रतिबन्धकतावच्छेदकत्वं दुर्घटमित्यत आह बाधे चेति । प्रमितेति प्राचां मतेन । तेषां ताद्रूप्येणैव साध्याभावज्ञानस्यानुमितिविरोधित्वोपगमात् । अविषयरूपं चेति । अनुमितिप्रतिबन्धकज्ञानाविषयरूपं चेत्यर्थः । विरोधिसामग्रीकालीनत्वेति । साध्याभावानुमितिसामग्रीविशिष्टत्वादीत्यर्थः । वैशिष्ट्यं च सामानाधिक-

तद्विषयस्य हेतोरपीति । तन्न । तद्वत्त्वं हि हेतोर्नाऽभेदेन, बाधे तदभावात् । अत एव नाश्रयतया, वन्हिव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च । साध्याभाववत्पक्षस्येव साध्याभाववदृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात् । साधारण्यादिविषयकत्वस्य ज्ञा-

-----

रण्यसम्बन्धेन ग्राह्यम् । तेन पुरुषान्तरीयसाध्याभावानुमितिसामग्रीकालीनस्य धूमपरामर्शस्य स्वहेतुकानुमित्यप्रतिबन्धकत्वेऽपि न क्षतिः । आदिपदेनासाधारण्यादिग्रहकालीनत्वोपग्रहः । ननु परामर्शस्य विरोधिसामग्रीकालीनत्वेपि तद्विषयस्य धूमादिहेतोस्तथात्वाभावादव्याप्तिरत आह तद्वत्त्वं चेति । बाध इति । प्रायश इत्यादिः । तथा च धूमो वन्हिमान् धूमादित्यादौ साध्याभावविशिष्टपक्षाभेदस्य हेतौ सत्त्वेपि ह्रदो वन्हिमान् धूमादित्यादौ धूमादिहेतौ साध्याभाववत्पक्षाभेदविरहादव्याप्तिरित्यर्थः । साध्याभाववदृत्तित्वविशिष्टहेतोरेव व्यभिचारतया तदभेदस्य व्यभिचारिमात्रे सम्भवादबाधपर्यन्तानुसरणम् । अत एव बाधितहेतावव्याप्तेरेव नाश्रयतयेति। तद्वत्त्वमिति पूर्वेणान्वयः । ननु साध्याभाववत्पक्षस्येव पक्षनिष्ठसाध्याभावस्यापि ग्राह्यत्वात्तदाश्रयत्वमादायैव ह्रदो वन्हिमान्धूमादित्यादिबाधिते नाव्याप्तिरत आह वन्हिव्यभिचारीति । धूम इति । पर्वतादौ वन्हेस्साध्यतास्थले इत्यादिः । तेन ह्रदपक्षकवन्हिसाध्यकधूमस्य दुष्टतया नेष्टापत्तिसम्भवः । ननु वन्ह्यभाववदृत्तित्वमात्रस्यानुमितिप्रतिबन्धकतावच्छेदकत्वात्तद्वत्त्वस्य च धूमे विरहात्कुतोऽतिव्याप्तिरत आह साध्याभाववदिति । तथा च वन्हिव्यभिचारिद्रव्यत्वमपि विषयतयाऽनुमितिप्रतिबन्धकतावच्छेदकमिति तद्वत्त्वमादायातिप्रसङ्गो युक्त इति भावः । ननु तत्पक्षकतत्साध्यकतद्धेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वं वक्तव्यं तथा च वन्हिव्यभिचारिद्रव्यत्वस्य धूमहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वाभावान्नातिव्याप्तिरत आह साधारण्यादीति । ज्ञानधर्मिकसत्ताभाववदृत्तित्वप्रकारकनिश्चयत्वस्य ज्ञानहेतुकसत्तासाध्यकानुमितिप्रतिबन्धकता-

ननिष्टस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्तादिसाध्यके ज्ञानेऽति-प्रसङ्गाच्च । यथाकथञ्चित्तद्वत्त्वस्य चातिप्रसञ्जकत्वात् । विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमवहितो वह्निरिव दाहस्य । अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः तदेवात्र प्रतिबन्धकताव-

---

वच्छेदकत्वात्तदाश्रयत्वमादाय सत्तासाध्यकज्ञानादिहेतावतिव्याप्ति-रित्यर्थः । ननु वैशिष्ट्यावच्छिन्नविषयित्वान्यतरसम्बन्धेन योऽनुमितिप्रतिबन्धकतावच्छेदको धर्मस्तद्वत्त्वमित्यर्थः, विरोधिसामग्रीविशिष्टस्वपरामर्शत्वेन बाधादिविषयकत्वेन चानुमितिप्रतिबन्धकत्वात् तथा च साधारण्यादिविषयकनिश्चयत्वस्य तादृशान्यतरसम्बन्धेन प्रतिबन्धकतानवच्छेदकत्वात्तद्वत्तामादाय नातिव्याप्तिः स्वरूपसम्बन्धेनैव तस्य तथात्वादत आह यथाकथञ्चित्तद्वत्त्वस्येति । प्रतिबन्धकतावच्छेदकत्वादिनिर्विशिष्टतामात्रेण यत्प्रतिबन्धकतावच्छेदकं तद्वत्त्वस्येत्यर्थः । अतिप्रसञ्जकत्वादिति । पर्वतो न वन्हिमानित्याकारकज्ञानत्वेन प्रतिबन्धकतायां वन्ह्यभावस्यापि प्रविष्टत्वात्तदाश्रयत्वमादाय पर्वतो वन्हिमान्धूमादित्यत्र सद्धेतावतिव्याप्तत्वादिति भावः । ननु वैशिष्ट्यविषयितान्यतरसम्बन्धेन प्रतिबन्धकतावच्छेदकत्वं यत्र पर्याप्तं तादृशधर्मवत्त्वं वाच्यं तथा च विषयितयाऽनुमितिप्रतिबन्धकतावच्छेदकत्वस्य साध्याभावमात्रे अपर्याप्तत्वात्तद्वत्त्वमादाय नातिव्याप्तिरत आह विरोधिसामग्रीति । तथा च विरोधिसामग्रीविशिष्टवन्हिपरामर्शत्वेन वन्ह्यनुमितिप्रतिबन्धकत्वाभावेन, विरोधिसामग्र्याः प्रतिबन्धकतानवच्छेदकत्वात्सत्प्रतिपक्षितसद्धेतावव्याप्ति-रिति भावः । उक्ताव्याप्तिं निराकर्तुं प्रतिबन्धकतावच्छेदकपदस्य प्रतिबन्धकपरत्वमाशङ्कते अथेति । ज्ञाने हेतुज्ञाने । तदेवेति । तथा च स्वलिङ्गकप्रकृतपक्षकप्रकृतसाध्यकानुमितिप्रतिबन्धकीभूतधर्मवत्त्वमेव दुष्टहेतुत्वं ज्ञायमानस्य व्यभिचारादेरनुमितिप्रतिबन्धकत्वापगमाच्च न व्यभिचारिबाधितहेतावव्याप्तिरित्याशयः । सत्प्रतिपक्षिते लक्षणं सङ्गमयति भवति चेति । प्रतिबन्धकीभूतेति । स्वलि-

च्छेदकमुक्तं, भवति च प्रतिबन्धकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे तथा इति चेत्, न वै कालादिसाधारणकारणघटिता सामग्री कापि प्रतिबन्धिका विशेषतस्तत्र तत्सत्त्वे कार्य्योत्पादस्य दुर्वारत्वात्, किन्तु विरोधिपरामर्शस्तथा, यदि च तत्सत्त्वेऽपि तत्साध्ये बाधावताराान्नानुमितिप्रतिबन्धः प्रामाणिकस्त-

---

ङ्कप्रकृतसाध्यानुमितिप्रतिबन्धकीभूतेत्यर्थः । कालीनत्वविशिष्टेत्यत्र कालीनत्वं कालघटितसम्बन्धेन वैशिष्ट्यलाभार्थम् । तथा साध्यानुमितिप्रतिबन्धः । विरोधिसामग्र्याः प्रतिबन्धकत्वे सत्येव तद्वत्तामादाय सत्प्रतिपक्षितस्य सङ्ग्रहः स्यात्तदेव त्वसिद्धमित्याह नवै इति । कापीति । अनुमित्यादिकं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वस्यापि प्रत्यक्षोपधायकतत्तत्सन्निकर्षादिव्यक्तिष्वेव व्यवस्थापितत्वादिति भावः । अनुमित्यादौ कथञ्चित्प्रत्यक्षादिसामग्रीत्वेन प्रतिबन्धकत्वस्वीकारेऽपि सत्प्रतिपक्षस्थले साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धकत्वं दुर्घटमित्याह विशेषतस्तत्रेति । न सामग्री प्रतिबन्धिकेत्यनुषज्यते । सामग्रीत्वेन प्रतिबन्धकत्वाभावे हेतुमाह तत्सत्त्व इति । साध्याभावानुमितिसामग्रीसत्त्वे साध्याभावानुमितिरूपकार्योत्पादापत्तेरित्यर्थः । तथा च सत्प्रतिपक्ष एव व्याहन्येतेति भावः । ननु विरोधिसामग्र्याः प्रतिबन्धकत्वानभ्युपगमे सत्प्रतिपक्षस्थले साध्यानुमितेः कथं नोत्पाद इत्यत आह किन्त्विति । तथा साध्यानुमितिप्रतिबन्धकः । ननु सत्यपि विरोधिपरामर्शे पक्षस्य साध्याभावशून्यत्वनिश्चयदशायां साध्यानुमित्युत्पत्त्या तस्य प्रतिबन्धकत्वं दुर्घटमत आह यदि चेति । तत्साध्य इति । विरोधिपरामर्शीयसाध्य इत्यर्थः । नानुमितीति । न प्रकृतसाध्यानुमितिप्रतिबन्ध इत्यर्थः । विरोधिसाध्यस्य बाधावतारेण विरोधिपरामर्शस्याऽप्रामाण्यप्रसञ्जने तत एव न तस्य साध्यानुमितिप्रतिबन्धकत्वम् अन्यथा तु प्रतिबन्धकत्वमिष्टमेव नव्यैरित्याशयेन यदि चेत्युक्तम् । तदभावस्यापि तादृशबाधनिश्चयाभावस्यापि । तत्र विरोधिपरामर्शस्य विरोधितायाम् । निवेश्यतामिति । अवच्छे-

दा अप्रामाण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यन्तत्र निवेश्यताम्, यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तथा तथाविधबाधादिग्रहेऽपीत्यतिप्रसङ्गः । न चातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि । यदपि यद्विषयत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्वत्त्वमेव वाच्यं सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा, तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयत्वादिति । तदपि तुच्छम् । साध्याभाववत्पक्षविषयत्वेन तादृशपक्षज्ञानप्रमात्वविषयत्वेन वा ज्ञा-

---

दकत्वेनेत्यादिः । नन्वेवं विरोधिसामग्र्या अप्रतिबन्धकत्वेऽपि स्वलिङ्गकानुमितिप्रतिबन्धकीभूतविरोधिपरामर्शवत्तामादायैव सत्प्रतिपक्षिते लक्षणं यास्यतीत्यत आह यथा चेति । तथाविधेति । भ्रमप्रमासाधारणेत्यर्थः । अतिप्रसङ्ग इति । पर्वतो वन्हिमान् धूमादित्यत्र वन्ह्यभावभ्रममादाय धूमादावतिप्रसङ्ग इत्यर्थः । दूषणान्तरमाह न चाऽतीतादाविति । कालीनत्वमपीति । तथा च भिन्नकालीनयोर्वैशिष्ट्यविरहादतीतसत्प्रतिपक्षितसद्धेतावनुमितिप्रतिबन्धकीभूतविरोधिपरामर्शवत्त्वं केनापि सम्बन्धेन नास्तीति तत्राव्याप्तिरिति भावः । स्वसमानकालीनज्ञानविषयत्वादिसम्बन्धेनातीतलिङ्गस्यापि कथञ्चिद्विरोधिपरामर्शवत्त्वोपगमेऽपि परामृश्योत्तीर्णतादशायामपि सद्धेतोः कालिकादिसम्बन्धेन स्वलिङ्गकानुमितिप्रतिबन्धकीभूतविरोधिपरामर्शवत्त्व.त्तत्रातिव्याप्तिरित्याशयः । सर्वत्र विषयरूपमेव प्रतिबन्धकतावच्छेदकं लक्षणे निवेश्यमितिमतं दूषयति यदपीत्यादिना । व्याप्त्यादीत्यादिना साध्याभावव्याप्तिविशिष्टपक्षधर्मत्वादेः परिग्रहः । तथा प्रतिबन्धकतावच्छेदकम् । ननु सत्प्रतिपक्षितसद्धेतौ साध्याभावव्याप्तिविरहात्तत्राव्याप्तिरत आह तद्वत्त्वमपीति । तज्ज्ञानेति । विरोधिव्याप्त्यादिज्ञानेत्यर्थः । साध्याभाववदिति । पक्षधर्मिकसाध्याभाववत्तानिश्चयत्वेनेत्यर्थः । प्रमात्वविषयकत्वेनेति प्राचां मतेन । तस्य चेति । पक्षध-

मस्य प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः। विशिष्टविषयत्वेन प्रतिबन्धकत्वं विशिष्टञ्च तत्राप्रसिद्धमिति चेत्, तर्हि किं सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्षः प्रसिद्धः, यथाकथञ्चित् सम्बन्धेन तद्वत्त्वञ्चातिप्रसक्तं धूमादेरपि ज्ञानरूपेण तदाश्रयाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिमत्त्वात्, यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वञ्च न

---

मिकसाध्याभाववत्ताज्ञानस्य चेत्यर्थः। तथा च पर्वतो द्रव्यं धूमादित्यत्र पर्वतो न द्रव्यमित्येवं बाधज्ञानसम्बन्धेन द्रव्यत्वाद्यभावस्य धूमे सत्त्वादतिव्याप्तिरित्यर्थः। ननु यादृशविशिष्टविषयकत्वेनानुमितिप्रतिबन्धकत्वं तद्वत्त्वं वाच्यं तथा च द्रव्यत्वाभावविशिष्टपर्वताप्रसिद्ध्यैव नोक्तस्थलेऽतिव्याप्तिरित्याशङ्कते विशिष्टेति। तत्र साध्यवत्पक्षस्थले। पर्वतो वन्हिमान्धूमादित्यादौ सत्प्रतिपक्षितसद्धेतावव्याप्तिप्रसङ्गाद्विशिष्टविषयकत्वेन प्रतिबन्धकत्वं निवेशयितुमशक्यमित्याह तर्हिकिमिति। जले वन्हिमद्धूमादित्यादौ सत्प्रतिपक्षिते साध्याभावव्याप्यवत्पक्षस्य प्रसिद्धत्वात्सर्वत्रेत्युक्तम्। ननु पर्वतो द्रव्यं धूमादित्यादौ बाधभ्रमस्य सम्बन्धत्वे मानाभावान्नातिव्याप्तिः, विशेषदर्शिनामपि विरोधिपरामर्शदशायां धूमादौ सत्प्रतिपक्षितोऽयमिति व्यवहारात्तत्रैव विरोधिव्याप्त्यादेः ज्ञानस्य सम्बन्धत्वकल्पनादत्र तु बाधितो हेतुरित्यादिव्यवहारविरहादत आह यथाकथञ्चिदिति। ज्ञानरूपेणेति। धूमो वन्हिव्यभिचारीति ज्ञानरूपेणेत्यर्थः। बाधभ्रमस्येव व्यभिचारभ्रमस्याप्युक्तक्रमेण सम्बन्धत्वे मानाभावादाह तदाश्रयेति। व्यभिचाराश्रयीभूतं यद्द्रव्यत्वादिकं तदाश्रयत्वेत्यर्थः। आदिना कालिकादेः परिग्रहः। ननु यादृशसम्बन्धेन यत्प्रकारकज्ञानत्वेनानुमितिप्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वस्योक्तत्वान्न धूमेऽतिप्रसक्तिरत आह यादृशेति। न सर्वत्रेति। तथा च पर्वतो द्रव्यं धूमादित्यादौ सत्प्रतिपक्षितसद्धेतावव्याप्तिः प्रतिबन्धकज्ञानविषयेण समवायादिसम्बन्धेन द्रव्यत्वाभावव्याप्यगुणत्वादिमत्त्वस्य धूमे विरहादिति भावः। पर्वतो वन्हिमान्धूमादित्यत्र प्रति-

यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वम्, तथापि ज्ञायमानस्याभासस्यात्र

---

सर्वत्र सत्प्रतिपक्षिते हेतौ, अस्ति च क्वचित् सद्धेताविति कृतं पल्लवितेन ।

यद्यपीति । स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् । न चैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात्, तत्रानुकूलतर्काभा-

---

बन्धकधीविषयेण समवायसम्बन्धेन वन्ह्यभावव्याप्यधूमत्वादेः साधने सत्वात् सर्वत्रेत्युक्तम् । ननु यादृशसम्बन्धावगाहियत्प्रकारकज्ञानत्वेन प्रतिबन्धकत्वं तादृशज्ञानतादृशसम्बन्धान्यतरसंसर्गेण तद्वत्त्वं वाच्यमतो नोक्तस्थलेऽव्याप्तिः ज्ञानसम्बन्धेनैव हेतोः साध्याभावव्याप्यगुणत्वादिमत्त्वादत आह अस्ति चेति । तेन तद्वत्त्वं चेत्यनुषज्यते । तथा च पर्वतो वन्हिमान्धूमादित्यत्र बाधबुद्धेः स्वरूपादिसम्बन्धावगाहितयैव प्रतिबन्धकत्वात्तादृशसम्बन्धेन वन्ह्यभावस्य धूमे सत्त्वादतिव्याप्तिरित्यर्थः । पर्वतो द्रव्यं धूमादित्यत्र द्रव्यत्वाद्यभावस्य स्वरूपसम्बन्धेन धूमादावभावात्क्वचिदित्युक्तम् ।

मूले यद्यपीत्यादिकं तल्लिङ्गकतत्साध्यकतत्पक्षकानुमितित्वावच्छिन्नं प्रत्येव तादृशव्यभिचारज्ञानत्वादिना स्वतः प्रतिबन्धकत्वमाहत्य तद्घटितलक्षणाभिप्रायेणोक्तम्, अन्यथा व्यभिचारादिज्ञानस्यापि व्याप्त्यादिप्रत्यक्षविरोधित्वाद्बाधसत्प्रतिपक्षमात्रमधिकृत्य शङ्कानुपपत्तेः । अनुमितितत्कारणपरामर्शान्यतरमात्रं प्रति ज्ञायमानं यत्प्रतिबन्धकं स एव लिङ्गाभास इत्याशयेन शङ्केयमिति ध्येयम् । बाधसत्प्रतिपक्षयोः प्रत्यक्षादिप्रतिबन्धकत्वे हेतुमाह स्थाणुत्वाभावस्येत्यादिना । एवं शाब्दबोधेपि बाधसत्प्रतिपक्षयोर्विरोधित्वे । आगमेति । मलमूत्रपूरीषास्थिनिर्गतं ह्यशुचि स्मृतमित्यागमस्येत्यर्थः । तत्र प्राण्यङ्गत्वादिहेतौ । अनुकूलतर्कस्य व्याप्तिग्रहे स्वतोऽनु-

लक्षणम् । यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते ॥

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च ॥

---

वेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानुमितेश्चानुत्पत्तेरिति भावः । यद्वेत्याद्यभ्युच्चयमात्रम्, प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात् । योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेत्, एवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ॥

---

प्रयोगादाह बलवत्तरेति । शौचानुमाने साध्याप्रसिद्ध्यादेरागममात्राधीनतया उपजीव्यजातीयत्वेन मलमूत्रेत्याद्यागमस्य बलवत्तरत्वं बोध्यम् । अनुपपत्तेरिति । तथा च प्रतिबन्धकसत्त्वान्नागमविरोध इति भावः । अभ्युच्चये हेतुमाह प्रत्यक्षं प्रतीति । लौकिकप्रत्यक्षं प्रतीत्यर्थः । बाधादीत्यादिपदेन ग्राह्याभावव्याप्यवत्त्वोपग्रहः । शङ्कते योग्यताज्ञानेति । तदभावो बाधनिश्चयाद्यभावः । तत्र शाब्दबोधे । शाब्दं प्रति बाधनिश्चयस्याप्रतिबन्धकत्वे योग्यताज्ञानोत्तरं लौकिकात्मकबाधनिश्चये सत्यपि शाब्दधीः स्यादिति दोषं स्फुटतयोपेक्ष्याह एवमपीति । उपनीतभानविशेषमिति । दोषविशेषजन्योपनीतभानं प्रतीत्यर्थः । तत्त्वेन बाधनिश्चयाभावत्वेन । यद्यपि बाधनिश्चयदशायामुपमितेः स्मृतेश्चानुत्पादादुपमितिस्मृती प्रत्यपि तदभावस्य हेतुत्वं वक्तुमुचितं तथाऽप्युपमितेरतिरिक्तप्रमात्वे विप्रतिपत्तेर्बाधदशायां विशिष्टस्मरणानुत्पादस्य चोद्बोधकविरहेणापि सम्भवात्तत्र बाधाद्यभावस्य हेतुत्वे मानाभाव इत्याशयः ॥

इति जागदीश्यां सामान्यनिरुक्तिः समाप्ता ॥

## चिन्तामणेः व्यभिचारः ।

सव्यभिचारोऽपि त्रिविधः, साधारणासाधारणानुपसंहारिभेदात् । तत्र सव्यभिचारः साध्यतदभावप्रसञ्जक

---

## दीधित्याः सव्यभिचारः ।

यद्यपि लक्षणतः सामान्यमप्रतीतवतो विशेषजिज्ञासानुदयात् सामान्यलक्षणानन्तरमेव विशेषविभागो युक्तः, तथापि सव्यभिचारपदस्य साधारणमात्रे प्रसिद्धतया तन्मात्रस्य लक्ष्यभावं बुध्यमानैरन्तेवासिभिरसाधारणादिसाधारणस्य लक्षणस्यातिव्याप्तिस्तद्व्यावृत्तस्यैव च साधुता प्रतीयेत अतस्तद्वारणाय लक्ष्यान्तरमपि दर्शयति सव्यभिचार इति । कश्चित्तु सामान्यज्ञानाधीनो विभागो न तल्लक्षणप्रत्ययमपेक्षतेऽतः प्रथमं विभागकरणेऽपि

---

## जागदीश्याः सव्यभिचारः ।

लक्षणतः लक्षणवाक्यतः । विशेषेति । तद्वान्तरधर्मप्रकारेण तद्गोचरज्ञानेच्छायां सामान्यतः तद्गोचरज्ञानस्य हेतुत्वादिति भावः । लक्षणस्येति । वक्ष्यमाणस्येत्यादिः । अतिव्याप्तिरिति । प्रतीयत इत्यन्वयः । तद्व्यावृत्तस्य । असाधारणादिव्यावृत्तस्य । लक्ष्यान्तरमपीति । तथा च नायं विभागपरो ग्रन्थः किं तु लक्ष्यप्रदर्शक इति भावः । तल्लक्षणप्रत्ययमिति । तस्य सामान्यस्य लक्षणातः प्रत्ययमित्यर्थः । प्रकारान्तरेण सामान्यज्ञानस्य प्राक्सत्वे पश्चात्सामान्यल-

इति न त्रितयसाधारणं लक्षणम्, एकस्योभयं प्रत्यसाधकत्वात् अनापादकत्वाच्च । नाप्युभयपक्षवृत्तित्वम्, उभयव्यावृत्तत्वं वा तत्त्वम्, अननुगमात्।अथ साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतः सः । विप्रतिपत्तिस्तु प्रत्येकं न तथा न वा

---

न दोष इत्याह । प्रसक्तिरनुमितिरापत्तिर्वा, तदुपधानमव्यापकमतिव्यापकञ्च तथाविधव्याप्तिभ्रमेण सद्धेतावतस्तद्योग्यता वाच्या, सा च तादृशव्याप्त्यादिरूपा, न च विरुद्धोभयव्याप्यत्वमेकस्य सम्भवतीत्याह एकस्येति । साध्येति । कोटिद्वयोपस्थापकं सत् साध्यसन्देहजनकं साध्यसन्देहजनककोटिद्वयोपस्थितिजनकमिति याव-

---

क्षणोद्भावनं न स्यात् आकाङ्क्षाविरहादित्याद्यस्वरसः कश्चिदित्युक्त्या सूचितः । हेतुद्वयसङ्गत्यर्थं वितर्कयति अनुमितिरापत्तिर्वेति । नन्वेकस्यापि हेतोर्व्याप्त्यादिभ्रमेण साध्यतदभावोभयसाधकत्वादेकस्येत्यादिमूलमसङ्गतमत आह तदुपधानमिति । साध्यतदभावोपधानमित्यर्थः । अव्यापकमिति । तथा च येन व्यभिचारिहेतुना साध्यतदभावयोरनुमित्यादिर्नोत्पादितः तत्राव्याप्तिरिति भावः । पक्षतावच्छेदकसामानाधिकरण्येनेतरभेदस्य सिद्धेरुद्देश्यतायामव्याप्तेरदूषणत्वादाह अतिव्यापकं चेति । तथाविधेति । तदभावीयव्याप्तिभ्रमेणेत्यर्थः । तद्योग्यतेति । साध्यतदभावानुमित्यादिस्वरूपयोग्यतेत्यर्थ ।संशयं प्रत्येव साधारणादिधर्मवद्धर्मिज्ञानत्वेन हेतुत्वे कोटिद्वयोपस्थापकपदवैयर्थ्यापत्तिरतः संशयहेतुकोटिद्वयोपस्थितिं प्रत्येव तादूप्येण हेतुत्वं संशयसामान्यं प्रति तु तद्धर्मिज्ञानं कारणमिति मतानुसारेण व्याचष्टे कोटीत्यादि । तथा च भ्रमिजनकं सद्धटकारणमित्यत्र भ्रमिद्वारा घटजनकत्वस्येव प्रकृतेपि कोटिद्वयोपस्थिति-

त् । आश्रयतया विषयितया वा नित्यत्वानित्यत्वोपस्थापकस्य नित्यत्वे साध्ये ज्ञानस्याऽनुवृत्तत्वव्यावृत्तत्वाभ्यां वन्हितदभावोपस्थापकस्य वन्हौ साध्ये धूमस्य वारणाय जनकान्तम् । तथोपस्थितेः साध्यसन्देहाजनकत्वात् । धर्मितावच्छेदकपुरोवर्त्तित्वादिविशिष्टधर्मिज्ञानस्य संशयजनकतया तद्वारणाय कोटिद्वयोपस्थापकेति । न च तदसाधारणतया संग्राह्यमेवेति वाच्यम्, तथात्वेऽपि

---

द्वारा संशयजनकत्वस्य लाभो व्युत्पत्तिवैचित्र्यादिति भावः । साध्यसन्देहजनकत्वस्योपस्थितिक्रियायामभेदान्वयादेव सामञ्जस्ये समासनिविष्टपदानामप्युक्तदिशा व्युत्पत्त्यन्तरस्वीकारेण द्वारत्वलाभो न युक्तः क्रियाविशेषणेनापि नितान्तक्षाम इत्यादौ स्तोकनम्रा स्तनाभ्यामित्यादौ च द्वितीयातत्पुरुषस्येष्टत्वादित्याह साध्यसन्देह इत्यादि । आश्रयतयेति । तृतीयार्थः प्रकारता, तच्चोपस्थापकपदार्थस्योपस्थापकज्ञानविषयस्यैकदेशे ज्ञानेऽन्वितम् । तेन नित्यत्वानित्यत्वाश्रयज्ञानवानयमित्याकारबुद्धेः तादृशज्ञानविशिष्टवैशिष्ट्यबुद्धिरूपायाः साध्यतदभावोपस्थितौ हेतुत्वेन तद्विषये ज्ञानहेतावतिव्याप्तिवारणायेत्यर्थः । एवमग्रेऽपि द्रष्टव्यम् । एकस्या ज्ञानव्यक्तेर्नित्यत्वानित्यत्वोभयाश्रयत्वाभावादाह विषयितया वेति । अनित्यत्वे साध्ये ज्ञानस्य व्यभिचारित्वं नव्यैरिष्यत एवेत्यतो नित्यत्वे साध्य इत्युक्तम् । समवायेन हेतावतिव्याप्तिमुक्त्वा संयोगेन सद्धेतौ तामाह अनुवृत्तेत्यादि । अनुवृत्तत्वं तदधिकरणवृत्तित्वं व्यावृत्तत्वं च तदभाववदवृत्तित्वं तथा च वन्हिमद्वृत्तितदभाववदवृत्तिधूमवानयमित्यनुभवस्य वन्हितदभावोपस्थापकतया तद्विषयस्य धूमहेतोर्वारणार्थं जनकान्तमित्यर्थः । तथोपस्थितेरिति । उक्तक्रमेण कोट्युपस्थितेरित्यर्थः । साधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेनैव संशयहेतुत्वादिति भावः । धर्मितेति । पुरोवर्तीदं द्रव्यं न वेत्यादिसंशयजनकस्येदम्पुरोवर्त्तीत्यादिपक्षधर्मताज्ञानस्य विषयतामादाय द्रव्यत्वसाध्यके पुरोवर्तित्वादिहेतावतिव्याप्तिवारणायेत्यर्थः । एतत् धर्मितावच्छेदकम् । असाधारणतयेति । निश्चितसाध्यतद्भाव-

तदुत्तीर्णतादशायां विशेषदर्शनात् संशयानुपधायकत्वेऽपि तज्जन-
नयोग्यताया अनिवृत्तेः । अन्यथा यथायथं पक्षे साध्यतदभावनि-
श्चयदशायां साधारणाव्याप्तिप्रसङ्गात् । प्रतिपक्षसम्बलनदशायां
हेतुमत्ताज्ञानस्य साध्यसन्देहजनकत्वपक्षे हेतुवारणाय कोटीत्यादि ।
हेतुना साध्यस्य प्रतिहेतुना तदभावस्य उपस्थापनादुभयोपस्थाप-
कत्वं न कस्यापीत्यपि कश्चित् । इदं द्व्यणुकं नित्यमणुत्वादित्यादौ
साधारणधर्मवद्धर्मिज्ञानस्य कोट्युपस्थितिं संशयञ्च प्रति हेतुतया

---

यत्ताकधर्मिव्यावृत्तत्वेन ज्ञाततयेत्यर्थः । तथात्वेऽपि संग्राह्यत्वेऽपि ।
तदुत्तीर्णेति । असाधारण्योत्तीर्णतादशायामित्यर्थः । विशेषदर्श-
नात् अलक्ष्यत्वनिर्णयात् । तथा च धर्मितावच्छेदकपुरोवर्तित्वादौ
निश्चितसाध्यवद्व्यावृत्तत्वाग्रहदशायामतिव्याप्तिवारणार्थमेव को-
टिद्वयोपस्थापकपदं वाच्यमिति भावः । ननु तदुत्तीर्णतादशायां ध-
र्मितावच्छेदकप्रकारकज्ञानस्य साध्यसंशयोपधायकत्वाभावात्कुत-
स्तत्रातिव्याप्तिरत आह संशयेति । तज्जनकेति । साध्यसंशयजनन-
योग्यतेत्यर्थः । नन्वेवं साध्यसंशयोपधायकपक्षधर्मताज्ञानविषय-
त्वमेव सव्यभिचारत्वं निरुच्य धर्मितावच्छेदकं वार्यतामत आह
अन्यथेति । संशयोपधायकत्वस्य निरुक्तिघटकत्व इत्यर्थः । यथाय-
थमिति । यदा पक्षे साध्यवत्त्वस्यान्यत्र च साध्याभाववत्त्वस्य नि-
श्चयो वृत्तस्तदा सपक्षविपक्षवृत्तिहेतोः कुत्रापि धर्मिणि साध्यसन्दे-
हानुपधायकत्वात्तदानीं साधारणाव्याप्तिप्रसङ्गादित्याशयः । तथा
च तत्संग्रहाय स्वरूपयोग्यत्वस्य निवेशे धर्मितावच्छेदकस्य वार-
णार्थमवश्यं कोटिद्वयोपस्थापकपदं वाच्यमिति भावः । कोटिद्वयोप-
स्थापकेतिपदस्य द्वित्वसंवलितस्यैव प्रयोजनं यत्केनचिदित्युक्तं त-
दाह प्रतिपक्षेत्यादिना । पक्ष इति । न च परामर्शाभ्यां मिथः प्रतिब-
न्धात् साध्यसंशयासम्भवः, फलानुरोधेन साध्यीयपरामर्शाभाव-
विशिष्टस्यैव साध्याभावीयपरामर्शस्य साध्यवत्ताज्ञानविरोधित्वमि-
त्याशयादिति भावः । इदमित्यादि । निश्चितसाध्यतदभाववद्वृत्ते-

तद्विषये धर्मिणि सद्धेतौ अतिप्रसङ्गः स्यादतः पक्षधर्मतेति । पक्षपदं धर्मिमात्रपरम् । न चैवं नित्यो घटः शब्दत्वादित्यत्र बाधाद्यवतारेऽसाधारण्यापत्तिः, इष्टत्वात् । अन्यथा बाधासिद्ध्योरन्यतरावतारदशायां साधारणासंग्रहापत्तेः । असिद्धिसङ्कीर्णत्वेन सव्यभिचारमध्याप्रवेशे सव्यभिचारसङ्कीर्णतया असिद्धेऽप्यनन्तर्भावापत्तौ तस्याऽतिरिक्तहेत्वाभासत्वापत्तेः । न च व्याप्यासिद्धयोः साधार-

———

स्साधारणत्वमते द्व्यणुकत्वावच्छेदेन पक्षतायामणुत्वस्य तथात्वं न सम्भवत्यतः इदंपदम् । तद्विषय इति । तथा च नित्यानित्यवृत्त्यणुत्ववदिदं द्व्यणुकमिति ज्ञानस्य नित्यत्वसंशयजनककोटिद्वयोपस्थापकतया तद्विषयीभूतस्य द्व्यणुकधर्मिणो नित्यत्वे साध्ये सव्यभिचारत्वापत्तिरतः पक्षांशे प्रकारत्वलाभाय पक्षधर्मतापदमित्यर्थः । सन्दिग्धसाध्यत्वादिरूपपक्षताविशिष्टप्रकृतधर्मिणः पक्षपदार्थत्वे वैयर्थ्यात् निर्वन्हिर्वन्हिमान् द्रव्यत्वादित्यादिव्यभिचारिण्यप्रसङ्गाच्चाह पक्षपदमिति । ननु यदि पक्षताविशिष्टप्रकृतधर्मिवृत्तित्वाप्रवेशस्तदा घटो न नित्य इत्येवम्बाधनिर्णयदशायामपि नित्यगगनाद्यनित्यघटादिव्यावृत्तशब्दत्ववान्वर्ण इति ज्ञानेन वर्णो नित्यो न वेति संशयोत्पादात् तदानीमपि शब्दत्वमसाधारणं स्यादित्याशङ्क्य निराचष्टे न चैवमिति । एवं प्रकृतपक्षत्वाप्रवेशे । बाधादीत्यादिना स्वरूपासिद्धिपरिग्रहः । अन्यथा प्रकृतपक्षत्वप्रवेशे बाधासिद्ध्योरिति । तथा च ह्रदो धूमवान् वन्हेरित्यत्र साधारणं बाधनिश्चयदशायां पक्षताविरहात्स्वरूपासिद्धिनिर्णयदशायां च प्रकृतधर्मिवृत्तित्वाज्ञानादव्याप्तिः स्यात्, अस्माकं तु तदानीमपि धर्म्यन्तरे तत्रैव च कालान्तरे सपक्षवृत्तिवह्निमत्त्वाज्ञानमादायैव लक्षणसङ्गम इति भावः । ननु घटो नित्यः शब्दत्वादित्यसाधारणस्याऽसिद्धिसङ्कीर्णत्वाच्च सव्यभिचारत्वमतस्तत्रातिव्याप्तिरेवत्यत आह असिद्धिसङ्कीर्णत्वेनेति । बाधसङ्कीर्णत्वेनेत्यपि द्रष्टव्यम् । अतिरिक्तेति । तथा च हेत्वाभासानां पञ्चविधत्वव्याघात इति भावः । न चेति । वन्हिमान् धूमाद्वात्वाद्वेत्यादौ वन्हितदभावधद्वृत्तिधूमवानयमिति भ्रमस्यापि निरुक्तपक्षधर्मताज्ञानत्वा-

ण्यभ्रमदशायामतिप्रसङ्गः, धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्य-संशयजनकं तद्रूपावच्छिन्नत्वस्योक्तत्वात् । तच्च रूपं साधारणत्वा-

———

द्यप्रकारतामादाय धूमवान् गोत्वादित्यादावतिव्याप्तिरित्यर्थः । धर्मिणीति । किञ्चिद्धर्मविशिष्ट इत्यर्थः । तथा च ज्ञाननिष्ठं किञ्चिद्धर्माव-च्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारताकत्वं साध्यसंशयत्वावच्छिन्न-जनकतावच्छेदकं तद्रूपवत्त्वमर्थः, पर्वतत्वाद्यवच्छिन्नधर्मिकवन्हित-दभावसहचारत्वाद्यवच्छिन्नप्रकारताकत्वेन वन्हिसंशयजनकत्वा-त्तादृशसहचरितत्वस्य धूमादावसत्त्वान्नोक्तातिप्रसङ्ग इति भावः । अत्र जनकतायामवच्छेदकत्वं न स्वरूपसम्बन्धविशेषः साधारण-त्वाद्यभावेऽपि ताद्रूप्येण वस्त्वन्तरावगाहिभ्रमादपि साध्यसन्देहाद-सम्भवापत्तेः, किं त्वनतिरिक्तवृत्तित्वम्, न च साधारणत्वाद्यवच्छि-न्नप्रकारताकत्वमात्रं तथेत्यतो धर्मिणीत्युक्तम् । न च साधारणत्वा-द्यवच्छिन्नहेतुमत्तासंशयस्य साध्यसन्देहजनकत्वादसम्भवः, किञ्चि-द्धर्मिकयद्रूपावच्छिन्नप्रकारित्वं साध्यसंशयजनकताशून्यनिश्चया-वृत्ति तद्रूपवत्त्वस्यैव ज्ञानपदमहिम्ना विवक्षितत्वात् । किञ्चिद्धर्मि-कयद्रूपावच्छिन्नवत्तानिश्चयत्वं साध्यसंशयजनकतानतिरिक्तवृत्ति तद्रूपवत्त्वं तु नार्थः, पश्चाद्वक्ष्यमाणस्य व्याप्यसंशयेत्यादिग्रन्थस्य विरोधापत्तेरिति ध्येयम् । साध्यसंशयजनकमिति । कोटिद्वयोप-स्थितिद्वारा जनकमित्यर्थः । तेन कोटिद्वयोपस्थितिजनकत्वस्यैव प्र-क्रान्तत्वान्न तेन विरोधः । ननु तादृशं रूपं यदि सपक्षविपक्षवृत्ति-त्वादिकं तदा धूमवान् वन्हेरित्यत्र साधारणेऽतिव्याप्तिः कुत्रापि वन्हौ साध्यतदभाववत्संयुक्तत्वस्याऽसत्त्वात् एवं घटो द्रव्यं विशि-ष्टसत्त्वादित्यादिसद्धेतावतिव्याप्तिश्चेत्यत आह तच्चेति । साधारणत्वं साध्यतदभाववद्वृत्त्यधिकरणतानिरूपकतावच्छेदकधर्मवत्त्वं तथा च धूमतदभाववद्वृत्त्यधिकरणतानिरूपकतावच्छेदकीभूतवन्हित्वा-द्यवच्छिन्नवान् पर्वत इत्याकारकज्ञानादेव पर्वतो धूमवान्नवेति संशयो-त्पादात्तादृशवन्हित्वमादायैव लक्षणसत्त्वाद्धूमसाध्यकवन्हौ नाव्या-प्तिः, विशिष्टसत्तात्वस्य च द्रव्यतदन्यवृत्त्यधिकरणतानिरूपकताव-च्छेदकत्वाभावान्नातिव्याप्तिरिति भावः।अत्र च धूमान्यधूमवान् का-

दीति सिद्धान्ते स्फुटीभविष्यति। इदं सविषयकमात्मवृत्ति वा ज्ञानत्वात् इत्यादौ प्रामाण्याप्रामाण्यसंशयस्य तद्घटकीभूतसाध्यतदभावविषयकतया कोट्युपस्थितिरूपस्य जनकीभूतज्ञानविषये ज्ञानत्वे तु नातिप्रसङ्गशङ्कापि, साधारणधर्मवत्ताज्ञानस्य तज्जन्यको-

---

ऽनन्मयधूमवान् वन्हेरित्यत्र प्रकृतसाध्यसन्देहप्रयोजकस्य च तादृशसाध्यतदभाववद्गामित्वस्याऽप्रसिद्ध्या न तत्र सव्यभिचारो हेत्वाभासः किं तु व्याप्यत्वासिद्धिरेवेति ध्येयम्। साधारणत्वादीत्यादिना साध्यतदभाववद्वृत्तित्वरूपस्याऽसाधारणत्वस्य परिग्रहः। न च साध्यव्याप्यात्मकासाधारणाव्याप्तिः, साध्यवद्व्यावृत्तत्वांशस्य तत्राऽसत्त्वादिति वाच्यम्। प्राचां मते साध्यतदभावनिश्चयकालीनस्य तद्विशेष्ययावद्धर्मिव्यावृत्तत्वस्यैव साध्यसंशयप्रयोजकतया सद्धेतावपि कदाचित् तादृशसपक्षव्यावृत्तत्वसम्भवात्, नव्यमते च सद्धेतोः साध्यवद्व्यावृत्तत्वविरहेणालक्ष्यत्वादिति भावः। ननु यत्र सविषयकत्वनिर्णयदशायामिदं सविषयकं न वेत्याकारकः सन्देहः सविषयकत्वज्ञानं सविषयकत्वाभाववति सविषयकत्वप्रकारकं न वेत्याकारकभ्रमत्वसंशयाद्वोत्पन्नः तत्र सविषयकत्वरूपसाध्यस्य सन्देहजनिका या निरुक्तभ्रमत्वसन्देहरूपा साध्यतदभावोपस्थितिः तज्जनकीभूतस्य भ्रमत्वतदभाववद्वृत्तिज्ञानत्ववदिदं ज्ञानमित्याकारकपक्षधर्मताज्ञानस्य विषये ज्ञानत्वे सद्धेतावतिव्याप्तिरत आह इदमित्यादि। विषयितात्वस्य साध्यतावच्छेदकीभूतस्यानुगतत्वे विवादात् साध्यान्तरमाह आत्मवृत्तिरिति। प्रामाण्याप्रामाण्यसंशयस्येति। अप्रमात्वसन्देहस्येत्यर्थः। प्रामाण्यसन्देहस्येतिपाठे भ्रमत्वलक्षणविरुद्धधर्मकोटिकः प्रामाण्यसंशयो बोध्यः, तस्यैव साध्यतदभावोपस्थितित्वसम्भवादिति ध्येयम्। तद्घटकेति। भ्रमत्वरूपाप्रामाण्यघटकीभूतेत्यर्थः। ज्ञानविषय इति। भ्रमत्वतदभाववद्वृत्तिज्ञानत्ववदिदं ज्ञानमित्याकारकज्ञानस्य विषय इत्यर्थः। साधारणेत्यादि। साध्यतदभावसहचरितधर्मवत्ताज्ञानस्य तादृशधर्मवत्ताज्ञानजन्यतत्तदभावोपस्थितेर्वा

टयुपस्थितेर्वा संशयजनकतया तज्ज्ञानस्य तादृशसंशयाहेतुत्वात् । प्रामाण्यसंशयस्थले तु ज्ञानत्वलक्षणसाधारणधर्मदर्शनात् ज्ञाने प्रामाण्यस्य ज्ञानविषयतात्मकसाधारणधर्मदर्शनाच्च विषये तद्वत्त्वस्य सन्देहः । अप्रामाण्यशङ्काद्यन्वयानुविधानन्तु भ्रमत्वज्ञानशून्यविरोधिज्ञानस्य प्रतिबन्धकतया तदपसारणप्रयुक्तमित्यस्याऽऽकरे

---

तत्तदभावकोटिकसन्देहजनकतयेत्यर्थः।तज्ज्ञानस्येति भ्रमत्वसन्देहात्मकसाध्यतदभावगोचरज्ञानस्य प्रकृतसन्देहत्वावच्छिन्नं प्रत्यहेतुत्वादित्यर्थः । नन्वेवं निश्चितप्रामाण्यके ज्ञाने घटत्वादिगर्भप्रामाण्यघटितभ्रमत्वस्य संशयाद् घटत्वादिप्रामाण्यसंशयः तदुत्तरं निर्णीतस्यापि घटत्वादेर्धर्मिणि सन्देहश्च कुतः स्यादत आह प्रामाण्यसंशयस्थल इति । तथा च तत्रापि प्रामाण्यादिघटितभ्रमत्वस्य सन्देहो न प्रामाण्यादिसन्देहस्य कारणं किं तु प्रामाण्यादेः साधारणधर्मवत्ताज्ञानमेवेति भावः।अथाऽर्थनिश्चयोत्तरार्थसन्देहं प्रत्यन्वयव्यतिरेकाभ्यामेव प्रामाण्यसन्देहः कारणमन्यथा विनापि प्रामाण्यसन्देहं क्वचिन्निश्चितार्थसंशयापत्तेरत आह अप्रामाण्यशङ्केति । तदपसारणेति । तथा च विरोधिनो विषयनिश्चयस्य सत्त्वे तत्संशयोऽनुपपन्न इत्यप्रामाण्यज्ञानेन विषयनिर्णयस्य भ्रमत्वशङ्काशून्यत्वरूपं यत्प्रतिबन्धकतावच्छेदकं तदपसार्यत इत्यप्रामाण्यज्ञानापेक्षेति भावः । ननु पर्वतादिधर्मिकवन्हिमत्तादिसन्देहं प्रति वन्हिव्याप्यत्वावच्छिन्नप्रकारताकसंशयस्य हेतुत्वाद्वन्हिव्याप्यत्वावच्छिन्नेऽतिव्याप्तिः । न च वह्निव्याप्यत्वावच्छिन्नप्रकारताकत्वस्य साध्यसंशयाजनकव्याप्यवत्तानिश्चयेऽपि सत्त्वात् साध्यसन्देहजनकतानतिरिक्तवृत्तित्वलक्षणतज्जनकतावच्छेदकत्वाभावादेव नातिव्याप्तिरिति वाच्यम् । वन्ह्यादिसन्देहं प्रति वन्ह्यादिव्याप्यवत्ताज्ञानत्वेनैव जनकतया वन्ह्यादिव्याप्यवत्तादिनिश्चयस्यापि वन्ह्यादिसन्देहस्वरूपयोग्यत्वात् । साध्यसन्देहमात्रस्यैव साध्याभावविशिष्टबुद्धित्वात् । तदवच्छिन्नं प्रति साध्यव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वादेव व्याप्यवत्तानिश्चयसत्त्वे साध्यसंशयानुत्पादसम्भवादत आह व्याप्यव-

व्यक्तत्वात् । व्याप्यवत्तासंशयस्य पृथगव्यापकवत्तासंशयहेतुत्वपक्षे ज्ञानपदं निश्चयपरम् । हेत्वभिमतविशेषणन्तु येन सम्बन्धेन तदुभयसाहचर्यं तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयादिजनकतासूचनार्थम् । तेनात्मत्वकपालत्वादिसाध्यके समवायसम्बन्धेन हेतौ ज्ञानघटादौ विषयत्वसंयोगादिना तत्सन्देहजनके नातिप्रसङ्ग इति ।

विप्रतिपत्तौ प्रत्येकं कोटिद्वयोपस्थापकत्वाभावात् लक्षणस्यद्वयप-

---

त्तेति । स्वमतेपि व्याप्यवत्तासंशयस्य विशेषणज्ञानादिविधया व्यापकवत्तासंशये हेतुत्वादाह पृथगिति। व्याप्यत्वावच्छिन्नप्रकारताकत्वेनेति तदर्थः । कोटिद्वयोपस्थितिद्वारा संशयजनकत्वस्यैव प्रक्रान्तत्वात् पृथगित्यस्य कोटिद्वयोपस्थितिद्वारेति वार्थः । साधारणादिधर्मवद्धर्मिज्ञानस्यैव संशयजनकत्वं मूलसंमतमतः पक्ष इत्युक्तम् । निश्चयपरमिति । तथा च धर्मिणि यद्रूपावच्छिन्नप्रकारताकनिश्चयत्वं निश्चयत्वावच्छिन्नायास्साध्यसन्देहजनकताया अनतिरिक्तवृत्ति तद्रूपवत्त्वं विवक्षितं व्यापकसन्देहं प्रति व्याप्यवत्ताज्ञानत्वेनैव जनकत्वं न तु तन्निश्चयत्वेनेति नातिप्रसङ्ग इति भावः । ननूक्तक्रमेणैव सद्धेतुनिरासाद्धेत्त्वभिमतपदं व्यर्थमत आह हेत्वभिमतेति । हेतुताघटकेति तदर्थः । तथा च यादृशसम्बन्धेन यद्रूपावच्छिन्नवत्त्वज्ञानं साध्यसन्देहप्रयोजकं तादृशसम्बन्धेन हेतुतास्थल एव तद्रूपवत्त्वं सव्यभिचारः अयमात्मा ज्ञानादित्यादौ समवायेन ज्ञानस्य हेतुतास्थले तु साध्यतदभाववद्विषयकत्वावच्छिन्नज्ञानवत्तायाः समवायेन ज्ञानं न साध्यसन्देहजनकमतो नातिव्याप्तिः, विषयतासम्बन्धेन तादृशज्ञानादिहेतोः सव्यभिचारत्वमेवेति भावः । आत्मत्वजातेरीश्वरावृत्तित्वमते तत्साध्यकज्ञानहेतोः सव्यभिचारत्वमिष्टमेवेत्यत आह कपालत्वादीति । तत्सन्देहजनक इति । आत्मत्वादिसन्देहजनकपक्षधर्मताज्ञानविषय इत्यर्थः ।

ननु जनकत्वस्य व्याप्यवृत्तित्वात् कोटिद्वयोपस्थितिजनिकाया विप्रतिपत्तेः प्रत्येकपदावच्छेदेन तदुभयोपस्थितिजनकत्वाभावासम्भवाद्विप्रतिपत्तिस्त्वित्यादिमूलासङ्गतिरतस्तदभिप्रायं प्र-

देन तद्वारणात् मिलितस्य तदुपस्थापकत्वेऽपि तद्वत्ताज्ञानं न तथा न वा मिलित्वा द्वयोर्ज्जनकत्वं, तथात्वेऽपि वा येन सम्बन्धेन तद्वत्ताज्ञानमुभयकोट्युपस्थापकं तेन सम्बन्धेन हेतुत्वेऽवश्यं सव्यभि-



काशयति विप्रतिपत्ताविति । प्रत्येकं साध्यादिवाचकप्रत्येकपदस्य । तद्वारणं साध्यादिघटकप्रत्येकपदस्य वारणम् । तथा च विप्रतिपत्तिः प्रत्यकं न तथेत्यस्य मूलस्य विप्रतिपत्तिर्न कोटिद्वयोपस्थापकैकपदवतीत्यर्थः । ननु प्रत्येकपदस्य कोटिद्वयोपस्थापकत्वाभावेपि समुदितविप्रतिपत्तेस्तथात्वात्तत्रातिव्याप्तिरेवेत्यत आह मिलितस्येति । तदुपस्थापकत्वेपि साध्यसंशयजनककोटिद्वयोपस्थापकत्वेपि । तद्वत्ताज्ञानं विप्रतिपत्तिमत्ताज्ञानम् । न तथा न संशयजनककोटिद्वयोपस्थापकम् । स्वरूपतो ज्ञाताया विप्रतिपत्तेरेव तथात्वात् । तथा च पक्षधर्मताज्ञानपदेन तद्वारणम्, एतदभिप्रायेणैव न वा पक्षवृत्तिरिति भावः । ननु शब्दो नित्यो न वेत्यादिवाक्यस्येव तादृशवाक्यवत्त्वस्यापि ज्ञानं कोटिद्वयोपस्थापकं भवत्येव तथा तद्घटकीभूतप्रत्येकपदवत्ताज्ञानमप्येवं तथा च विप्रतिपत्तौ तद्घटकप्रत्येकपदे च्चातिव्याप्तिरेवेत्यत आह न वेति । विप्रतिपत्तिमत्ताज्ञानस्य तद्घटकप्रत्येकपदवत्ताज्ञानस्य च द्वयोर्न मिलित्वा जनकत्वं न विप्रतिपत्तिमत्ताज्ञानत्वेन कोटिद्वयोपस्थितिं प्रति जनकत्वं तथा च धर्मिणि यद्वत्ताज्ञानत्वेन कोट्युपस्थितिजनकत्वं तत्त्वमेव सव्यभिचारत्वं विवक्षितम्, न च विप्रतिपत्तिमत्ताज्ञानत्वेन तथात्वम्, प्रत्येकार्थोपस्थितिं प्रति प्रत्येकपदज्ञानत्वेनैव हेतुत्वादतो नातिप्रसङ्गः । ननु बोध्यत्वादिसम्बन्धेन साध्यतदभावसहचरितविप्रतिपत्तिमत्ताज्ञानत्वेन तादृशकोटिद्वयोपस्थितिजनकत्वादुक्तक्रमेणापि विप्रतिपत्तिवारणं दुर्घटमत आह तथात्वेपीति । विप्रतिपत्त्यादिमत्ताज्ञानत्वेन कोट्युपस्थापकत्वेपि वेत्यर्थः । तथा च शब्दो नित्यः शब्दो नित्यो नवेतिवाक्यवत्त्वादित्यादौ बोध्यत्वादिसम्बन्धेन हेतुतायां विप्रतिपत्तेः सव्यभिचारत्वमिष्टमेवेति भावः । ननु विश्वधर्मिकसाध्यसन्देहदशावच्छिन्नस्य साधारणहेतोरेवानुपसंहारित्वात्तदानीं च कुत्रापि साध्यादिमत्त्वानिर्णयेन

पक्षवृत्तिः, साधारणमन्वयेन असाधारणं व्यतिरेकेण अनुपसंहारी पक्ष एवोभयसाहचर्य्येण कोटिद्वयोपस्थापकः।

———

चारत्वमिति। अनुपसंहारी पक्ष एवेति। अनुपसंहारितादशायां साध्यतदभावसहितत्वनिर्णयाभावेऽप्युक्तक्रमेण वास्तवतत्सहचरितत्वमादायैव लक्षणसमन्वय इति भावः। केचित्तु व्याप्यादिधर्मेऽपि साधारण्यज्ञानात् संशयस्योदयात् तदज्ञाने च वस्तुतः साधारण्यज्ञानेऽप्यनुदयात् साधारण्यज्ञानं हेतुस्तत्र निश्चयत्वमकिञ्चित्करं गौरवात्, तथा च पक्ष एव तत्संशयात्मकतदुभयसाहचर्य्यज्ञानाद्भवति

———

कारणबाधात् साध्यतदभावसहचरितत्वनिर्णयासम्भवेन तस्य संशयजनकत्वायोगात् तत्राव्याप्तिरित्यत आह अनुपसंहारितेति। उक्तक्रमेणेति। सन्देहादिजननयोग्यताया एव लक्षणघटकत्वेनेत्यर्थः। सर्वधर्मिकसाध्यसन्देहदशायामप्ययं साध्यस्य तदभावस्य वा अधिकरणवृत्तिहेतुमानित्याकारकस्यैव साध्यसंशयजनकपक्षधर्मताज्ञानस्य सम्भवान्नानुपसंहारिण्यव्याप्तिरिति प्राचां मतमुपन्यस्यति केचित्त्विति। अनुदयादिति। साध्यसंशयस्येत्यनुषज्यते। निश्चयत्वमित्यस्य साध्यादिमत्त्वांश इत्यादिः। तेनाऽपरांशे निश्चयत्वस्यापेक्षायामपि न क्षतिः। गौरवादिति। साध्यतदभावांशे निश्चयात्मकतदुभयसहचरितत्वप्रकारकज्ञानत्वेन हेतुतायां गौरवादित्यर्थः। तत्संशयात्मकेति। साध्यादिमत्त्वांशसंशयात्मकेत्यर्थः। तथाऽवमनुपसंहारितादशायामपि साध्यसंशयजनकपक्षधर्मताज्ञानविषयत्वमित्यर्थः। नव्यमते विशिष्टवैशिष्ट्यविषयताशालिन एव साध्यतदभावसहचरितहेतुमत्ताज्ञानस्य साध्यसन्देहजनकत्वात् साध्यतदभाववत्त्वांशे निश्चयात्मकतदुभयसहचरितत्वप्रकारकज्ञानत्वस्य जनकतावच्छेदकत्वात् न तन्मते गौरवावकाशः किं तु प्राचां मते विशेष्ये विशेषणमित्यादिरीत्या जायमानस्य हेतुत्वोपगमे वृत्तित्वांशे साध्यवद्वृत्तित्वादिनिश्चयत्वापेक्षायामेव विपरीतगौरवम्। अन्यथा साध्यव-

तथात्वमिति भाव इत्याहुः।तच्चिन्त्यम्।ननु केवलान्वयिसाध्यकानुप-संहारिणि साध्याभावाप्रसिद्ध्या तत्संशयाद्यभावादव्याप्तिः, एवं यत्र स्थिरे धर्मिणि पूर्वं घटत्वं गृहीतमुत्तरदशायां तत्रैव दोषात् घटत्वाग्रहे तद्घटभिन्नोऽयमिति भ्रमे च घटत्वनिश्चयविषयीभ-वद्धर्मिव्यावृत्तत्वेन गृह्यमाणतया असाधारणे इदन्त्वेऽपि वस्तुत-स्तद्व्यावृत्तत्वाभावेन तत्र लक्षणायोगादित्यतस्तयोर्लक्ष्यत्वाभावेन

---

निरूपितस्य तदन्यस्य वा आधेयत्वस्याश्रयहेतुमानयमित्यादिज्ञाना-दपि साध्यसंशयापत्तेरित्याशयेनाह तच्चिन्त्यमिति । नन्वित्यादि केचिदित्यन्त एको ग्रन्थः । अनुपसंहारिणि अनिश्चितोभयसहचार-के । संशयादिति । वाच्यत्वादिप्रतियोगिकत्वेनाऽभावान्तरं विष-यीकृत्य साध्यसंशयस्य सम्भवादादिपदम् । तेन सन्देहप्रयोजक-विप्रतिपत्तिवाक्यस्य साध्यतदभाववद्वृत्तित्वस्याप्रसिद्धेर्लाभः । ननु अयं पटः एतत्त्वादित्यत्र साध्यवत्तानिश्चयविषयीभूतधर्मिव्यावृ-त्तत्वेन गृह्यमाणत्वप्रयुक्त एव हेतावसाधारण्यव्यवहारो वाच्यः स च साध्यवत्त्वनिश्चयाप्रसिद्धौ हेतुमत्येव साध्यवत्तानिश्चये वा दु-र्घटः कुतस्तत्राव्याप्तिरित्यतः तं घटयति एवमित्यादिना। असाधा-रण्यदशायां तद्घटनाशे वास्तवमेव साध्यवद्व्यावृत्तत्वमेतत्त्वहेतौ तत्कालावच्छेदेन कदाचित्स्यादतः स्थिर इत्युक्तम् । ननूत्तरदशा-यामपि इदन्त्वावच्छिन्ने घटत्वमेव गृहीतं यदि तदा तद्व्यावृत्तत्वेना-ऽगृह्यमाणत्वाद्धेतौ कुतोऽसाधारणत्वव्यवहार इत्यत आह उत्तरद-शायामिति । ननु तद्धर्मावच्छिन्नविशेष्यकसाध्यवत्तानिश्चयकाली-नस्तद्धर्मावच्छिन्नव्यावृत्तत्वग्रह एव हेतौ असाधारण्यव्यवहारौ-पयिकः अन्यथाऽतिप्रसङ्गात्, तथा च प्राक्तनं साध्यवत्तो निश्चय-मादाय व्यवहारसम्पत्तिर्नोचितेत्यतस्तत्कालेपि साध्यनिश्चयं सम-र्थयति तद्घटभिन्नोयमिति । भ्रमे चेति । तथा च स घटस्तद्व्यावृत्त-मिदंत्वमित्याकारकग्रहस्य तदानीमपि सम्भवात्तमादायैवाऽसाधा-रण्यव्यवहार इति तत्रैवाव्याप्तिरुक्तेति भावः । इदन्त्वेपीति । अव्या-प्तिरित्यनुषज्यते । अव्याप्तौ हेतुमाह वस्तुत इति । वस्तुगत्या निश्चि-

केवलान्वयिसाध्यकानुपसंहारी अयं घट एतत्त्वादित्यसाधारणश्च सद्धेतुरेव, तदज्ञानं दोषः पुरुषस्य। अत एवाऽसाधारणप्रकरणसमयोरनित्यदोषत्वम्। अन्यथा सद्धेतौ बाधादिज्ञाने हेत्वाभासाधिक्यापत्तिः। न च प्रमे-

---

परिहरति केवलान्वयीति। अत एवेति। यत एव पुरुषदोषाधीनं तद्दोषत्वम् अत एव तस्याऽनित्यदोषत्वं, साहजिकत्वे कादाचित्कत्वानुपपत्तेः। एवञ्च यत्र दोषताप्रयोजकं वस्तुनो हेतौ तत्राऽनित्यदोषत्वमपि, यत्र पुरुषस्य तद्भ्रमो न तत्र तदपि भ्रममात्राद्दुष्टत्वेऽतिप्रसङ्गमाह अन्यथेति, केचित्। परे तु अयं घट एतत्त्वादित्यादावव्याप्तिः साध्यसन्देहप्रयोजकं हि तस्य साध्यतदभावव-

---

त्साध्यवद्व्यावृत्तत्वाभावेनेत्यर्थः। लक्षणायोगादिति। तत्तद्धर्मावच्छिन्नविशेष्यकसाध्यतदभाववत्तानिश्चयकालीनस्य तत्तद्धर्मावच्छिन्नव्यावृत्तहेतुमत्ताज्ञानस्यैव साध्यसन्देहजनकत्वादिति भावः। तस्य असाधारणस्य। अनित्यदोषत्वं कदाचिदेवाभासत्वम्। इत्थं च साध्यपरामर्शदशायामेव परामृश्यमाणस्य साध्याभावव्याप्यवत्पक्षस्य प्राचां मते प्रकरणसमत्वात् मूले तदुपन्यासो दृष्टान्तार्थ इति भावः। अन्यथेति मूलमवतारयितुं पूरयति एवं चेति। अनित्यदोषत्वमपि युज्यत इति शेषः। तद्भ्रमः। दोषताप्रयोजकरूपस्य भ्रमः। तदपीति। अनित्यदोषत्वमपीत्यर्थः। अपिना नित्यदोषत्वपरिग्रहः। अवतारयति भ्रममात्रादपीति। दोषमात्रस्यैव साहजिकत्वं वदतां मतमुत्थापयति परे त्विति। अनुपसंहार्यव्याप्तेः पूर्वतुल्यत्वात्तदुपेक्ष्याह अयं घट इति। तस्य असाधारणस्य। न च साध्यवद्व्यावृत्तधर्मवत्ताज्ञानस्य साध्याभावविशेषदर्शनविधया साध्यवत्ताज्ञानविरोधित्वात्तदुभयव्यावृत्तत्वस्य साध्यसंशयप्रयोजक-

द्वयावृत्तत्वं न होकस्य धर्मस्य तदुभयव्यावृत्तत्वं सम्भवति, असाधारण्यन्तु तस्य पक्षमात्रवृत्तितया अतस्तस्याऽलक्ष्यतयोत्तरयति अयं घट इत्यादि । एतच्चावृत्तिगगनादिकमत्रासाधारणम् । पक्षवृत्तित्वभ्रमदशायाञ्चासाधारण्यस्यासङ्करः । न चोभयव्यावृत्तत्ववृत्तिमत्त्वयोः स्वरूपतो विरोधः, निश्चितसाध्यतदभाववद्व्यावृत्तत्वञ्च न सन्देहप्रयोजकम्, तथा सति तुल्यन्यायतया निश्चितसाध्यतदभाववद्वृत्तित्वस्यापि तथात्वे सद्धेतावपि साध्याभाववत्त्वभ्रमविषयवृत्तित्वग्रह-

---

दशायाम्भ्रम इति भावः । तत्प्रतिपक्षस्थलीयसंशयानुरोधेन तद्वीयविशेषदर्शनाभावविशिष्टस्यैव तदभावविशेषदर्शनस्य संशयविरोधित्वोपगमादिति भावः । एकस्येति । वृत्तिमत इत्यादि । ननु हेतोः संशयप्रयोजकरूपसत्त्वं मूलं कुतस्तस्यासाधारणत्वेनोद्भावनं तत्प्रयुक्तत्वादुल्लेखस्येत्यत आह असाधारण्यं त्विति । असाधारणत्वोक्तिस्त्वित्यर्थः । ननु साध्यतदभाववद्व्यावृत्तत्वस्य कुत्राप्यसत्त्वात्तदाश्रयस्यासाधारणत्वमसङ्गतमत आह एवञ्चेति । येन सम्बन्धेन यो वृत्तिमान् स एव तेन सम्बन्धेन साध्यतदभाववद्व्यावृत्तत्वादसाधारण इत्यर्थः । तेन वृत्तिमतापि रूपादेः संयोगादिसम्बन्धेन हेतुतायामसाधारण्यम् । नन्वेवमवृत्तिहेतोः पक्षावृत्तित्वमावश्यकमतः स्वरूपासिद्धिरेवास्तु दोष इत्यत आह पक्षवृत्तित्वेति । असङ्करः स्वरूपासिद्ध्या । ननु हेतोः पक्षमात्रवृत्तित्वभ्रमदशायां साध्यतदभाववद्व्यावृत्तत्वज्ञानमेव दुर्घटं वृत्तिमत्त्वज्ञानस्य तादृशव्यावृत्तत्वधीविरोधित्वादत आह न चेति । स्वरूपतः प्रामाण्याभावविषयया । व्यावर्तकधर्मविषयया तु वृत्तिमत्त्वस्य ज्ञानं न सार्वत्रिकमिति भावः । ननु साध्यवत्तया निश्चीयमानाद्व्यावृत्तत्वे सति साध्याभाववत्तया व्यावृत्तत्वमेव सन्देहप्रयोजकं न तु साध्यतदभाववद्व्यावृत्तत्वं तच्च इदन्त्वेऽप्यस्तीति कथं तस्याऽलक्ष्यत्वमत आह निश्चितेति । निश्चितौ निश्चीयमानौ साध्यतदभावौ येषु तत्तद्धर्मिव्यावृत्तत्वं चेत्यर्थः । एवमग्रेऽपि । तथात्वे संशयप्रयोजकत्वे । अतिप्रसङ्गादिति । अनैकान्तिकत्वप्रसङ्गादित्यर्थः । ताद-

यत्वेनाऽभेदानुमाने शब्दोऽनित्यः शब्दाकाशान्यतरत्वा-

---

दशायामतिप्रसङ्गात् । न च तादृशनिश्चयविषयस्य धर्मिणो वास्तवं साध्याभावादिमत्त्वमपि तन्त्रम्, मानाभावात्, किञ्च सन्देहजनकतावच्छेदकरूपस्य विशेषणत्वे व्यभिचारिणि रासभादौ महानसादिवृत्तितादशायामव्याप्तिः, उपलक्षणत्वे असाधारण्योत्तीर्णतादशायामतिव्याप्तिः असाधारणप्रकरणसमययोस्तत्त्वेन भ्रमविषययोरनित्यदोषत्वं विशेषादर्शनदशायामनुमित्यनुत्पादप्रयोजकत्वं न तु वास्तवं हेतुदोषत्वम्, अन्यथाऽनुमित्यनुत्पादप्रयोजकज्ञानविषयतामात्रेण वास्तवहेतुदोषत्वे इत्याहुः ।

---

साधर्म्यद्वयवृत्तित्वस्य तत्र सत्त्वादिति भावः । तादृशेति । साध्यादिमत्तानिश्चयेत्यर्थः । तथा च साध्यतदभाववत्तानिश्चयविशेष्यवृत्तित्वेऽपि वस्तुगत्या साध्यशून्ये तादृशवृत्तित्वविरहादेव सङ्केतौ नातिप्रसङ्ग इति भावः । प्रतिबन्देरनुत्तरत्वादाह किं चेति । विशेषणत्व इति । यस्य यदा साध्यसंशयप्रयोजकरूपवत्त्वं तदैव सोऽनैकान्तिक इत्युक्तावित्यर्थः । महानसादीति । तथा च धूमवान् वनसंयोगिन इत्यादौ वनसंयोगित्वेन रासभादेर्हेतुतायामव्याप्तिः साध्यतदभाववद्वृत्तितावच्छेदकीभूतस्य वनसंयोगित्वस्य महानसवृत्तितादशायां रासभादावसम्भवादिति भावः । अतिव्याप्तिरिति । व्याप्तिनिश्चयदशायामपि कालान्तरनिर्णीतसाध्यादिमत्ताकतद्धर्मिव्यावृत्तत्वानपायादिति भावः । ननु यथाभासमात्रस्यैव नित्यदोषत्वं तर्हि असाधारणप्रकरणसमयोरनित्यदोषत्वाभिधायकं मूलमसङ्गतमत आशयमाचष्टे असाधारणेति । अनित्यदोषत्वं यदि नित्यदोषत्वाभाव तदा नित्यपदं व्यर्थं दोषत्वाभावस्यैव प्रकृतत्वादत आह विशेषादर्शेति । असाधारण्यादिभ्रमस्य तत्त्वाग्रहदशायामित्यर्थः । अन्यथेति मूलमवतारार्थं पूरयति न तु वास्तवं दोषत्वमिति । मूले अभेदानुमानेति ।

दित्यत्र च साधारणेऽव्याप्तिः तयोः साध्यवद्वृत्तित्वेन विरुद्धत्वादिति चेन्न । एतदज्ञानेऽपि साधारण्यादिप्रत्ये-

———

अनवगतसाध्यसहचारत्वे सति अवगतसाध्याभावसहचारतया विरुद्धत्वमेव तयोरिति । इदञ्चाभ्युपगमवादेन । वस्तुतो यथोपवर्णितलक्षणस्य न तत्राव्याप्तिरिति ध्येयम् । यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम्, अन्यथा अतिप्रसङ्ग इत्यभिप्रेत्य दूषयति नैतदिति । वस्तुतस्तु उपस्थापकत्वादिज्ञानमनुमितेस्तज्जन-

———

इदमाकाशाभिन्नं मेयत्वादित्यादौ क्वचिदपि साध्यवत्त्वानिश्चयेन तदानीं साध्यतदभाववद्वृत्तित्वेन हेतोरग्रहात् साध्यसंशयानुत्पत्तावव्याप्तिरित्यर्थः । ननूक्तहेतुद्वयस्य पक्ष एव साध्यसमानाधिकरणत्वात् साध्यवद्वृत्तित्वेनेति मूलासङ्गतिरतः प्राचां मतानुसारेण व्याचष्टे अनवगतेत्यादि । अनुपसंहारिणोऽप्यनवगतसाध्यसहचारत्वात्तद्वारणाय विशेष्यदलम् । विरुद्धत्वेऽपि सव्यभिचारत्वसम्भवात्तन्मात्रोक्त्या नाऽलक्ष्यत्वप्राप्तिः इत्यवकारमन्तर्भाव्य योजयति विरुद्धत्वमेवेति । अभ्युपगमेति । साध्यसंशयोपधायकत्वघटितलक्षणाभ्युपगमेनेत्यर्थः । वस्तुत इति । तदानीं साध्यसंशयानुत्पादेऽपि सन्देहजनकतावच्छेदकीभूतं साधारणत्वमादाय तत्र लक्षणसम्भवादिति भावः । वस्तुतः प्रमेयत्वस्य शब्दाकाशान्यतरत्वस्य च तादात्म्येन हेतुतास्थले एवाऽव्याप्तिमाशङ्क्य तयोरलक्ष्यत्वं मूलकृतोक्तं यथाश्रुतमेव सम्यगिति युक्तमुत्पश्यामः । ननु विरोधितानवच्छेदकेनापि अनुगतरूपेण विभजने बाधकाभावादेतदज्ञानेपीत्यादिमूलमसङ्गतमत आह यद्रूपेति । अन्यथेति । विरोधितानवच्छेदकेनापि विभजने साध्यवत्ताज्ञानविरोधित्वे बाधप्रतिरोधयोरप्येकहेत्वाभासत्वापत्तिरिति भावः । इति चेदेतदज्ञाने इति मूलपाठमभिप्रेत्य प्रतिबन्धादित्यग्रिमहेत्वन्वयार्थं नकारमन्तर्भाव्य समाधत्ते नैतदिति । ननु

कस्य ज्ञानादुद्भावनाच्च स्वपरानुमितिप्रतिबन्धात्, उद्भा-
वितैतन्निर्वाहार्थं साधारणादेरवश्योद्भाव्यत्वेन तस्यैव
दोषत्वाच्च । एतेन पक्षवृत्तित्वे सत्यनुमितिविरोधिसम्ब-
न्धाव्यावृत्तिरनैकान्तिकः सपक्षविपक्षवृत्तित्वमुभयव्या-

---

कस्य वा न प्रतिबन्धकं विरोधिविषयकत्वाभावात् । एवमुत्तरत्रा-
पि। पक्षवृत्तित्वे सतीति।विरोधित्वं विरोधिज्ञानविषयत्वम् अव्यावृ-
त्तिपदम् अत्यन्तायोगव्यवच्छेदार्थकम्, तेन संयोगसम्बन्धेन व्य-
भिचारिणि द्रव्ये हेतौ व्यभिचाराभावदशायां नाप्रसङ्गः । साध्य-

---

तदज्ञानेपि वस्त्वन्तरज्ञानादनुमितिप्रतिबन्धात्तस्यैव दोषत्वाभावे
साधारण्यादि प्रत्येकमपि दोषो न स्यात् तदज्ञानेपि बाधादिज्ञानेना-
नुमितिप्रतिबन्धादतः स्वयं दूषणमाह वस्तुतस्त्विति । त्रितयानुगत-
रूपस्य प्रतिबन्धकतानवच्छेदकत्वे मूलस्वरसमाह एवमुत्तरत्रेति ।
एवमेवोत्तरग्रन्थे दर्शितमित्यर्थः । एतदज्ञाने ज्ञाने चावश्यकप्रत्येक-
ज्ञानस्य दोषत्वादित्यग्रिममूलेनाऽनुगतधर्मज्ञानसत्त्वेपि साधारण्या-
दिप्रत्येकज्ञानस्यापेक्षणीयत्वोक्त्याऽनुगतस्य प्रतिबन्धकतानवच्छेदक-
त्वस्फोरणादिति भावः । व्यभिचारादेरनुमितिप्रतिबन्धकत्वे माना-
भावादाह विरोधित्वमिति । लिङ्गोपधानमतेनेदम्, मणिकारमते
व्यभिचारज्ञानस्याप्यनुमित्यविरोधित्वादव्याप्त्यापत्तेः इति ध्येयम् ।
अथानुमितिविरोधिसम्बन्धवत्त्वमित्येव क्रियतामव्यावृत्तिपदं व्यर्थम-
त आह अव्यावृत्तीति। अत्यन्तेति । तथा च स्वहेतुकानुमितिविरोधि-
यद्रूपवत्त्वं यस्य तस्य तद्रूपेण सव्यभिचारत्वं कालविशेषानन्तर्भा-
वेणैव वाच्यमिति भावः। तेनेति। अन्यथा यदानुमितिविरोधिस-
म्बन्धः तदैव सव्यभिचारत्वे वन्हिमान् तद्रासभादित्यादौ तद्रासभस्य
साध्यवत्संयुक्तत्वदशायामनुमितिविरोधिसम्बन्धस्य साध्याभावव-
त्संयुक्तत्वस्याभावादव्याप्तिरेव स्यात् इति भावः। अथायं घट एत-

वदृत्तीत्वस्तु नासाधारण इति हृदयम् । अपक्षधर्मधूमादिवारणाय सत्यन्तम् । पक्षः सन्दिग्धसाध्यो धर्मी । विशिष्टहेतौ तद्वृत्तित्वग्रहाविरोधित्वञ्च तदर्थः । तथा च पक्षतावच्छेदकरूपेण पक्षे साध्यतावच्छेदकरूपेण साध्यस्य हेतुतावच्छेदकरूपेण हेतोर्वा यज्ज्ञानं तदविरोधित्वस्य लाभात् पक्षसाध्यसाधनाप्रसिद्धिस्वरूपासिद्धिबाधप्रतिरोधानां निरासोऽसिद्धिसङ्कीर्णसंग्रहश्च । विरोधोऽपि फलतः

---

त्वादित्यत्र पक्ष एव तद्धटभिन्नोऽयमिति भ्रमदशायामसाधारणे अव्याप्तिः साध्यवत्तानिश्चयकालीनस्य तद्विषयीभवत्तद्धर्मिव्यावृत्तत्वरूपस्यानुमितिविरोधिसम्बन्धस्य कदापीदन्त्वहेतोरसत्त्वादत आह साध्यवदिति । साध्यवत्ताप्रमाकालीनस्य सर्वसाध्यवद्व्यावृत्तत्वस्यैवानुमितिविरोधिरूपस्यासाधारणत्वादिति भावः । अपक्षेति । ह्रदो वह्निमान् धूमादित्यादौ धूमादिवारणायेत्यर्थः । तत्रापि स्वरूपासिद्धिरूपस्यानुमितिविरोधिसम्बन्धस्य सत्त्वादिति भावः।यथाश्रुतस्य आश्रयासिद्धबाधाद्यतिव्याप्तिः जले धूमवद्वह्नेरित्यादौ व्यभिचारिण्यतिव्याप्तिश्चेत्यतो व्याचष्टे पक्ष इति। विशिष्टेति । हेतुतावच्छेदकविशिष्टहेतावित्यर्थः।सन्देहाद्यप्रवेशेन लाघवादाह तथा चेति । हेतोर्वेति । वाशब्दः समुच्चये । अवच्छेदकानां प्रवेशस्य फलमाह पक्षेत्यादि । पक्षादेः प्रत्येकमप्रसिद्धावन्वयः । साधनांशे प्रकृतपक्षधर्मिकत्वप्रवेशस्य फलमाह स्वरूपासिद्धीति । साध्यांशे प्रकृतपक्षकत्वस्य तदाह बाधप्रतिरोधेति । अन्यथा ह्रदो वह्निमान्धूमादित्यादौ व्याप्यहेतोरपि बाधादिकमादायातिप्रसङ्गापत्तेरिति भावः । असिद्धीति । स्वरूपासिद्धसंकीर्णव्यभिचारिणः संग्रहश्चेत्यर्थः । ननु विरोधस्याप्यनुमितिविरोधिरूपत्त्वात्तद्रूपेणापि विरुद्धहेतोः सव्यभिचारत्वापत्तिरत आह विरोधोपीति । विरुद्धत्वं यदि प्रकृतहेतुनिष्ठं पक्षवृत्तित्वे सति साध्यव्यापकाभावप्रतियोगित्वं तदा तस्यापि प्रकृतपक्षधर्मिकसाध्यवत्ताज्ञानविरोधित्वादविरोधित्वान्तदलेनैव वारणमित्यभिप्रायेणाह फलतः प्रतिरोध एवेति ।साध्यासमा-

प्रतिरोध एव । तदन्यत्वेन वा विरोधि विशेषणीयम् । वक्ष्यते च सिद्धान्ते विरुद्धान्येति हेतुसाध्यसामानाधिकरण्यग्रहाविरोध्यर्थकम् । सम्बन्धपदबलेन प्रकृतहेतुसम्बन्धितया विरोधित्वे तात्पर्योपवर्णनेन प्रायशो बाधादिवारणेऽपि घटत्वमनित्यं घटत्वादित्यादौ प्रयत्नसाध्यमिव तत् प्रतिभाति । वस्तुतस्त्वनुमितिपदं तत्कारणज्ञानपरम् । आश्रयासिद्ध्यादिवारणाय सप्तम्यन्तम् । तादृशपक्षकतादृशहेतुक-

---

नाधिकरणत्वादिकं यदि विरुद्धत्वं तदाह तदन्यत्वेन वेति । विरोधान्यत्वेनैवानुमितिविरोधिरूपं विशेषणीयमित्यर्थः । विशेषणं मूलस्वरसमाह वक्ष्यते चेति । विरोधस्यापि विरुद्धान्यत्वादनेकविधत्वेनैकान्यत्वोक्तावन्यत्रातिप्रसङ्गाच्च व्याचष्टे हेतुसाध्येत्यादि । साध्यवत्ताप्रमाविषयीभूतधर्मिव्यावृत्तत्वलक्षणस्य चासाधारण्यस्य ज्ञानं न साध्यसाधनयोः सामानाधिकरण्यज्ञानमात्रे विरोधि तन्निश्चयेपि धर्मान्तरेण तयोः सामानाधिकरण्यग्रहा दतो नासाधारणाव्याप्तिरिति भावः । ननु सम्बन्धपदमहिम्ना प्रकृतहेतुधर्मिकयादृशधर्मवत्ताज्ञानत्वेनानुमितिविरोधित्वं हेतोस्तादृशधर्मवत्त्वमेव सव्यभिचारत्वं विवक्ष्यतां कृतं बाधादिवारणार्थं विशेषणान्तरेणेत्यत आह सम्बन्धेति । विरोधित्वे अनुमितिविरोधित्वे । बाधादीत्यादिना सत्प्रतिपक्षस्योपग्रहः । तत् बाधादिवारणम् । तत्र साधनस्येव पक्षतया हेतुधर्मिकस्यैव बाधादिज्ञानस्यानुमितिप्रतिबन्धकत्वादिति भावः । ननु प्रकृतहेतुकसाध्यानुमितिसामान्यं प्रति प्रकृतहेतुसम्बन्धितया यद्रूपवत्ताज्ञानं विरोधि तद्वत्त्वमित्यभिधायोक्तदोषवारणे ह्रदो वन्हिमान्धूमादित्यादौ स्वरूपासिद्धसद्धेतुवारणार्थमुपात्तस्य पक्षवृत्तित्वे सतीत्यस्य व्यर्थतापत्तिः धूमनिष्ठतया ह्रदवृत्तित्वाभावज्ञानस्य धूमलिङ्गकवन्ह्यनुमितिसामान्यं प्रति अविरोधित्वादेव तत्राव्याप्त्यसम्भवादित्याशयेन प्रयत्नसाध्यमिवेत्युक्तम् । चिन्तामणिकृन्मते व्यभिचारज्ञानस्यानुमित्यविरोधित्वात्तन्मतानुसारेण व्याचष्टे वस्तुतस्तु इति । तत्कारणेति । परामर्शपरमित्यर्थः । आश्रयासिद्ध्यादीत्यादिना स्वरूपासिद्धेः संग्रहः । तादृशेति । पक्षता-

वृत्तत्वमनुपसंहारित्वञ्चानुमितिविरोधि, तत्सम्बन्धः प्रत्येकमस्ति, विरुद्धोऽप्यनेन रूपेण सव्यभिचार एव, उपाधेश्च न सङ्कर इति वक्ष्यत इति निरस्तम् । एतदज्ञाने

———

ग्रहाविरोध्यर्थकम् । अनया च वाचोभङ्ग्या व्याप्तिग्रहविरोधित्वमेवाऽभिधित्सितम् । तेन वन्हिमान् वन्हिमान् ह्रदत्वादित्यादौ हेतोः साध्यवदवृत्तित्वादेर्नाऽसंग्रहः । विवेचयिष्यते चेदमुपरिष्टात् । सपक्षेति सम्पातायातम् । अत एवानुपदं विरुद्धोऽपीत्यादिकम् ।

———

वच्छेदकविशिष्टेत्यर्थः । ननु वन्हिमान् वह्निमान् ह्रदत्वात् इत्यादौ हेतौ वन्हिमदवृत्तित्वरूपे असाधारण्ये अव्याप्तिस्तस्य प्रकृतपक्षधर्मिकहेतुमत्त्वग्रहाविरोधित्वादत आह अनयेति । पक्षधर्मत्वग्रहाविरोधित्वे सति परामर्शाविरोधित्वस्य व्याप्तिग्रहविरोधितायामेव पर्यवसानादिति भावः । अथात्राऽन्वयव्याप्तिनिवेशे व्यतिरेकव्याप्तिधीविरोधिन्यनुपसंहारिण्यव्याप्तिः एवं साध्याव्यभिचरितासामानाधिकरण्याभावरूपायां व्याप्यत्वासिद्धौ साध्यसाधनयोर्विशेषणासिद्धौ व्यर्थविशेषणतायां चातिव्याप्तिरित्यत आह विवेचयिष्यत इति । नानाविधं साधनव्यापकत्वं व्यतिरेकेण व्याप्यत्वं चोपादाय तावदवगाहिग्रहस्यैव प्रवेश्यत्वात् न साध्याव्यभिचरितसामानाधिकरण्याभावेऽतिप्रसङ्गो न वा अनुपसंहारिण्यव्याप्तिः, प्रकृतसाध्यसाधनग्रहाविरोधित्वेन विशेषणाच्च न साध्यसाधनाप्रसिध्योरतिप्रसङ्गः, व्यर्थविशेषणत्वं तु न व्याप्तिधीविरोधीत्यादेः सिद्धान्ते वक्ष्यमाणत्वादिति भावः । सपक्षवृत्तित्वांशस्य दूषकतायामनुपयुक्तत्वादाह सपक्षेतीति । इदमुपलक्षणम् । उभयव्यावृत्तत्वमित्यत्रापि विपक्षेति सम्पातायातं द्रष्टव्यम्, सपक्षव्यावृत्तत्वस्यैव दूषकत्वादिति । अत एवेति । सपक्षवृत्तित्वांशस्योपेक्षितत्वादेवेत्य-

ज्ञानेऽपि वाऽऽवश्यकप्रत्येकज्ञानस्य दोषत्वात् असाधकत्वानुमितौ व्यर्थविशेषणत्वाच्च । अत एव साध्याव्याप्यत्वे सति साध्याभावाव्याप्यहेत्वाभासत्वं साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं वेति परास्तम्,

---

व्यर्थेति । विशेषणं पक्षवृत्तित्वम् । साध्याव्याप्यत्व इति । हेत्वाभासत्वं हेतुवदाभासमानत्वं वत्यर्थश्च वृत्तिमत्त्वम् एवञ्च साध्यतदभावव्याप्यत्वग्रहविरोधिवृत्तिमत्त्वग्रहाविरोधिरूपवत्त्वमर्थः। साध्यतदभाववदवृत्तित्वं साधारण्यं, निश्चितसाध्यतदभाववद्व्यावृत्तत्व-

---

र्थः। अन्यथा विरुद्धस्य सपक्षवृत्तित्वाभावादनेन रूपेणेत्यसङ्गत्यापत्तेः । साध्याभावव्याप्यत्वरूपस्य विरुद्धपदार्थस्य तदुभयव्यावृत्तत्वासम्भवादिदमा तत्परामर्शायोगादिति भावः । अनुमितिविरोधित्वविशेषणस्य सद्धेतुवारकत्वात्तद्व्यर्थ्यायोगाद्व्याचष्टे विशेषणमिति । हेत्वाभासपदं सार्थकीकर्तुमाह हेतुवदिति । साध्यादिव्याप्यस्यापि दशाविशेषे असाधारणत्वात्तत्राव्याप्तिः एवमवृत्तिहेतावपीत्यत आह एवं चेति । प्रकृतहेतौ साध्यव्याप्यत्वग्रहविरोधित्वे सति साध्याभावव्याप्यत्वग्रहविरोधि यद्वृत्तिमत्त्वग्रहाविरोधि रूपं तद्वत्त्वमर्थः। साध्याभाववदवृत्तित्वादिमात्रस्य साध्यतदभावोभयव्याप्तिग्रहाविरोधित्वात् साधारण्यादिकमन्यथा निर्वक्ति साध्यतदभावेत्यादिना । असाधारण्यमिति। इदमुपलक्षणम्। केवलान्वयिधर्मावच्छिन्नसाध्यकत्वे सति साध्यतदभाववदवृत्तित्वमनुपसंहारित्वमित्यपि द्रष्टव्यम्। व्याप्तिग्रहेति। साध्यतदभावव्याप्त्योरित्यर्थः। अत्र यादृशविशिष्टविषयकत्वेन ज्ञानस्य व्याप्तिग्रहविरोधित्वं तद्वत्त्वं नार्थः कथितस्य साधारण्यादेरन्यथात्वेनासम्भवापत्तेः, किं तु प्रकृतहेतौ साध्यस्य साध्याभावस्य च व्याप्त्यग्राहकत्वं यादृशविशिष्टविषयकनिश्चयत्वाविरोधि तद्वत्त्व-

व्यर्थविशेषणत्वात् प्रथमं हेत्वाभासत्वाज्ञानाच्च । गग-

———

मसाधारणं, तच्च व्याप्तिद्वयग्रहविरोधीति हृदयम् । असिद्धिविशे-
षस्त्ववृत्तित्वं वृत्तिमत्त्वग्रहविरोधि, साध्यतदभाववद्वयावृत्तत्वमपि
यदीदृशं तदा असिद्धिरेव,नो चेदिदमेवाऽसाधारण्यं बोध्यम् ।
साध्याप्रसिद्ध्यादिवारणाय विशिष्टसाध्यसाधनग्रहाविरोधित्वं वा-
च्यम् । व्यापकसामानाधिकरण्यमिह व्याप्यत्वम् । तेन च द्विती-

———

मेव, प्रमेयत्वादिविशिष्टस्य सपक्षविपक्षवृत्तिहेतोः हेत्वाभासलक्ष-
णोक्तदिशैव वारणीयत्वादिति ध्येयम् । अत्र हेत्वाभासलक्षणोक्तरी-
त्या यादृशविशिष्टविषयकत्वं व्याप्तिद्वयग्रहविरोधितानतिरिक्त-
वृत्ति तादृशमेव फलितार्थो वाच्यः तथा च प्रमेयत्वादिविशिष्टेपि
साध्यतदभाववद्वृत्तेरातिव्याप्तिः, न हि तादृशधर्मान्तराघटितम-
पि शक्यते वक्तु, साध्यतदभाववद्वृत्तित्वादेः साध्याभाववद्वृ-
त्तितादृशधर्मान्तरघटितत्वेनाऽसम्भवापत्तेः, किञ्च साध्यवद्वृत्तित्वा-
द्यग्रहस्य साध्याभावाभावत्वेन साध्याविषयकत्वात् न साध्याभाव-
व्याप्तिग्रहविरोधित्वमित्याशयेनोक्तं हृदयमिति । लक्षणकृतो हृदयं
न त्वस्माकमितीत्यर्थः । असिद्धिविशेष इति । स्वरूपासिद्धिव्या-
प्यत्वासिद्ध्योरन्यतररूप इत्यर्थः । वृत्तिमत्त्वेति । तथा च तद्वार-
णार्थमेव हेत्वाभासपदं वृत्तिमत्त्वग्रहाविरोध्यर्थकमिति भावः । ईदृशं
वृत्तिमत्त्वग्रहविरोधि । तदेति । तथा च वृत्तिमत्त्वग्रहाविरोधीत्यने-
नैव तस्यापि वारणमिति भावः । ननु साध्यतदभाववद्व्यावृत्तत्वस्य
वृत्तिमत्त्वाभावनियतत्वेन गृह्यमाणस्यैव वृत्तिमत्त्वग्रहविरोधित्वं न
स्वरूपतो गृहीतस्येत्यत आह नो चेदिति।इदमेवेति।तथा च निश्चि-
तसाध्यतदभाववद्व्यावृत्तत्वस्य व्याप्तिद्वयग्रहाविरोधित्वेपि न क्षति-
रिति भावः।साध्याप्रसिद्ध्यादीत्यत्रादिना हेत्वप्रसिद्धिसंग्रहः । नन्वत्र
यदि साध्यादिव्याप्यत्वं साध्यादिमन्मात्रवृत्तित्वं तदा द्वितीयनिरु-
क्ताभेद इत्यत आह व्यापकेति । ( न चैव वन्हिमान् वन्हिव्यभिचा-
रिधर्मादित्यादौ साधारणेऽव्याप्तिः धर्मो वन्हिव्याप्य इत्याकारक व-

यस्य भेदः। रीतिस्तुल्यैव। केचित्तु असाधारण्याभावकालाव-च्छिन्नसाध्यतदभावव्याप्तिशून्यत्वं विवक्षितं विशेषणाभावात् वस्तु-तो व्याप्यस्य विरुद्धस्य वा असाधारणस्य संग्रह इत्याहुः। तच्चि-न्त्यम्। व्यर्थेति। विरोधादेर्वारकं साध्याभावेत्यादि व्यर्थं तस्य

---

न्हिव्यभिचारी धर्मो वन्हिव्याप्य इत्याकारकव्याप्तिग्रहन्यूनवृत्तिविष-यताकत्वात् धर्मसामान्यव्यापकतात्वस्य विशिष्टधर्मव्यापकताना-ऽतिरिक्तत्वादिति वाच्यम्।एतदस्वरसेनैव द्वितीयलक्षणस्यादर।दिति भावः।) भेद इत्यस्य प्रथमादित्यादिः, नातः षष्ठ्यर्थासङ्गतिः। साध्यतदभावयोरेकवन्मात्रवृत्तेरपि हेतोर्दशाविशेषे असाधारण-त्वात्तत्संग्रहार्थं द्वितीयलक्षणस्यापि साध्यतदभाववन्मात्रवृत्तित्वग्र-हविरोधिरूपवत्त्वमर्थो वाच्य इत्याह रीतिरिति।द्वितीयस्येत्यनुषज्य-ते। असाधारण्याभावेति। हेतुधर्मिकसाध्यतदभाववद्व्यावृत्तत्वज्ञा-नाभावविशिष्टेत्यर्थः। न च यत्र हेतौ तादृशज्ञानमप्रसिद्धं तत्र सा-धारणेऽव्याप्तिः, तत्र तादृशविशेषणस्यानुपादेयत्वात् साध्यसाधन-भेदेन सव्यभिचारस्य भेदादिति भावः। विशेषणेति। असाधार-ण्याभावकालावच्छिन्नत्वविशेषणाभावादित्यर्थः। असाधारण्यस्य तत्तत्पुरुषनियन्त्रितत्वात् तद्घटितं सव्यभिचारत्वमप्येवं पुरुष-भेदनियन्त्रितं स्यादित्यभिप्रेत्याह तच्चिन्त्यमिति। उक्तस-व्यभिचारेण असाधकतानुमानस्यावश्यकत्वे मानाभावात्तत्र वै-यर्थ्यासम्भवादन्यथा व्याचष्टे विरोधादेरिति। आदिपदादवृ-त्तिमत्त्वपरिग्रहः। साध्याभावेति। साध्याभावव्याप्यत्वादिक-मित्यर्थः। आदिपदादवृत्तिमत्त्वग्रहाविरोधित्वपर्यवसन्नस्य हेत्वाभा-सत्वस्योपग्रहः। नन्वेवमुक्तनिरुक्त्या सव्यभिचारेतरभेदानुमाने विरोधादौ व्यभिचार इत्यत आह तस्येति। विरोधादेरित्यर्थः। वृ-त्तिमत्त्वग्रहाविरोधित्वरूपस्य व्याख्यातहेत्वाभासत्वस्य प्रथमतः सुग्रहत्वादुभयव्याप्तिग्रहविरोधिनां निश्चितसाध्यतदभाववद्व्यावृत्त-त्वमादायैव गगनमनित्यमित्याद्यसाधारणसंग्रहाच्चाह प्रथममित्या-दीति। गगनमित्यादीति च प्रथमव्याख्यानुसारेण। न च नोचेदि-

नमनित्यं शब्दाश्रयत्वादित्यादिबाधविरुद्धसङ्कीर्णासाधारणाव्याप्तिरिति कश्चित् । नापि सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वम्, व्यर्थविशेषणत्वात् अनुपसंहार्य्यव्याप्तेश्च । किञ्च पक्षातिरिक्तसाध्यवतः सपक्षत्वे प्रमेयत्वेनाऽभेदसाधनेऽनुपसंहार्य्येऽव्याप्तिः पक्षातिरिक्तसाध्यवतोऽप्रसिद्धेः, साध्यवतः सपक्षत्वे विवक्षितेऽप्रसिद्धिः, वृत्तिमतो धर्मस्य साध्यवद्विपक्षान्यतरवृत्तित्वनियमात् । नापि पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे

---

पार्थक्ये प्रमाणाभावादिति भावः । प्रथममित्यादि गगनमित्यादि च दूषणं यथाश्रुते । नापीत्यादि । सपक्षविपक्षत्वावच्छिन्नव्यावृत्तत्वं सर्वतद्व्यावृत्तत्वम् । व्यर्थेति । सपक्षवृत्तित्वविपक्षव्यावृत्तत्वयोर्दूषकतायामनुपयोगादिति भावः । पक्षातिरिक्तेत्यादि । व्याप्यविरु-

---

त्यादिकल्पे तत्राव्याप्तिरेवेति वाच्यम् । तत्कल्पे गगनाद्यवृत्तिहेतोरेवाऽसाधारणतया तस्याऽलक्ष्यत्वादिति भावः । यत्रैकव्यक्तिकमेव सपक्षादिकं तत्र सर्वपदार्थाप्रसङ्गरव्याप्तिरतो व्याचष्टे सपक्षविपक्षत्वावच्छिन्नेति।साध्यस्य तदभावस्य च यत्र यत्र निश्चयस्तत्तद्धर्मिव्यावृत्तत्वमित्यर्थः । उक्तान्यतरत्वेन सव्यभिचारेतरभेदानुमाने व्याप्यतावच्छेदकान्तरासम्भवान्न तत्र व्यर्थविशेषणत्वमतो दूषकतायां तद्योजयति सपक्षेत्यादि । व्याप्यविरुद्धयोरित्यस्य पक्षनिष्ठयोरित्यादिः । तेन वन्हिरनित्यः शब्दत्वादित्याद्यसाधारणस्य पक्षातिरिक्तत्वविशेषणादसंग्रहेपि न क्षतिः । संग्रहायेति । शब्दोऽनित्यः शब्दत्वादित्यत्र व्याप्यस्य हेतोः साध्यवन्मात्रवृत्तित्वेपि पक्षातिरिक्तन्मात्रवृत्तित्वाभावात् एवं शब्दो नित्यः शब्दत्वादित्यत्र विरुद्धस्य

सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम्, अनुपसंहार्यव्याप्तेः धूमादावतिव्याप्तेश्च तस्य पक्षे साध्यवति वृत्तेः । नापि पक्षवृत्तित्वे विरुद्धान्यत्वे च सत्यनुमित्यौपयिकसम्बन्धशून्यत्वम्, व्यर्थविशेषणत्वात् । ए-

———

द्वयोरसाधारणयोः संग्रहाय पक्षातिरिक्तपदे । पक्षत्व सन्दिग्धसाध्यकत्वम् । धूमेसादिदूषणं यथाश्रुते न तु सप्तमीसमासात् पक्षातिरिक्ते वर्त्तते यत्साध्यवन्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तद्भिन्नत्वमित्यर्थ इति ध्येयम् । पक्षवृत्तीत्यादि । विरोधः साध्यासा-

———

हेतोः साध्याभाववन्मात्रवृत्तित्वेपि पक्षातिरिक्ततन्मात्रवृत्तित्वाभावादुभयोरसाधारणयोः संग्रहायेत्यर्थः । पक्षत्वं यदि प्रकृतपक्षतावच्छेदकधर्मवत्त्वं तदा द्रव्यत्वरूपेण पर्वते धूमसन्देहदशायां द्रव्यं धूमवद्वन्हेरित्यादिसाधारणेऽव्याप्तिः द्रव्यान्यधूमवदप्रसिद्धेरत आह पक्षत्वमिति । तथा च तत्र साध्यसन्देहविषयीभूतद्रव्यान्यमहानसादेरेव धूमवत्त्वान्न दोषः । न चैवं द्रव्यसामान्ये धूमवत्त्वसन्देहदशायां तथाप्यप्रतीकार इति वाच्यम् । एतद्दोषस्यानुपसंहार्यव्याप्तेरित्यादिना मूल एव वक्ष्यमाणप्रायत्वादिति भावः । यथाश्रुते पक्षातिरिक्तो यः साध्यवान् तन्मात्रवृत्तिभिन्नत्वे सतीत्याद्यन्वये । इत्यर्थ इति । न तु दूषणमित्यन्वयः । धूमस्य पर्वतातिरिक्तसाध्यवन्मात्रे च वर्तमानत्वेन तदन्यत्वाभावादिति भावः । न चैवमपि पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यत्वमित्यत्र कर्मधारयत्यागानौचित्यमिति वाच्यम् । कुलीनोऽश्वो गौरश्वत्वादित्यत्र विरुद्धहेतावतिव्याप्तेः । तस्य पक्षेपि वृत्त्या पक्षातिरिक्तो यः साध्याभाववांस्तन्मात्रवृत्त्यन्यत्वादिति भावः । विरोधो यदि साध्याभावव्याप्यत्वं तदा तदन्यत्वस्य साध्यासामानाधिकरण्येपि सत्त्वा-

तेनानुगतं सर्वमेव लक्षणं प्रत्युक्तम्, प्रत्येकमेव दूषणत्वात् उद्भावने वादिनिवृत्तेश्च ॥

———

मानाधिकरण्यम् । पक्षवृत्तित्वसाध्यसामानाधिकरण्यग्रहाविरोधी योऽनुमितेरौपयिकस्य जनकज्ञानविषयस्य सम्बन्धस्य सपक्षसत्त्वादेरभावस्तद्वत्त्वमित्यर्थः । सपक्षविपक्षव्यावृत्तत्वस्य चासाधारण्यस्य असाधारण्यनिश्चये पक्षे साध्यसामानाधिकरण्यसन्देहान्न तस्य तज्ज्ञानविरोधित्वम् । पक्षवृत्तौ विरुद्धभिन्ने च वर्त्तते यस्तादृशाभावस्तद्वत्त्वमर्थ इति केचित् ॥

———

तत्रातिव्याप्तिरतोऽन्यथा व्याचष्टे विरोध इति । ननु साध्याभावव्याप्यत्वस्य विरोधत्वे विरुद्धान्यत्वेति व्यर्थं तस्याऽनुमित्यौपयिकसम्बन्धाभावत्वाभावादत आह विरोध इत्यपि वदन्ति । पक्षावृत्तिसव्यभिचारे विरुद्धात्मकासाधारणे च यथाश्रुतस्याव्याप्तेराह पक्षवृत्तित्वेति । अनुमितेरौपयिकत्वं जनकत्वं तच्च न सपक्षवृत्तित्वादेरतोऽन्यथा व्याचष्टे जनकज्ञानविषयस्येति । तत्रानुमितिपदं तत्कारणपरामर्शपरं तेनाऽबाधितत्वासत्प्रतिपक्षितत्वयोरनुमित्यौपयिकत्वपक्षेपि बाधितत्वादौ नातिप्रसङ्गः । ननु सपक्षासत्त्वमेवाऽसाधारण्यं साध्यसामानाधिकरण्यग्रहविरोधीति तन्नाव्याप्तिरत आह सपक्षविपक्षव्यावृत्तत्वस्य चेति । निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य चेत्यर्थः । असाधारण्यस्येति । प्राचां मते इत्यादिः । पक्ष इति । सप्तम्यर्थोऽवच्छेदकत्वं तथा च पक्षावच्छेदेनेत्यर्थः । तस्य सपक्षव्याप्तत्वस्य । तथा च सुतरां विपक्षव्यावृत्तत्वस्य न तथात्वमतो न तत्राव्याप्तिरित्याशयः । तेन सपक्षव्यावृत्तत्वमात्रस्यैवानुमित्यौपयिकाभावत्वरूपाभावत्वादुभयव्यावृत्तत्वाभिधानस्य नासङ्गतिरिति ध्येयम् । तज्ज्ञानेति । साध्यसामानाधिकरण्यज्ञानेत्यर्थः । तादृशाभावः अनुमित्यौपयिकसम्बन्धाभावः । अत्र ह्रदो धूमवान् वन्हेरि-

उच्यते । उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वम् । तच्च साधारणत्वादि ।

---

पूर्वोक्तलक्षणानां यथोक्तरीत्या यथामतं नाव्याप्त्यादिसम्भावना परन्तु तज्ज्ञानस्यानुमित्यप्रतिबन्धकतया तेषां हेत्वाभासतावच्छेदकत्वं न घटते, न घटतां किन्तेन, तेषां हेत्वाभासविभागमात्रोपयोगित्वादित्याशयेनाह उच्यत इति । सन्देहं प्रसेव साधा-

---

त्यत्र साधारणेऽव्याप्तिः ह्रदवृत्तौ वर्तते यत् साध्याभाववत्संयुक्तत्वं तस्य वन्ह्यावभावात्, किञ्च पक्षवृत्तित्वमवश्यं हेतुताघटकसम्बन्धेन वाच्यम्, अन्यथा पक्षधर्मत्वाभावस्य सम्बन्धान्तरेण यत्पक्षवृत्ति तन्निष्ठतया तत्राव्याप्तितादवस्थ्यात्, तथा च रूपं धूमवद्वन्हेरित्यादावव्याप्तिः संयोगेन रूपवृत्त्यप्रसिद्धेरित्यस्वरसः केचिदित्युक्त्या सूचितः ॥

इति जागदीश्यां सव्यभिचारलक्षणपूर्वपक्षग्रन्थः समाप्तः ।

---

## अथ सव्यभिचारसिद्धान्तः ।

---

ननु यद्रूपवत्ताज्ञानमनुमितिविरोधि तस्यैव विभाजकत्वात् वक्ष्यमाणलक्षणस्य चाऽतथात्वादुच्यत इत्यादिकमसङ्गतम् अन्यथा प्रागुक्तलक्षणानामपि सम्यक्त्वे तत्परित्यागानौचित्यादत आह पूर्वोक्तेत्यादि। यथामतमिति । तेन सत्प्रतिपक्षोत्थापकत्वेनासाधारणस्य दूषकत्वपक्षे साध्यसन्देहजनकत्वाद्युक्तलक्षणस्य तत्राव्याप्तावपि न क्षतिः । साध्यसंशायकत्वेन दोषतामवलम्ब्यैव तल्लक्षणाचतारादिति भावः । हेत्वाभासता अनुमितिविरोधिता । विभागमात्रेति । अतिप्रसङ्गस्य मूलकतैव स्वतन्त्रेच्छाया इत्यादिना निवेश्यत्वादिति भावः । इत्थ-

रण्यादिविशिष्टधर्मवद्धर्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थि-
तिं प्रति तु तादृशधर्मज्ञानत्वमात्रेणेत्यभिप्रेत्याह उभयेति। साध्य-
सन्देहजनकेति प्रकृतम्। यथाकथञ्चित् कोटिद्वयोपस्थितिः स्मृ-
त्यनुभवसाधारणी सन्देहजननी, नियामकन्तु साधारण्यादिविशि-

---

णुक्तं नित्यमणुत्वादित्यादौ धर्मिवाचकस्य प्रागुक्तपक्षधर्मताज्ञानप-
दस्य त्यागे बीजमाह सन्देहमित्यादिना। तज्जनकेति। साध्यसन्दे-
हजनकेत्यर्थः। तादृशेति। साधारण्यादिविशिष्टधर्मज्ञानत्वमात्रेणेत्य-
र्थः। तथा च धर्मिणः कोटयुपस्थापकतावच्छेदकत्वाभावादेव न
तत्रातिव्याप्तिरतः पक्षधर्मतापदं परित्यक्तमिति भावः। ननु वस्तु-
गत्या साध्यतदभावोपस्थितिं प्रति जनकत्वे साध्यादिमत्त्वज्ञान-
त्वेनापीति तत्रातिव्याप्तिः तदुभयोपस्थितित्वावच्छिन्नं प्रति जनक-
त्वं तु न साधारण्यादिविशिष्टधर्मज्ञानत्वेनापीत्यव्याप्तिरत आह
साध्यसन्देहेति। प्रकृतमिति। प्रक्रमप्राप्तमित्यर्थः। तथा च स्था-
णुत्वतदभावसहचरितोर्ध्वत्वविशिष्टेदंधर्मिकस्थाणुत्वसन्देहजनक-
स्थाणुत्वतदभावस्मृतित्वावच्छिन्नं प्रति स्थाणुत्वतदभावसहचरि-
तत्वविशिष्टोर्द्धत्वज्ञानत्वेन हेतुत्वात् स्थाणुत्वसाधारण्यं तादृशोप-
स्थितिजनकतावच्छेदकमिति तत्र लक्षणसङ्गतिः, एवमसाधारण्यपि
नेयमिति भावः। नव्यमतेन व्याख्यातुमुक्तव्याख्यायामसम्भवं
दर्शयति यथाकथञ्चिदिति। साधारण्यादिज्ञानाधीना तदनधीना
चेत्यर्थः। विशेषणज्ञानविधयैव सन्देहकोटयुपस्थितेरुपयोगादिति
भावः। नन्वेवं कोटिद्वयस्य ज्ञानमात्रादेव संशयः स्यादत आह नि-
यामकन्त्विति। तथा च स्थाणुत्वतदभावसहचरितोर्ध्वत्वविशिष्टे-
दंधर्मिकस्थाणुत्वसंशयं प्रति इदंधर्मिकस्थाणुत्वतदभावसहचरितो-
र्ध्वत्ववत्तानिश्चयत्वेन हेतुत्वान्नातिप्रसङ्गः। विशिष्टान्तोपादानादसा-
धारणादिधर्मवत्ताज्ञानजन्ये स्थाणुत्वसंशये न व्यभिचारः। स्थाणु-
त्वसाधारणोर्ध्वत्ववानयं स्थाणुर्न वेत्येव संशयोत्पादाच्च नाप्रसिद्धिः।
अत एव स्वाश्रयोत्तरतृतीयक्षणवृत्तीत्यादिहेतुव्याख्यायां संशयस्य
स्वजनकज्ञानविषयीभूतसाधारण्यादिविशिष्टधर्मविषयकत्वनियमः

ष्टधर्मवत्ताज्ञानम्, अत एव धारावाही सन्देह इति मते तु धर्मितावच्छेदकविशिष्टं धर्मिणि यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वमेव वक्तव्यम्। कोटिद्वयसहचरितत्वादिना ज्ञातस्य ऊर्ध्वत्वादेरूर्ध्वत्वत्वादिना धर्मिणि ज्ञानमेव संशयजनकं न तु तदानीं साहचर्यज्ञानमपेक्षते इति नये तु यद्रूपविशिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं तथा तद्रूपत्वमेव वाच्यम्। तच्चेति।

---

प्रत्यक्षालोकेऽप्युक्तः। अत एवेति। कोट्यनुभवस्यापि हेतुत्वादेवेत्यर्थः। अन्यथा साधारण्यादिविशिष्टधर्मिधीजन्यायाः कोटिस्मृतेरन्तरापेक्षायां सन्देहस्य धारावाहिकत्वं न स्यादिति भावः। धर्मितेत्यादि। किंचिद्रूपावच्छिन्नधर्मिताकयद्रूपावच्छिन्नप्रकारताकज्ञानत्वं साध्यसन्देहजनकतावच्छेदकं तद्रूपवत्त्वमर्थः। तत्र जनकत्वं न स्वरूपसम्बन्धविशेषः साधारणत्वाद्यभानेऽपि ताद्रूप्येण वस्त्वन्तरावगाहिभ्रमादपि साध्यसन्देहादव्याप्तेः, किं त्वनतिरिक्तवृत्तित्वम्, न च साधारणत्वाद्यवच्छिन्नप्रकारताकत्वमात्रं तथेत्यतो धर्मिताकान्तम्। तादृशावच्छेदकान्तराद्यघटितत्वेन विशेषणीयत्वाच्च न प्रमेयत्वादिविशिष्टसाधारण्यादावव्याप्तिः। वक्तव्यमिति। उभयकोट्युपस्थापकेत्यत्र मूले संशयरूपाया एवोभयकोट्युपस्थितेर्ग्रन्थकृताभिप्रेतत्वादिति भावः। मतान्तरमाह कोटिद्वयेत्यादि। यद्रूपेण सहचारादिग्रहस्ताद्रूप्येणैव धर्मिणि ज्ञानं संशयहेतुः अन्यथाऽतिप्रसङ्गादित्याशयेनाह ऊर्ध्वत्वत्वादिनेति। तदानीं सन्देहदशायाम्। तथा चतन्धर्मिकस्थाणुत्वसंशयं प्रति ऊर्ध्वत्वविशेष्यकस्थाणुत्वतदभावसहचारगोचरसंस्कारविशिष्टतन्धर्मिकोर्ध्वत्वनिश्चयत्वेन हेतुत्वम्। असाधारण्यादिसंस्काराप्रयोज्यत्वेन कार्यविशेषणाच्च न व्यभिचारः। न चैव सहचारादिगोचरानुद्बुद्धसंस्कारदशायामपि संशयापत्तिः, संस्कारानुद्बोधकालीनज्ञानव्यक्तीनामपि विशिष्य संशये प्रतिबन्धकत्वोपगमादिति भावः। नये त्विति। तुकारोऽनास्थायाम्। साधारण्यादिविशिष्टधर्मवत्तानिश्चयत्वेन प्रागुक्तलघुरूपेण हेतुतामपेक्ष्योक्तक्रमेण हेतुतायामतिगौरवादिति भावः। तथा साध्यसन्देह-

ननु असाधारण्यं न साध्यतदभाववद्व्यावृत्तत्वम्, वृत्तिमतस्तथात्वा-
सम्भवात् एककोटिव्याप्यस्यैव एककोटिमद्व्यावृत्तस्यापि धर्मस्य
बुद्धेर्विशेषदर्शनतया संशयविरोधित्वाच्च । सत्प्रतिपक्षे च पराम-

---

जनकम् । तथा चोर्ध्वत्वधर्मिकयद्रूपावच्छिन्नप्रकारताकसंस्कार-
विशिष्टस्थाणुत्वादिनिश्चयत्वं साध्यसन्देहजनकतावच्छेदकं तद्रूप-
वत्त्वमर्थः । इदं च संस्कारस्य स्मृतिमात्रहेतुताप्रवादमनुसृत्योक्तम् ।
यदा तु स्थाणुत्वादिसंशयं प्रति इदंधर्मिकोर्ध्वत्वादिनिश्चयः स्थाणु-
त्वतदभावसहचरितोर्ध्वत्वसंस्कारश्च द्वयमेव विनिगमनाविर-
हाद्धेतुरिति पक्षस्तदा साध्यसंशयत्वावच्छिन्नं प्रति यद्रूपावच्छिन्न-
प्रकारताकसंस्कारत्वेन यद्रूपावच्छिन्नप्रकारताकत्वेनैव वा हेतुत्वं
तद्रूपवत्त्वमेव वक्तव्यमित्यवधेयम् । तच्च साधारणत्वादीत्यस्यान-
न्तरमेव विरुद्धान्यत्वादिमूले मन्थानो धत्ते तच्चेत्यादि ।

लक्षणान्तरमवतारयितुं साधारणत्वादीत्यत्रादिपदोपगृही-
तमसाधारणत्वं प्रतिक्षिपति नन्विति । वृत्तिमत इति ।
तथा च शब्दोऽनित्यः शब्दत्वादित्यादिकं दशाविशेषे असा-
धारणं न स्यादिति भावः । ननु अवृत्तिगगनादिकमेवासा-
धारणं भविष्यतीत्यत आह एककोटीति । तथा च साध्य-
तदभाववद्व्यावृत्तत्वनिश्चयदशायां साध्यसंशयविरोधिनः साध्य-
वद्व्यावृत्तधर्मवत्तानिश्चयस्यावश्यकत्वान्न तस्य संशयजनकत्वमि-
त्यभिप्रायः । यद्यपि तृतीयव्याख्यायां नैष दोषः संशयदशायामसा-
धारण्यादिज्ञानस्य तत्रानपेक्षणात्, तथापि गौरवादिदोषेण तत्क-
ल्पस्याऽनादेयत्वात् [illegible] यद्रूपावच्छिन्नवत्ताज्ञानत्वेन संशयज-
नकत्वं तद्रूपवत्त्वमित्यादिकल्प एवास्थेय इत्याशयेन तत्रैव दूषण-
मिदं दत्तमिति द्रष्टव्यम् । ननु यथा साध्यपरामर्शाभावविशिष्टस्यैव
साध्याभावपरामर्शस्य साध्यसंशयविरोधित्वमन्यथा सत्प्रतिपक्षि-
तस्थले साध्यसंशयानुपपत्तेः तथा च साध्याभाववद्व्यावृत्तधर्मव-
त्ताज्ञानाभावविशिष्टस्यैव साध्यवद्व्यावृत्तधर्मवत्ताज्ञानस्य तथात्व-
मित्युभयव्यावृत्तधर्मवत्ताज्ञानदशायां साध्यसंशये बाधकाभाव

र्शाप्रामाण्यसंशयोत्तरमेव साध्यसन्देहात। नापि निश्चितसाध्यवद्भावद्व्यावृत्तत्वम्। तद्धि यत्र यत्र साध्यादिमत्तानिश्चयस्तद्व्यावृत्तत्वं, येन येन रूपेण यत्र यत्र तन्निश्चयस्तेन तेन तद्व्यावृत्तत्वं वा। आद्ये सर्वाणि साध्यव्याप्यवन्ति साध्यवन्ति सर्वाणि वा साध्यवन्ति प्रमेयाणीत्यादिनिश्चये सामान्यतः पक्षेऽपि साध्यादिनिश्चयादतथात्वप्रसङ्गः। द्वितीये तु विशिष्य पक्षे साध्यनिश्चयं

———

इत्यतो दृष्टान्तासिद्धिमाह सत्प्रतिपक्ष इति। परामर्शयोः प्रामाण्यसंशयोत्तरमेव तत्र साध्यसंशयो न त्वगृहीताप्रामाण्यकयोरपि परामर्शयोः सत्त्वे इत्येवकारार्थः। येनेत्यादि। यद्यद्धर्मावच्छिन्नविशेष्यकः साध्यादिमत्तानिश्चयः तत्तद्धर्मावच्छिन्नव्यावृत्तत्वमित्यर्थः। साध्यव्याप्यवन्ति सर्वाणि साध्यवन्तीति दोषस्य द्वितीयकल्पेऽप्यविशिष्टत्वात् प्रथमकल्पमात्रीयं दूषणमाह सर्वाणि वा साध्यवन्ति प्रमेयाणीति। साध्यवत्त्वस्यावच्छेदकत्वस्फोरणार्थं सर्वपदम्। तेन साध्यवत्त्वांशे धर्मितावच्छेदकाभावान्न द्वितीयवितर्कसाधारण्यमित्यवधेयम्। सामान्यतः साध्यव्याप्यवत्त्वावच्छेदेन। अतथात्वेति। अनित्याद्घटादेः नित्याच्च गगनादेः व्यावृत्तं शब्दत्वमिति ग्रहेऽपि शब्दत्वादेरसाधारण्याभासत्वप्रसङ्गः पक्षव्यावृत्तत्वस्याऽग्रहादिति भावः। विशेषतः शब्दत्वावच्छेदेन साध्यनिश्चयसत्त्वे शब्दत्वादिहेतोः तदवच्छिन्नव्यावृत्तत्वाभावादेव नातिव्याप्तिरत उक्तं विशिष्येति। तथात्वापत्तिरिति। शब्दत्वस्यानित्यत्वव्याप्यतानिश्चयदशायामपि नित्याद्गगनादेरनित्याच्च घटाद्व्यावृत्तं शब्दत्वमितिज्ञानसम्भवात्तदानीमसाधारणत्वापत्तिरिति भावः। न च व्याप्तिज्ञाने अधिकरणत्वविशिष्टांशे साध्यनिश्चयात्तदवच्छिन्नव्यावृत्तत्वस्य च हेतावभावान्नातिव्याप्तिरिति वाच्यम्। येन रूपेणेत्यत्राधिकरणत्वादिभिन्नस्यैव रूपस्य प्रवेश्यत्वात्। अन्यथा अधिकरणं साध्यवत् अधिकरणवृत्तिश्च हेतुरित्येवंग्रहदशायामसाधारण्याव्याप्तिप्रसङ्गात्। साध्यसामानाधिकरण्यादौ साध्यादिमात्रप्रकारणैव तदधिकरणस्य भानसम्भवाच्चेति भावः। शङ्कते नैष दोष इति। विशेषलक्षणस्ये-

विनैव शब्दादिना साध्यव्याप्यत्वनिर्णयेऽपि तथात्वापत्तिः। नैष दोषो यादृशव्याप्तिग्रहे सति नासाधारण्यं तद्ग्रहाभावेन विशेषलक्षणस्य साधारण्याभावविशिष्टस्य तद्ग्रहस्य चाभावेन सामान्यलक्षणस्य विशेषणादतिव्याप्तिनिरासात्, विशिष्टाभावादेव च साधारण्ये व्याप्तिभ्रमदशायां नाव्याप्तिरिति चेत्। एवं सत्येकेन व्याप्तौ गृहीतायामसाधारणस्य न किञ्चिदपि प्रति सव्यभिचारित्वं स्यात्, स्याद्वा तदपि तत्तत्पुरुषघटितमसाधारण्यवत्, साध्यादिव्या-

---

ति। तत्तद्धर्मावच्छिन्नविशेष्यकसाध्यवत्तानिश्चयकालीनस्य तत्तद्धर्मावच्छिन्नव्यावृत्तत्वरूपस्य असाधारणलक्षणस्येत्यर्थः। विशेषणादतिव्याप्तिनिरासादित्यग्रे अन्वयः। तद्ग्रहस्य तादृशव्याप्तिग्रहस्य। सामान्यलक्षणस्येति। साध्यसन्देहजनकतावच्छेदकधर्मवत्त्वरूपस्य सव्यभिचारलक्षणस्येत्यर्थः। नाव्याप्तिरिति। साधारणे व्याप्तिग्रहदशायामपि साधारण्याभावविशिष्टस्य व्याप्तिग्रहस्य विषयतासम्बन्धेनाऽभावानपायादिति भावः। सामान्यलक्षणे दोषमाह न किञ्चिदिति। साधारण्याभावविशिष्टस्यैव व्याप्तिग्रहस्य तत्र सत्त्वादिति भावः। ननु तत्पुरुषीयव्याप्तिग्रहाभावविशिष्टं साध्यसन्देहजनकतावच्छेदकरूपवत्त्वं तत्पुरुषस्य सव्यभिचारत्वं वाच्यमत आह स्याद्वेति। तदपि सव्यभिचारत्वमपि। तथा च यत्र साधारणे हेतौ कस्यापि व्याप्तिभ्रमो न जातः स कस्यापि पुंसः सव्यभिचारः असाधारण्यादेस्तद्व्याप्यधर्मत्वेन विभाजकत्वं वा न स्यादिति भावः। विशेषलक्षणे दोषमाह साध्यादिव्याप्येति। आदिपदाभ्यां साध्याभावोपग्रहः। अव्याप्तिप्रसङ्गादिति। अनित्यत्वादिव्याप्यवद्व्यावृत्तत्वस्य शब्दत्वादावभावादिति भावः। ननु साध्यव्याप्यवत्त्वावच्छिन्ने साध्यवत्तानिश्चयदशायां सद्धेतोरसाधारणत्वाभावेपि न क्षतिः तत्राऽसाधारणत्वभ्रमादेव साध्यसंशयोत्पादादित्यतः तद्भ्रमं निरस्यति न हीति। शब्दस्यानित्यत्वव्याप्यवत्तासन्देहदशायां शब्दत्वेप्यनित्यत्वव्याप्यवद्वृत्तितासन्देहस्यौचित्यावर्जितस्योत्पत्तेरिति

विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धा-

---

प्यवत्त्वेन रूपेण साध्यादिमत्त्वनिश्चयेऽव्याप्तिप्रसङ्गाच्च । न हि घटोऽनित्यो घटाद्व्यावृत्तं शब्दत्वमित्यवत् अनित्यत्वव्याप्यवतो व्यावृत्तं शब्दत्वमिति तदानीं निश्चयः । अभिहितश्च निश्चितसाध्यतदभाववद्व्यावृत्तत्वं न संशयप्रयोजकं किन्तु साध्यतदभावाभ्यां सहचरितत्वमिव तत्सहचरिताभावप्रतियोगित्वम्, व्याप्यविरुद्धयोस्तु तत्त्वेन निश्चितयोर्दर्शने विशेषदर्शनवशादेव न संशय इति विभाव्य लक्षणान्तरमाह विरुद्धान्येति । विशिष्टसाध्यहेतुसामानाधि-

---

भावः । ननु येन येन रूपेण साध्यवत्तानिश्चय इत्यत्र रूपं साध्यव्याप्यवत्त्वादिभिन्नं ग्राह्यमतो नोक्ताव्याप्तिरित्यत आह अभिहितं चेति। न संशयेति । तथा च तदुपादायाऽसाधारणे सव्यभिचारनिरुक्त्यन्वयो दुर्घट इति भावः । तर्हि संशयप्रयोजकमसाधारण्यं दुर्वचमत आह किं त्विति । तत्सहचरितेति । साध्यतदभावाभ्यां सहचरितो योऽभावः तत्प्रतियोगित्वमित्यर्थः । तच्च वन्हिसाध्यके धूमादिसद्धेतावतिप्रसक्तमतो न ताद्रूप्येणासाधारणस्य सव्यभिचारत्वसङ्गतिरिति भावः । ननूक्तधर्मस्य संशयप्रयोजकत्वे साध्यव्याप्यत्वेन तद्विरुद्धत्वेन वा गृहीतस्यापि हेतोर्धर्मिणि निश्चये तत्र साध्यसंशयः स्यात्तदानीमपि तादृशाभावप्रतियोगित्वधीसम्भवादित्यकामेनापि निश्चितसाध्यतदभाववद्व्यावृत्तत्वमेव तथा वाच्यमत आह व्याप्येत्यादि । तत्त्वेन व्याप्यत्वेन विरुद्धत्वेन चेत्यर्थः। दर्शन इत्यस्य धर्मिणीत्यादिः । तथा च प्रतिबन्धकान्तरसत्त्वादेव तदानीं सन्देह इति भावः । लक्षणान्तरं विरुद्धान्येत्यादिरूपम् । विरोधस्यापि विरुद्धान्यत्वात्ताद्रूप्येण सव्यभिचारत्वापत्तिरतो व्याचष्टे विरुद्धान्येतीति । सतिसप्तम्या विरोधान्यत्वसमानाधिकरणस्य अनुमितिविरोधिरूपस्य बाधसम्भवादाह अर्थत इति । सामानाधि-

करण्यग्रहाविरोध्यर्थकमर्थतो विरोधिविशेषणम् । तेन साध्यसाधनयोरसिद्धेरवृत्तित्वस्य परम्परासामानाधिकरण्यादीनाञ्च निरासः। पक्षपदञ्च धर्मिमात्रपरम् । तथा च यत्रद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वमित्यर्थः । साध्यव्यापकीभूताभावप्रतियोगित्वन्तु तथा, बाधप्रतिरोधौ तु धर्मिविशेषितत्वात् न तादृशौ । सर्वं साध्याभाववत् तद्व्याप्यवद्वेत्यादिकञ्च साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधि साध्यानु-

---

करण्यवाचिकाया अपि सप्तम्याः प्रकृते अधिकरणत्वमर्थ इति भावः । विरोधान्यत्वमुपेक्ष्य ज्ञानगर्भानुगतरूपोक्तेः फलमाह तेनेति । साध्यसाधनयोरित्यस्य त्रिष्वेवान्वयः । आदिना साध्यसमानाधिकरणभिन्नत्वादेः परिग्रहः । पक्षतानिवेशे वैयर्थ्यादाह पक्षपदं चेति । बाधप्रतिरोधयोर्वारणार्थं तात्पर्यार्थमाह तथा चेति । तथा च प्रकृतहेतुकसाध्यानुमितिसामान्यविरोधिरूपवत्त्वमर्थः । हेतोः साध्याभाववद्वृत्तित्वादिग्रहे कुत्रापि तद्धेतुकसाध्यानुमित्यनुदयात्साधारण्यादौ लक्षणसङ्गतिरिति भावः । असाधारण्ये लक्षणं ग्राहयति साध्यव्यापकेत्यादि । तथा तद्धेतुसाध्यकानुमितिसामान्यविरोधि । हेतोस्तादृशप्रतियोगित्वग्रहे कुत्रापि तद्धेतुकतत्साध्यकानुमित्यनुदयान्मणिमन्त्रादिन्यायेनैव तद्ग्रहस्य तथात्वमित्यभिमानः । वस्तुतो यद्यद्धर्मिकयादृशरूपविशिष्टप्रकृतहेतुमत्तानिश्चयत्वं तत्तद्धर्मिकतत्साध्यतद्व्याप्यप्रकृतहेतुमत्तानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशरूपवत्त्वं यद्धर्मिवृत्तित्वमित्यादेरर्थ इति साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानस्य मणिमन्त्रादिन्यायेनाविरोधित्वेऽपि तत्र लक्षणं सुघटमेवेति ध्येयम् । धर्मिविशेषितत्वात् तत्तद्धर्मिकसाध्यानुमितिं प्रत्येव विरोधित्वात् । न तादृशौ न प्रकृतहेतुकसाध्यानुमितिसामान्यविरोधिनौ । ननु सर्वं गगनवद्वाच्यत्वादित्यस्य बाधे प्रतिपक्षे च गगनाभाववत्सर्वादावतिव्याप्तिः तस्यापि प्रकृतहेतुकसाध्यानुमितिसामान्यविरोधित्वादत आह साध्यवत्त्वग्रहेति । साध्यवत्त्वांशग्रहे-

व्यावृत्तिर्वा । तेनैव रूपेण ज्ञातस्य प्रतिबन्धकत्वात् परस्य तथैवोद्भावनाच्च लक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वम् ।

---

मितिसामान्यविरोधित्वं वा विशेषणम् । तेनैवेति । तेन अनुमितिविरोधिना विपक्षवृत्तित्वादिना।एवकारेणानुगमकं रूपं व्यवच्छिद्य तस्य हेत्वाभासतावच्छेदकत्वं निरस्यति हेत्वाभासलक्षणानुरो-

---

ध्यर्थः । तथा च विरोध्यन्तर्भावेनैव तद्धारणमिति भावः । ननु साध्यवत्त्वांशे निरुद्धर्मितावच्छेदके साध्यवदवृत्तित्वस्य ग्रहे सर्वं साध्याभाववदिति निश्चयस्य विरोधित्वे मानाभावः किञ्चिद्धर्मावच्छिन्नविशेष्यताकग्रहं प्रत्येव बाधादिनिश्चयस्य विरोधित्वादत आह साध्येति । प्रकृतसाध्यकानुमितिसामान्येत्यर्थः । तेन सर्वं गगनाभाववदित्यादिबोधस्य द्रव्यत्वादिप्रकारेण गगनानुमितेरविरोधित्वेपि न तत्रातिव्याप्तिः । व्यभिचारादेस्त्वन्यहेतुकसाध्यानुमित्यविरोधित्वादेव संग्रह इति भावः । यद्यपि सर्वं गगनाभाववदिति ज्ञानस्य घटो गगनवानित्यनुमितिविरोधित्वाभावादनुमितिसामान्याविरोधित्वमस्त्येव, तथापि मणिमन्त्रादिन्यायेन तज्ज्ञानस्य प्रतिबन्धकत्वं समानविशेष्यतया वा प्रतिबन्धकत्वमित्याशयः । तत्पदेन त्वनयानुगमकधर्मस्य परामर्शे तज्ज्ञानस्याऽनुमित्यप्रतिबन्धकत्वादसङ्गतिरतो विरोधिनं परामृशन्नाह अनुमितिविरोधिनेति । तदेव विवृणोति विपक्षेत्यादिना । ननु विपक्षवृत्तित्वाभिन्नेन स्वरूपासिद्धित्वरूपेणापि ज्ञानस्यानुमितिप्रतिबन्धकत्वात्तेनैवेति मूलमसङ्गतम्, एवं विपक्षवृत्तित्वादिप्रत्येकभिन्नस्यापि स्वरूपासिद्धत्वात्प्रत्येकमेव हेत्वाभासत्वमित्यादिमूलं तथेत्यत आह एवकारेणेति । तेनैवेत्येवकारेणेत्यर्थः । अनुगमकं रूपं व्यवच्छिद्येति । अनुगमकरूपवत्तया ज्ञातस्यानुमितिप्रतिबन्धकत्वा-

यद्वा साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाव-वन्मात्रवृत्त्यन्यत्वम् । तेनासाधारणस्य साध्यतदभावो-पस्थापकतया दूषकत्वपक्षे नाव्याप्तिः । न चैवमाधिक्ये विभागव्याघातः, स्वरूपसताऽनुगतरूपेण त्रयाणामेकी-कृत्य महर्षिणा विभागकरणात् । न चैवं साध्याभाव-ज्ञापकत्वेन बाधप्रकरणसमयोस्तदज्ञापकतयान्येषामुपसं-

---

धनेति । तेनानुमितिविरोधित्वघटितलक्षणकरणेन असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषणत्वपक्षे नाव्याप्तिरितरथा पुनरव्याप्ति-

---

भावं प्रतिपाद्येत्यर्थः । तस्य त्रितयानुगमकरूपस्य । हेत्वाभासत्वा-वच्छेदकत्वम् अनुमितिविरोधितावच्छेदकत्वम् । तथा च विपक्षवृ-त्तित्वादिप्रत्येकरूपेण ज्ञानस्याऽनुमितिप्रतिबन्धकत्वाद्धेत्वाभासलक्ष-णानुरोधेन तत्प्रत्येकस्यानुमितिप्रतिबन्धकतावच्छेदकत्वं प्रत्येकरू-पभिन्नेन त्रितयानुगमकरूपेण ज्ञानस्यानुमित्यप्रतिबन्धकत्वान्न त्रित-यानुगमकरूपस्यानुमितिप्रतिबन्धकतावच्छेदकत्वमिति तेनेत्या-दिसंवलितमूलस्याऽर्थ इति भावः । विपक्षवृत्तित्वादिप्रत्येकधर्म-स्यानुमितिप्रतिबन्धकत्वं न वस्त्वन्तरस्य लक्षणानुरुद्धमतो हेत्वा-भासपदं पूरयित्वा धत्ते हेत्वाभासलक्षणानुरोधेनेति । इदन्तु चि-न्त्यते । पक्षवृत्तित्वाविशेषितस्य साध्यव्यापकीभूताभावप्रतियोगि-त्वादिमात्रस्य हेत्वाभासतावच्छेदकत्वाभावेन तन्मात्रस्याऽसाधार-ण्यस्वीकारो नोचित इति । ननु यथाश्रुतस्य तेनेत्यादिमूलस्य द्वितीयादिलक्षणास्वरसव्यञ्जकत्वे सन्दर्भविरोधः प्रथमत एवाऽस्वरसमु-द्भाव्य लक्षणान्तरावतारस्य साम्प्रदायिकत्वादतः पूर्वलक्षणेऽस्वरस-व्यञ्जकतयैव व्याचष्टे तेनेत्यादि । साध्यतदभावोपस्थापकस्य निश्चि-तसाध्यतदभाववद्व्यावृत्तत्वादनुमितिविरोधित्वासम्भवादाह स-त्प्रतिपक्षोत्थापकतयेति । सत्प्रतिपक्षः पक्षधर्मिकसाध्यव्यापकीभू-

ग्रहः कुतो न कृत इति वाच्यम्। स्वतन्त्रेच्छस्य नियोगपर्य्यनुयोगानर्हत्वात्॥

---

रेव। साध्याभावज्ञापकत्वेन साक्षात्साध्यवत्तानुमितिविरोधित्वेन॥

---

ताभावप्रतियोगिहेतुमत्तापरामर्शः। तदुत्थापकतया। विशेषणज्ञानविधया तदनुकूलत्वेनेत्यर्थः। तेन साध्यव्यापकीभूताभावप्रतियोगितामात्रस्य पक्षधर्मताघटितसत्प्रतिपक्षाद्यनात्मकत्वेपि न क्षतिः। अन्यथा प्रागुक्तलक्षणादरं। तथा च साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यस्य साध्यसन्देहजनकतावच्छेदकत्वाभावादाद्यलक्षणस्य तत्राऽव्याप्तिरतो विरोधित्वघटितं द्वितीयं लक्षणमादृतमिति भावः। यादृशविशिष्टविषयत्वेन साध्याभावानुमितिजनकत्वं तादृशविशिष्टत्वमेव साध्याभावज्ञापकत्वं तच्च न बाधस्येत्यतो व्याचष्टे साध्याभावेत्यादि। साक्षात्पदं साध्याभावावच्छेदकीभूतधर्मवत्त्वस्य वारणाय॥

इति श्रीजगदीशतर्कालङ्कारविरचितायामनुमानदीधितिव्याख्यायां सव्यभिचारग्रन्थः समाप्तः।

## चिन्तामणेः साधारणः ।

तत्र साधारणत्वं न साध्याभाववद्गामित्वम । सर्व्व-
मनित्यं मेयत्वादित्यनुपसंहार्य्ये भूर्नित्या गन्धवत्त्वादित्य-
साधारणे संयोगादिसाध्यकद्रव्यत्वे चातिव्याप्तेः । अत
एव न साध्यवत्तदन्यवृत्तित्वम् । नापि निश्चितसाध्यव-
त्तदन्यवृत्तित्वम् । साध्यवदन्यवृत्तित्वस्य दूषकत्वेन
शेषवैयर्थ्यात् । अत एवामुकेनायमनैकान्तिक इत्येवो-
द्भाव्यते तत एव वादिनिवृत्तेश्च, न तु सपक्षगतत्वमपि ।

## दीधित्याः साधारणः ।

सर्व्वमनित्यमित्यादि सम्प्रदायमनुरुध्योक्तम । अत एव ताव-
ग्रेऽन्तर्भावयिष्यति । नापीति । निश्चिते साध्यवति साध्यवद्भिन्ने च

## जागदीश्याः साधारणः ।

ननु मणिकृन्मते सर्वमनित्यं प्रमेयत्वादित्यादेर्लक्ष्यत्वात्तत्रा-
ऽतिव्याप्त्यभिधानमसङ्गतमत आह सम्प्रदायेति । तावदिति । सर्वम-
मनित्यं प्रमेयत्वात् भूर्नित्या गन्धवत्त्वादित्येतावित्यर्थः । अग्रे सि-
द्धान्ते । ननु निश्चितत्वं यदि साध्यवद्भिन्नेऽप्यन्वितं तदाऽनुपसंहार्यो
व्यावर्त्य इत्यादिनाग्रे सपक्षगतत्वांशस्य सार्थकत्वशङ्का विरुध्ये-
त साध्यवद्भिन्नत्वनिश्चयाप्रसिद्ध्यैवानुपसंहारिसाधारणावामतिव्याप्त-

अनुपसंहार्य्यो व्यावर्त्योऽन्यथा तस्यैतद्विशेषत्वापत्तिरिति चेत्, त्यज तर्हि तमधिकं त्वकृतेऽन्तर्भावात् । नापि सपक्षविपक्षगतत्वम्, व्यर्थविशेषणत्वात् । विरुद्धो व्यावर्त्य इति चेन्न । विपक्षगामित्वस्यैव दूषकत्वे तस्याप्येतदन्तर्भावात् । अथ पक्षान्यसाध्यवत्तदन्यवृत्तित्वं साधारणत्वम्, तेन सर्वमनित्यं मेयत्वादित्यनुपसंहार्य्ये नातिप्रसङ्गः, न च व्यर्थविशेषणता, घटोऽनित्यो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यनुपसंहार्य्यस्य विरुद्धस्यानैकान्तिकभिन्नस्य व्यवच्छेद्यत्वादिति चेन्न । दूषक-

---

वर्तमानत्वमित्यर्थः । अनुपसंहार्य्य इति । साध्यवदन्यवृत्तित्वांशस्य तत्रापि सत्त्वादिति भावः । नापीति । इह सपक्षत्वं न निश्चयगर्भमतो नाभेदः । घट इत्यादि । इत्यस्य विरुद्धस्य, अनुपसंहार्य्यस्य, प्रसिद्धस्य च विरुद्धान्तरस्य व्यवच्छेद्यत्वादित्यर्थः ।

---

ष्त्यसम्भवादतः तदनुरोधेन साध्यवन्मात्रान्वयितया निश्चितत्वं व्याचष्टे निश्चिते साध्यवतीति । अत एव अनुपदं वक्ष्यति साध्यवदन्यवृत्तित्वांशस्येति । केचित्तु निश्चितसाध्यवत्तदन्यत्वमित्यत्र तदन्यत्वं यदि निश्चितसाध्यवत्त्वावच्छिन्नभिन्नत्वं तदा पक्षे साध्यसन्देहदशायां पर्वतो वह्निमान्धूमादित्यत्र सद्धेतावतिव्याप्तिरतः साध्यवन्मात्रान्वयितया निश्चितत्वं व्याख्यातमित्यप्याहुः । ननु यदि सपक्षत्वं निश्चितसाध्यवत्त्वं तदा पूर्वलक्षणाभेद इत्यत आह इहेति । तथा च साध्यवद्वृत्तित्वे सति साध्यवदन्यवृत्तित्वमेव तस्यार्थ इति भावः । इह विपक्षत्वं निश्चयगर्भमित्यपि क्वाचित्कः पाठः । अनुपसंहार्य्यसामान्यस्यैव व्यावर्तनसम्भवे घटपक्षकोक्तद्वित्वपर्यन्तानुसरणानौ-

ताप्रयोजकरूपभेदमन्तरेण भेदस्यैवानुपपत्तेः । साध्यवद्वृत्तित्वे सति सर्वसाध्यवदन्यवृत्तित्वमित्यपि न, व्यर्थविशेषणत्वात् एकव्यक्तिकसाध्ये तदभावाच्च । एतेन हेत्वाभासान्तरव्यवच्छेदकं लक्षणान्तरेऽपि विशेषणं व्यर्थमिति ।

---

अन्वयतो व्यतिरेकतश्च सहचाराग्रहदशायामीदृशं द्वित्वमनुपसंहारीति मतेनेदमित्यपि कश्चित् ।

---

च्चित्यं सर्वपक्षकव्यभिचारिहेतोरेवानुपसंहारितयोक्तस्य तथात्वायोगाच्चेत्यतो मूलमन्यथा योजयति इत्यस्येति । तथा च इतिशब्दो लुप्तषष्ठीक इति भावः । दूरस्थमलक्ष्यताप्रयोजकं विशेषणमामन्नीकरोति विरुद्धस्येति।अनवगतसाध्यसहचारकत्वे सति साध्याभावसहचरितस्यैव प्राचीनमते विरुद्धत्वादिति भावः । न्यूनतामपाकर्तुं पूरयति प्रसिद्धस्य च विरुद्धान्तरस्येति । साध्याभावव्याप्यात्मकस्य गोत्वादिसाध्यकाश्वत्वादेरित्यर्थः । व्यवच्छेद्यत्वादिति । सर्वमनित्यमित्यनुपसंहार्ये पक्षान्यत्वाप्रसिध्या विरुद्धद्वये पक्षान्यसाध्यवद्वृत्तित्वविरहेण तयो व्यावर्तनीयत्वादिति भावः । ईदृशं द्वित्वम् । अनित्यत्वसाध्यकघटाकाशवृत्तिद्वित्वमित्यर्थः । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावदशायामुक्तद्वित्वस्यापि अनुपसंहारिताया मणिकृतैव तद्ग्रन्थे वक्ष्यमाणत्वादिति भावः । केवलान्वयिधर्मावच्छिन्नपक्षताकस्यैव हेतोरनुपसंहारित्वादुक्तद्वित्वमनुपसंहार्येव नेत्याद्यस्वरसः कश्चिदित्युक्त्या सूचितः ॥

इति जागदीश्यां साधारणपूर्वपक्षः समाप्तः ।

उच्यते । विपक्षवृत्तित्वं साधारणत्वम् । तन्मात्र-स्य दूषकत्वात् । विरुद्धस्यापि तत्त्वाज्ञाने विपक्षवृत्तिता-ज्ञानदशायां साधारणत्वम् । अन्यथा तस्य हेत्वाभासा-

---

विपक्षेति । अत्र विपक्षत्वं साध्याभाववत्त्वम् । अनुपदमेव वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारण इति मूल एव स्फुटत-रमभिधानात् । न तु निश्चयगर्भम्, तज्ज्ञानस्याप्रतिबन्धकत्वात् । न च वस्तुतो यत्र तन्निश्चयस्तद्वृत्तित्वज्ञानं प्रतिबन्धकम्, रूपान्त-रेण साध्याभाववत्तया निश्चिते रूपान्तरेण हेतुज्ञानेऽप्यप्रतिबन्धा-त्, न चैकेन रूपेण तत्तथा, गौरवात् हेतुसाध्याभावयोः सामानाधि-करण्यास्फुरणेनाऽविरोधात् साध्याभाववद्वृत्तिर्हेतुरित्यादिशाब्द-

---

निश्चयगर्भमिति । साध्याभाववत्तानिश्चयविशेष्यवृत्तित्व-मित्यर्थः । तज्ज्ञानस्य निश्चयज्ञानस्य । ननु तद्धर्मि-कसाध्याभाववत्तानिश्चयात्मकतद्धर्मिवृत्तिताज्ञानमेव विरोधि वा-च्यमित्याशङ्क्य निषेधति न चेति । रूपान्तरेणेति । तथा च जलह्र-दो निर्वन्हिः द्रव्यवृत्तिश्च धूम इति ज्ञानादपि धूमे वन्हिव्याप्तिधी-प्रतिबन्धापत्तिरिति भावः । न चेति । तत्तद्धर्मावच्छिन्नविशेष्यक-साध्याभाववत्तानिश्चयात्मकतत्तद्धर्मावच्छिन्नवृत्तिताज्ञानं न प्रति-बन्धकं तत्तद्रूपमन्तर्भाव्याऽनन्तप्रतिबन्धकत्वकल्पने गौरवादि-त्यर्थः । ननूक्तगौरवं प्रामाणिकमित्यत आह हेत्विति । तथा च ह्रदो निर्वन्हिर्धूमश्च ह्रदवृत्तिः इत्यादिज्ञाने हेतुसाध्याभावयोर्वैशि-ष्ट्याभानात्तस्य विरोधित्वं न सम्भवतीति भावः । ननु साध्या-भावविशिष्टतत्तद्धर्मावच्छिन्नवृत्तिताज्ञानमेव विरोधि वाच्यं तथा च निर्वन्हिह्रदवृत्तिर्धूम इत्यादिज्ञानमेव तथेति तत्र हेतुसाध्याभा-वसामानाधिकरण्यावगाहित्वमप्यक्षतमेवेत्यत आह साध्याभावव-द्वृत्तिरिति । साध्यशून्यवृत्तिरित्यर्थः । यथाश्रुते मतुबर्थाधिकरण-

न्तरतापत्तेः। उपाधेरसङ्कर एव। सर्वमनित्यं मेयत्वा-
दित्यनुपसंहारी शब्दो नित्यः शब्दत्वात् भूर्नित्या गन्ध-

---

ज्ञानानामप्रतिबन्धापाताच्च। यत्तु साध्याभावांशे निश्चयरूपं शे-
षांशे संशयसाधारणं साध्यभाववद्वृत्तित्वज्ञानं प्रतिबन्धकम्, अ-
न्यथा पक्षे एव साध्यसन्देहेन सन्दिग्धानैकान्तिकत्वापत्तेरिति,
यदाहुः न हि पक्षे पक्षसमे वा व्यभिचार इति।तन्न। व्याप्तिनिश्चये
हेतौ व्यभिचारसंशयायोगात्, तदनिश्चयदशायाम् अनुकूलतर्का-

---

त्वादिविशिष्टे साध्याभावस्य निश्चयसम्भवेपि नासङ्गत्यापत्तिः। तादृ-
शप्रत्यक्षे साध्याभावांशे धर्मितावच्छेदकस्यापि भानसम्भवाच्छियत-
विषयकस्य शाब्दस्याऽनुसरणम्। तथा च तादृशशाब्दस्य प्रतिबन्धक-
त्वानुरोधात्साध्याभाववद्वृत्तिताज्ञानत्वेनैव तथात्वं न तु साध्याभा-
वविशिष्टतत्तद्धर्मावच्छिन्नवृत्तिताज्ञानत्वेन, गौरवात्। न चैवं निर्व-
ह्निह्रदवृत्तिर्धूम इत्यादिज्ञानस्य ह्रदवृत्तित्वांशे भ्रमत्वग्रहेपि व्याप्ति-
ग्रहप्रतिबन्धापत्तिः, फलबलेन विरोधितानवच्छेदकतत्तदर्थघटि-
ताप्रामाण्यज्ञानस्याप्युत्तेजकत्वादिति भावः। मिश्रमतमुपन्यस्यति
यत्त्विति। शेषांशे साध्यभाववद्वृत्तित्वांशे। अन्यथा साध्याभा-
ववत्त्वांशे निश्चयानपेक्षणे। पक्ष एवेति। साध्यस्य तदभावस्य वा-
ऽधिकरणे पक्षे वर्त्तते हेतुरिति ज्ञानस्य तदानीं सत्त्वादिति भावः।
न हीति। प्रतिज्ञाया विषये अविषये वा सन्दिग्धसाध्यके व्यभिचा-
रधीर्न दोषायेत्यर्थः। पक्षताघटकसन्देहप्रयुक्तं सन्दिग्धानैकान्ति-
कत्वं व्याप्तिनिश्चयदशायामापाद्यते तदनिश्चयदशायां वा, नाद्य इ-
त्याह व्याप्तीति। अयोगादिति। व्याप्तिनिश्चयेनैव तस्य प्रतिबन्धा-
दिति भावः। द्वितीये त्वाह तदनिश्चयेति। व्याप्त्यनिश्चयेत्यर्थः।
व्याप्तिग्राहकानुकूलतर्कविनाकृतस्यैव व्यभिचारसंशयस्य व्याप्ति-
ग्रहविरोधित्वमित्याशयेनाह अनुकूलेति। ननु हेतुधर्मिकवृत्तित्व-

वत्त्वादित्यसाधारणश्च वस्तुगत्या साध्याभाववदवृत्तित्वेन साधारणोऽपि पक्षतादशायाम् उद्भावयितुं न शक्यत इत्युभयोर्भेदेनोपन्यासः ॥

---

स्फूर्त्तौ सन्दिग्धानैकान्तिकत्वस्येष्टत्वात्, हेतुसाध्याभावसामानाधिकरण्यावगाहितयैव ज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वात् अत एव पक्षः साध्यातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वादित्यादयोऽनुकूलतर्कविरहिणो बाधप्रतिरोधयोरनवतारेऽपि पक्ष एव सन्दिग्धानैकान्तिकतया अप्रयोजका गीयन्ते, एवं वन्हिदाहानुकूलेत्यादयः शक्तिसाधका अपि । अन्यथा पक्षातिरिक्ते सर्वत्र साध्यवत्तानि-

---

प्रकारतानिरूपितसाध्याभाववत्त्वमात्रावच्छिन्नप्रकारताकज्ञानत्वेनैव व्यभिचारज्ञानस्य व्याप्तिधीप्रतिबन्धकत्वात् साध्याभाववत्त्वांशे संशयाकारस्य तस्य विरोधित्वं दुर्घटमत आह हेत्विति । हेतुधर्मिकसाध्याभाववदवृत्तित्वप्रकारकज्ञानत्वेनैव व्याप्तिधीविरोधित्वं न तूक्तरूपेण. गौरवात्, तच्च साध्याभाववत्त्वांशे संशयाकारस्याप्यक्षतम् । ननु हेतुः साध्याभाववदवृत्तिरित्याकारस्य साध्याभावविशिष्टवैशिष्ट्यबोधस्यैव लाघवेन व्याप्तिधीविरोधित्वात् साध्यस्य तदभावस्य वा अधिकरणे पक्षे वर्त्तते हेतुः इत्यादिसंशस्य तथात्वं दुर्घटमत आह अत एवेति । पक्षीयव्यभिचारसन्देहस्यापि विरोधित्वादेवेत्यर्थः । तथा च शब्दो नित्यत्वभिन्नपक्षधर्मातिरिक्तधर्मवान् प्रमेयत्वादित्यादिहेतोरप्रयोजकत्वानुरोधेन गौरवमप्याश्रीयत इति भावः । अनवतारेऽपीति । अवतारे तु तत एवाप्रयोजकत्वं सम्भाव्येतेति भावः । पक्ष एवेति । पक्षातिरिक्ते सर्वत्रैव साध्यनिश्चयादिति भावः । सर्वसंमतमप्रयोजकत्वमुक्त्वा न्यायमते तमाह एवमिति । वन्हिदाहानुकूलादृष्टातीन्द्रियधर्मसमवायी दाहजनकत्वादित्यादयः शक्तिसाधका अप्यप्रयोजका गीयन्ते इत्यन्वयः । आदिना वायुः रूप-

र्णैयाद्व्याप्तिग्रहस्य दुर्वारत्वात् पक्षविपक्षान्यतरत्वादिना सर्वत्र सत्प्रतिपक्षप्रसङ्गाच्च । अथ साध्यतद्वदत्यन्तान्योन्याभावगर्भव्यभिचारयोरेकोपादानेऽन्यतराव्याप्तिः, साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयत्वेनाभावद्वयानुगमेऽपि हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य तादृशाभावे हेतुसामानाधिकरण्यस्य साध्यतद्वदादौ हेतुसमानाधिकरणतादृशाभावप्रतियोगित्वादेश्चासंग्रह इति चेत् । अत्र वदन्ति । प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोधिनो ज्ञानस्य विषयतया अन्वयव्याप्तिग्रहाविरोधितावच्छेदकत्वेन विभजनान्नाऽसंग्रहः । अविरोधिन इत्यन्तेन साध्याप्रसिद्ध्यादीनां निरासः । यदि पुनरत्यन्तान्योन्याभावयोरेकतरगर्भव्य-

---

वात् स्पर्शवत्त्वादित्यादेरप्युक्तक्रमेणैवाऽप्रयोजकत्वस्य परिग्रहः । अन्यथेति । पक्षीयव्यभिचारसंशयस्याऽविरोधित्वे इत्यर्थः । तादृशापक्षीयव्यभिचारसन्देहस्य व्याप्तिग्रहाविरोधित्वे प्रतिबन्दिमप्याह पक्षेत्यादि । तथा च पर्वतो वन्हिमान् धूमादित्यस्यापि पर्वतो न वन्हिमान् ह्रदपर्वतान्यतरत्वादित्यनेन प्रतिरोधः स्यात् पक्षे साध्यसन्देहेपि ह्रद एव तादृशान्यतरत्वस्य साध्याभावव्याप्यतानिश्चयसम्भवादिति भावः । साध्यवत्तेति । यादृशाभाववत्तानिश्चयत्वेन साध्यवत्ताग्रहविरोधित्वं तादृशाभावत्वेनेत्यर्थः । तेन साध्याभावव्याप्यवद्वृत्तित्वे नातिप्रसङ्गः । अभावद्वयं साध्यतद्वतोरत्यन्तान्योन्याभावरूपं द्वयम् । तादृशाभाववत्त्वस्येति । साध्यतद्वतोरत्यन्तान्योन्याभाववत्त्वस्येत्यर्थः । एवमग्रिमेष्वपि । असंग्रह इति । तेषामपि व्यापकताज्ञानविरोधित्वेन साधारणत्वादिति भावः । प्रकृतेति साध्यसाधनयोर्द्वयोरप्यन्वितम् । व्यतिरेकव्याप्तिग्रहविरोधिनोऽनुपसंहारित्वस्य वारणार्थमन्वयपदम् । साध्याप्रसिद्ध्यादीत्यादिना हेत्वप्रसिद्धिविरोधयोरुपग्रहः । ननु अत्रात्यन्तान्योन्याभावयोरेकघटितव्याप्तेः प्रवेशे अन्यघटितसाधारण्ये अव्याप्तिः समानविषयकस्यैव ग्रह-

भिचारज्ञानस्य नान्यतरगर्भव्याप्तिग्रहविरोधित्वम् इत्यादिकं विभा-व्यते, तदा साध्यसामानाधिकरण्यघटितत्वेनान्वयव्याप्तयोऽनुग-मनीयाः, प्रातिस्विकरूपेणोपादाय वा तावद्व्याप्यत्वगाहित्वं ग्रह-स्य वक्तव्यम्। साध्याव्यभिचरितसामानाधिकरण्यस्य व्याप्ये प्र-सिद्धस्य हेतौ विरहोऽप्यतद्विशेष एव । विशिष्टसाध्यसाधनवत्त्व-ग्रहाविरोधिनो ज्ञानस्य विषयतया व्यापकत्वग्रहविरोधितावच्छेद-करूपत्वं वा विभाजकम् । शेषं पूर्ववत् । साध्यतद्वतोरत्यन्तान्यो-

---

स्य विरोधित्वादित्याशङ्कते यदि पुनरिति । इत्यादिकमि-त्यादिपदेनाऽत्यन्ताभावगर्भस्यापि साध्यात्यन्ताभाववद्वृत्तित्वस्य ज्ञानं न हेतुमन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यरू-पात्यन्ताभावगर्भव्याप्तिग्रहप्रतिबन्धकमित्याद्युपग्रहः । ननु सा-ध्यसामानाधिकरण्यघटितत्वं साध्यसामानाधिकरण्याभावस्या-पीति तद्ग्रहप्रतिबन्धकतावच्छेदके साध्यसामानाधिकरण्येऽतिव्या-प्तिरत आह प्रातिस्विकरूपेति । ननु साध्यवदन्यावृत्तित्वविशिष्टसा-ध्यसामानाधिकरण्याभावरूपायां व्याप्यत्वासिद्ध्यादौ अतिव्याप्तिरत आह साध्येति । एतस्य साधारणस्य विशेषः । तथा च सोऽपि लक्ष्य एवेति भावः । व्याप्तिमपेक्ष्य व्यापकत्वस्य लघुत्वात्तद्गर्भं ल-घुलक्षणमाह विशिष्टसाध्यसाधनवत्त्वेति । अत्राऽविरोधिन इत्यन्तेन साध्यसाधनयोरप्रसिद्धेस्तयोरवृत्तित्वस्य च व्युदासः । व्यापकत्व-ग्रहेत्यस्य साध्यधर्मिकेत्यादिः । पूर्ववदिति । अत्रापि नानाविधानि व्यापकत्वान्युपादाय तावद्वगाहिग्रहो वाच्य इत्यर्थः । न च हेतुम-न्निष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेद-कत्वरूपव्यापकताग्रहं प्रति हेतुमन्निष्ठाभावियप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छेद्यत्वाभावोऽपि विरोधीति वृत्त्यनिया-मकसम्बन्धेन साध्यतास्थले तादृशाभावरूपायामसिद्धावतिव्याप्ति-रिति वाच्यम् । वृत्त्यनियामकसम्बन्धस्यापि प्रतियोगितावच्छेदक-त्वोपगमात्, साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमत

न्याभावौ साध्याभावव्याप्यादिव्यावृत्तेन साध्यवत्ताज्ञानविरोधित्वेनानुगमय्य तत्र हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साध्यवत्ताज्ञानविरोधिनि तादृशाभावग्रहविरोधिहेत्वाभासतावच्छेदकरूपवत्त्वं वा तथा वक्तव्यम्। साध्याभावव्याप्यादौ तु हेतुसामानाधिकरण्यादिकमविरोधित्वान्नाभासः। विरोधित्वं पूर्वोक्तदिशा-

---

एव वा सर्वत्र व्यापकत्वे निवेशादिति भावः। व्यापकताज्ञानस्यानुमितिहेतुतां खण्डयतां नव्यानां मते लक्षणान्तरमाह साध्यतद्धेतोरित्यादिना। व्याप्यादीत्यादिना साध्यव्यापकाभावस्योपग्रहः। व्यावृत्तेनेति। नातः साध्याभावव्याप्यवत्त्वादिनिष्ठे साधनसामानाधिकरण्येतिप्रसङ्गः। ननु यादृशविशिष्टप्रकारकत्वेन प्रकृतसाध्यवत्ताज्ञानत्वावच्छिन्नं प्रति प्रतिबन्धकत्वं तत्त्वमेवात्र साध्यवत्ताज्ञानविरोधित्वं वाच्यम् अन्यथा शशशृङ्गवान् शृङ्गादित्यादौ शशीयत्वाभावस्यापि साध्यतावच्छेदकांशे प्रकृतसाध्यवत्ताज्ञानविरोधितया तन्निष्ठहेतुसामानाधिकरण्येतिव्याप्त्यापत्तेः, एवं च शशीयशृङ्गवान् द्रव्यत्वादित्यत्र शृङ्गाभावनिष्ठद्रव्यत्वसामानाधिकरण्ये अव्याप्तिः शृङ्गसामान्याभावस्य शशीयशृङ्गवत्ताज्ञानत्वावच्छिन्नं प्रत्यविरोधित्वात् शृङ्गवत्ताज्ञानत्वावच्छिन्नं प्रत्येव तस्य तथात्वात्, एवं धूमान्यधूमवान् वन्हेरित्यादौ धूमान्यधूमवत्ताबुद्धित्वावच्छिन्नं प्रति विरोधित्वाप्रसिद्धिरित्यतो लक्षणान्तरमाह साध्यवत्ताज्ञानविरोधिनीति। तथा चात्र साध्यवत्ताज्ञानं प्रति विरोधितामात्रनिवेशान्नोक्ताव्याप्तिः, शशशृङ्गवान् शृङ्गादित्यादौ शशीयत्वाभावस्य साध्यवत्ताज्ञानविरोधित्वेऽपि तन्निष्ठहेतुसामानाधिकरण्यस्य हेत्वाभासतावच्छेदकत्वाभावादेव नातिव्याप्तिरिति भावः। तादृशाभावेति। हेतुसामानाधिकरण्याभावेत्यर्थः। साध्याभावव्याप्यादेः साध्यवत्ताज्ञानविरोधित्वेऽपि तन्निष्ठहेतुसामानाधिकरण्यस्य हेत्वाभासतावच्छेदकत्वाभावादेव नातिव्याप्तिरित्याह साध्याभावेत्यादि। अविरोधित्वात् प्रकृतव्याप्तिग्रहाविरोधित्वात्। नाभासो नाभासपदार्थः। तथा च प्रकृतव्याप्तिग्रहाविरोधितावच्छेदकत्वमेवात्र हेत्वाभासता-

ऽव्यसेयम् । उपदर्शितविशिष्टव्याप्तिविरहो व्याप्यत्वासिद्धिरेवेति ।

---

वच्छेदकत्वमिति फलितम् । तेन धूमासमानाधिकरणकाञ्चनमयत्वाभावविशिष्टः पर्वतः काञ्चनमयवान्हिमान् धूमादित्यादौ साध्यतावच्छेदकांशे प्रकृतसाध्यवत्ताज्ञानविरोधिनि काञ्चनमयत्वाभावे धूमसामानाधिकरण्यस्याश्रयासिद्धित्वेन हेत्वाभासतावच्छेदकत्वेपि नातिव्याप्तिः तस्य प्रकृतहेतुसाध्यव्याप्तिग्रहविरोधित्वादिति ध्येयम् । [इदन्त्ववधातव्यम् । एकव्याप्त्यवगाहिज्ञानविरोधित्वनिवेशे अन्यविधव्यभिचारेऽव्याप्तिः नानाविधव्याप्त्यवगाहिज्ञाननिवेशे साध्यवत्ताज्ञानविरोधिन्यसामानाधिकरण्यग्रहविरोधित्वविशेषणं व्यर्थं तस्माद्धेत्वाभासतावच्छेदकत्वमनुमितिजनकतावच्छेदकविषयतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वमेव तथा चोक्तस्थले पक्षग्रहाविरोधित्वविशेषणेनैव वारणं बोध्यम् ।] नन्वेवमपि पर्वतः काञ्चनमयपर्वतवान् पर्वतत्वादित्यादौ साध्यतावच्छेदकांशे प्रकृतसाध्यवत्ताज्ञानविरोधिनि काञ्चनमयत्वाभावे पर्वतत्वसामानाधिकरण्यस्य साध्याप्रसिद्धित्वेन व्याप्तिज्ञानाविरोधित्वात्तत्राऽव्याप्तिरत आह विरोधित्वमिति । विशिष्टसाध्यसाधनवत्ताग्रहाविरोधिनो ज्ञानस्य विषयतया यत्साध्यवत्ताग्रहविरोधिनि हेतुसामानाधिकरण्याभावग्रहविरोधित्वं तदेव प्रवेश्यमतो नोक्तदोष इति भावः । केचित्तु ननु साध्यवत्ताज्ञानस्य विरोधित्वं प्रतिबन्धकत्वं तच्च न साध्याभावादेरित्यव्याप्तिरत आह विरोधित्वमिति । तथा च सव्यभिचारलक्षणे अनुमितिविरोधिसम्बन्धाव्यावृत्तिरित्यत्र यथा विरोधित्वं विरोधिज्ञानविषयत्वं व्याख्यातं तथात्रापीत्यर्थः इत्यप्याहुः । ननु साध्याव्यभिचरितसामानाधिकरण्याभावस्यैतद्विशेषत्वात्तत्रान्तिमलक्षणद्वयाव्याप्तिः तस्य व्यापकत्वग्रहे साध्याभावादिधर्मिकहेतुसामानाधिकरण्यग्रहे चाऽविरोधित्वादत आह उपदर्शितेति।तथा चात्र कल्पे न तस्य लक्ष्यत्वमिति भावः।व्यभिचारज्ञानाभावसहकृतं सहचारज्ञानं व्याप्तिग्राहकमिति मूलमनुसरतां प्राचां मतमाह व्याप्तीति । व्याप्तिग्रहस्य कारणीभूतो यः सहचारग्रहस्तत्सहकारी योऽभावः तत्प्रतियोगिज्ञानविषयत्वमर्थः । अत्र

व्याप्तिग्रहकारणसहचारग्रहसहचार्य्यभावप्रतियोगिग्रहविषयत्वेनाऽनुगम इत्यपि कश्चित् ॥

———

प्रतियोगित्वं निश्चयत्वानवच्छिन्नं ग्राह्यम्। तेन व्याप्त्यभावव्याप्यवत्त्वादौ नातिव्याप्तिः। व्याप्तिग्राहकमितिमूले संशयसाधारणेन व्यभिचारज्ञानत्वेनैव व्याप्तिग्रहप्रतिबन्धकत्वोपगमाच्च नासम्भवः। व्याप्तिग्रहविरोधिजिज्ञासाविषये कामिन्यादावतिव्याप्तेर्वारणाय ज्ञानपदम्। अत्र व्याप्तिग्रहकारणीभूताभावप्रतियोगिज्ञानविषयत्वमित्येव सम्यक् कृतं सहचारादिनिवेशनेन, न वा व्यभिचारज्ञानत्वमात्रेण प्रतिबन्धकत्वं निश्चयत्वस्य जन्यतानवच्छेदकत्वादित्यस्वरसः कश्चिदित्युक्त्या सूचितः॥

इति श्रीजगदीशतर्कालङ्कारकृतायामनुमानदीधितिव्याख्यायां साधारणग्रन्थः समाप्तः।



## चिन्तामणेः असाधारणः।

सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः। ननु सपक्षत्वं न साध्यवन्मात्रत्वं, विपक्षावृत्तेर्वृत्तिमतः साध्यवद्वृत्तित्वनियमात्, नापि पक्षातिरिक्तसाध्यवत्त्वं, शब्दोऽनित्यः शब्दत्वादित्यादेर्व्याप्तिधीदशायामप्यसाधारणतापत्तेः, न चेष्टापत्तिः, बाधप्रतिरोधौ विना व्याप्तिपक्षधर्मतया ज्ञातादनुमितिनियमादिति चेन्न। सर्वनिश्चितसाध्यवद्विपक्ष-

---

## दीधित्याः असाधारणः।

प्राचां मतेनोत्तरयति न सर्वेत्यादि। सर्वेति विपक्षेऽप्यन्वेति। तेन साध्याभावन्यूनवृत्तेर्व्युदासः। विपक्षत्वस्य निश्चयगर्भत्वात् भूरनित्या गन्धवत्त्वात् नित्यः शब्दः शब्दत्वा-

---

## अथ जागदीश्याः असाधारणः।

सर्वनिश्चितेत्यादेरग्रे मणिकृतैव दूषितत्वात्तदुत्तरत्वासम्भवादाह प्राचामिति। तेनेति। रूपं गुणो द्रव्यत्वादित्यत्र गुणत्वाभाववत्कर्मादिव्यावृत्तस्य द्रव्यत्वादेर्व्युदास इत्यर्थः। ननु विपक्षस्यापि सर्वस्य प्रवेशे भूरनित्या गन्धवत्त्वादित्यत्राव्याप्तिः गन्धवत्त्वादेः साध्याभाववत्परमाण्वादिव्यावृत्तत्वाभावादत आह विपक्षत्वस्येति। तथा च भूत्वावच्छेदेन पक्षतायां पार्थि-

व्यावृत्तत्वस्य तत्त्वात्। शब्दत्वानित्यत्वव्याप्तिग्रहे सति शब्दे साध्यनिश्चयान्नातिव्याप्तिः। न च घटोऽयमेतत्त्वादिति सद्धेतावतिव्याप्तिः, साध्यसन्देहदशायां तस्य हेत्वाभासत्वात्। यद्यपि भूर्नित्या गन्धवत्त्वादित्यादिर्वस्तुतः साधारणः, शब्दो नित्यः शब्दत्वादिति विरुद्धः, शब्दोऽनित्यः शब्दत्वादित्यादिः सद्धेतुरेव, व्याप्त्यज्ञानस्य पुरुषदोषत्वादित्युदाहरणाभावादसाधारणो न पृथक्। तथापि पक्षतादशायां साध्यतदभावानिश्चयेन तस्य दोषत्वम्, अन्यथा पक्षत्वभङ्गप्रसङ्गात्।

अथ सर्वसपक्षव्यावृत्तिरेव दोषो न विपक्षव्यावृत्तिरपि, तस्या अनुगुणत्वात् प्रत्युत विपक्ष-

---

दित्यादौ नाव्याप्तिः। पृथिवी रूपवती रसादित्यादौ जलादेर्नीरसत्वभ्रमे पुनरसाधारण्यभ्रम एवेति मन्तव्यम्। तथापीति। पक्षत्वं सन्दिग्धसाध्यकत्वम्।

---

वपरमाणोरनित्यत्वाभावानिश्चयान्नाव्याप्तिरिति भावः। साधारणसंकीर्णमुक्त्वा विरुद्धसंकीर्णमाह नित्यः शब्द इति शब्दो नित्य इत्युक्तावनित्यत्वस्यापि कदाचित्साध्यता प्रतीयेतेत्यतः प्रागेव नित्य इति साध्यसंल्लेखः। ननु क्षितिः रूपवती रसादित्यादौ रसादेः साध्यवज्जलादिव्यावृत्तत्वभ्रमेपि वस्तुगत्या तद्व्यावृत्तत्वाभावादव्याप्तिरत आह पृथिवीत्यादि। ननु सिध्यभावश्चेत् पक्षता तर्हि तद्दशायामपि पक्षे साध्याभावनिश्चयसम्भवात् पक्षतादशायामित्याद्यसङ्गतमत आह पक्षत्वमिति।

व्यावृत्तत्वेन व्यतिरेकितया परसाध्यसाधकमेवोपन्य-स्तं स्यात् । न च संशायकतया दोषत्वं तच्चो-भयव्यावृत्तत्वज्ञानादिति वाच्यम् । व्याप्तिग्राहकं सह-चारज्ञानं तदभावद्वारा सपक्षव्यावृत्तिमात्रस्य दोषत्वा-

---

मतं दूषयति अथेत्यादि । व्याप्तीति । तथा च स्वतो दूषणाक्षमत्वान्नाभासत्वम् उपाधिवदिति भावः । एकधर्मिव्या-वृत्तत्वञ्च न सामानाधिकरण्यग्रहविरोधि धर्म्यन्तरे तत्सम्भवात्, अन्यथा सतोरपि साध्यसाधनयोर्व्यतिरेकित्वं दोषाय स्यात् । अथायं शङ्कितुरभिप्रायः, पक्षे साध्याभावस्य संशयो निश्चय-श्चानुमितिविरोधी विरोधिविषयकत्वात् तत्सामग्री च विरो-धिसामग्रीत्वेन, तत्रादिमस्य सामग्रीपक्षे सव्यभिचारस्य हेतोर्ग्रहः

---

मतमिति । प्राचामित्यनुषज्यते । मूले सपक्षव्यावृत्ति-मात्रस्य निश्चितसाध्यवद्व्यावृत्तत्वमात्रस्य । दोषत्वात् अनुमिति-प्रतिकूलत्वादित्यर्थः । ननु निश्चितसाध्यवद्व्यावृत्तत्वस्य प्रतिकूल-त्वे तस्यैवाभासत्वं किमित्युपेक्षितमतो दीधितिकृदाह तथा चेति । स्वत इति । अनुमितेस्तत्कारणपरामर्शस्य वा साक्षात् प्रतिबन्धाक्ष-मत्वादित्यर्थः । ननु परामर्शं प्रत्येव साध्यसहचारांशे निश्चितसा-ध्यवद्व्यावृत्तत्वं विरोधीति तस्याभासत्वं दुर्वारमत आह एकेति । साध्यवत्तया निश्चितयत्किञ्चिद्धर्मिव्यावृत्तत्वं चेत्यर्थः । तत्सम्भवात् सामानाधिकरण्यग्रहसम्भवात् । ननु तत्तद्धर्मान्तर्भावेणैव साध्य-सामानाधिकरण्यग्रहं प्रति निश्चितसाध्यवत्तद्धर्मिव्यावृत्तत्वस्य वि-रोधित्वात्तद्दोषत्वं सुघटमत आह अन्यथेति । सतोः समीचीनयोः । तथा च जलाद्यन्तर्भावेण भ्रमात्मकवन्हिधूमसहचारग्रहं प्रति वन्हिधूमयोर्जलादिव्यावृत्तत्वज्ञानं विरोधीति तदपि वन्हिमान्धूमा-दित्यत्र दोषः स्यादिति भावः । शङ्कितुरिति । साध्यसंशायकतया

द्वितीयस्य तु प्रतिहेतोः परामर्शः अतस्तयोराभासत्वम् । अत एव सव्यभिचारलक्षणे पक्षवृत्तित्वं विशेषणम् । साध्याभाववदवृत्तित्वमात्रं पुनरसिद्धिरेवेति विरोधान्यस्य परामर्शविरोधिनो रूपस्य तत्त्वादिति । नैवम् । बाधसंशयस्य प्रतिबन्धकत्वानङ्गीकारात् साधारणधर्मवत्ताज्ञानस्य संशयसामग्रीत्वाभावात् सामग्रीत्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच्च । अन्यथा पक्षस्य साध्यतदभाववदवृत्तिप्रमेयत्वादिमत्त्वं सर्वत्र हेतावाभासीभवेत्, तथा कामिनी-

---

सपक्षविपक्षव्यावृत्तत्वस्य दोषत्वं नचेत्यादिना मूलेनाशङ्कितुरित्यर्थः । तत्सामग्रीति । साध्याभावस्य निश्चयसंशययोः सामग्रीत्यर्थः । सामग्रीत्वेनेति । लिङ्गव्यत्ययेन विरोधिनीत्यन्वयः । आदिमस्य साध्याभावसंशयस्य । द्वितीयस्य साध्याभावनिश्चयस्य । सामग्रीति पूर्वेणान्वयः । तयोः सव्यभिचारप्रतिहेत्वोः । अत एवेति । साधारण्यादिविशिष्टतत्तत्पक्षवृत्तितानिश्चयस्यैव तत्तत्पक्षधर्मिकसाध्यसंशयसामग्रीत्वादिति भावः । नन्वेवं साध्यसंशायकस्यैव सव्यभिचारत्वे व्याप्तिग्रहविरोधित्वेन साध्याभाववदवृत्तित्वमधिकाभासः स्यादत आह साध्याभावेति । असिद्धिरेवेति । तस्य व्याप्यत्वासिद्धौ निवेश्यत्वादिति भावः । अनङ्गीकारादिति । तथा च साधारण्यादिविशिष्टहेतुमत्ताज्ञानस्य विरोधिसामग्रीत्वेन अनुमितिप्रतिबन्धकत्वं दुर्घटमिति भावः । ननु साध्याभावज्ञानसामग्रीत्वेनैव तस्य साध्यानुमितिविरोधित्वं वाच्यमत आह साधारणेति । सामग्रीत्वाभावादिति।सत्यपि तादृशज्ञाने विशेषदर्शनदशायां साध्यसन्देहानुत्पादादिति भावः । ननु प्रतिबन्धकाभावादिसहकृतसाधारणधर्मवत्ताज्ञानं भवत्येव संशयसामग्रीत्यत आह सामग्रीत्वेनेति । अयोगादिति।यादृशविशिष्टविषयकत्वेनानुमितिविरोधित्वं तस्यैव हेत्वाभासतावच्छेदकत्वादिति भावः । अन्यथा सामग्रीत्वेन प्रतिबन्धकतयापि हेत्वाभासत्वे । सर्वत्रेति । सत्यसति चेत्यर्थः । आभासीभवेदिति । असति बाधके पक्षधर्मिकतादृशप्रमेयत्वादिमत्ताज्ञानस्यापि साध्यसन्देहसामग्रीत्वादिति भावः । साधनत्वादिकमपीति । आ-

त् । किञ्च शब्दोऽनित्यः शब्दत्वादित्युक्त्वा निवृत्ते तावन्नेदमुद्भाव्यं न्यूनत्वेनैव वादिनिग्रहात् तदुद्भावने वादिनिवृत्तेश्च, न च न्यूनत्वे तदुपजीव्यम्, असाधारण्यं व्यतिरेकेणापि तदुद्भावनात् । न च व्यतिरेकिप्रयोगे तदुपन्यासः, व्याप्तिपक्षतयोरप्रतिक्षेपेऽकिञ्चित्करत्वात्

---

जिज्ञासाप्रयोजकं तज्ज्ञानेष्टसाधनत्वादिकमपि । एवं विशिष्टस्यानुद्भाव्यत्वं व्युत्पाद्य केवलस्यापि सपक्षव्यावृत्तत्वस्य तथात्वं व्युत्पादयति किञ्चेति । वाद्युपदर्शितदृष्टान्तस्य साधनवैकल्यन्तु ना-

---

भासीभवेदित्यन्वयः । कामिनीजिज्ञासायाः साध्यादिमत्ताज्ञानविरोधित्वेन कामिनीज्ञानधर्मिकेष्टसाधनताज्ञानस्यापि विरोधिसामग्रीत्वेन विरोधित्वसम्भवादिति भावः । वक्ष्यमाणदोषस्य विशिष्ट इव केवलेऽपि सपक्षव्यावृत्तत्वे सम्भवादाह एवमिति । विशिष्टस्य विपक्षव्यावृत्तत्वसहितस्य । तथात्वम् । अनुद्भाव्यत्वम् । मूले निवृत्त इति । वादिनीति शेषः । इदं सपक्षव्यावृत्तत्वरूपम् । हेतुमाह न्यूनत्वेनेति । उदाहरणस्य दृष्टान्तशून्यत्वेनैवेत्यर्थः । तथा च शब्दोऽनित्यः शब्दत्वादित्यादौ अन्वय्युदाहरणे दृष्टान्तस्याभावादिति भावः । ननु न्यूनत्वस्य न स्वरूपतो निग्रहस्थानप्रयोजकत्वमत आह उद्भावन इति । न्यूनत्वोद्भावने एवेत्यर्थः । तत् असाधारण्यम् । तथा चासाधारणत्वस्य न्यूनत्वप्रयोजकत्वमिति भावः । असाधारण्येति । तथा च व्यभिचाराद्याऽसाधारण्यस्य न्यूनत्वप्रयोजकत्वमित्यर्थः । न चेति । व्यतिरेकिप्रयोगे व्यतिरेक्युदाहरणप्रयोगे । तथा च यो यो नित्यत्वाभाववान्स शब्दत्वाभाववान् यथा महाकाल इत्यत्र दृष्टान्तसत्त्वेन न्यूनत्वाभावादसाधारणोद्भाव्यमिति भावः । अप्रतिक्षेपे अप्रतिबन्धे । अकिञ्चित्करत्वादिति । उपन्यासस्य फल-

स्वार्थानुमाने च सर्वसपक्षव्यावृत्तिरेव दोष इत्युक्तमिति।

---

साधारण्यम्, सपक्षान्तरवृत्तित्वेऽपि तत्सम्भवात्। उद्भावनन्तु तस्य निग्रहस्थानत्वात्, तद्विभाजकसूत्रस्यानुक्तसमुच्चायकचकारेण तस्य समुच्चितत्वात्, उदाहरणस्याभासताप्रदर्शनायैव वा, आवश्यकश्च प्राचां दृष्टान्तप्रयोग इति भावः। माभूत् परार्थानुमानेऽसाधारण्यं दोषः स्वार्थे तु स्यादत आह स्वार्थेति।

---

हितत्वादित्यर्थः। ननु यत्र सदृष्टान्तमुदाहरणं प्रयुक्तं तत्रैव न न्यूनत्वं परं तु निश्चितसाध्यवद्दृष्टान्तव्यावृत्तत्वमसाधारण्यमेव दोष इति पञ्चमपरिशिष्टकृतां मतं निरस्यति दीधितौ वादीति। दृष्टान्तस्य साध्यवत्तया निश्चितस्य। सपक्षान्तरेति । हेतोरनुपन्यस्तनिश्चितसाध्यवद्वृत्तित्वेप्युपन्यस्तसाध्यवद्व्यावृत्तत्वसम्भवादित्यर्थः। तथा च सर्वसपक्षव्यावृत्तत्वं दुर्घटमिति भावः। नन्वेवमुपात्तदृष्टान्तस्य साधनविकलत्वोद्भावनं विफलमत आह उद्भावनं त्विति। ननु प्रतिज्ञाहान्यादिद्वाविंशतिभिन्नस्य तस्य निग्रहस्थानत्वे मानाभाव इत्यत आह तद्विभाजकेति। 'हेत्वाभासाश्च यथोक्ताः' इत्येवं निग्रहस्थानविभाजकसूत्रस्यचकारेणेत्यर्थः। तत्रत्यचकारस्योक्तमात्रसमुच्चयार्थकत्वेप्याह उदाहरणस्येति। तथा च यो यः शब्दत्ववान् सोऽनित्यो यथा घट इत्युदाहरणे यथाशब्देन शब्दत्वानित्यत्वयोरुपस्थितावनित्यो घटः शब्दत्ववानित्येवं शाब्दधीरनित्यो घटो न शब्दत्ववानित्युद्भावनदशायां नोत्पद्यत इत्यपेक्षितान्वयसामग्रीवैधुर्यरूपमपार्थकमेव तत्र निग्रहस्थानमिति भावः। ननु दृष्टान्तस्य यदि न्यायघटकत्वं तदा वाद्युद्भावितस्य तस्य साधनवैकल्यमसाधारण्यं वा निग्रहस्थानान्तरं वेति विचारणीयं तदेव तु मणिकारैर्नेष्यते इत्यत आह आवश्यकश्चेति। तथा च प्राचां मते सदृष्टान्त एव न्याय इति भावः। असाधारण्यं सपक्षविपक्षव्यावृत्तत्वरूपम। स्वार्थेति । परसाध्यानुगुणस्यापि विपक्षव्यावृत्तत्वांशस्य तत्रोपन्यासाभावादिति भावः।

इति जागदीश्यामसाधारणपूर्वपक्षग्रन्थः समाप्तः।

उच्यते । शब्दत्वं साध्यवतस्तदभाववतश्च निवृत्तत्वेन ज्ञातमर्थाद्व्यतिरेकितया वा पक्षे साध्यं तदभा-

———

स्वमते सिद्धान्तमुपक्रमते उच्यत इति । अर्थादिति । व्यतिरेकिमुद्रया अर्थादुभयं साधयेत्, अर्थवशसम्पन्नमेवोभयसाधकत्वम् उभयसिद्ध्यनुकूलव्याप्त्यादिग्रहादित्यर्थः । व्यतिरेकितया वेति पाठे अर्थात् अर्थापत्तिविधयेति परमतेन । एवञ्च पक्षधर्मतया ज्ञायमानो हेतुः साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानात् साध्यस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानाच्च साध्याभावस्य साधनायोन्मुखो मिथो विरोधेन नैकमपि साधयति । न च शब्दे नित्यत्वानित्यत्वसन्देहे तदुभयव्यापकत्वं शब्दत्वाभावस्य ग्रहीतुमशक्यं व्यापकत्वाभिमतशब्दत्वाभावाभाववच्छब्दवृत्तित्वस्य नित्यत्वानित्यत्वयोः सन्दिह्यमानत्वादिति वाच्यम् । तथात्वेऽपि तादृश-

———

## अथाऽसाधारणसिद्धान्तः ।

———

व्यतिरेकितायामर्थादित्यन्वयासम्भवात् साधयेदित्यत्रैव अर्थादित्यस्य प्रयोजनमाह अर्थादुभयं साधयेदिति। साधयेदित्यत्रार्थापत्त्यंशस्यानपेक्षितत्वादपेक्षितांशं निष्कृष्याह अर्थवशसम्पन्नमिति । उभयसाधकत्वं साध्यतदभावोभयानुमितिस्वरूपयोग्यत्वम् । न्यायनये व्यतिरेकानुमित्यतिरिक्तार्थापत्त्यनङ्गीकरणादाह परमतेनेति। समुदितग्रन्थार्थमाह एवं चेति । साध्यस्येति । साधनायोन्मुख इत्यग्रिमेणान्वयः । न चेति । वाच्यमित्यनेनान्वितम् । ग्रहीतुं निश्चेतुम् । अशक्यमिति। तथा च नित्यः शब्दः शब्दत्वादित्यसाधारणो न स्यादिति भावः । व्यापकत्वेति । साध्यतदभावव्यापकत्वाभिमतो यः शब्दत्वाभावस्तदभाववदित्यर्थः। शब्दत्वाभावे वस्तुगत्या साध्यादि-

वञ्च साधयेत् अविशेषात्, अन्यथा पक्षवृत्तित्वानुपप-
त्तिरिति साध्यतदभावोत्थापकतया स्वार्थानुमानेऽसाधार-
णो दोषः । सत्प्रतिपक्षे द्वौ हेतू तथा, अत्र त्वेक एवे-

———

संशयाभावदशायां तथात्वनिश्चये तदुभयव्यापकीभूताभावप्रतियो-
गिशब्दत्ववत्त्वस्य शब्दे प्रतिसन्धातुं शक्यत्वात् । स्वाश्रयमप्रती-
त्यैव प्रतीतस्य सौरभादेरभावस्य पानीयपाषाणादौ पृथिवीत्वतद-
भावसहचारेण तदुभयव्यापकताग्रहे तादृशाभावप्रतियोगिसौरभस्य
चन्दनादौ परामर्शे पृथिवीत्वादौ साध्ये तदसाधारण्यस्याऽतिसु-
लभत्वाच्च । नन्वयं सत्प्रतिपक्ष एव व्याप्तेरन्वयानिरूप्यत्वस्याव्या-
पकत्वेनाप्रयोजकत्वादित्यत आह सत्प्रतिपक्ष इति । न चैवंविध-

———

व्यापकत्वाभावादभिमतेत्युक्तम् । सन्दिह्यमानत्वादिति । तथात्वे-
पि शब्दे नित्यत्वसन्देहदशायां शब्दत्वाभावस्य साध्यादिव्यापक-
त्वानिश्चयेपि । तथात्वनिश्चये शब्दत्वाभावस्य साध्यादिव्यापकत्व-
निश्चये । तदुभयेति । साध्यतदभावोभयेत्यर्थः । प्रतिसन्धातुमित्यस्य
शब्दे धर्मिणीत्यादिः । शब्दत्वादिजातेराश्रयं प्रतीत्यैव प्रत्यक्षनियमे-
पि सौरभादेः प्रत्यक्षे नाश्रयस्य भाननियमः तथा च चन्दनं पृथि-
वीत्वाभाववत् सौरभादित्यत्रैवाऽसाधारणस्थले पक्षे साध्यसन्देहका-
लेपि साध्यतदभावव्यापकत्वग्रहो हेत्वभावस्य भवतीत्याह स्वा-
श्रयमित्यादिना । तदसाधारण्यस्य सौरभाद्यसाधारण्यस्य । सत्प्रति-
पक्ष एवेति । तथा च सव्यभिचारान्तर्गतत्वानुपपत्तिरिति भावः ।
ननु साध्याभावान्वयव्याप्तिविशिष्टपक्षधर्मस्यैव सत्प्रतिपक्षत्वान्न
साध्यव्यापकाभावप्रतियोगित्वविशिष्टपक्षधर्मत्वस्य तथात्वमत आह
व्याप्तेरिति । अव्यापकत्वेनेति।ह्रदो धूमवान् जलत्वात् स धूमाभाव-
वान् वन्ह्यभावादित्यत्र हेतुद्वयस्य व्यतिरेकव्याप्तिग्रहेपि प्रतिपक्षत्वा-
त्तत्रान्वयव्याप्तेरनियामकत्वादित्यर्थः । एवंविधेति। साध्यसाधकतया

ति तयोर्भेदः । असाधारणेन व्यतिरेकिप्रयोगे परस्य सर्वसपक्षव्यावृत्तत्वमात्रमुद्भाव्यं साध्याभावोत्थापकत्वात्, न तु विपक्षव्यावृत्तत्वमपि, प्रतिकूलत्वात् व्यर्थत्वाच्च ।

यद्वा विपक्षव्यावृत्ततया साध्यमिव सपक्षव्यावृत्ततया साध्याभावमपि साधयेदिति दृष्टान्ततया प्रतिबन्धितया वा तदुद्भावनमपि । लक्षणन्तु सर्वसपक्षव्यावृत्तत्वम्, न तु विपक्षव्यावृत्तत्वमपि । व्यर्थविशेषणत्वात् । विरुद्धमप्यनेनोपाधिनाऽसाधारणमेव । अन्यथैतदवगमे विरुद्धत्वाज्ञाने हेत्वाभासान्तरतापत्तेः ॥

---

भेदेन पृथगभिधानेऽतिप्रसङ्गः, स्वतन्त्रेच्छाया इत्यादेर्ग्रन्थकृतैवाभिधानात् तदभावसाधके तत्साधकत्वभ्रमरूपाशक्तिविशेषसूचनार्थत्वाच्च । सत्प्रतिपक्षसव्यभिचारोभयलक्षणाक्रान्ततया उभयान्तर्भावस्याऽविरुद्धत्वादित्यपि कश्चित् । सर्वसपक्षेति । सपक्षः सा-

---

वाद्युपन्यस्तहेतोः साध्याभावव्याप्तिविशिष्टपक्षधर्मत्वमसाधारण्यं तदन्यहेतोः तादृशपक्षधर्मत्वं सत्प्रतिपक्ष इत्यभिधाने द्रव्यस्य हेतोः साध्याभावव्याप्तिविशिष्टपक्षधर्मत्वं प्रतिपक्षो गुणादिहेतोस्तादृशपक्षधर्मत्वं तु हेत्वाभासान्तरमित्यपि स्यादित्यर्थः तदुद्भावनगतं पार्थक्यस्य फलमाह तदभावेतितथा च शब्दो नित्यः शब्दत्वादित्यत्र नित्यत्वाभावसाधकस्यैव हेतोर्नित्यतासाधकत्वभ्रमसूचनार्थं हेत्वैक्येनाऽसाधारण्यप्रदर्शनमिति भावः । कस्यचित्सिद्धान्तमाह सव्यभिचारेत्यादि । मिथोविरुद्धाभ्यामेव विशेषधर्माभ्यां विभागस्य सम्प्रतिपन्नत्वान्नेदं युक्तमित्याशयेन कश्चिदित्युक्तम् । सपक्षत्वं न निश्चितसा-

ध्यवत्त्वान् । पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । इदञ्च साक्षादनुमितिविरोधि, विरोधश्च साध्यासामानाधिकरण्यादिरूपोऽन्वयव्याप्तिग्रहविरोधीति न साङ्कर्य्यशङ्कापि । साध्यसमानाधिकरणन्तु नासाधारणम् । दशाविशेषे तद्भ्रमस्तु पुरुषदोषो व्याप्य इव साधारण्यभ्रमः ।

नवीनाः पुनरेवं वर्णयन्ति । सामग्रीद्वयविरोधेन हेत्वभावस्य साध्यतदभावव्यापकताग्रहविरोधोऽसाधारणस्य दूषकताबीजम् । तथा हि, वृत्तिमता हेतुना क्वचिदपि वर्त्तितव्यं तत्र चावश्यं साध्यतदभावयो-

---

ध्यवत्त्वं निश्चयांशज्ञानस्याविरोधित्वादतो व्याचष्टे सपक्षः साध्यवानिति । साध्यवद्व्यावृत्ततामात्रस्य सत्प्रतिपक्षाक्षमत्वात् पूरयति पक्षवृत्तित्वे सतीति । पक्षवृत्तिताघटकसम्बन्धेन साध्यवदवृत्तित्वसामान्याभाव एव साध्यवद्व्यावृत्तत्वं वाच्यम्, अन्यथातिप्रसङ्गात्, एवं च रूपं जातिर्गुणत्वादित्यत्राव्याप्तिः सामान्यसमवेतत्वाप्रसिद्धेरतो व्याचष्टे साध्यव्यापकीभूतेत्यादि । साध्यवत्त्वावच्छेदेन व्यावृत्तत्वस्यान्वयादेव तादृशार्थलाभ इति भावः । अत्र स्वहेतुकप्रकृतसाध्यविरोध्यनुमित्यौपयिकव्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुत्वे तात्पर्यम्, तेन साध्याभावस्य साध्यवदन्यत्वस्य अन्वयव्याप्तिविशिष्टप्रकृतहेतुनिष्ठपक्षधर्मत्वादौ नाव्याप्तिरिति ध्येयम् । ननूक्तरूपस्य विरोधव्याप्यत्वात्तेनैव गतार्थतेत्यत आह इदं चेति । तथा च प्रतिबन्धकभेदादेव पृथगाभासत्वमिति भावः । असामानाधिकरण्यादीत्यादिना साध्यव्यापकाभावप्रतियोगित्वसाध्यसमानाधिकरणभिन्नत्वादेर्वा परिग्रहः । व्यतिरेकव्याप्तौ साध्यासामानाधिकरण्याप्रवेशात् तद्ग्रहविरोधित्वं न सम्भवत्यतोऽन्वयेत्युक्तम् । ननु दशाविशेषे शब्दोऽनित्यः शब्दत्वादित्यस्यापि असाधारणत्वात्तत्र चोक्तरूपस्याभावादव्याप्तिरत आह साध्येत्यादि । तद्भ्रमः निरुक्तासाधारण्यभ्रमः । पुरुषस्य दोषो न तु हेतोर्दोषः ।

नवीनाः मिश्रादयः । सामग्रीद्वयेति । हेत्वभावे धर्मिणि साध्यतदभावव्यापकताग्राहकयोः सामग्र्योर्मिथो विरो-

रन्यतरेण भवितव्यम् । न च तत्र हेत्वभावः सम्भवति, अतोऽवश्य-मन्यतराव्यापकत्वं तस्य, एवंविधविरोधध्रौव्ये साध्येन तदभावेन च हेत्वभावस्य सहचारज्ञानं नैकतरानिरूपितामपि व्यापकतां ग्राहयति मिथो विरोधात्, विरोधिपरामर्शद्वयमिव साध्यतदभावौ, एवञ्च वृत्ति-मत्त्वविशेषितं हेतोर्यावद्विपक्षसपक्षव्यावृत्तत्वं वृत्तिमत्प्रतियोगित्व-विशेषितं वा हेत्वभावस्य यावत्सपक्षविपक्षवृत्तित्वमसाधारण्यमिति ।

---

धेनेत्यर्थः । विरोधोऽनुपपत्तिः । गगनादेर्हेतुतास्थले तदभावस्य साध्यतदभावोभयव्यापकताग्रहे बाधकाभाव इत्यत उक्तं वृत्ति-मतीति । तत्र हेतुमति । तस्य हेत्वाभावस्य । एवंविधेति । उक्तव्यापकत्वयोरेकैकमेण विरोधध्रौव्ये इत्यर्थः । सहचारज्ञानमिति। विरुद्धस्थले सहचारभ्रमेण व्यापकताभ्रमदर्शनात् तद्व्यापकतासा-मान्य प्रत्येव समानविशेष्यताप्रत्यासत्त्या तत्सहचारज्ञानं कारणमि-ति तु प्रागेव मिश्रैर्व्यवस्थापितमिति भावः । मिथ इत्यस्य व्यापक-त्वग्राहकसामग्र्योरित्यादिः। साध्यतदभावौ । न ग्राहयतीत्यन्वयः । अवृत्तिगगनादेर्यावत्सपक्षविपक्षव्यावृत्तत्वग्रहेऽपि तदभावस्य साध्य-तदभावोभयव्यापकताग्रहस्योत्पादादुक्तं वृत्तिमत्त्वविशेषितमिति । अत्र यावत्सपक्षविपक्षव्यावृत्तत्वं न यावत्सपक्षविपक्षवृत्तित्वाभावः शब्दो जातिः शब्दत्वादित्यादौ हेतुतावच्छेदकसमवायादिसम्बन्धेन सपक्षविपक्षवृत्तित्वाद्यप्रसिद्ध्याऽव्याप्तिप्रसङ्गात्, किं तु यावत्सपक्ष-विपक्षनिष्ठाभावप्रतियोगित्वं तथासत्येव हेत्वभावस्य साध्यतदभावो-भयसहचारस्य प्राप्तेरिति ध्येयम् । विशिष्टं चेदं प्रकृतहेतुना साध्य-तदभावयोः स्वार्थानुमानस्थले एव दूषणम् । परार्थस्थले तु यावत्स-पक्षव्यावृत्तत्वमात्रं दूषणं तद्ग्रहादेव हेत्वभावस्य साध्यतदभावव्या-पकताग्रहप्रतिबन्धात् । अत एवाऽसाधारणेन व्यतिरेकिप्रयोगे सर्वस-पक्षव्यावृत्तत्वमात्रमुद्भाव्यमिति मणिकृतैव व्याख्यातमिति ध्येयम् । ननु शब्दोऽनित्यः शब्दत्वगगनान्यतरस्मादित्यादौ अन्यतरत्वरूपेण गगनस्याप्यसाधारणत्वं न च तत्र वृत्तिमत्त्वमित्यव्याप्तिरत आह वृत्तिमदिति । इत्थम् । यथादिपदान्तर्भावेण । तदेवाह शब्दत्वं य-

योजयन्ति च ग्रन्थमित्थम्, शब्दत्वं यदि साध्यतदभाववद्वयावृत्तत्वेन तदुभयव्यापकीभूताभावप्रतियोगित्वेन ज्ञातं ज्ञानयोग्यं स्यात् तद्वत् स्यादिति यावत् तदा व्यतिरेकितया तादृशव्यतिरेकप्रतियोगित्वेनाऽर्थात् पक्षे तदुभयं साधयेत् तदुभयसहचरितं भवेत्, व्यापकाभाववति व्याप्याभावस्यावश्यम्भावात् अतथाभावे पक्ष-

---

इति । साध्यतदभाववद्व्यावृत्तत्वं यदि साध्यतद्भाववन्निष्ठाभावप्रतियोगित्वं तदा न तस्य साध्यतदभावसहचारापादकत्वं साध्यतदभावयोर्न्यूनवृत्तौ व्यभिचारात् अतो व्याचष्टे तदुभयेति । साध्यतदभावोभयेत्यर्थः । ननु निरुक्तप्रतियोगितया ज्ञातत्वमपि साध्यतदभावव्यधिकरणस्य न सम्भवतीति तत्र व्यभिचारतादवस्थ्यमत आह ज्ञानयोग्यमिति । निरुक्तप्रतियोगितया ज्ञानयोग्यत्वमपि तादृशप्रतियोगितातिरिक्तं दुर्वचमित्याशयेनाह तद्वत्स्यादिति । साध्यतदभावव्यापकीभूताभावप्रतियोगितावत्स्यादित्यर्थः । व्यतिरेकिमात्रस्य साध्यतदभावसहचरितत्वाव्याप्यत्वात् तृतीयार्थहेतुत्वासङ्गतेर्व्याचष्टे तादृशेति । साध्यतदभावव्यापकीभूतेत्यर्थः। वाकारशून्यं मूलमभिप्रेत्येदम् । ननु साध्यतदभावव्यापकीभूताभावप्रतियोगिनः साधनस्य विभिन्नाधिकरणे तदुभयसाहचर्यं न क्षतिकरमतः पूरयति पक्ष इति । शब्द इत्यर्थः । तत् उभयं साध्यं तदभावं च । ननु साध्यतदभावयोरेकैकव्याप्तिधीसहकारेण शब्दत्वस्य हेतोः साध्यतदभावोभयसाधकत्वमिष्यत एव सर्वैरतो व्याचष्टे तदुभयसहचरितं भवेदिति । अत्र साध्यव्यापकीभूताभावप्रतियोगि स्यात्साध्याभावसहचरितं स्यात् इति प्रत्येकमेव व्याप्तिः न तु विशिष्टमापादकम्, दृष्टान्तासिद्धेरिति ध्येयम्। ननु पक्षः साध्यतदभावयोर्व्यापकीभूतस्य हेत्वभावस्याभाववानपि स्यात् साध्यतदभावयोरभाववांश्च स्यादत आह व्यापकाभाववतीति । अन्यथेतिमूलमधृत्वैव व्याचष्टे अतथाभाव इति । पक्षे हेतोस्तदुभयसहचरितत्वाभाव इत्यर्थः । न्यूनतामपाकर्तुं पूरयति व्याप्तेर्वेति । साध्यतदभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तेर्वेत्यर्थः । ननु पक्षे तदुभयसहचरितं

धर्मताया व्याप्तेर्वाऽनुपपत्तिः, न च तथाभावः सम्भवति, न वा पक्षवृत्तित्वं बाधितम्, अतः साध्यतदभावोत्थापकतया तदुभयासिद्ध्यनुकूलविरोधिव्याप्तिद्वयग्राहकव्यतिरेकसहचारद्वयग्रहविषयतया असाधारणो दोषो व्याप्तिद्वयग्रहप्रतिबन्धकः । ननु यदि विरोधिव्याप्तिद्वयं न गृह्यते तदा सत्प्रतिपक्षोच्छेदः गृहीतविरोधिव्याप्तिद्वयहेतुसमुत्थत्वात् तस्येत्यत आह सत्प्रतिपक्ष इति । तत्र हेत्वोर्भिन्नतयाधिकरणभेदेन तथा ग्रहः सम्भवति, अत्र पुनरेकस्मिन् हेतौ तदुभयग्रहो विरुद्ध इत्यर्थः । अत्र चेदं चिन्त्यम् । एवं सपक्षादेर्यावत्त्वविशेषणं व्यर्थम्, दूषकतायामनुपयोगात् व्यभिचाराग्रहमा-

---

भवत्येव शब्दत्वमिति इष्टापत्तिं निरस्यति न चेति । भा॰ भावयोरेकत्रासत्त्वनियमादिति भावः। पक्षधर्मतानुपपत्ताविष्टापत्तिं निरस्यति न वेति । प्रत्यक्षत एव शब्दत्वहेतोः शब्दवृत्तित्वावगमादिति भावः । यथाश्रुतेन साध्यतदभावोपस्थापकेत्यादिमूलेन साध्यतदभावव्याप्तिग्राहकसामर्थ्याद्वयविरोधस्याऽप्राप्तेराह तदुभयेति।व्याप्तिग्रहेति । साध्यतदभावोभयव्यतिरेकव्याप्तिग्रहप्रतिबन्धक इत्यर्थः । गृहीतेति । गृहीतं विरोधिनोः साध्यतदभावयोर्व्याप्तिद्वयं ययोः तादृशहेतुप्रयुक्तत्वात् प्रतिपक्षस्येत्यर्थः । तथाग्रहः विरोधिव्याप्तिद्वयग्रहः । यावत्त्वं व्यर्थमिति । क्वचिदेवाधिकरणे हेत्वभावे साध्यादिसहचारस्य तत्र साध्यादिव्यापकताग्राहकत्वसम्भवादिति भावः। नन्वेकसाध्यादिमति हेत्वभावग्रहेऽप्यन्यत्र तादृशहेतुमत्त्वग्रहदशायां हेत्वभावस्य साध्यादिव्यापकत्वाग्रहादवश्यं हेत्वभावस्य यावत्सपक्षादिवृत्तित्वमेव साध्यादिव्यापकताग्राहकं वाच्यमत आह व्यभिचाराग्रहेति । तथा च व्यभिचारज्ञानस्य स्वातन्त्र्येण प्रतिबन्धकत्वादेव तदानीमुक्तव्यापकत्वाग्रहसम्भवादसाधारण्ये यावत्पदप्रवेशो व्यर्थ इति भावः । ननु न दूषकमेव यावत्त्वं किं तु हेत्वभावनिष्ठं सपक्षविपक्षव्यावृत्तत्वमेवासाधारण्यं वाच्यमत आह वृत्तिमत्त्वादीति । आदिना वृत्तिमत्प्रतियोगिकत्वापग्रहः । व्याप्तिज्ञानेति । साध्यतदभावोभय-

ओपक्षीणत्वात् । वृत्तिमत्त्वादिविशेषितस्यापि चासाधारण्यस्य ज्ञानं न व्याप्तिज्ञानविरोधि, विरोधिविषयकत्वाभावात् उपदर्शितविरोधस्य तच्छरीरेऽनन्तर्भावाच्च । व्यापकतयोरपि च न स्वतो विरोधः । उपदर्शितरीत्या तदवधारणे चावश्यं व्यभिचारज्ञानमेव प्रतिबन्धकम्, अत एव सत्यपि असाधारण्यज्ञाने एकत्रानुकूलतर्कावतारे भवति व्याप्तिधीरिति । एतेन तादृशसहचारज्ञानं तुल्य-

---

व्यतिरेकव्याप्तिज्ञानेत्यर्थः । ननु वृत्तिमता कुत्रापि स्यातव्यमित्याद्युक्तक्रमेणाऽसाधारण्यं व्याप्तिग्रहविरोध्येवेति तज्ज्ञानं विरोधिविषयकत्वेनैव प्रतिबन्धकं भविष्यतीत्यत आह उपदर्शितेति । तच्छरीरे असाधारण्यशरीरे । ननु साध्यतदभावाभवव्यापकत्वयोरेकत्र विरोधाद्धेत्वभावधर्मिकमिथोविरोधितदुभयसामग्रीत्वेनैव निरुक्तासाधारण्यज्ञानं तादृशव्यापकताद्वयग्रहं विरुन्ध्यादत आह व्यापकतयोरिति । न स्वत इति । साध्यतदभावव्यापकत्वयोः परस्पराभावानात्मकत्वादिति भावः । ननु वृत्तिमत्प्रतियोगित्वे सत्यनित्यत्वव्यापकत्वस्य नित्यत्वाव्यापकत्वेन तादृशनित्यत्वव्यापकत्वस्य चानित्यत्वाव्यापकत्वेन नियतत्वात्साध्यतदभावव्यापकत्वयोः विरोधोऽवधारणीयः इत्यत आह उपदर्शितरीत्येति । व्यभिचारज्ञानमेवेति । व्यापकत्वाभिमतस्य शब्दत्वाभावस्याभाववत्तया निश्चिते शब्दे व्याप्यत्वाभिमतयोः सन्दिग्धतया व्यभिचारज्ञानमेव शब्दत्वाभावे नित्यत्वानित्यत्वव्यापकताज्ञानप्रतिबन्धकमित्यर्थः । तथा चासाधारण्यग्रहस्य तदुभयव्यापकताधीविरोधित्वे मानाभाव इति भावः । अत एवेति । यत एवासाधारण्यज्ञानं न प्रतिबन्धकमत एव एकत्र साध्यस्य साध्याभावस्य वा व्यतिरेकव्याप्तावनुकूलतर्कावतारे हेत्वभावस्य तादृशव्याप्तिधीरुत्पद्यत इत्यर्थः । एतेनेति । परास्तमित्यन्वयः । तादृशेति । हेत्वभावधर्मिकसाध्यतदभावसहचारज्ञानमित्यर्थः । तर्कावतार इत्यस्यैकत्रेत्यादिः । नास्तीति । सतर्कसहचारज्ञानस्याधिकबलत्वादिति भावः । तर्को न बलं व्याप्त्यग्राहकत्वात् किं तु

बलविरोधिव्याप्तिग्रहसामग्रीत्वेन प्रतिबन्धकं तर्कावतारे पुनस्तुल्यबलतैव नास्तीति परास्तम्। तर्कस्य व्यभिचारशङ्कानिवर्त्तकत्वेनैवोपयोगित्वात् सामग्रीत्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच्च। सत्प्रतिपक्षे च विरोधिव्याप्यवत्तानिर्णयत्वेन प्रतिबन्धकत्वं न तु विरोधिसामग्रीत्वेन, बाधावतारे त्वापाततः सत्प्रतिपक्षितत्वेऽपि बाधेन प्रतिहेतोरव्याप्यत्वादिज्ञान एव साध्यानुमित्युदयादिति कृतं पल्लवितेन ॥

---

व्यभिचारज्ञानाभाव एव तथा, स चेदुभयत्र तदैकत्र तर्कसद्भावेप्युभयत्र व्याप्तिग्रहे बाधकाभाव इत्यभिप्रेत्याह तर्कस्येति। ननु तुल्यबलव्यभिचारसंशयसामग्रीत्वेन तादृशसहचारज्ञानं साध्यतदभावव्याप्तिधीप्रतिबन्धकमेकत्र तर्कावतारे तु न तुल्यबलत्वं तर्कस्य व्यभिचारधीविरोधित्वादत आह सामग्रीत्वेनेति। अयोगाच्चेति। यद्विषयकत्वेन ज्ञानस्य विरोधित्वं तस्यैव हेत्वाभासत्वादिति भावः। ननु विरोधिनिश्चयसामग्रीत्वेन प्रतिबन्धकत्वेपि यथा सत्प्रतिपक्षस्य हेत्वाभासत्वं तथात्रापि स्यादत आह सत्प्रतिपक्षे चेति। ननु विरोधिव्याप्यवत्तानिश्चयत्वेनैव तत्र विरोधित्वे प्रतिहेतुना साध्यस्य बाधावतारेपि प्रकृतसाध्यानुमितिर्न स्यात् अस्माकं तु साध्याभावानुमितिसामग्रीविरहादेव तदानीं न साध्यानुमितिप्रतिबन्ध इत्यत आह बाधेत्यादि। आपातत इति। बाधेन यावत्प्रतिहेत्वादावव्याप्यत्वादिज्ञानं नोत्पद्यते तावदित्यर्थः। प्रतिहेतुपरामर्शस्य प्रकृतानुमितिविरोधितायां तादृशहेतोरव्याप्यत्वज्ञानस्योत्तेजकत्वे मानाभावः कुत्राप्यक्लृप्तत्वात्, अन्यथा हेत्वाभासलक्षणोक्ततादृशबाधनिश्चयस्यैव तत्रोत्तेजकत्वं किमित्युपेक्षितमित्यतो व्याप्यत्वादीत्यादिपदं प्रतिहेतुपरामर्शस्याऽप्रामाण्यलाभार्थम्। तेनाप्रामाण्यज्ञानाभावविशिष्टस्यैव साध्याभावपरामर्शस्य प्रतिबन्धकत्वादप्रामाण्यज्ञानदशायां च तदसत्त्वान्न साध्यानुमितिप्रतिबन्ध इति भावः। अत्रेदं बोध्यम्। अनुमितित्वादेः प्रत्येकस्य प्रतिबध्यतावच्छेदकत्वे पक्षधर्मिकसाध्यव-

सानुमितित्वावच्छिन्नं प्रति पक्षधर्मिकसाध्याभावज्ञानाव्यवहितपूर्ववर्तिबुद्धित्वपर्यवसितेन साध्याभाववत्ताज्ञानसामग्रीत्वेन प्रतिबन्धकत्वमुचितं लिङ्गादिभेदेन बहुविधैः पक्षधर्मिकसाध्याभावव्याप्यवत्तानिश्चयैस्तथात्वे गौरवात् सत्प्रतिपक्षस्थलेपि संशयाकारस्यैव साध्याभावज्ञानस्योपगमेन तत्सामग्रीसम्भवात्, पक्षधर्मिकसाध्याभावज्ञानाव्यवहितपूर्वत्वं च स्ववृत्तिध्वंसप्रतियोगित्वस्वसामानाधिकरण्योभयसम्बन्धेन तादृशज्ञानवत्त्वम्, अतो नाऽनुगमर्वातापि, स्वत्वस्य परिचायकत्वात्तत्रेति निबन्धकारानुयायिनः ।

इति श्रीजगदीशतर्कालङ्कारकृतायामनुमानदीधितिव्याख्यायामसाधारणग्रन्थः समाप्तः ।



## चिन्तामणेः अनुपसंहारी ।

अनुपसंहार्य्यो नाऽसत्सपक्षविपक्षः, सिद्ध्यसिद्धि-विरोधात् । नापि केवलान्वयिधर्मावच्छिन्नपक्षकः, केवलान्वयिसाध्यकस्य सद्धेतुत्वात् व्यतिरेकिसाध्यकस्य तु साध्यतदभाववद्गामित्वेन साधारणत्वात् । अन्यथा संशयाहेतुत्वेनाऽनैकान्तिकता न स्यात् । सर्वं क्षणिकं सत्त्वादिति साध्याप्रसिद्ध्या व्याप्यत्वासिद्धमपार्थकं वा,

---

## दीधित्याः अनुपसंहारी ।

केवलान्वयीत्यादि । सद्धेतुत्वं साधारणत्वञ्च केवलान्वयिनः साधनस्य, व्यतिरेकिणस्तु भागासिद्धत्वं साधारणत्वं विरुद्धत्वञ्च

---

## जागदीश्याः अनुपसंहारी ।

ननु सर्वस्य पक्षतायां केवलान्वयिसाध्यकस्यापि घटत्वादेर्न सद्धेतुत्वं भागासिद्धत्वादेवं वन्ह्यादिव्यतिरेकिसाध्यकस्यापि धूमजलत्वादेर्न साधारण्यं सम्भवति, तथापि सर्वत्र व्यतिरेकिसाध्यकस्थले द्रव्यत्वादेर्न तथात्वसम्भवः किं तु केवलान्वयिनः प्रमेयत्वादेरेवेत्याशयेन केवलान्वयिन इत्युक्तम् । न्यूनतां परिहर्तुमाह व्यतिरेकिणस्त्विति । साधनस्येत्यनुषज्यते । यथासम्भवमिति ।

साध्यप्रसिद्धौ तु साधारणमेव । न च पक्षान्यसाध्यवदन्यवृत्तित्वं पक्षातिरिक्तसाध्याभाववद्वृत्तित्वं वा साधारणत्वम्, व्यर्थविशेषणत्वात् । न च विरुद्धं विशेषणस्य व्यावर्त्यमित्युक्तम् । नाप्यत्यन्ताभावप्रतियोगिसाध्यकत्वे सति केवलान्वयिधर्मावच्छिन्नपक्षकत्वम्, सर्व-

---

यथासम्भवं बोध्यम् । नापीति । केवलान्वयिसाध्यकवारणाय सन्तम् । व्यतिरेकिसाध्यकसद्धेतुवारणाय केवलान्वयीत्यादि । पक्षत्वं साधकबाधकमानशून्यत्वम् । केवलान्वयिसाध्यकेऽपि बा-

---

सर्वस्य पक्षतायां केवलान्वयि साध्यं चेत्तदा व्यतिरेकिणः साधनमात्रस्यैव भागासिद्धत्वं व्यतिरेकि वन्ह्यादिकं साध्यं चेत्तदा द्रव्यत्वादेः साधारणत्वं जलत्वादेर्विरुद्धत्वं धूमादेः सद्धेतुत्वं तु नाशङ्कनीयं, भागासिद्धत्वेनैव तथात्वायोगादिति भावः । केवलान्वयिसाध्यकेति । व्याप्तिनिश्चयदशायां तस्याप्यलक्ष्यत्वादिति भावः । सद्धेतुत्वं निश्चितव्याप्तिकत्वं तेन धूमसाध्यकवन्ह्यादेरपि गृहीतसाध्यसहचारस्याऽवारणान्न न्यूनत्वम् [ननु विरुद्धवारणाय सपक्षवृत्तित्वमिवानुपसंहारिवारणाय पक्षान्यत्वमपि साधारण्यलक्षणविशेषणं देयमेवत्यत आह मूले न च विरुद्धमिति । उक्तं साधारणग्रंथेनथाच दृष्टान्तासिद्धेरिति भावः] नन्वत्र पक्षत्वं यदि सन्दिग्धसाध्यकत्वं तदा सर्वत्र साध्यसन्देहदशायां केवलान्वयिसाध्यस्याप्यनुपसंहारित्वात्तद्वारणाय सत्यन्तानौचित्यमत आह पक्षत्वमिति । सिद्ध्यभावमात्रस्य पक्षतात्वे व्यतिरेकव्याप्तिमत्तया निश्चितस्यापि वन्ह्यादिसाध्यकधूमादेरनुपसंहारित्वापत्तिरतो बाधकमानप्रवेशः । तथा च कुत्रापि साध्यतदभावयोर्निश्चयदशायामनुपसंहारित्वमिति भावः । ननु बाधकमानं साध्याभावस्य निश्चयः तथा च केवलान्वयिनामभावाप्रसिद्ध्या विशेष्यदलेनैव तत्साध्यकस्य

र्वमभिधेयं मेयत्वादित्यत्र विप्रतिपत्त्या पक्षतादशायां पक्षे साध्यानिश्चयेनाऽनुपसंहारिण्यव्यापकत्वात् । अथ पक्षातिरिक्ते व्याप्तिग्रहानुकूलाप्रतीतसहचारोऽनुपसंहार्य्यः,

---

धकमानाप्रसिद्धिरुक्तैवेति न सत्यन्तवैयर्थ्यम् । निश्चितसाध्याभाववत्तन्मात्रवृत्तित्वे त्वसाधारण्यं विरुद्ध इति साधारण्याद्यग्रहदशायामसाङ्कर्य्यमिति वा हृदयम् । अव्यापकत्वादिति । सद्धेतुत्वञ्च व्याप्तिनिश्चयदशायामेवेति भावः । अथेत्यादि । पक्षातिरिक्ते न प्रतीतो निश्चितो व्याप्तिग्रहानुकूलोऽन्वयेन व्यतिरेकेण वा सह-

---

चारणसम्भवे सत्यन्तभागो व्यर्थ इत्यत आह केवलेति । पक्षधर्मिकसाध्यवत्ताग्रहविरोधिमानमेव बाधकमानं तच्च साध्यादौ पक्षवृत्त्यत्यन्ताभावप्रतियोगित्वाद्यवगाहिनिश्चयरूपमेव सुलभमिति पक्षतायामुक्तत्वादिति भावः । ननु साध्याभाववदवृत्तित्वलक्षणसाधारण्यसाध्याभाववन्मात्रवृत्तित्वलक्षणविरुद्धत्वयोरन्यतरेण सङ्करादुक्तरूपं नानुपसंहारित्वमत आह निश्चितेति । तथा चानुपसंहारितादशायां साध्याभावस्य कुत्राप्यनिश्चयान्न ताभ्यां सङ्कर इति भावः । नन्वेवं साधारण्यादेर्निश्चयगर्भत्वे नित्यदोषता न स्यादतः कल्पान्तरमाह साधारण्याद्यग्रहेति । तथा च साध्याभाववदवृत्तित्वादेरेव साधारण्यादित्वेऽपि न क्षतिः ज्ञानसाङ्कर्यादेवानुपसंहारिणः पृथक्त्वादिति भावः । ननु सर्वमभिधेयं प्रमेयत्वादित्यतस्यानुपसंहारित्वे केवलान्वयिसाध्यकस्य सद्धेतुत्वादिति प्रागुक्तमूलासङ्गतिरत आह सद्धेतुत्वं चेति । अन्यथा लक्षणस्थसत्यन्तदलस्यैव व्यर्थतापत्तेरिति भावः । अप्रतीतेत्यस्य विशेषणत्वात्तदेव पूर्वं निपात्य योजयति पक्षातिरिक्तेत्यादिना । अनुपसंहारितादशायामपि संशयात्मकसहचारप्रतीतिरस्त्येवेत्यत आह न निश्चित इति । व्याप्तिग्रहानुकूलेत्यनुगतोक्तसङ्ग्रहं प्रदर्शयति अन्वयेन व्यतिरेकेण चेति । ननु पक्षे गृही-

यदि च पक्षे व्याप्तिग्रहः कथञ्चित्तदा शब्दोपदर्शितव्याप्तिकानुमानवदभेदानुमानवच्च सद्धेतुरेवेति चेन्न । तत्रैव सद्धेतावतिव्याप्तेः, सर्वस्य पक्षत्वे पक्षातिरिक्ताप्रसिद्धेः,

---

चारो यस्य स तथा । सद्धेतुरेवेति । तथा च लक्षणे पक्षातिरिक्तपदं सहचारग्रहस्थलमात्रोपदर्शकं न तु विशेषकमिति । विशेषकत्वाभिप्रायेण दूषणद्वयमाह तत्रैवेत्यादि । असाधारणे सपक्षव्यावृत्ते पक्षतादशायां शब्दोऽभिधेयः शब्दत्वादित्यादौ जलं निःस्नेहं

---

तद्व्याप्तिकस्य सद्धेतुत्वेपि पक्षादन्यत्राऽनिश्चितसाध्यसहचारत्वरूपमनुपसंहारित्वं तत्रातिव्याप्तमेवेत्यतो भावार्थमाह तथा चेति । स्थलमात्रेति । मात्रपदं कृत्स्नार्थकम्।न तु विशेषकमिति।न विशेषस्य पक्षादन्यत्वस्य प्रापकमित्यर्थः । तथा च पक्षेऽतिरिक्ते चेति द्वन्द्वसमासो निरुक्तिकृतामभिप्रेत इति नातिव्याप्तिरिति भावः । नन्वेवं तत्रैवेत्याद्युत्तरमूलासङ्गतिरत आह विशेषकत्वेति । पक्षातिरिक्तपदस्य पक्षादन्यत्वरूपस्य विशेषस्य प्रापकत्वाभिप्रायेणेत्यर्थः । तथा च पक्षादतिरिक्तः पक्षातिरिक्त इति तत्पुरुषाभिप्रायेण दूषणमिति भावः । ननु शब्दो नित्यः शब्दत्वादित्यसाधारणस्थले अयं गौरश्वत्वादितिविरुद्धस्थले च घटाद्यवच्छेदेनैव व्याप्तिग्रहानुकूलव्यतिरेकसहचारस्य प्रतीतिसम्भवान्नातिव्याप्तिरतः स्थलान्तरं तामाह असाधारण इत्यादिना । सपक्षविपक्षव्यावृत्तत्वं यद्यसाधारण्यं तदा विपक्षत्वाप्रसिध्यैव नातिव्याप्तिरतो व्याचष्टे सपक्षव्यावृत्त इति । निश्चितसाध्यवद्व्यावृत्त इत्यर्थः । पक्षताविरहे पक्षातिरिक्तपदार्थाप्रसिद्ध्यैव नातिव्याप्तिरतः पूरयति पक्षतादशायामिति । शब्दत्वादित्यादाविति । अतिव्याप्तिरित्यन्वयः। पक्षातिरिक्ते कुत्राप्यन्वयतो व्यतिरेकतो वा सहचारस्य तत्राऽप्रतीतेरिति भावः।साध्यवद्व्यावृत्तत्वमेवाऽसाधारण्यं तदाप्याह जलमित्यादिना।अत्र निःस्नेहत्वं स्नेहवदन्यत्वं स्नेहव-

असाधारणविरुद्धयोरतिव्याप्तेश्च, दूषकतायां व्यर्थविशेषणत्वाच्च । न च दूषकताऽनैकान्तिकत्वेन न प्रत्येकमिति वाच्यम् । अर्थगत्या व्यर्थविशेषणत्वात् । नापि

---

शीतस्पर्शवत्त्वादित्यादौ च रूपं जलं वा द्रव्यभिन्नं गुणवत्त्वात् गुणकर्मावृत्तिजातिमत्त्वादित्यादौ विरुद्धे चातिव्याप्तिरित्यर्थः । दूषकतायामिति । सहचाराभावस्यैव ज्ञानं विरोधि न तु तत्प्रत्ययांशस्यापीति । अर्थगत्येति । अनैकान्तिकशब्दार्थविवेचनेन प्रातिस्विकरूपेणैव प्रतिबन्धकत्वव्यवस्थितेरित्यर्थः । केचित्तु दूषकतायामसाधकतायाम्, अर्थेति, अनैकान्तिकशब्दार्थे उभयको-

---

वृत्तिजातिमत्त्वे वा, तेनोत्पत्तिकालावच्छेदेन स्नेहशून्यस्थूलजले जन्यशीतस्पर्शवत्त्वस्य सत्त्वेपि न क्षतिः । असाधारणस्य स्थलविशेषमुक्त्वा विरुद्धस्य तमाह रूपमित्यादिना । अत्र विरोधस्य स्वरूपासिद्धबाधान्यतरसङ्कीर्णतानियमात् स्वरूपासिद्धिसङ्कीर्णविरोधं दर्शयितुं रूपस्य बाधसङ्कीर्णं च तं प्रदर्शयितुं जलस्य पक्षतया निर्देशः । ननु घटादौ उत्पत्तिकालावच्छेदेन गुणवत्त्वस्य हेतोर्व्यतिरेकसत्त्वात् द्रव्यभिन्नत्वाभावात्तत्रैव व्यतिरेकसहचारो गृहीतुं शक्यत एवेत्यतो हेत्वन्तरमाह गुणेत्यादि । गुणकर्मावृत्तेः समवायेन हेतुतालाभार्थं जातिपदम् । तत्प्रत्ययेति । सहचारप्रत्ययांशस्येत्यर्थः । तथा च व्याप्तिग्रहानुकूलसहचारशून्यत्वमेवानुपसंहारित्वं युक्तमिति भावः । अनैकान्तिकशब्देति । ऐकान्तिकत्वं साध्यैकनियतत्वं साध्यव्याप्यत्वमिति यावत्, नञा च तद्ग्रहप्रतिबन्धकग्रहविषयत्वरूपतद्विरोधित्वमुपस्थाप्यत इत्यनैकान्तिकशब्दार्थमहिम्ना साधारण्यादिकं प्रत्येकमेव दूषणं प्राप्तमुक्ताऽनुपसंहारित्वस्य च व्यर्थविशेषणत्वान्न तथात्वसम्भव इति भावः । असाधकतेति । अयं हेतुरसाधकोऽनुपसंहारित्वादित्यत्र व्याप्तिग्रहानुकूलसहचाराभावादित्य-

विप्रतिपत्तिविषयमात्रवृत्तित्वम्, केवलान्वयिसाध्यके अव्याप्तेः, सर्वस्य पक्षत्वे मात्रार्थाभावादिति ॥

---

दृगुपस्थापकत्वादौ साध्योपस्थापकत्वाद्यंशस्य व्यर्थत्वादित्यर्थ इत्याहुः । विप्रतिपत्तिः पक्षे साध्याभावप्रतीतिः साध्ये पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तिर्वा, आद्ये केवलान्वयीति । साध्याभावाप्रसिद्ध्या अव्याप्तिरित्यर्थः । उभयत्र सर्वस्येति । अतिव्याप्तेरिति पाठे तन्मात्रवृत्तित्वं तत्त्वव्याप्यवृत्तिकत्वं तदितरावृत्तित्वं वा, आद्ये केवलेति । इदञ्च यथाकथञ्चिद्व्याप्तिग्रहदशायाम् । द्वितीये सर्वस्येति ॥

---

स्यैव सम्यक्त्वे प्रत्ययांशस्य व्यर्थत्वादिति भावः । साध्योपस्थापकत्वादीत्यादिना साध्याभावोपस्थापकत्वांशस्योपग्रहः । व्यर्थत्वादिति । अयं हेतुरसाधकोऽनैकान्तिकत्वादित्यत्र साध्यसन्देहजनकसाध्यतदभावोपस्थापकपक्षधर्मताज्ञानविषयत्वरूपानैकान्तिकत्वहेतौ साध्योपस्थापकत्वाद्यंशस्य व्यर्थत्वात् साध्यसन्देहजनकसाध्याभावोपस्थापकेत्यादेः साध्यसन्देहजनकसाध्योपस्थापकेत्यादेरेव वा हेतोः सम्यक्त्वात् तथा च प्रत्येकरूपाणामिवाऽनुगतरूपस्याप्यसाधकत्वानुमापकत्वं दुर्घटमिति भावः । अयं हेतुरसाधकोऽनुपसंहारित्वादित्यत्राऽगृहीतसहचारकत्वहेतौ भिन्नधर्मिकत्वाद्व्यर्थ्यंशङ्कैव नास्तीत्यस्वरसः केचिदाहुरित्युक्त्या सूचितः । सर्वस्येत्यादिमूलस्य प्रागुक्ताव्याप्त्युपष्टम्भकत्वे केवलान्वयिसाध्यकत्वपर्यन्तानुसरणवैयर्थ्यापत्तिरतो दूषणद्वयाभिप्रायेण मूलं व्याख्यातुं वितर्कयति विप्रतिपत्तिरिति । उभयत्र साध्याभाववत्त्वस्य पक्षनिष्ठाभावप्रतियोगित्वस्य वा प्रतीतेः प्रवेशे । इत्थं च मूले मात्रार्थाभावादित्यत्र चकारः पूरणीयः । तत्त्वं विप्रतिपत्तिविषयत्वम् । व्याप्तिस्तु व्यापकसामानाधिकरण्यरूपा ग्राह्या । स्वसत्ताव्यापकविप्रतिपत्तिविषयताकत्वं तु फलितार्थः । ननु सर्वत्र मेयत्वादेः विप्रतिपत्तिदशायां तत्साध्यस्य

उच्यते । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतोऽनुपसंहारी । स चान्वयेन व्यतिरेकेण वा सर्वस्य पक्षत्वे दृष्टान्ताभावात् घटोऽनित्यो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यादौ साध्यसाधनसाहचर्य्याज्ञानात्तस्य विरुद्धत्वाज्ञानदशायामनुपसंहारित्वेनेष्टत्वात्।

---

व्याप्तीत्यादि । यत्र यस्येत्यर्थः।तथा च हेत्वभिमतशब्दोपसन्दानात् तद्धेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपसंहाराभावस्तस्याऽनुपसंहारित्वमित्यर्थलाभाद्व्यतिरेकिणि नातिव्याप्तिः।

---

हेतोरनुपसंहारित्वात्कथं तत्रातिव्याप्तिरत आह इदं चेति । कथञ्चित् आप्तवाक्यादिना ॥

## अथाऽनुपसंहारिसिद्धान्तः ।

ननु साध्याभावहेत्वभावयोः सहचारग्रहदशायामपि हेतौ सहचारनिश्चयात्मकस्य तादृशैकधर्म्युपसंहारस्याभाववत्त्वात्तदानीमतिव्याप्तिरत आह यस्येत्यर्थ इति । तथा च यदा यदीयव्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावः तदैव सोऽनुपसंहारीत्यर्थः । अत्र च व्याप्तिग्रहस्य यदीयत्वं न यद्विशेष्यकत्वं येन यत्रेति सप्तम्या अपि तल्लाभसम्भवं यस्येतिषष्ठ्या विवरणासङ्गतिः तथासत्यन्वयव्यतिरेकव्याप्त्योरनुगतधर्माभावादेकमात्रोक्तौ अन्यव्याप्तिग्रहदशायामतिव्याप्त्यापत्तेः किं तु तद्धेतुकप्रकृतसाध्यानुमित्यौपयिकत्वरूपमेव यदीयत्वमुभयव्याप्तिग्रहानुगमकं वाच्यम् । न चैवं हेत्वभिमतपदं व्यर्थं, तदुपसन्धानादेवोक्तार्थलाभादित्यभिप्रेत्याह तथा चेति । तद्धेतुकप्रकृतसाध्यसिद्ध्यौपयिको यो व्याप्तिग्रहः तदनुकूलधर्म्युपसंहाराभावः तस्य हेतोरनुपसंहारित्वमित्यर्थः । अत्र

केवलान्वयिधर्मावच्छिन्नपक्षको वा। सर्वमभिधेयं प्रमेयत्वादितिसद्धेतौ न केवलान्वयी पक्षतावच्छेदकः, निश्चितसाध्यवद्वृत्तित्वात् । विप्रतिपत्त्या साध्यानिश्चयदशायां पक्षत्वे तदनुपसंहार्य्येव । व्यतिरेकिसाध्यके साध्याभाववद्वृत्तित्वाज्ञानदशायामिदं दूषणम्, तदव-

———

ननूपसंहारः सहचारः तन्निश्चयो वा, आद्ये तादृशस्याभावो निखिलप्रसिद्धानुपसंहार्य्यव्यापकः अतिव्यापकश्च रूपं द्रव्यभिन्नं गुणवत्त्वादगुणकर्मावृत्तिजातिमत्त्वादित्यादेः, द्वितीये पुनरज्ञानरूपासिद्धिपर्य्यवसायी कारणाभावतया स्वरूपमन्नेव दोषो न हेत्वाभास इत्यत आह केवलान्वयीति । पक्षः साध्यनिश्चयविरोधिनः

———

व्याप्तीति स्वरूपकथनमात्रं न तु विवक्षितं वैयर्थ्यादन्वयव्यतिरेकसाधारणव्याप्तित्वस्यैकस्य दुर्वचत्वात् च, साध्यसिद्ध्यौपयिकताविशेषस्य निवेशादेवातिप्रसङ्गभङ्गादिति ध्येयम् । व्यतिरेकिणि व्यतिरेकव्याप्तिमत्तया निश्चिते ।

तन्निश्चयो वेति । उभयत्रापि व्याप्तिग्रहानुकूलत्वस्य वक्तुं शक्यत्वादिति भावः । तादृशस्य निरुक्तसहचारस्य । सर्वं निःस्नेहं जलत्वादित्यादेर्विरुद्धस्यापि दशाविशेषे अनुपसंहारित्वात्तत्राव्याप्त्यसम्भवादाह प्रसिद्धेति । तथा च सर्वमनित्यं प्रमेयत्वादित्यादावव्याप्तिरित्यर्थः । अतिव्यापकश्चेति । साध्यहेत्वोस्तदभावयोर्वा तत्र सहचारस्यासम्भवादिति भावः । सर्वस्य पक्षत्वे अनुपसंहारित्वमिष्टमेवेत्यतो रूपस्य पक्षतया निर्देशः । कारणाभावेति । व्याप्तिज्ञानकारणाभावेत्यर्थः । दोषोऽनुमित्यनुत्पत्तिनियामकः । न हेत्वाभासः । तज्ज्ञानस्याऽप्रतिबन्धकत्वादग्रे हेत्वादिमद्धर्मिकसाध्यसन्देहस्य व्याप्तिधीविरोधित्वात्तद्विषयस्यैव अनुपसंहारित्वं वा-

गमेऽपि साधारणसङ्कर एव । एवं व्याप्यत्वासिद्धेर्ज्ञाने ।

---

साध्यवान्नवेत्यादेः सन्देहस्य विषयः । अवच्छेदकत्वञ्च स्वान्यून-वृत्तितत्कत्वं तच्च स्वरूपसतोऽप्यविरुद्धम् । तेन प्रातिस्विकद्रव्य-त्वादिरूपेण सर्वत्र साध्यसन्देहदशायां नाव्याप्तिः । एवञ्च सर्वत्रैव हेत्वादिमति साध्यतदभावसन्देहाद्व्याप्त्यग्रहेणाभासत्वम् । परार्थ-स्थले बहिर्भावं व्युत्पादयति एवमित्यादिना । असिद्धिरनिश्चयः ।

---

श्चयमित्यभिमानः । ननु पक्षत्वं यदि साध्यतदभावकोटिकसंशयवि-शेष्यत्वं तदा साध्यवत्तदन्यत्वकोटिकसंशयदशायामव्याप्तिरतोऽनु-गतरूपेण संशयं निवेशयति साध्यनिश्चयेति । साध्यनिश्चयो विरो-धी प्रतिबन्धको यस्य तादृशस्येत्यर्थः । सर्वे वह्निव्याप्यवत् धूमा-दित्यादौ सर्वं वन्हिमन्न वेत्यादिसंशयस्यापि साध्यवत्तानिश्चयप्रति-बध्यत्वात्तद्दशायामपि धूमादेरनुपसंहारित्वापत्तिः अतः प्रकृतसाध्य-वैत्तावगाहित्वावच्छिन्नमेव साध्यवत्तानिश्चयप्रतिबध्यत्वं निवेशनी-यमित्यावेदयितुं संशयं विशिष्योल्लिखति साध्यवान्नवेत्यादेरिति । सर्वधर्मिकसाध्यवत्तानिश्चयप्रतिबद्धस्य तादृशसाध्याभावनिश्चयस्य सत्वेनुपसंहारित्वाभावादुक्तं संशयस्येति । यद्यपि धर्मान्तरसन्देहा-त्मकस्य साध्याभावनिश्चयस्य ततोप्यवारणं प्रकृतसाध्यसंशयत्वा-भिधाने च नानुगमवार्तापि, तथापि साध्यवत्ताज्ञानाविरोधित्वमे-वात्र संशयत्वं बाधनिश्चयस्तु न तथेति तद्व्युदासः । नन्वेतावता केवलान्वयिधर्मावच्छिन्नतादृशसंशयविशेष्यताकत्वं फलितं तत्र चावच्छेदकत्वं यदि स्वरूपसम्बन्धविशेषः तदा द्रव्यत्वगुणत्वादि-प्रातिस्विकरूपेण सर्वत्र साध्यसन्देहदशायामनुपसंहारिण्यव्याप्तिः तत्र केवलान्वयिधर्मस्य प्रमेयत्वादेः साध्यसन्देहविशेष्यतानवच्छे-दकत्वादत आह अवच्छेदकत्वञ्चेति। स्वं केवलान्वयिधर्मः तद्व्यापकी-भूततादृशविशेष्यताकत्वमर्थः । केवलान्वयिसाध्यकानुपसंहारिस्थले च अभावान्तरे साध्यीयत्वाद्यवगाहिनः सर्वं प्रमेयं न वेत्यादिसंशय-

तदुद्भावने चायं व्यभिचारवदुपजीव्यत्वाददोषः । घटा-
काशोभयवृत्तिहित्वाश्रयत्वञ्च विरुद्धमेव । एतेनाऽनु-

———

ज्ञाने ज्ञापने । स्वार्थस्थलेऽन्तर्भावम् एतेनेत्यादिनाशङ्क्य निरस्यति
उपजीव्यत्वादिति । अत्रेदं चिन्त्यम् । हेतुमति साध्याभावसन्देहो
नाभासः सत्त्वयैव विरोधित्वात्, तद्विषयस्तु हेतोः साध्याभावसा-
मानाधिकरण्यं साध्यस्य वा हेतुमन्निष्ठाभावप्रतियोगित्वं नास्त्येव
केवलान्वयिसाध्यके, व्यतिरेकिसाध्यके तु साधारण्यरूपतया स-

———

स्यैव तादृशविशेष्यत्वं सुलभमिति भावः। स्वरूपसतः धर्मिण्यप्रका-
रीभूतस्य । उक्तसंशयस्याभासताप्रयोजकं रूपमाह एवं चेति । हे-
त्वादीत्यादिना हेत्वभावस्य परिग्रहः । एतेनेत्याद्यग्रिममूलेन पौनरु-
क्त्यं निरसितुमाह परार्थ इति । बहिर्भावमित्यस्य व्याप्यत्वासिद्धित
इत्यादिः । व्याप्यत्वासिद्धिर्यदि व्याप्यत्वाभावः तदा निरुक्तानुपसंहा-
रित्वस्यानुपजीव्यत्वादसङ्गतिरतो व्याचष्टे असिद्धिरिति । तथा
च सहचारनिश्चयाभावस्य कारणभावमुद्रया व्याप्तिनिश्चया-
भावोपजीव्यत्वं सुघटमेवेति भावः । परार्थस्थले हेत्वाभासज्ञा-
पनस्यैव उद्देश्यत्वाद्व्याचष्टे ज्ञाने ज्ञापन इति । अन्तर्भावमित्यस्य
व्याप्यत्वासिद्धावित्यादिः । नाभास इति । तथा च सुतरां
नाऽनुपसंहारित्वमिति भावः । सत्तया स्वरूपसत्तया । विरोधि-
त्वादित्यस्य व्याप्तिबुद्धावित्यादिः । ननु माभूत्तद्धेतुमद्विशेष्य-
कः साध्यसंशयो हेत्वाभासः तथापि व्याप्तिज्ञानविरोधिनः तस्य
विषय एव तथा भविष्यतीत्यत आह तद्विषयास्त्विति । नास्त्येव के-
वलेति । तथा च सर्वं प्रमेयं वाच्यत्वादित्याद्यनुपसंहारिण्यव्याप्तिः ।
यद्यपि सर्वं वह्निमद्धूमादित्यादौ व्यतिरेकिसाध्यकेऽप्यव्याप्तिः स-
म्भवति, तथापि केवलान्वयिसाध्यके सर्वत्रैवाव्याप्तिः व्यतिरेकि-
साध्यके तु क्वचिदेव इत्याशयेन तन्मात्रोल्लेखः। साधनवन्निष्ठाभावा-

पसंहारित्वप्रतिसन्धानं यदि व्याप्तिग्रहस्तदानुमितिरेव तदभावे व्याप्यत्वासिद्धिरेवेति निरस्तम्, उपजीव्यत्वादिति ॥

---

न्दिग्धानैकान्तिकत्वं पर्य्यवसितं, विश्वविषयकसाध्यतदभावसन्देहे च कारणीभूतान्वयव्यतिरेकसहचारग्रहविरहात् संशयसामग्र्या साध्यतदभाववत्त्वानिश्चयप्रतिबन्धाद्वा व्याप्त्यग्रहेऽज्ञानरूपासिद्धिरेव, उपजीव्योऽपि च साध्याभावसन्देहादिर्नाभासः सत्त्वैव विरोधादिति । यत्तु व्याप्तीति, व्याप्तिग्रहानुकूलसहचारानिश्चयत्वाव-

---

प्रतियोगित्वं वा प्रकृते केवलान्वयित्वं तेन तस्याप्युपग्रहः । ननु बाधभ्रमस्येव सर्वं हेतुमत्प्रमेयं न वेत्यादिसंशयस्यापि हेत्वाभासत्वं नोपेयमतस्तत्राव्याप्तिर्न क्षतिकरीत्यत आह व्यतिरेकीत्यादि । सन्दिग्धेति । तथा च न साधारण्यात्पार्थक्यमिति भावः । ननूक्तसंशयविषयतापन्नं साध्याभाववद्वृत्तित्वमेवास्तु अनुपसंहारित्वं तादृशसंशयविषयतानवच्छिन्नस्यैव तस्य साधारणत्वेन मिथो भेदसम्भवादतः सर्वधर्मिकसाध्यसन्देहस्य व्याप्तिधीप्रतिबन्धकत्वमेव निरस्यति विश्वेत्यादिना । कारणीभूतेत्यस्य व्याप्तिग्रहेत्यादिः । सहचारग्रहेति । सहचारस्य ग्रहो निश्चयः तद्विरहादित्यर्थः । तथा च कारणाभावादेव व्याप्तिग्रहाभावस्योपपत्तौ साध्यसन्देहस्य तत्र प्रतिबन्धकत्वे मानाभाव इति भावः । ननु विश्वधर्मिकसाध्यसन्देहदशायामेवान्वयव्यतिरेकसहचारयोर्निश्चयः कुतो न जायते इत्यत आह संशयसामग्र्या इति । निश्चयप्रतिबन्धादिति। प्राचां मतेनेदम्, तैर्निश्चयत्वस्य जन्यतावच्छेदकत्वोपगमात्, स्वमते तु साध्यादिविशिष्टवैशिष्ट्यविषयताकस्य साध्यादिसहचारज्ञानस्य विशेषणतावच्छेदकीभूतसाध्यादिमत्तानिश्चयविरहादेव तदानीमनुत्पत्तिरिति द्रष्टव्यम् । व्याप्त्यज्ञानरूपासिद्धेरावश्यकत्वेऽप्युपजीव्यत्वादेवानुपसंहारित्वं पृथग्वाच्यमिति मणिकृदुक्तं समाधानं दूषयति उपजीव्योऽपि चेति ।

च्छिन्नविरोधिरूपवत्त्वमर्थः। विरोधस्तु संशयसाधारणमन्वयमात्रसहचारग्रहं विरुणद्धि, असाधारणे व्यतिरेकिणि च न व्यतिरेकसहचारग्रहविरोधः, तादृशरूपमन्तरेण लक्षणस्यासम्भवितया तदेव रूपं लक्षणमाह केवलेति। तादृशावच्छिन्नः पक्षः सन्दिग्धसाध्यको यस्याश्रयः स तथा। तथा च केवलान्वयिधर्मावच्छिन्नसाध्यस-

---

साध्याभावसन्देहादित्यादिना साध्यवदन्यत्वादिसंशयस्योपग्रहः। विरोधित्वादित्यस्योक्तत्वादिति शेषः। मिश्रमतमुपन्यस्यति यत्त्विति। व्याप्तिग्रहानुकूलो यः सहचारस्तन्निश्चयसामान्यप्रतिबन्धकतावच्छेदकरूपवत्त्वमर्थः। सन्देहं प्रति अनुपसंहारित्वस्याविरोधित्वान्निश्चयपदम्। अन्वयव्याप्तिग्रहं प्रत्येवान्वयव्यतिरेकीयसहचारयोः प्रयोजकत्वोपगमादुभयव्याप्त्यनुगमाभावेपि न क्षतिरिति भावः। सामान्यार्थकस्यावच्छिन्नपदस्य व्यावृत्तिमाह विरोधस्त्विति। तथा च तादृशनिश्चयसामान्यान्तर्गतस्य व्यतिरेकसहचारनिश्चयस्यैव विरोधित्वाद्विरोधस्य व्युदासः। अथाऽन्वयसहचारनिश्चयत्वावच्छिन्नविरोधिरूपवत्त्वमित्यस्यैव सम्यक्त्वे व्याप्तिग्रहानुकूलत्वेनान्वयव्यतिरेकसहचारयोरनुगमो व्यर्थ इत्यत आह असाधारण इति। निश्चितसाध्यवद्व्यावृत्त इत्यर्थः। व्यतिरेकिणि व्यतिरेकसहचारगृहीतव्याप्तिके। न व्यतिरेकेति।तथा च तदुभयवारणार्थमेवोक्तक्रमेण सहचारद्वयोरनुगम इति भावः। इदमुपलक्षणम्। व्यतिरेकसहचारनिश्चयत्वावच्छिन्नविरोधिरूपवत्त्वमित्युक्तौ निश्चितान्वयसहचारकेऽतिव्याप्तिरतोऽप्यनुगमो द्रष्टव्यः। तादृशरूपम् उक्तरूपावच्छिन्नविरोधिरूपम्। यस्येत्यत्र षष्ठ्यर्थस्यैव विवरणमाश्रय इति। यथाश्रुतेन साध्यसन्देहस्य केवलान्वयिधर्मव्यापकत्वालाभादाह तथा चेति। केवलान्वयिधर्मेणावच्छिन्नं तद्व्यापकं यत्साध्यसन्देहविशेष्यत्वं तद्वद्वृत्तित्वमित्यर्थः। केवलान्वयिसाध्यके चाभावान्तरे वाच्यत्वीयत्वाद्यवगाही सर्वं वाच्यं न वेत्याकारक एव साध्यसन्देहस्तथाविधः सुलभ इति भावः। अवच्छिन्नान्तस्य व्याप्तिमाह व्यतिरेकयादाविति। व्यतिरेकसहचारगृहीतव्याप्तिकादावित्यर्थः। आ-

न्देहविषयवृत्तित्वमनुपसंहारित्वम् । व्यतिरेक्यादौ केवलान्वयी न साध्यसन्देहविषयतावच्छेदकः । साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं वा तत्त्वम् । धर्मिविशेषनियन्त्रितस्तु सन्देहो नान्यधर्मिकनिश्चयविरोधी । साध्यसन्देहविषयताव्याप्यसाध्यसिद्ध्यनुकूलव्याप्तिग्रहौपयिकसत्ताकत्वं वा, तादृशी च सत्ता अन्वये हेतोर्व्यतिरेके च तदभावस्येति न कश्चिद्विशेषः । स्वरूपसत्तादृशासंशयविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यं संश-

---

दिपदेनाऽसाधारणादेः संग्रहः । सन्देहेति । सर्वत्र साध्यसन्देहे सहचारग्रहस्यैवासम्भवादिति भावः । ननु सर्वत्र साध्यवत्तदन्यत्वादिसन्देहदशायामपि हेतोरनुपसंहारित्वात् साध्यवत्तानिश्चयविरोधित्वेनैव संशयोऽनुगमनीयः तथा च साध्यवत्तानिश्चयसामान्यविरोधित्वेनैव सामञ्जस्ये केवलान्वयिधर्मावच्छिन्नत्वाद्यन्तर्भावो गौरवग्रस्त इत्याशयेनाह साध्यवत्तानिश्चयसामान्येति । सर्वं वाच्यं ज्ञेयत्वादित्यादौ चाभावान्तरं वाच्यीयत्वाद्यवगाहिभ्रमरूप एव साध्यवत्तानिश्चयविरोधी सुलभ इति दशाविशेषे तत्र नाव्याप्तिरिति भावः । सामान्यपदोपादानाद्व्यतिरेक्यादौ नातिव्याप्तिरित्यावेदयति धर्मिविशेषेत्यादिना । ननु यदा वस्तुमात्रे न सन्देहः किं तु हेतुस्तदभावो वा यत्र निर्णीतः तत्रैव साध्यसन्देहस्तदानीमपि हेतोरनुपसंहारित्वमेव, दूषकताबीजस्य व्याप्त्यग्रहस्य सम्भवात् तथा च तत्रोक्तलक्षणाव्याप्तिस्तत्त्यसन्देहव्यक्तीनां धर्मिविशेषनियन्त्रितत्वेन साध्यनिश्चयसामान्याविरोधित्वादत आह साध्यसन्देहेति । स्वविशेष्यताव्याप्यप्रकृतसाध्यसिद्ध्यनुकूलव्याप्तिग्रहोपयुक्तसत्ताकसंशयत्वमित्यर्थः । अन्वये साध्यस्यान्वये । एवं व्यतिरेक इत्यत्रापि साध्यस्य व्यतिरेक इत्यर्थः । ननूक्तसंशयस्यानुमितौ परामर्शे च विरोधित्वाभावात्ताद्रूप्यस्यानुपसंहारित्वरूपहेत्वाभासत्वानुपपत्तिरत आह स्वरूपसदिति । तथा च तादृशसंशयकालावच्छिन्नतादृशसंशयधर्मिणि हेतुमत्त्वमेवानुपसंहारित्वमिति भावः । तन्निश्चयेति । हेतौ

यसामग्रीत्वेन तन्निश्चयप्रतिबन्धकं, सर्वत्र संशयसामग्र्या निश्चयप्रतिबन्धकत्वकल्पनात्। हेतुमति सर्वत्र साध्याभावसन्देहे हेतौ साध्यसामानाधिकरण्याभावसंशयस्यौचित्यात्वर्जितत्वात् साध्याभावेन साध्यसामानाधिकरण्याभावोपस्थापनादिति। तन्न। सर्वत्र साध्यसन्देहदशायां क्वचिदपि साध्यसामानाधिकरण्यस्यागृहीतत्वेन तदभावस्य गृहीतुमशक्यत्वात्। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिश्चयस्याभावधीहेतुताया असकृदावेदितत्वात्। अस्तु वा



साध्यसामानाधिकरण्यनिश्चयप्रतिबन्धकमित्यर्थः। ननूक्तसंशयविषयस्य धर्मिणो हेतुमत्ताज्ञानं साध्यसामानाधिकरण्यसंशयस्य हेतुरेव न कुतः सामग्रीत्वमत आह हेतुमतीति। हेतुमत्तया ज्ञात इत्यर्थः। औचित्येति। कर्मासिद्धत्वादित्यर्थः। तथा चान्वयव्यतिरेकाभ्यामेव तद्धेतुत्वमिति भावः। ननु हेतुमत्त्वावच्छेदेन साध्यसंशयस्त्वेपि कोटयनुपस्थित्या हेतौ सामानाधिकरण्यसन्देहो दुर्घट इत्य आह साध्याभावेति। ज्ञातस्यैकसम्बन्धिनः सम्बन्ध्यन्तरस्मारकत्वादिति भावः। क्वचिदपि किञ्चिदधिकरणान्तर्भावेणापि। तथा च साध्यविशिष्टवैशिष्ट्यबुद्ध्यात्मकस्य साध्यसामानाधिकरण्यज्ञानस्य विशेषणतावच्छेदकीभूतसाध्यवत्तायाः क्वचिदप्यनिश्चयेन कारणबाधादनुत्पत्त्या साध्यसामानाधिकरण्यसंशयस्तदानीं दुर्घट इति भावः। ननु कारणबाधात्साध्यसामानाधिकरण्यत्वप्रकारेण साध्यसामानाधिकरण्यस्य प्रागनुपस्थितावपि तदवच्छिन्नाभावग्रहे बाधकाभाव इत्यत आह प्रतियोगितेति। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिधर्मिकनिश्चयस्येत्यर्थः। असकृदित्यस्य मिश्रैरित्यादिः। स्वमते प्रतियोगिविशेषिताभावभानस्य विशिष्टवैशिष्ट्यधीसामान्यसामग्रीत एवोपगमात्। न च विशेष्ये विशेषणमित्यादिक्रमेण साध्यसामानाधिकरण्यज्ञानादेव तादृप्येण तस्याभावः सन्दिह्यतामिति वाच्यम्। प्रतियोगिविशेषिताभावबुद्धेः विशिष्टवैशिष्ट्यावगाहित्वनियमात्। अन्यथा निर्विकल्पकादपि तत्क्रमेण घटो नास्तीत्यभाव-

स यथाकथञ्चित् साध्ये हेतुसामानाधिकरण्याभावसंशयहेतुत्वेन वा तथात्वं, न तथापि सामग्रीत्वेन प्रतिबन्धकतया हेत्वाभासत्वम्। अन्यथा व्यभिचरिताव्यभिचरितसमानासमानाधिकरणव्याप्याव्याप्यपक्षधर्मापक्षधर्मादिसाधनवन्निःसाधनादिसाधारणद्रव्यत्वादिमत्त्वं हेतोः पक्षस्य चाभासान्तरं स्यात्, तदुपदर्शितस्यैव तस्यापि

———

प्रत्यक्षापत्तेरिति भावः । ननु साध्यवद्वृत्तित्वमित्याकारकं प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं साध्यवत्तानिश्चयं विनापि सम्भवत्येव यत्र विशेषणतावच्छेदकांशे धर्मितावच्छेदकीभूतं यत्किञ्चिद्भासते तादृशविशिष्टवैशिष्ट्यबुद्धावेव विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वात् प्रकृते च तादृशसाध्यांशे धर्मितावच्छेदकान्तराभावादत आह अस्तु वेति । सः प्रतियोगितावच्छेदकीभूतसाध्यसामानाधिकरण्यत्वप्रकारकनिश्चयः । ननु साध्यवत्वांशे धर्मितावच्छेदकशून्येपि साध्यविशिष्टवैशिष्ट्यबोधे साध्यवत्तानिश्चयत्वेनैव हेतुत्वं न तु साध्यवत्ताज्ञानत्वेन संशयसाधारणसाध्यवत्ताज्ञानस्य हेतुत्वे तदप्रामाण्यनिश्चयाभावस्योत्तेजकतायां गौरवापत्तेरित्यतः कल्पान्तरमाह साध्य इति । तथात्वमिति । स्वरूपसत्तादृशसंशयविशेष्यधर्मिकहेतुमत्ताज्ञानस्य हेतुधर्मिकसाध्यसामानाधिकरण्यनिश्चयप्रतिबन्धकत्वमित्यर्थः। न तथापीति । यद्विषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तस्यैव हेत्वाभासत्वादिति भावः । अन्यथेति । सामग्रीत्वेन प्रतिबन्धकत्वेप्याभासत्व इत्यर्थः । व्यभिचरिताव्यभिचरितादिसाधारणद्रव्यत्वादिमत्त्वं हेतोः साधनवन्निःसाधनादिसाधारणद्रव्यत्वादिमत्त्वं च पक्षस्याभासान्तरमाभासताप्रयोजकं स्यादित्यर्थः । ननु व्यभिचरिताव्यभिचरितादिसाधारणद्रव्यत्वादिमत्त्वस्य हेतौ ग्रहेपि विशेषदर्शनदशायां व्यभिचारादिसंशयानुत्पत्त्या न तद्ज्ञानस्य विरोधिसंशयसामग्रीत्वमत आह त्वदुपदर्शितस्येवेति । साध्यसंशयधर्मिणो हेतुमत्त्वस्येवेत्यर्थः। तस्य निरुक्तद्रव्यत्वादिमत्त्वस्य । इतरसाचिव्येन विशेषदर्शनाद्यभावसहकारेण । तन्निश्चयेति । व्याप्त्यादिनिश्चयविरोधी यो व्यभिचा-

ज्ञानस्येतरसाचिव्येन तत्तन्निश्चायकविरोधिसंशयसामग्रीत्वात् । एवमसिद्ध्यादिनिश्चायकप्रत्यक्षसामग्र्यपि । अपि च हेतोः साध्याभावसन्देहविषयमात्रवृत्तित्वं दूषणमिति प्राप्तं तच्च व्यतिरेकिणि हेतौ नियतविषयेणापि सन्देहेन सम्पद्यते, दूषकताबीजसत्त्वे चाऽसाधारण्यादिसाधारण्यं न दोषाय, न वा अत्रैव निर्भरः कर्त्तव्यो हेत्वाभासत्वानुपपत्तेरुक्तत्वादित्यलं पल्लवितेन ॥

व्याप्तिग्रहप्रतिबन्धलक्षणैकप्रयोजनकत्वेन साधारण्यादीनामेक-

———

रादिसंशयस्तत्सामग्रीत्वादित्यर्थः । असिद्ध्यादीत्यादिना व्यभिचाराद्युपग्रहः। प्रत्यक्षसामग्र्यपीति । आभासताप्रयोजकं स्यादिति पूर्वेणान्वयः।तथा च सन्निकर्षादिसहकृतस्यासिद्ध्यादिविशेषणीभूतवस्तुज्ञानस्य स्वरूपासिद्ध्यादिनिश्चयसामग्रीत्वेन पक्षधर्मत्वादिज्ञानविरोधित्वात्तद्विषयीभूततादृशवस्तूनां हेत्वाभासतापत्तिरिति भावः । प्रतिबन्देरनुत्तरत्वादाह अपि चेति । नियतविषयेणापीति । यत्र यत्र हेतुमत्त्वं तन्मात्रे साध्यसन्देहेनाप्युपपद्यते इत्यर्थः । तदानीमप्यन्वयव्याप्त्यग्रहस्य दूषकताबीजस्य सम्भवात्।तथा च तादृशसंशयदशायामपि हेतोरनुपसंहारित्वात्तत्र प्रागुक्तलक्षणाव्याप्तिः साध्यसिद्ध्यौपयिकसत्तायास्तत्संशयविषयताव्याप्यत्वाभावाद्धेतोर्व्यतिरेकसत्तायां व्यभिचारादिति भावः । ननु निश्चितसाध्यवद्व्यावृत्तत्वरूपेणासाधारण्येन सङ्करात् साध्यवत्तासंशयविशेष्यमात्रवृत्तित्वं दूषणमेव नेत्यत आह दूषकताबीजेति । अन्वयव्याप्तिग्रहप्रतिबन्धकतारूपेणेत्यादिः। न दोषायेति।असाधारण्याद्यग्रहदशायामेव पार्थक्यसम्भवादिति भावः । नन्वेवं हेतोः साध्यसन्देहविषयमात्रवृत्तित्वमेवाऽनुपसंहारित्वमस्तु अत आह न वाऽत्रैवेति । हेत्वाभासत्वेति । साध्यसंशयविषयीभूततत्तद्धर्मिकवृत्तिताज्ञानत्वेनैवानुमित्यादौ अप्रतिबन्धकत्वादिति भावः ॥

स्वातन्त्र्येण व्यभिचारादेर्लक्षणं वक्तुमुपक्रमते व्याप्तिग्रहेत्यादिना । एकहेत्वाभासत्वं हेत्वाभासविभाजकैकधर्मवत्त्वम् ।

हेत्वाभासत्वम्। साधारणेन व्यापकत्वस्याऽव्यभिचारित्वस्य वा अ-
साधारणेन सामानाधिकरण्यस्याऽनुपसंहारिणा च व्यतिरेकव्याप्तिग्र-
हस्य विरोधात् । लक्षणन्तु विशिष्टसाध्यसाधनग्रहाविरोधिनो
ज्ञानस्य विषयतया व्याप्तिग्रहविरोधितावच्छेदकं रूपम् । व्याप्ती-
श्चान्वयतो व्यतिरेकतश्च नानारूपाः प्रातिस्विकरूपेण उपादाय
तावद्वगाही ग्रहो वाच्यः । साध्यसाधनयोरप्रसिद्धेरसिद्धिभेदस्य
वारणायाऽविरोधिन इत्यन्तम् । साध्यसाधनभेदेन व्यभिचारभेदा-

---

व्यापकत्वस्येति । ग्रहस्य विरोधादित्यन्वयः । एवमग्रेपि । अस-
मानप्रकारकोपि व्यभिचारग्रहो व्यापकताज्ञानविरोधी साध्यस्य
साधनाव्यापकत्वमेव साधारण्यमित्याशयेन चेदम् । साधनभेदे-
प्यभेदेन लाघवात् साध्यवदन्यावृत्तित्वे सति साध्यसामानाधिक-
रण्यमेव व्याप्तिरिति नव्यमते त्वाह अव्यभिचारित्वस्येति । व्या-
प्तिग्रहप्रतिबन्धकप्रयोजकत्वमात्रस्य साध्याप्रसिद्ध्यादावतिप्रसक्त-
त्वादाह लक्षणं त्विति । सव्यभिचारस्येत्यादिः । नानारूपा
इति । अत्यन्ताभावान्योन्याभावाद्यन्तर्भावेण नानाविधा इत्यर्थः ।
तेनैकविधव्यभिचारस्यान्यविधव्याप्तिग्रहाविरोधित्वेपि न तत्राव्या-
प्तिरिति भावः । साध्येत्यादि । काञ्चनमयवन्हिमान् काञ्चनमयधू-
मादित्यादौ साध्यादेः काञ्चनमयत्वाद्यभावरूपायाः व्याप्यत्वासिद्धे-
र्वारणायेत्यर्थः। न चैवं धूमवान्धूमाव्यभिचारिसत्त्वादित्यादिस्थलीय-
व्यभिचारस्य प्रकृतसाधनग्रहाविरोधित्वात्तत्राव्याप्तिः, साधनादि-
क्रोडीकृतव्यभिचारस्याऽसिद्धिमध्य एवान्तर्भावनीयत्वादिति भावः ।
ननु धूमवान् वन्हेरित्यादौ साध्यसाधनग्रहविरोध्यप्रसिद्ध्या तत्रत्य-
व्यभिचाराव्याप्तिरत आह साध्यसाधनभेदेनेति । अन्यत्र असाधार-
ण्यादिलक्षणे । ननु धूमवान्धूमव्यभिचारिधर्मादित्यादौ प्रकृतहेतुक-
व्याप्तिग्रहस्याहार्यत्वनियमात्तद्विरोधित्वाप्रसिद्ध्या तत्रत्यव्यभिचारा-
व्याप्तिरत आह शेषमिति । प्रातिस्विकरूपेण व्याप्तीनामवगाहिताः
समुपादाय तद्व्यतिरेको यद्विषयकनिश्चयविरोधिविषयिताप्रयुक्तस्त-

यत्र विशिष्टं साध्यं साधनं वाऽप्रसिद्धं तत्र तद्ग्रहविरोधित्वं नोपादेयम्। एवमन्यत्रापि। शेषं हेत्वाभासलक्षणोक्तदिशाऽवसेयम्। व्यर्थविशेषणत्वन्तु न व्याप्तिग्रहविरोधीति वक्ष्यते। साध्याव्यभिचरितसामानाधिकरण्यविरहस्य बहिर्भावनीयत्वे पुनरन्वयव्याप्तौ

---

दुत्तरमनुमितित्वावच्छेदेन वर्तमानस्तत्त्वमेव सव्यभिचारत्वं निर्वाच्यमिति भावः। प्राञ्चस्तु तावद्व्याप्यत्वग्राहिग्रहत्वाव्यापकविषयिताशून्यमेव ग्रहमुपादाय तद्विरोधित्व वाच्यमित्युक्तस्थले धर्मो धूमव्याप्य इत्याकारकव्याप्तिग्रहविरोधितामादायैव लक्षणं सङ्गमयन्ति। तत्तुच्छम्। एवमेव सर्वत्र सव्यभिचारलक्षणाद्यनुसर्तव्येतिग्रन्थेनैव गतार्थतया पौनरुक्त्यापत्तेरिति ध्येयम्। ननु वह्निमान्नीलधूमादित्यादौ व्यर्थविशेषणत्वादावतिव्याप्तिस्तस्यापि व्याप्तिग्रहविरोधित्वादत आह व्यर्थेति। नीलधूमत्वादेः स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितत्वग्रहेऽपि तादृप्येण व्याप्तिग्रहस्योत्पादादिति भावः। ननु साध्यवदन्यावृत्तित्वे सति साध्यसामानाधिकरण्यरूपाया व्याप्तेर्विरहेतिव्याप्तिस्तस्य व्याप्यत्वासिद्धित्वेनाऽलक्ष्यत्वादत आह साध्याव्यभिचरितेति। ननु व्यापकसामानाधिकरण्यरूपाया अन्वयव्याप्तेरुपादाने तावद्व्याप्यत्वग्राहिग्रहत्वाव्यापकविषयिताशून्यग्रहविरोधित्वाविवक्षयापि धूमवान्धूमव्यभिचारिधर्मादित्यादौ धूमव्यभिचारिधर्मस्योपग्रहो न स्यात् धर्मसामान्यव्यापकत्वस्य धूमव्यभिचारिधर्मव्यापकत्वाघटकत्वात् तद्विषयतायाः प्रकृतव्याप्यत्वग्राहिग्रहत्वाव्यापकत्वादतो नव्यमतमनुसृत्याह अव्यभिचरितत्वं वेति। साध्यवदन्यावृत्तित्वादिरूपेत्यादिः। विशकलितं खण्डीकृतम्। तथा च केवलाव्यभिचरितत्वग्रहं प्रति तद्विशिष्टसामानाधिकरण्यवत्ताज्ञानस्याविरोधित्वादेव न तत्रातिव्याप्तिरिति भावः। असाधारण्यस्य साध्यसामानाधिकरण्यधीविरोधित्वं प्राचामपि संमतमित्यावेदयितुं तेषामेव लक्षणमुपन्यस्य व्याकरोति सपक्षव्यावृत्तत्वमिति। हेतोरित्यादिः। निश्चितसाध्यवतः सपक्षत्वे शब्दो नित्यः शब्दत्वादित्यादिसद्धेतावतिव्याप्त्यापत्तेराह सपक्षः साध्यवानिति।

व्यापकत्वमव्यभिचरितत्वं वा सामानाधिकरण्यञ्च विशकलितं युगपदुपादेयम् । तत्र साधारणत्वं वर्णितम्, असाधारणत्वन्तु सपक्षव्यावृत्तत्वं, सपक्षश्च साध्यवान्, तद्व्यावृत्तत्वन्तद्वृत्तित्वग्रहाविरोधित्वम्। प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकमिति तु निष्कर्षः । संगृह्यते चेत्थं साध्यादेः साधनवदवृत्तित्वादिकम् । चाक्षुषस्पर्शवान् स्पार्शनशब्दवत्त्वादित्यादौ विशेष्ययोरसामानाधिकरण्यञ्च बाधा-

---

ननु साध्यवद्व्यावृत्तत्वं यदि साध्यवदवृत्तित्वात्यन्ताभावः तदा साध्यवदवृत्तिभिन्नत्वादावव्याप्तिरत आह तद्वृत्तित्वेति । नन्वेवं साध्याप्रसिद्ध्यादावतिव्याप्तिरत आह प्रकृतेत्यादि।न च वन्हिमान् वन्ह्यभावादित्यादौ साध्याभाववत्त्वादिविशिष्टमपि असाधारण्यं स्यात् तस्यापि प्रकृतसाध्यसामानाधिकरण्यधीविरोधित्वादिति वाच्यम् । इष्टत्वादिति भावः । अनुगतोक्तेः फलमाह संगृह्यते इति । साध्यादेरित्यादिना साध्यवत्त्वाद्यवच्छेदेन साधनवदन्यत्वादेः परिग्रहः । ननु प्रकृतसाध्यसामानाधिकरण्याभावविशिष्टप्रकृतहेतुमत्त्वमेवास्त्वसाधारण्यं तावतैव साध्याप्रसिद्ध्यादेः व्युदासात्, नव्यमते च साध्यसामानाधिकरण्यविशिष्टबुद्धौ तदत्यन्ताभावग्रहस्यैव समानप्रकारकत्वेन विरोधितया साध्यवदवृत्तिभिन्नत्वाद्यसंग्रहेऽपि क्षत्यभावादत आह चाक्षुषेति । विशेष्ययोः स्पर्शशब्दयोः । अन्यथा प्रकृतहेतुसाध्ययोरप्रसिद्ध्या तदसाधारण्यासंग्रहः स्यादिति भावः । ननु गगनवन्महाकालादित्यत्र साध्यनिष्ठावृत्तित्वस्य बाधत्वेन हेतुनिष्ठावृत्तित्वस्य च स्वरूपासिद्धित्वेनाऽलक्ष्यत्वात्तत्रोक्तलक्षणातिव्याप्तिस्तयोरपि हेतुसाध्यसामानाधिकरण्यधीविरोधित्वादत आह बाधेत्यादि । क्रमेणान्वयः । न क्षतिरिति । स्थलान्तर एवासङ्कीर्णतया पार्थक्यसम्भवादिति भावः । विरुद्धग्रन्थीयसिद्धान्तमूलस्यानुगतलक्षणाकरणात् न्यूनतामपाकर्तुमाह इदमेव चेति । उक्तरूपवत्त्वमेव चेत्यर्थः । विरुद्धत्वं विरुद्धविभाजको धर्मः । ननु मणिकृदुक्तविरोध-

सिद्धिभेदस्य च साध्यसाधनयोरवृत्तित्वस्यैव तत्साङ्कर्य्येऽपि न क्षतिः। इदमेव च मणिकृतां विरुद्धत्वम्। इत्थञ्च तदीयमसाधारणत्वमेव विरुद्धत्वमिति। यत्र च धर्म्मिणि यो धर्म्मो यादृशो हेत्वाभासः तद्व्याप्यमपि तद्विशेषोऽन्तरेण प्रकरणसमं तद्व्याप्यञ्च, पृथगुपदेशादविरोधाच्च। अनुपसंहारित्वञ्च विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम्। तादृशञ्च साध्यादेरत्यन्ताभावाभावप्रतियोगित्वादिकम्।

---

स्याऽसाधारणान्तर्भावे हेत्वाभासानां पञ्चविधत्वानुपपत्तिरत आह इत्थं चेति। तथा च प्रकृतहेतुनिष्ठसाध्यव्यापकाभावप्रतियोगित्वे सति पक्षवृत्तित्वरूपमेव विरोधमादाय हेत्वाभासानां पञ्चधा विभाग इति भावः। ननु हेतोः साध्यव्यभिचारव्याप्यवत्त्वादेरपि व्याप्त्यादिग्रहविरोधितावच्छेदकत्वात्तत्र सव्यभिचारादिलक्षणस्यातिव्याप्तिरत आह यत्र चेति। तद्विशेषः तादृशहेत्वाभासस्य विशेषः। तथा च हेतुनिष्ठं व्यभिचारादिव्याप्यवत्त्वमपि व्यभिचारत्वेन लक्ष्यमेवेति भावः। अन्तरेति। प्रकरणसमः सत्प्रतिपक्षस्तद्व्याप्यं च परित्यज्येत्यर्थः। प्रकरणसमस्य त्यागे हेतुमाह पृथगिति। न च साध्याभावव्याप्यविशिष्टपक्षमेवोपादाय सत्प्रतिपक्षस्य शास्त्रे पृथगुपन्यासम्भवात् पक्षनिष्ठं साध्याभावव्याप्यवत्त्वं बाध एवान्तर्भाव्यतामिति वाच्यम्। तत्रापि सत्प्रतिपक्षितव्यवहारस्य कथकसिद्धतया बाधत्वानौचित्यादिति भावः। सत्प्रतिपक्षव्याप्यस्य तद्विशेषत्वाभावे बीजमाह अविरोधादिति। साध्यवत्ताबुद्धौ साध्याभावव्याप्यव्याप्यवत्तानिश्चयस्याविरोधित्वादित्यर्थः। व्यतिरेकेत्यादि। अत्रापि नानाविधाः व्यतिरेकव्याप्तीरुपादाय तावदवगाहिग्रहो वाच्यः। साध्यादेरित्यादि। आदिपदाभ्यां हेत्वभावादेः साध्याभावाव्यापकत्वाद्युपग्रहः। समानविषयतामात्रेण ज्ञानस्य प्रतिबन्धकत्वमाश्रित्येदम्। समानप्रकारकत्वेन तथात्वे पुनरभावत्वाद्यवच्छेदेन प्रतियोगित्वादिसम्बन्धेन साध्यादेरभाववत्त्वमेव तादृशरूपं द्रष्टव्यम्। साध्याभावत्वं च साध्यीयप्रतियोगितावत्त्वम्। व्यतिरे-

वन्ह्यभावाभावत्वेन वन्हेर्धूमाभाववदवृत्तित्वज्ञानं वन्ह्यभावस्य धूमाभावव्यापकताज्ञानं कदाचिद्विरुन्ध्यादपि, न तु वन्हित्वेनेति नातिप्रसङ्गः। केवलान्वयिनि तत्सम्भवेऽपि अन्वयव्याप्त्युपादाने नानुमितिप्रतिरोध इति दिक् ॥

———

कव्याप्तिज्ञाने तादृशप्रतियोगितायां साध्यभानमावश्यकं तथा च तादृशप्रतियोगिताधर्मिकसाध्यप्रकारकज्ञानं प्रति तादृशप्रतियोगिताधर्मिकसाध्याभावप्रकारकज्ञानं प्रतिबन्धकमिति गुरुचरणाः । स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छेदेन साध्याभाववत्ताज्ञानं यथा स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छेदेन साध्यवत्ताज्ञानप्रतिबन्धकं तथाऽभावत्वावच्छेदेन साध्यवत्ताज्ञानं प्रति तादृशज्ञानं प्रतिबन्धकमित्यपि केचित् । ननु धूमाभाववदवृत्तिर्वन्हिरित्येवं साधारण्यज्ञानस्यापि धूमाभावव्यापको वन्ह्यभाव इत्येवं व्यतिरेकव्याप्तिधीविरोधित्वात् साधारण्येतिव्याप्तिरत आह वन्ह्यभावेति । समानविषयतामात्रेणैव विरोधित्वमाश्रित्याह कदाचिदिति । वस्तुतः समानप्रकारकत्वेनैव विरोधित्वात्तस्यापि विरोधित्वं दुर्घटमिति भावः । न तु वन्हित्वेनेति । वन्हेर्धूमाभावाभाववदवृत्तित्वज्ञानमित्यनुषज्यते । नन्वेवं साध्यादेः केवलान्वयित्वादिप्रतिसन्धानदशायामनुमितिर्न स्यात् तद्ग्रहस्यापि व्यतिरेकव्याप्तिधीविरोधित्वादत आह केवलेति ॥

इति श्रीजगदीशतर्कालङ्कारकृतायामनुमानदीधितिव्याख्यायामनुपसंहारिग्रन्थः समाप्तः ॥

## चिन्तामणेः विरुद्धः ।

विरुद्धो न साध्याभावव्याप्यः, संयोगसाध्यके सद्धेतावतिव्याप्तेः । नापि साध्यवन्निष्ठात्यन्ताभावप्रतियोगिव्याप्यत्वं तत्त्वम्, इदं द्रव्यं गुणवत्त्वादित्यादौ संयोगादिव्याप्येऽतिव्याप्तेः । किन्तु साध्यासमानाधिकरणसाध्याभावव्याप्यः साध्यवदन्योन्याभावव्याप्यो वा । साध्याभावत्वं साध्यविरोधित्वमात्रं भावाभावसाधारणम् । तेनाऽभावे साध्येऽभावाभावस्य भावत्वेऽपि नाव्याप्तिः ।

---

## दीधित्याः विरुद्धः ।

साध्यविरोधित्वं साध्यप्रतियोगिकत्वम् । एकदेशिमतेनाह अ-

---

## जागदीश्याः विरुद्धः ।

ननु साध्यविरोधित्वं यदि साध्यासामानाधिकरण्यं तदा मूलोक्तस्य साध्यासमानाधिकरणीभूताभावव्याप्यत्वस्यैव सम्यक्त्वे साध्याभावत्वप्रवेशो व्यर्थ इति वाच्यम् । मूलोक्तसाध्याभावसामानाधिकरण्यपदस्य प्रतियोग्यसमानाधिकरण्यार्थकतया तादृशजलत्वाद्यभावव्याप्यवन्हिसाध्यकधूमादावतिव्याप्त्यापत्तेरिति भावः । अभावाभावत्वं भावस्यैवेति सिद्धान्तभङ्गादाह एकदेशीति । न च-

अभावाभावोऽभावप्रतियोगिनिरूप्यत्वेन भावभिन्न एव वा। न च भावत्वेनोपपत्तौ किमधिकेनेति वाच्यम्। बाधकं विनाऽभावप्रतीतेः प्रमात्वात्। अन्यथा अस्य-

———

भावेत्यादि। न च भावस्य स्वाभावविरहात्मकत्वरूपप्रतियोगित्व-ग्राहिधर्मिग्राहकमानबाधः, प्रतियोगित्वस्य सम्बन्धान्तरत्वात्। स्व-स्याभावस्येत्यत्र षष्ठ्यर्थस्य तस्यावश्याभ्युपेयत्वात्। विरहत्वञ्च नाभावत्वम्, बाधात्। नापि तद्ग्रहप्रतिबन्धकग्रहविषयत्वम्, अ-विरोधात् प्रत्यक्षेण दुर्ग्रहत्वाच्च। न चानवस्था, अभावस्य स्वाभा-वाभावत्वे बाधकाभावात्। भावस्य तथात्वे बाधकमाह बाधकं वि-

———

त्यादि। घटो नास्तीति प्रमिताचभावविरहत्वरूपं प्रतियोगित्वं घटे धर्मिणि संसर्गमर्यादया भासत इति तद्ग्राहकप्रमाणस्य बाधः स्यात् यद्यभावत्वं भावस्य न स्यादित्यर्थः। सम्बन्धान्तरत्वादिति। तथा च तादृशप्रतीतौ संसर्गतया अतिरिक्तप्रतियोगित्वं भासते न तु स्वाभावविरहत्वमिति भावः। ननु सम्बन्धान्तरे मानाभावादभाव-विरहत्वमेव तत्र संसर्ग इत्यत आह स्वस्येति। अत्र एतयोः। तस्य सम्बन्धान्तरस्वरूपस्य। ननु सम्बन्धान्तरस्येव तद्घटितस्यापि स्वा-भावविरहत्वस्य संसर्गत्वे बाधकाभाव इत्यतो बाधकमाह विरहत्वं चेति। अभावत्वं भावभिन्नत्वम्। बाधादिति। घटादेर्भावत्वनियमादिति भावः। तद्ग्रहेति। स्वाभाववत्ताग्रहेत्यर्थः। अविरोधादिति। अभावाभा-वस्यातिरिक्तत्वेपि घटादेः स्वाभाववत्ताग्रहप्रतिबन्धकग्रहाविषयत्व-सम्भवेन प्रतियोगित्वग्राहिधर्मिग्राहकप्रमाणस्याऽविरोधादित्यर्थः। न वा धर्मिग्राहकप्रमाणेन स्वाभाववत्ताग्रहप्रतिबन्धकग्रहविषयत्वं गृह्यत इत्याह प्रत्यक्षेणेति। उक्तस्य ज्ञानादिघटितत्वेन चक्षुराद्ययो-ग्यत्वादिति भावः। ननु घटाभावाभावस्यातिरिक्तत्वे तदभावाना-मप्यभावोऽतिरिच्यतामित्यनवस्थेत्याशङ्क्य निराचष्टे न चेति। तथात्वे

नेत्यादि। अभावप्रतीतेः अभावत्वविशिष्टप्रतीतेः। अभावत्वञ्च न भावभिन्नत्वं, प्रथमं दुर्ग्रहत्वात, किन्त्वयमभावो न भाव इति प्रतीतिसाक्षिकं पदार्थान्तरं, तच्चानुपस्थितं निर्विकल्पकोपस्थितं वा

---

अभावाभावत्वे। बाधकं विनेति। तथा चाभावत्वं यदि भाववृत्ति स्यात्तदा घटेन्द्रियसन्निकर्षदशायां भूतले घटत्वावच्छिन्नाभावो नेति प्रमावत् भूतले नेत्यपि प्रमा स्यात्।न हि परेषां तादृशेन्द्रियसंयुक्तविशेषणताया इव तवापीन्द्रियसंयोगादेः कार्यतावच्छेदकं तत्तद्धर्मावच्छिन्नाभावत्वप्रकारकप्रत्यक्षत्वमेव शक्यते वक्तुं, भावमात्रवृत्तिघटत्वपटत्वाद्यनन्तधर्मप्रकारकस्य निष्प्रकारकस्य च द्रव्यप्रत्यक्षस्याप्यनुत्पत्तिप्रसङ्गात्। न च घटत्वादितत्तदनन्तधर्मप्रकारकद्रव्यप्रत्यक्षत्वद्रव्यनिर्विकल्पकत्वयोरपीन्द्रियसंयोगजन्यतावच्छेदकत्वोपगमान्न तदनुपपत्तिः, महागौरवापत्तेः घटो द्रव्यमितिवत् नद्रव्यमित्येवं द्रव्यत्ववत्तया घटप्रत्यक्षस्यैवमप्यवारणाच्चेति भावः। भावस्याभावविरहत्वेऽप्यभावत्वप्रतीतेः प्रमात्वं सम्भवत्यतो व्याचष्टे अभावत्वविशिष्टेति। इत्थं च बाधकं विनेत्यादिमूलस्य बाधकाभावात् घटादिसन्निकर्षदशायां तद्धर्मिकनेत्याकारकाभावत्वविशिष्टप्रतीतेः प्रसङ्गादित्यर्थः। घटाभावो नास्तीत्यादिप्रतीतेर्भावभिन्नत्वलक्षणाभावत्वस्य प्रमात्वानुरोधादभावाभावस्यातिरिक्तत्वमभ्युपगच्छतां मतं निरस्यति अभावत्वं चेति।नास्तीत्याकारकप्रतीतिनियामकमित्यादिः। प्रथमं चक्षुरादिसन्निकर्षदशायाम्। दुर्ग्रहत्वादिति। भावत्वावच्छिन्नस्य प्रागनुपस्थित्या सामग्रीविरहादिति भावः। अयमभावो न भाव इतीति। अन्यथा भावभिन्नत्वस्यैवाभावत्वपदार्थत्वे पौनरुक्त्यापत्तेरिति भावः। ननु पदार्थान्तरस्याप्यभावत्वस्य प्रागनुपस्थित्या प्रथमं दुर्ग्रहत्वं तुल्यमत आह तच्चेति। लौकिकान्याभावत्वप्रकारकबोधं प्रति अभावत्वज्ञानस्य हेतुत्वादिति भावः। लाघवादभावत्वप्रकारकप्रत्यक्षं प्रति यद्यभावत्वज्ञानं हेतुः स्यात्तदाह निर्विकल्पकेति। भावभिन्नत्वन्तु न निर्विकल्पकग्राह्यं द्रव्याद्यन्यतमत्वरूपस्य भावत्वस्याऽयोग्यत्वादिति भावः। प्रकारः घटो नास्तीतिप्रत्यक्षं प्र-

न्ताभावान्योन्याभावयोरप्रसिद्धिः । अथ साध्यहेत्वो-र्विरोधे पक्षे साध्यसत्त्वे हेत्वसिद्धिः, हेतुसत्त्वे साध्या-भावसिद्धौ बाधः । न च प्रमाणान्तरेण साध्याभावसि-द्धौ बाधो न हेतुत्वेनैवेति वाच्यम् । विशेषणवैयर्थ्या-दिति चेन्न । हेतोः पक्षे साध्याभावबाधानुपस्थापनेऽपि प्रथमोपस्थितविरोधस्यैव उपजीव्यत्वेन दोषत्वात् । ननु साध्याभावसम्बन्धो व्यभिचार एव दोषो न तु तन्नि-यतत्वमपि, गौरवात् असाधकत्वे व्यर्थत्वाच्च । न च साध्यासहचरितस्य साध्याभावसहचरितस्य वा गमक-

---

प्रकारः, अभावत्वञ्चासमवेतत्वान्न जातिः । अन्यथेति । अनतिप्रस-क्तैरधिकरणैस्तद्धर्मैर्वा अभावव्यवहारोपपत्तेरिति भावः । लाघवा-दबाधिताभावत्वविशिष्टप्रत्ययबलाच्चातिरिक्तैकाभावसिद्धिस्तुल्यैव। एतेनाभावत्वं सप्रतियोगिकत्वं तच्चाऽननुगतानामप्यावश्यकानां प्रतियोगिनां कल्प्यते इत्यपास्तम्, संयोगादिसाधारण्याच्च । गम-

---

कारः । अभावत्वस्याखण्डत्वे जातित्वापत्तिरत आह अभाववदिति । अधिकरणस्याभेदेन स्वाधिकरणत्वानुपपत्तेराह तत्तद्धर्मैर्वेति । अ-भावव्यवहारेति । घटो नास्तीत्यादिव्यवहारोपपत्तेरित्यर्थः । ननु बहूनामधिकरणानां घटाभावत्वकल्पनामपेक्ष्य लाघवाद्घटत्वावच्छि-न्नाभावो न भाव इत्यबाधितभावाभिन्नत्वप्रत्ययाच्च घटादेरतिरिक्तो-ऽभावः कल्प्यत इत्यत आह लाघवादिति । तुल्यैवेति । बहूनां प्रति-योगिनां घटाभावविरहत्वकल्पनामपेक्ष्य लाघवाद्घटाभावविरहो न भाव इत्यबाधितप्रत्ययाच्च घटाभावस्याभावोऽतिरिक्त एव सिद्ध्य-

त्वभ्रमरूपायामशक्तौ विशेषोऽस्ति, येनाशक्तिविशेषोन्नायकतया न व्यर्थविशेषणता। न चाऽनैकान्तिकसामान्यलक्षणे विपक्षगामित्वं न विशेषणम् असाधारणाद्यव्याप्तेः, साधारणन्तु सपक्षवृत्तित्वसहितमिति वाच्यम् । विपक्षगामित्वस्यैव साधारणत्वात् अधिकस्य व्यर्थत्वात् । न च विरुद्धं व्यावर्त्यम्, विपक्षगामित्वेनाऽत्रैव तदन्तर्भावात । अथाऽनैकान्तिके विपक्षसम्बन्धो न दूषकताबीजम्, असाधारणाद्यव्याप्तेः । न च तत्रान्यदेव बीजम्, हेत्वाभासाधिक्यापत्तेरिति चेत । अस्तु तावदेवं, तथापि साधारणे विरुद्धप्रवेशो वज्रलेप एव । अन्ये तु विरुद्धलक्षणे न व्यर्थत्वं, साधारणस्य व्यवच्छेद्यत्वात्, नाप्यसाधकतानुमितौ, एतस्यापि व्याप्यत्वात्, नीलधू-

---

कत्वभ्रमेति । व्यभिचारिण्यव्यभिचारमात्रे विरुद्धे च सामानाधिकरण्यांशेऽपि भ्रम इति । अशक्तौ विशेष इति । दूषकतायां

---

तीत्यर्थः। एतेनेति । अबाधितभावाभिन्नत्वप्रत्ययबलेनेत्यर्थः । कल्प्यत इति । घटाभावो नास्तीत्यादिप्रतीतिविषयतया कल्प्यत इत्यर्थः। ननु घटाभावस्याभावो न भाव इति प्रत्ययस्याऽबाधितत्वं विवादग्रस्तमत आह संयोगादीति । आदिना सादृश्याद्युपग्रहः । तथा च घटस्याभाव इतिवत् घटस्य संयोग इत्यादिप्रतीतिबलात् संयोगादिरपि सप्रतियोगिक इति तत्रापि घटाद्यभावत्वापत्तिः, संयोगादिव्यावृत्तं तु सप्रतियोगित्वं प्रागुक्तमेवाभावत्वसमानं पदार्थान्तरं पर्यवसन्नमिति भावः । अशक्तिविशेषोन्नायकतयैव विरुद्धस्य पार्थक्यं व्यवस्थाप-

मादौ च व्याप्तिरस्त्येवेति न स्वार्थानुमाने दोषः, परस्य तु व्यर्थत्वमधिकम्, न च विरुद्धत्वादित्यत्र शब्दाधिक्यमिति । तन्न । अर्थो हि लिङ्गं, न च व्यभिचारावारकविशेषणावच्छेदेनापि व्याप्तिर्गौरवादिति वक्ष्यते । न चार्थानुगत्या व्यर्थत्वेऽपि विरुद्धत्वादित्यत्र उद्भावनाशक्यत्वम्, आवश्यकतद्विवेचने तदुद्भावनस्य शक्यत्वादिति हेतुद्वयोपन्यासे चाधिकं प्रथमेन द्वितीयस्य कृतकर्त्तव्यताया दुष्टिबीजत्वात् । न च नीलधूमादित्यादौ विशिष्टकर्त्तव्यमन्येन केनापि कृतम् । धूमवत्त्वादित्यनेन कृतमिति चेन्न । तथाऽनुपन्यासात्, अन्यथा नीलानन्वयापत्तेः । अपरे तु साध्यानवगतसहचारः साध्याभावसहचारी विरुद्धः । अन्यथा पृथिव्यां मेयत्वेनेतर-

---

तुल्यत्वेऽपि निग्रहस्थानत्वेन विशेषाद्भेदेनोपन्यासः । अत एवानैकान्तिकसामान्यलक्षणे साधारणलक्षणे च विरोधवारकं विशेषणं छलजात्योर्निग्रहस्थानविशेषानिरनुयोज्यानुयोगविशेषत्ववदेतस्या-

---

यन्मूलं दूषयति व्यभिचारिणीत्यादिना । दूषकतायां व्याप्तिधीविरोधिनायाम् । तुल्यत्वेपि अविशिष्टत्वेपि । निग्रहस्थानत्वेन अशक्तिविशेषज्ञापकत्वेन । व्यभिचारितो वैलक्षण्याद्विरुद्धस्य तदन्याभासत्वेनोपन्यास इत्यर्थः । सामान्यलक्षणे इति । विरुद्धान्यपक्षवृत्तित्वे सतीत्यादिप्रागुक्तलक्षण इत्यर्थः । साधारणलक्षणे सपक्षविपक्षवृत्तित्वरूपे । ननु दूषकतायामसाङ्कर्यमेव हेत्वाभासानां भेदप्रयोजकं न तु

भेदानुमानं न विरुद्धं स्यात् साध्याभावाव्याप्यत्वात् । न च तत्साधारणम्, सपक्षासत्त्वात् । न च साध्यसहचाराज्ञानदशायां साधारणातिव्याप्तिः, तदा तस्यापि विरुद्धत्वादिति प्राहुः। तन्न। विपक्षगामित्वमात्रं दूषकमित्युक्तत्वात् । अत एव व्यभिचरितो व्यतिरेकी अनैकान्तिक एव । नापि साध्याभावसाधकत्वं तत्प्रमापकत्वं वा, साध्याभावसम्बन्धबुद्धिं विना तदज्ञानात् । नापि साध्यवदन्यत्वव्याप्यत्वम्, व्याप्यत्वविवेचने व्यर्थविशेषणत्वात् । नापि स्वव्यापकाभावप्रतियोगिसाध्यकत्वम्, साध्याभावस्य हेतुव्यापकत्वप्रतीतौ हेतुसाध्याभावसम्बन्धभानस्यावश्यकत्वात् ॥

---

ऽनैकान्तिकविशेषसाधारणविशेषत्वेऽप्यदोषो वेति पुनराकरानुसारी पन्थाः । नापीत्यादि । व्यापकत्वं व्याप्यव्यापकसामानाधिकरण्यघटितं न वा, आद्ये साध्याभावस्येति । द्वितीये तु नाभासत्वमविरोधात् ॥

---

शक्तिविशेषोन्नायकत्वम्, अन्यथा व्यभिचारविशिष्टासिद्धिरपि हेत्वाभासान्तरं स्यादतः प्रकारान्तरमाह छलजात्योरिति । छलजात्योर्निग्रहस्थानविशेषात्मकस्य निरनुयोज्यानुयोगस्यावान्तरत्वेऽपि यथा छलत्वादिना कथायामुद्भावनं तथैव विरुद्धस्यानैकान्तिकविशेषात्मकसाधारणान्तरत्वेऽपि विरुद्धत्वेनोद्भावनं न दोषावहं तादूप्येणोद्भावनादेव अशक्तिविशेषस्य लाभादिति भावः । ननु व्याप-

उच्यते । साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वम् । न च प्रतियोगिनोरन्वये भासमान एव तदभावयोर्व्याप्तिग्रहः, भिन्नग्राहकसामग्रीकत्वात् । अन्यथा व्यतिरेकिविलयापत्तेः । यद्वा वृत्तिमतः साध्यवदवृत्तित्वं,

---

साध्येत्यादि । हेत्वभावस्य साध्यवन्निष्ठाभावाप्रतियोगित्वज्ञानं वस्तुतस्तत्प्रतियोगिकाभावस्य हेतोः साध्यसामानाधिकरण्यग्रहं विरुणद्धीत्यभिप्रायेणेदम् । यदि च तदभावाभावत्वेनासामानाधिकरण्यग्रहेऽपि तत्त्वेन सामानाधिकरण्यग्रहो न विरुध्यत इति भाव्यते तदाह यद्वेत्यादि । वृत्तिमत इति धर्मोति च पक्षधर्मत्वाविरोधित्व-

---

कत्वग्रहे सहचारज्ञानस्य हेतुतायाः स्वयमेव व्याप्तिग्रहोपाये दूषितत्वात्साध्याभावस्येत्यादिमूलासङ्गतिरतो वितर्क्य योजयति व्यापकत्वमिति । आद्य इति । हेतुमन्निष्ठाभावाप्रतियोगित्वे सति हेतुसमानाधिकरणत्वरूपं हेतुव्यापकत्वं साध्याभावस्य गृह्णतोऽवश्यं व्यभिचारग्रहादिति भावः ॥

इति जागदीश्यां विरुद्धपूर्वपक्षग्रन्थः समाप्तः ।

## अथ विरुद्धसिद्धान्तः ।

ननु साध्याभावस्य हेतुव्यापकत्वं यथा नाभासः परामर्शाद्यविरोधित्वात्तथा हेत्वभावस्य साध्यव्यापकत्वमपीत्यत आह हेत्वभावस्येत्यादि । वस्तुत इति । वस्तुगत्या हेत्वभावप्रतियोगिको योऽभावस्तत्स्वरूपस्य हेतोरित्यर्थः । तदभावाभावत्वेनेति । हेत्वभावाभाव साध्यवन्निष्ठ इत्येवं साध्यसामानाधिकरण्यग्रहानुत्पादेपीत्यर्थः । साधनाभाव साध्यवन्निष्ठाभावाप्रतियोगित्वज्ञानस्य समानवि-

साध्यवद्वृत्तित्वानधिकरणत्वं, साध्यासमानाधिकरणधर्मत्वं, साध्यवद्वृत्तित्वानधिकरणधर्मत्वं वा तत्त्वम्, न च व्यतिरेक्यतिव्याप्तिः, तत्र साध्याप्रसिद्ध्या तथा ज्ञानविरहात्। असाधारणे च सङ्कर एव, अनेनापि रूपेण तस्य दोषत्वात्। न च साध्यवद्वृत्तित्वे सति वृत्तिमत्त्वज्ञा-

---

प्रदर्शकं न तु विशेषकम्, दूषकतायामनुपयोगादव्याप्तिकरत्वाच्च। वृत्तिविशेषसूचनाय वा तत्, तेन समवायेन हेतुतायां धूमे नाव्याप्तिः। आद्ययोः साध्यवद्वृत्तित्वतदधिकरणत्वाभावौ चरमयोश्च साध्यवद्वृत्तितत्त्वाधिकरणभेदावर्थाविति भेदः। ज्ञानातिप्रसक्ति

---

षयतामात्रेणैव तद्विरोधित्वादिति भावः। तत्त्वेन हेतुतावच्छेदकीभूतधूमत्वादिप्रकारेण। पक्षधर्मत्वेति। अन्यथा विरोधस्य पक्षधर्मताविरोधित्वप्रसिद्धावसिद्धावेव तदन्तर्भावः स्यादिति भावः। न त्विति। न पुनर्विरोधघटकमित्यर्थः। आनुकूल्याभावमुक्त्वा प्रातिकूल्यमप्याह अव्याप्तीति। वन्हिमानाकाशादित्यादिविरुद्धहेतोः वृत्तिमत्त्वविरहेणाव्याप्तिकरत्वादित्यर्थः। ननु दूषणौपयिकलक्षणप्रस्तावे पक्षवृत्तित्वग्रहाविरोधित्वप्रदर्शनं सन्दर्भविरुद्धमत आह वृत्तिविशेषेति। हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वस्य सूचनायेत्यर्थः। नाव्याप्तिरिति। अन्यथा संयोगेनैव धूमस्य वह्निमद्वृत्तित्वादव्याप्तिः स्यात्। न चैवं जातिः घटत्वादित्यादौ समवायेन हेताव्याप्तिः जातिसमवेतत्वाप्रसिद्धेरिति वाच्यम्। तत्र स्वाधिकरणावृत्तिसाध्यकत्वस्यैव विरोधत्वादिति भावः। चतुर्णां पौनरुक्त्यमाशङ्क्याह आद्ययोरित्यादि। भेद इति। न चैवं तेषामनुगतनिरुक्त्यकरणान्न्यूनत्वम्, इदमेव च मणिकृतां विरुद्धमित्यादिना प्रागेवानुगतविभाजकोपाधेः स्वयं दर्शितत्वादिति भावः। ननु पृथिवीतरेभ्यो

नात् साध्याभाववद्गामित्वज्ञानमावश्यकं तेन विना साध्यवदवृत्तित्वाज्ञानादिति वाच्यम् । उपजीव्यत्वेन भिन्नत्वात्, उपजीव्यत्वेऽपि साध्यवति न वर्त्तत इति ज्ञानं न स्वतोदूषकमिति चेन्न । असहचारज्ञानस्य वि-

---

निरस्यति न चेत्यादिना । तेनेत्यादि । साध्याभाववद्गामित्वज्ञानं विना वृत्तिमत्त्वविशिष्टसाध्यवदवृत्तित्वज्ञानापर्य्यवसानादित्यर्थः । असह-चारेति । सहचारः सामानाधिकरण्यम् । व्यभिचारेति । व्यभिचारो

---

भिद्यते पृथिवीत्वादित्यादौ व्यतिरेकिणि पक्ष एव हेतोः साध्यवद-वृत्तित्वात् तत्रातिव्याप्त्यसम्भव इत्यत आह ज्ञानेति । ननु साध्याभा-ववद्गामित्वज्ञानेन साध्यवदवृत्तित्वज्ञानाजननात् तेनविनेत्यादिमूला-सङ्गतिरतो व्याचष्टे साध्याभाववदित्यादि । अपर्यवसानादिति । अवस्थानविरहादित्यर्थः । असति बाधके साध्याभाववद्गामित्वव्या-प्यवत्तानिश्चयस्य साध्याभाववद्गामित्वानुमितिजनकत्वनियमादिति भावः । वस्तुतस्तु नचेत्यादिमूलस्य हेतुः साध्याभाववदवृत्तिः वृत्तिमत्त्वे सति साध्यवदवृत्तित्वादित्यनुमानात्तज्ज्ञानमावश्यकमिति भावः । अत्राऽनुकूलतर्कमाह तेन विनेति । साध्याभाववदवृत्तित्वेन विनेत्यर्थः । साध्यति । वृत्तिमत्त्वे सति साध्यवदवृत्तित्वापर्यवसा-नादित्यर्थः । तथा च हेतुर्यदि साध्याभाववदवृत्तिर्न स्यादवृत्तिम-त्त्वविशिष्टसाध्यवदवृत्तिर्न स्यादिति भावः । दीधितौ अपर्यवसानादि-ति । गोत्वं यदि अश्वत्वाभाववदवृत्तित्वप्रकारकज्ञानविशेष्यो न स्यात्तदा वृत्तिमत्त्वविशिष्टाश्वत्ववदवृत्तित्वप्रकारकज्ञानविशेष्यो न स्यादिति तर्कादभिमतसिद्धिरिति भावः । ननु बहुव्रीहौ उत्तरपदस्य लाक्षणिकत्वादसहचारज्ञानस्येत्यत्र न विद्यते सहचारो यत्रेति व्यु-त्पत्त्या सहचारपदेन सहचाराभाववतो बोधने तज्ज्ञानस्य व्याप्ति-ग्रहाप्रतिबन्धकत्वादसङ्गतिः सहचाराभावज्ञानत्वेनैव तथात्वात्

रोधितया व्याप्तिग्रहप्रतिबन्धकत्वात्, व्यभिचाराज्ञान-विरोधित्वेन व्यभिचारज्ञानवत् । ननु विरुद्धस्य स्वार्थानुमानदोषत्वेऽपि परार्थानुमानेऽपार्थकत्वम् अयोग्यताज्ञानेन निश्चितानन्वयादिति चेन्न । अयोग्यताज्ञानस्य विरुद्धत्वज्ञानोपजीवकत्वेन तस्यैव दोषत्वात्, बाधेऽप्येवम् । स चायं विधिसाधने त्रिविधः । साक्षात्साध्या-

———

न ज्ञायते यस्मात्तद्व्यभिचाराज्ञानमव्यभिचारज्ञानम् । तदयमर्थः, अव्यभिचरितसामानाधिकरण्यरूपाया व्याप्तेरव्यभिचारांशग्रहविरोधिग्रहविषयतया यथा व्यभिचारो हेत्वाभासस्तथा सामानाधिकरण्यांशग्रहाविरोधिग्रहविषयतया विरोधोऽपीति । स चायं विरुद्धो हेतुः । साध्याभावेति । तदभावत्वं तद्वत्ताग्रहविरोध्यभावत्वम्, तेन

———

अतो व्याचष्टे सहचारः सामानाधिकरण्यमिति । सहचारपदार्थः सामानाधिकरण्यमित्यर्थः । तथा च सहचारस्याभावोऽसहचार इति पूर्वपदार्थप्रधानोऽव्ययीभाव एवात्र समासः न बहुव्रीहिरिति नासङ्गतिरिति भावः । ननु सहचारसामान्याभावस्य व्याप्तिधीविरोधित्वेऽपि साध्यवदवृत्तित्वज्ञानस्य स्वतोदूषकत्वाप्राप्तिरतो व्याचष्टे सहचारः साध्यसामानाधिकरण्यमिति तु क्वाचित्कः परिभ्रष्टः पाठः । तथाचाऽसहचारज्ञानस्येतिमूलस्य साध्यासामानाधिकरण्यज्ञानस्येत्यर्थः । ननु व्यभिचाराज्ञानस्य नित्यत्वात्तद्विरोधित्वं व्यभिचारज्ञानस्य दुर्घटं न वा तद्धेत्वाभासताप्रयोजकम् अनुमितेस्तत्कारणज्ञानस्य विरोधिताया एव तथात्वादतो व्याचष्टे व्यभिचार इति। ननु विरोधितयेतिमूलस्य न व्याप्तिधीविरोधितयेत्यर्थः व्याप्तिग्रहप्रतिबन्धकत्वादित्यनेन पौनरुक्त्यापत्तेः, किं तु सामानाधिकरण्यग्रहाविरोधितयेत्यर्थः तत्र च यदि व्याप्तिधीकारणीभूतस्य सामानाधिकर-

भावव्याप्यत्वात्, साध्यव्यापकाभावव्याप्यत्वात्, साध्य-व्यापकविरुद्धोपलम्भात् । यथा धूमवानयं योग्यधूम-वत्तया अनुपलभ्यमानत्वात्, निरग्निकत्वात्, जलाशय-

---

साध्यवदन्यत्वव्याप्यत्वोपसंग्रहः । एवमुत्तरत्रापि । साध्यव्या-पकेति । अत्र व्याप्यपदं स्वरूपपरम् । साध्येत्यादि । साध्यव्याप-कसामानाधिकरण्यग्रहविरोधिरूपवत्त्वादित्यर्थः । तेन साध्यव्याप-कवदवृत्तित्वाद्युपसंग्रहः । सर्वत्र चोपलम्भपदं स्वरूपसिद्धिमात्र-

---

व्यग्रहस्य विरोधित्वमभिप्रेतं तद्वानुमितौ तत्कारणज्ञाने वा विरोधस्य स्वतोदूषकत्वाप्राप्त्या हेत्वाभासत्वानुपपत्तिः तदवस्थैवेत्यतः फलिता-र्थमाह तदयमिति । सचार्यमित्यनेन विरोधिपरामर्शे तस्य त्रैविध्या-सम्भवादसङ्गतिरतो व्याचष्टे विरुद्धो हेतुरिति । तद्वत्ताग्रहेति । सा-ध्यवत्ताग्रहेत्यर्थः । न च साध्याभावावच्छेदकधर्मविधया साध्यव-त्ताग्रहविरोधिनां तत्तदभावानां व्याप्यत्वेतिप्रसङ्गः, मूलस्थसाक्षात्प-दमहिम्ना स्वरूपतः साध्यवत्ताग्रहविरोधित्वस्यैव लाभादिति भावः । एवमिति । साध्यव्यापकाभावत्वादिकमप्यग्रे साध्यव्याप-कादिमत्ताग्रहविरोधित्वमेव वाच्यं तेन साध्यव्यापकवदन्यत्वादेर्ना-संग्रहः । साध्यव्यापकाभावव्याप्यत्वादिपर्यवसितेन साध्यव्यापक-विरुद्धत्वरूपतृतीयविभाजकेन द्वितीयस्य गतार्थत्वापत्तेराह व्याप्य-पदमिति । अत एव निषेधसाधनस्थले व्याप्यपदम्परित्यज्यैवेदं मूले प्रदर्शयिष्यतीति भावः । तृतीये साध्यव्यापकविरुद्धत्वं यदि साध्य-व्यापकाभावव्याप्यत्वमात्रं तदा साध्यव्यापकवदवृत्तित्वाद्यसंग्रहः स्यादतो व्याचष्टे साध्यव्यापकेति । अवृत्तित्वादीत्यादिना तादृशवृ-त्तिभिन्नत्वाद्युपग्रहः । मूले योग्यधूमवत्तयेत्यत्रयोग्यपदमुपलब्धेः प्रमात्वलाभार्थम् । तथा च धूमवत्त्वेनाऽप्रमीयमाणत्वादित्यर्थः । तेन योग्यधूमवत्तयाऽनुपलभ्यमानत्वस्याऽयोग्यधूमवति साध्यसामानाधि-करण्येपि न क्षतिः । ननूपलम्भमन्तर्भाव्य विरुद्धविभाजकोपाधीनां

त्वात् । न च सर्वत्र साध्यव्यापकविरुद्धोपलम्भ इति न त्रैविध्यम् । एतदज्ञानेऽपि साध्याभावतद्व्यापकाभावव्याप्यत्वेनापि ज्ञातस्य दोषत्वात् । न च धूमवानयं तदभाववत्त्वादिति त्रयाधिकम्, स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं हि व्यापकत्वं, तच्चाभेदेऽपि धूमवानयं धूमाभाववत्तयोपलभ्यमानत्वात् तद्वत्तयानुपलभ्यमानत्वादित्यनैकान्तिकमेव । निषेधसाधनेऽपि त्रिविधः । प्रतियोग्युपलम्भात्, साध्यव्यापकाभावोपलम्भात्,

---

फलकम् ।साध्याभावेति । व्याप्यपदव्यत्यासेन साध्याभावव्याप्यत्वेन साध्यव्यापकाभावत्वेन चेत्यर्थः । स्वसमानेति । तथा च साध्याभावसाध्यव्यापकाभावयोर्निरुक्तसाध्यव्यापकाभावत्वेनानुगमान्नाधिक्यमित्यर्थः । प्रतियोग्युपलम्भात् स्वरूपतः साध्यवत्त्वग्रहविरोधित्वात् । तेन निर्वह्निकान्यत्वादिसंग्रहः । साध्यव्यापके-

---

निर्वचनमयुक्तं तद्घटितताद्दशोपाधीनां ज्ञानस्य सर्वथैव साध्यसामानाधिकरण्यग्रहाविरोधित्वादत आह दीधितौ सर्वत्रेति । साध्यव्यापकविरुद्धोपलम्भादित्यत्र प्रतियोग्युपलम्भादित्यग्रिमेषु चेत्यर्थः । स्वरूपेनि । उक्तस्वरूपाणां विरुद्धहेतौ सत्त्वप्रदर्शनमात्रफलकं न तूपलम्भघटिता अप्युपाधय इत्यर्थः । ननु साध्यव्यापकाभावव्याप्यत्वस्यापि साध्यव्यापकसामानाधिकरण्यग्रहाविरोधित्वरूपत्वेन साध्यव्यापकविरुद्धत्वमध्येन्तर्भावितत्वादेतदज्ञानेपीत्यादिमूलासङ्गतिरत आह व्याप्यपदेति । तद्व्यापकाभावेत्यत्र तत्पदस्य साध्याभावपरत्वभ्रमं निराकुर्वन्नाह साध्यव्यापकाभावत्वेन चेति । अभेदेन व्यापकत्वोपगमेऽप्याधिक्यनिरासस्याऽस्फुटत्वादाह तथा चे-

साध्यव्यापकविरुद्धोपलम्भात् । यथा निरग्निकोऽयमग्नि-मत्त्वात्, धूमाभावशून्यत्वात्, धूमवत्त्वात् । सर्वश्चायं

———

ति । अत्र व्यापकत्वं भेदाभेदसाधारणं, तेन साध्याभावव्याप्यत्व-संग्रहः । धूमवत्त्वादिति । धूमाभावस्य वन्ह्यभावव्यापकत्वग्रहद-शायामस्य मध्यमेऽन्तर्भावो, वन्ह्यभावव्यापकवन्हिसामग्र्या भावा-भावव्याप्यत्वग्रहे च चरमे । इदं पुनरिहावधेयम् । कथितरूपाणि किं स्वरूपतो ज्ञातान्येव सामानाधिकरण्यग्रहविरोधीनि असामा-

———

ति । निरुक्तेति । व्याप्यपदापेक्षया पूर्वनिरुक्तेत्यर्थः । इदमुपलक्ष-णम् । साध्याभावस्यापि साध्याभावव्याप्यत्वात् प्रथमोपाधिनापि तदनुगमान्नाधिक्यमिति द्रष्टव्यम् । साध्यवदन्यत्वादेः संग्रहार्थमाह स्वरूपत इत्यादि । साध्यव्यापकाभावत्वादेरपि व्यावर्तकधर्मविधया साध्यवत्ताग्रहविरोधित्वादनेनैव गतार्थत्वापत्तेः स्वरूपत इत्युक्तम् । तथा च तेषां स्वरूपतः साध्यवत्ताज्ञानाविरोधित्वात् पृथगुपन्यास इति भावः । ननु साध्याभावव्याप्यवत्त्वस्य स्वरूपतः साध्यवत्त्वग्र-हाविरोधित्वेनोक्तेष्वनन्तर्भावाद्विधिसाधन इव निषेधसाधनेपि तस्य दूषकत्वसम्भवाच्च तदनभिधानात् मूलस्य न्यूनत्वमत आह अत्रे-ति । तथा च साध्यव्यापकीभूतस्य साध्यस्यैव सामानाधिकरण्य-ग्रहविरोधितया तृतीय एव साध्याभावव्याप्यत्वस्यान्तर्भावान्न न्यू-नत्वमिति भावः । ननु धूमाभावशून्यत्वं धूम एव तथा च तत्र वा-स्तविकस्य साध्यव्यापकाभावत्वस्य विरहात् द्वितीये तस्योदाहरण-त्वासङ्गतिः अन्यथा भावसाधारणस्यैव साध्यव्यापकाभावत्वस्य निवेशे धूमवत्त्वादित्यपि द्वितीयस्योदाहरणमेव स्यादत आह धूमा-भावस्येति । अस्य धूमवत्त्वादित्यस्य । वन्ह्यभावेति । वन्ह्यभावव्या-पको यो वन्हिसामग्र्यभावः तदभावस्य व्याप्यत्वग्रह इत्यर्थः । चरम इति । अन्तर्भाव इत्यनुषज्यते । तथा च भावाभावसाधार-णमेव व्यापकाभावत्वं निविष्टं ग्राहकसामग्रीभेदवशाच्चैकस्यापि

नाधिकरणव्याप्यत्वेन वा, नाद्यः, व्यापकाभावव्याप्यत्वादेस्तदसम्भवात् । न द्वितीयः, साध्याभावत्वसाध्याभावव्याप्यत्वयोः स्वरूपेणैव ज्ञातयोस्तथात्वात् । तथात्वेऽपि तत्त्वमविरुद्धमिति चेत्, हन्तैवमसामानाधिकरण्यस्य समानाधिकरणावृत्तितत्तद्धर्माणाञ्च तथात्वादाधिक्यम् । न च एतानि धर्मिविभाजकान्येव, सर्वेषामेव साध्याभावव्याप्यत्वेनैकविधत्वादिति । विरोधोन्नायकप्रकारत्रैवि-

---

धूमस्य भेदेनोदाहरणत्वमिति भावः । एतदज्ञानेपीत्यादिमूलस्वरससिद्धमुक्तधर्माणां सामानाधिकरण्यधीविरोधित्वं दूषयति इदं पुनरित्यादिना । व्याप्यत्वेन वा ज्ञातानीत्यनुषज्यते । व्याप्यत्वादेरित्यादिना साध्यव्यापकवदवृत्तित्वादेः परिग्रहः । तदसम्भवादिति । साध्यव्यापकाभावव्याप्यत्वादिनिर्णयेपि हेतौ साध्यसामानाधिकरण्यज्ञानोत्पत्त्या तस्य विरोधित्वसम्भवात् तथा च साध्यव्यापकाभावत्वाद्युपन्यासोऽनुचित इति भावः । स्वरूपेणैवेति । साध्याभावत्वस्य साध्याभावव्याप्यत्वस्य वा हेतौ निर्णयेपि नियमतः तत्र सामानाधिकरण्यग्रहानुत्पादादिति भावः । शङ्कते तथात्वेपीति । स्वरूपतो ज्ञातस्य विरोधित्वेपि व्याप्यतया ज्ञातस्य विरोधित्वं न विरुद्धमित्यर्थः । एवमिति । असामानाधिकरण्यव्याप्यत्वेन येषां ज्ञानं सामानाधिकरण्यधीविरोधि तेषामपि स्वरूपतो विभजन इत्यर्थः । साध्याभावत्वादिवत्स्वरूपतः सामानाधिकरण्यव्याप्यत्वेनाधिक्यमुक्त्वा साध्यव्यापकाभावत्वादिवत् स्वरूपतस्तद्विरोधिनामाधिक्यमाह समानाधिकरणावृत्तीति । तत्तद्धर्माणामिति । गोत्ववानश्वत्वादित्यादावश्वत्वादीनां तथात्वात् साध्यासामानाधिकरण्यव्याप्यत्वेन ज्ञातानां सामानाधिकरण्यधीविरोधित्वादाधिक्यमित्यर्थः । विभाजकान्येवेत्येवकारेण दूषकत्वप्रतिक्षेपः। सर्वेषामिति । तथा च साध्याभावव्याप्यत्वेन नियमतः सङ्कराच्च तयोर्विभाजकत्वसम्भव इति भावः । प्राचां मतेनाह विरोधोति । कथायां विरोधोन्नायकधर्माणामुक्तत्रैविध्यनियमेनेत्यर्थः । धर्मान्तरेणापि कथायां विरोधोन्नयनादुक्तनियमे मानाभाव इत्यस्वरसाद्धन्तीत्युक्तम् । विरुद्धस्थले बाधस्व-

विशेषणद्वारापि । यथा कृष्णागुरुप्रभववन्हिमानयं कटुकासुरभिपाण्डरधूमवत्त्वात् । अयञ्च बाधाश्रयासिद्धस्वरूपासिद्धासाधारणसंकीर्णः क्वचित् ॥

---

ध्येन धर्मिणोऽपि त्रैविध्याभिधानमिति वदन्ति । अयञ्चेत्यादि । बाधस्वरूपासिद्ध्यन्यतरसङ्करस्तु आवश्यकोऽन्यसङ्करस्तु काचित्को ज्ञानासङ्कराच्च पार्थक्यम् ॥

---

रूपासिद्ध्योरन्यतरस्यावश्यकत्वात्तत्र क्वाचित्कत्वासम्भवादाह बाधेति । हेतुविशेषणासिद्ध्यादिभिरपि क्वचित्साङ्कर्यसंभवादाश्रयासिद्ध्यादिपदस्योपलक्षणपरत्वमित्याशयेनाह अन्यसङ्करस्त्विति । ननु विरुद्धहेतौ बाधासिद्ध्योरन्यतरस्यावश्यकत्वे तदेवास्तु दूषणं कृतं विरोधेनेत्यत आह ज्ञानेति ॥

इति श्रीजगदीशतर्कालङ्कारविरचितायामनुमानचिन्तामणिदीधितिव्याख्यायां विरुद्धग्रन्थः समाप्तः ।

## चिन्तामणेः सत्प्रतिपक्षः ।

सत्प्रतिपक्षत्वं न समानबलबोधितसाध्यविपर्ययलिङ्गत्वम्, परस्परप्रतिबन्धेनोभयोरबोधकत्वात् । बलञ्च न सपक्षसत्त्वादि, व्यतिरेकिण्यभावात् । नापि समानव्याप्तिपक्षधर्मतावत्त्वम्, विरोधेनैकत्र तदङ्गनियमात् । नापि व्याप्तिपक्षधर्मतया ज्ञातत्वम्, विरोधिव्याप्तिपक्षधर्मताविशिष्टज्ञानयोरन्यतरभ्रमत्वनियमेन नित्यत्वव्याप्तश्रावणत्वादिवैशिष्ट्याप्रसिद्ध्याऽऽरोपयितुमशक्यत्वात् । न च साध्यव्याप्यस्य पक्षधर्मता पक्षधर्मस्य वा साध्यव्याप्यतारोप्येति वाच्यम् । एकत्र तदुभयाभावात्

## दीधित्याः सत्प्रतिपक्षः ।

एकत्र तदुभय इति । व्याप्ये पक्षधर्मतायाः पक्षधर्मे च व्या-

## जागदीश्याः सत्प्रतिपक्षः ।

ननु व्याप्ये पक्षधर्मत्वस्य पक्षधर्मे वा व्याप्यत्वस्याऽऽरोप एव लक्षणघटको न तु व्याप्तिविशिष्टपक्षधर्मत्वस्यारोप इत्येकत्रेत्यादिमूलासङ्गतिरतो भावार्थमाह व्याप्य इत्यादि । अव्यापकः सकल-

विशिष्टस्याऽप्रसिद्ध्या तद्वैशिष्ट्यस्यारोपासम्भवात्। नाप्यनिर्द्धारितविशेषेण बाधितसाध्यविपर्य्ययकत्वम्, उभयोरबोधकत्वात् । विशेषश्च न व्याप्तिभङ्गाभङ्गरूपः, एकत्र तद्भङ्गनियमात् ॥

---

प्यत्वस्यारोपः प्रत्येकमव्यापकोऽतो विशिष्टस्यारोपो वाच्यः, स चैकधर्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याऽप्रसिद्ध्या न सम्भवतीत्यर्थः । विरुद्धादौ साधने स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धेश्चेत्यपि द्रष्टव्यम् ।एकत्र तद्भङ्गेति । तथा चाऽन्यतरत्वेन तदवधारणमस्तीति भावः ॥

---

सत्प्रतिपक्षावृत्तिः। ननु विरोधिव्याप्त्या पक्षधर्मतया च ज्ञातत्वोक्तौ विशिष्टाप्रसिद्धिर्न क्षतिकरीत्यतः स्वयं तत्साधारणदोषमाह विरुद्धादाविति। आदिना व्यभिचाराद्युपग्रहः। तथा च पर्वतो वन्हिमान्धूमादित्यस्य प्रतिपक्षे पर्वतो न वन्हिमान्पर्वतत्वादित्यादावव्याप्तिरिति भावः। इदमुपलक्षणम्। तमो न द्रव्यमालोकानपेक्षचक्षुर्ग्राह्यत्वादित्यस्य प्रतिपक्षे तमो द्रव्यं रूपवत्त्वादित्यादौ हेतुताघटकसमवायेन पक्षवृत्तित्वाप्रसिद्ध्याऽव्याप्तिर्द्रष्टव्या। ननु व्याप्तिभङ्गो व्याप्त्यंशे भ्रमत्वं तथा चैकत्र तन्नियमेऽपि तदनवधारणादुक्तलक्षणं निर्दुष्टमेवेत्यत आह तथा चेति । अन्यतरत्वेन भङ्गाभङ्गान्यतरत्वेन। तथा च व्याप्त्याद्यंशे भ्रमत्वतदभावान्यतरवत्तया निर्णयदशायां विरोधिपरामर्शद्वयात्मकप्रतिपक्षे लक्षणाव्याप्तिरिति भावः ॥

इति जागदीश्यां सत्प्रतिपक्षपूर्वपक्षग्रन्थः समाप्तः।

उच्यते । साध्यविरोध्युपस्थापनसमर्थसमानबलोप-स्थित्या प्रतिरुद्धकार्य्यलिङ्गत्वं तत्त्वम् । बलञ्च व्या-

---

सत्प्रतिपक्षितव्यवहारो हि सत्यसति वा साधने नाऽपरामृ-ष्यमाणे नाप्यविद्यमानविरोधिपरामर्शे, अत एव सन् प्रतिपक्षो वि-रोधिव्याप्त्यादिमत्तया परामृष्यमाणो हेतुः विरोधिपरामर्शो वा य-स्य परामृष्यमाणस्य हेतोरसौ सत्प्रतिपक्ष इति विग्रहमपि वर्णय-न्ति, अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह साध्येति । बाधाश्रयासिद्धिनिर्णयवारणाय समर्थान्तम् । न चासौ न व्या-प्तिपक्षधर्मतात्मकबलोपस्थितिरिति वाच्यम् । व्याप्तिपक्षधर्मताविर-

---

## अथ सत्प्रतिपक्षसिद्धान्तः ।

मूलोक्तसत्प्रतिपक्षोपाधेः सद्धेतावपि सत्त्वात्तत्र च हेत्वाभा-ससामान्यलक्षणासत्त्वादेतस्य तद्विभाजकत्वानुपपत्तिरतो व्यवहा-रौपयिकप्रतिपक्षपरतया मूलं समर्थयति सत्प्रतिपक्षितेति । सति समीचीने । एवमग्रेपि । अत एवेति । विग्रहमपि वर्णयन्तीत्यन्वयः । अविद्यमानलिङ्गकविरोधिपरामर्शस्थलीयप्रतिपक्षाव्याप्तेराह विरो-धिपरामर्शो वेति । यस्येत्यनेन केवलहेतुबोधने तस्याऽपरामृष्यमाण-तादशायामपि सत्प्रतिपक्षितत्वापत्तिरतः पूरयति परामृष्यमाणस्येति। बाधेत्यादि । काञ्चनमयह्रदो न वन्हिमानित्येवं बाधनिर्णयेन ह्रदो न काञ्चनमय इत्येवमाश्रयासिद्ध्या वा प्रतिरुद्धानुमितिस्वरूपकार्यके काञ्चनमयह्रदो वह्निव्याप्यधूमवानित्यादिपरामर्शाविषये धूमादाव-तिव्याप्तिवारणार्थं समर्थान्तमुपस्थितिविशेषणमित्यर्थः । असौ प्रो-क्तबाधादिनिर्णयः । व्याप्तिपक्षधर्मतात्मकेति । तादृशबलस्यैव मूलो-क्तत्वादिति भावः । साध्यत्व इति । तथा च पर्वतो वन्हिव्याप्यधू-

हस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्सम्भवात् । पक्षः साध्याभावव्याप्यवान् साध्यं पक्षवृत्तित्वाभावव्याप्यवदिति पक्षस्य, व्यापकभेदेन च अन्वयव्यतिरेकभेदेन च व्याप्तेश्च भिन्नत्वादेकोपादानेऽन्यासंग्रहेण बलस्याऽविवक्षितत्वाच्च । साध्यधीविरोध्यनुमितिजनकज्ञानविषयत्वेन तदुपादाय तदुपस्थिरभिधानञ्च शिरोवे-

---

माभाववान्धूमादित्यत्र पर्वतो वन्हिव्याप्यधूमवानित्याकारेण लौकिकसन्निकर्षादिजनितेन बाधात्मकव्याप्तिपक्षधर्मतानिर्णयेन प्रतिरुद्धकार्यत्वादेतादृशधूमाभावव्याप्यधूमवत्तापरामर्शविषये धूमेऽतिव्याप्तिरिति भावः । आश्रयासिद्ध्यतिव्याप्त्यर्थमाह पक्षतावच्छेदकत्वे वेति । तथा च वन्हिव्याप्यधूमशून्यः पर्वतो वन्हिमानालोकादित्यत्र वन्हिव्याप्यधूमवत्पर्वतलक्षणाश्रयासिद्ध्यात्मकव्याप्तिपक्षधर्मत्वोपस्थित्या प्रतिरुद्धकार्यके परामृष्यमाणालोकादिहेतावतिव्याप्तिरिति भावः । ननूक्तव्याप्तिपक्षधर्मतयोः प्रकृतसाध्यानिरूपितत्वान्न तदात्मकबाधातिव्याप्तिरतः पक्षधर्मतायाः व्याप्तेश्चाऽननुगतत्वात्तदात्मकं बलं लक्षणे प्रवेश्यमेव नेत्याशयेनाह पक्ष इति। पक्षस्येति। एवं क्रमेण विरोधिपरामर्शीयपक्षस्येत्यर्थः । भिन्नत्वादित्यग्रेतनेनाऽन्वयः । व्यापकभेदेनेति । प्रथमे साध्याभावो व्यापको द्वितीये तु पक्षवृत्तित्वाभावस्तथेति व्यापकभेदेन विरोधिव्याप्तेर्भिन्नत्वादित्यर्थः । ननु पक्षधर्मिकसाध्यवत्तानुमितौ तद्धर्मिकसाध्याभावव्याप्यवत्ताबुद्धेरेव प्रतिरोधकत्वमते पक्षव्यापकयोर्भेदादूबलस्याऽननुगमासम्भव इत्यत आह अन्वयव्यतिरेकभेदेन चेति । इदमुपलक्षणम् । व्यापकसामानाधिकरण्यरूपाया व्याप्तेः साधनभेदेनापि भेदो बोध्यः । एवं सर्वत्रैव व्याप्तिपक्षधर्मतयोर्द्वयोरपि हेतुतावच्छेदकसम्बन्धभेदादननुगमो द्रष्टव्यः । ननु विरोधिव्याप्तिपक्षधर्मतात्मकं बलमेवानुगतरूपेणोपादाय समर्थान्तं विशेषणमेव किमिति न त्यज्यते इत्यत आह साध्यधीति । प्रकृतपक्षधर्मिकसाध्यवत्ताधीविरोधिनी याऽनुमितिस्तज्जनकज्ञानविषयत्वेन विरोधिव्याप्तिपक्षधर्मतात्मकं बलमुपादेयमित्यर्थः । शिरोवेष्टनेनेति । तथा च लाघवात्समर्थान्तभागेनैवोपस्थितौ

ष्टनेन नासिकास्पर्शमनुधावति । साध्यस्य साध्यसिद्धेर्विरोधिन्याः पक्षो न साध्यवानित्याद्युपस्थितेः, साध्यविरोधी साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयो बाधः साध्याभावादिमत्पक्षादिः, तदुपस्थितेर्वा जननयोग्यया समानया बलोपस्थित्या तथाविधव्याप्त्यादिबुद्ध्या,

---

साध्यविरोध्यनुमितिजनकत्वस्य लाभसम्भवात्तादृशानुमितिजनकज्ञानविषयत्वमुपस्थितिविशेषणं गौरवग्रस्तमिति भावः । ननु साध्याभाववत्त्वाद्युपस्थितेः साध्यप्रतिबन्धकत्वरूपतद्विरोधित्वाभावाल्लक्षणासम्भव इत्यतो व्याचष्टे साध्यस्येत्यादि । साध्याभाववत्त्वोपस्थितिं परित्यज्य साध्यसिद्धिविरोध्युपस्थितित्वेनानुगतधर्मेण प्रवेशस्य फलं दर्शयति पक्ष इति । न साध्यवान् साध्यवद्भिन्नः । तथा च साध्याभावोपस्थितिसमर्थेत्युक्तौ साध्यवदन्यत्वादिव्याप्यवत्तापरामर्शस्थलीयप्रतिपक्षाव्याप्तिः स्यादिति भावः । उपस्थितेरित्यस्य जननयोग्ययेत्यग्रेऽन्वयः । साध्यपदस्य सिद्धिपरतायामाधुनिकलक्षणापत्तेः कल्पान्तरमाह साध्यविरोधीत्यादि । अत्र विरोधिपदस्य प्रतिबन्धकज्ञानविषयत्वेन बाधने शक्तिर्निरूढलक्षणा वा फलतो न कश्चिद्विशेषः । साध्याभाववत्पक्षस्योपस्थित्यभिधाने साध्यादिधर्मिकपक्षवृत्तित्वाभावव्याप्यवत्तापरामर्शदशायां सत्प्रतिपक्षाव्याप्तिरतः साध्यविरोधित्वेनानुगतानामुपस्थितिर्निवेशितेत्यावेदयितुमाह साध्याभावादिमदिति । आदिपदाभ्यां पक्षावृत्तित्वविशिष्टसाध्याद्युपग्रहः । तदुपस्थितेर्वेति । वाकारोऽनास्थायाम् । यत्र पर्वतो वन्हिमान्प्रमेयो वा धूमादित्यादौ साध्याभाववत्पक्षादिकं साध्याभावादिकं वा न प्रसिद्धं तत्रत्यसत्प्रतिपक्षाव्याप्तिभिया पूर्वकल्पस्यैवानुसरणीयत्वात्तत्र च साध्यधीविरोधिन्या भ्रमरूपाया एवोपस्थितेः सौलभ्यादिति ध्येयम् । उपस्थापनेत्यत्र णिजर्थस्य विवरणं जननेति । समर्थेत्यस्य विवरणं योग्ययेति । जनकतावच्छेदकधर्मविशिष्टयेति समुदितार्थः । समानत्वस्य बलविशेषणत्वभ्रमं निराकुर्वन्नाह समानयेति । बलोस्थित्येति यथाश्रुताभिप्रायेण । अत एव विवृणोति तथाविधेति । साध्याभावादिनिरूपितेत्यर्थः । व्याप्त्यादीत्यादिना पक्षधर्मत्वोपग्रहः । प्रागुक्तरीत्याऽननुगमात् बलस्य लक्षणाघटकत्वे तु समानया उपस्थि-

प्रतिरुद्धं कार्य्यं यस्य तादृशलिङ्गत्वमित्यर्थः। विरोधिव्याप्त्यादिविषयत्वलक्षणयोग्यताशालिन्या अप्युपस्थितेरप्रामाण्यग्रहे सत्प्रतिपक्षत्वासम्पादकत्वात् कार्य्यप्रतिरोधानुधावनम्। समानत्वञ्चाऽगृहीताप्रामाण्यकसाध्यसिद्ध्यौपयिकपरामर्शकालीनत्वम् । असति गृहीताप्रामाण्यके वा परामर्शे सत्प्रतिपक्षितत्वव्यवहारविरहात् । यत्तु प्रामाण्यनिर्णयेनाऽधिकबलतया बाधकस्य विरोधिपरामर्शस्य

---

त्या प्रतिरुद्धं कार्यं यस्येत्येवं योजना कार्या । ननु साध्यविरोध्युपस्थापनसमर्थोपस्थितिसमानकालीनसाध्यपरामर्शविषयलिङ्गत्वमित्येवास्तु तादृशोपस्थितिप्रतिरुद्धकार्यकत्वपर्यन्तं व्यर्थमत आह विरोधीति । शालिन्या अपीत्यन्तेन साध्यविरोध्युपस्थितिसमर्थत्वमादर्शितम् । परामर्शधर्मिकाप्रामाण्यज्ञानाभावस्य पृथगेवाऽनुमितिहेतुत्वमित्याशयेनेदम् । ननु हेतौ साध्यपरामर्शाभावदशायामप्रामाण्यज्ञानास्कन्दितसाध्यपरामर्शदशायां वा विरोधिपरामर्शप्रतिरुद्धकार्यकत्वसम्भवात् तदानीमपि सत्प्रतिपक्षत्वापत्तिरत आह समानत्वं चेति । साध्यपरामर्शानां व्याप्तिभेदेन नानात्वात्तेषामनुगमकं धर्ममाह साध्यसिद्ध्यौपयिकेति । प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणताशालिज्ञानकालीनत्वमित्यर्थः । साध्यसिद्ध्यौपयिकज्ञानकालीनत्वस्य फलमाह असतीति । परामर्श इत्यग्रेणान्वयः । अगृहीताप्रामाण्यकेत्यस्य फलमाह गृहीताप्रामाण्यक इति । अत्र साध्यपरामर्शे यद्यदप्रामाण्यधीदशायां न सत्प्रतिपक्षत्वव्यवहारः तत्तदप्रामाण्यज्ञानाभावकूटवत्त्वं निवेश्यमतो न कोऽपि दोषः । सत्प्रतिपक्षितेति । हेतोः सत्प्रतिपक्षितत्वग्रहविरहादित्यर्थः । मिश्रमतमाह यत्त्विति । बाधकस्य साध्याभावानुमितिजनकस्य । समानेतीति । तथा च निश्चितप्रामाण्यकसाध्यपरामर्शकालीनत्वमेवोपस्थितेः समानबलत्वं मिश्राभिप्रेतमिति भावः । व्यभिचारेणेति । अनिश्चितप्रामाण्यकेनापि परामर्शेन स्वसाध्यानुमितेरुत्पादेन विपरीतानुमितेश्च प्रतिबन्धकत्वेन प्रामाण्यनिश्चयस्य जनकतानवच्छेदकत्वादित्यर्थः। तथा च यावदेकत्राऽप्रामाण्यं न गृह्यते

वारणाय समानेति । तदसत् । व्यभिचारेण प्रामाण्यग्रहस्याऽबल-त्वात्, अन्यत्राऽप्रामाण्यग्रहानुकूलत्वेनैव क्वचित्तदुपयोगात् । बल-पदोपसन्दानाच्चोक्तरूपलाभान्न तद्वैयर्थ्यम् । लिङ्गपदोपादाना-च्च स्वीयलिङ्गतौपयिकपरामर्शलाभादात्मादेर्व्युदासः । विरोधि-परामर्शप्रतिरुद्धकार्य्यकत्वविशिष्टपरामर्शविषयत्वन्तु फलितार्थः ।

---

तावद्विरोधिपरामर्शयोः प्रतिपक्षितत्वमिष्टमेवेति तद्वारणार्थं समान-पदं व्यर्थमिति भावः । नन्वेवं विरोधिपरामर्शस्य प्रामाण्यग्रहानुस-रणं व्यर्थमत आह अन्यत्रेति । साध्यीयपरामर्श इत्यर्थः । अप्रामा-ण्यानुमापकव्याप्त्यादिप्रतिसन्धानस्य सार्वत्रिकत्वाभावादाह क्व चिदिति । तदुपयोगात् विरोधिपरामर्शीयप्रामाण्यनिश्चयस्योपयो-गात् । ननु साध्यविरोध्युपस्थापनसमर्थसमानोपस्थित्या प्रतिरुद्ध-कार्यकत्वमेव यदि सम्यक् तर्हि बलं मूलकृता किमित्युपात्तमत आह बलपदेति । समानबलपदस्येत्यादिः । उक्तेति । अगृहीताप्रा-माण्यकसाध्यपरामर्शकालीनत्वरूपेत्यर्थः । तथा च समानपदेनोक्ता-र्थलाभे तात्पर्यग्राहकतया बलपदं सफलमिति भावः । लिङ्गत्वस्य केवलान्वयित्वाद्यथाश्रुतलिङ्गपदेनात्मादेर्वारणासम्भवादाह स्वीयेति। तथा च स्वलिङ्गकप्रकृतसाध्यसिद्ध्यौपयिकत्वेनैव परामर्शो निवेश-नीय इति भावः । नन्वेतावता स्वलिङ्गकप्रकृतसाध्यसिद्ध्यौपयिकागृ-हीताप्रामाण्यकपरामर्शकालीनसाध्यविरोध्युपस्थापनसमर्थसमानब-लोपस्थित्या प्रतिरुद्धकार्यकत्वं फलितं तच्च मणिकारमते लिङ्गस्या-ऽकारणत्वाद्बाधितमतो निष्कर्षमाह विरोधिपरामर्शेति । पक्षधर्मि-कसाध्यविरोध्युन्नयनसमर्थस्वसमानकालीनपरामर्शप्रतिरुद्धकार्यके-त्यर्थः । स्वं साध्यीयपरामर्शः । तेन विरोधिपरामर्शाभावजन्यकार्य-कत्वपर्यवसितस्य विरोधिपरामर्शप्रतिरुद्धकार्यकत्वस्य कालान्त-रीयविरोधिपरामर्शमादायापि केवले साध्यपरामर्शे सम्भवात्तदानीं नातिव्याप्तिः । न च निर्वह्निर्वह्निशून्यो जलत्वादित्यादौ प्रकृतपक्ष-कप्रकृतसाध्याभावानुमित्यप्रसिद्ध्या तत्र तयोर्विरोधिपरामर्शयोः सत्प्रतिपक्षता न स्यादिति वाच्यम् । साध्यविरोधिविधेयकानु-

अगृहीताप्रामाण्यकत्वसम्बलितयोग्यतोपादाने तु बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविषयत्वं बाध्यं तत्त्वम् ।

---

मितिजनकतावच्छेदकीभूतप्रकारितावच्छिन्नपक्षविशेष्यताकनिश्चयस्य विवक्षितत्वात्, एतल्लाभार्थमेव परामर्शस्योपादानं, तदभावेन तदभावव्याप्येन वा विशिष्टधर्मिणि तद्वत्ताज्ञानस्यैवाऽनभ्युपगमेन वन्ह्यभावविशिष्टे धर्मिणि वन्हिव्याप्यवत्तापरामर्शोत्पादे बाधकाभावादिति भावः । विशिष्टेति । स्वलिङ्गकप्रकृतपक्षकसाध्यसिद्ध्यौपयिकागृहीताप्रामाण्यकपरामर्शविषयत्वमित्यर्थः । अत्रापि स्वलिङ्गकसाध्यविधेयकानुमितिजनकतावच्छेदकप्रकारित्वावच्छिन्नपक्षविशेष्यताकनिश्चयस्य लाभार्थे परामर्शपदम् । तेन निर्वन्हिर्वन्हिमान्धूमादित्यादिस्थले प्रकृतपक्षकसाध्यानुमित्यप्रसिद्धावपि विरोधिपरामर्शयोर्नाव्याप्तिः । अनाहार्ययोरेव च विरोधिपरामर्शयोः सत्प्रतिपक्षव्यवहारौपयिकत्वात् वन्हिमान् वन्हिव्यभिचारिधर्मादित्यादिस्थलीयपरामर्शयोरसंग्रहेऽपि न क्षतिरिति ध्येयम् । अथाऽगृहीताप्रामाण्यकपरामर्शत्वेनैवानुमितिहेतुत्वं, परामर्शधर्मिकतत्तदप्रामाण्यज्ञानाभाववत्त्वेन परामर्शत्वेन च प्रत्येकरूपेण अनुमितिहेतुत्वे स्वधर्मिकभ्रमत्वावगाह्येकपरामर्शोत्तरं साध्यस्य परामर्शान्तरादनुमित्यनुत्पादापत्तेः, तदप्रामाण्यज्ञानव्यक्तेरपि अनुमितिविरोधित्वात्, अन्यथा द्वितीयपरामर्शोत्पादक्षणे एव अनुमित्यापत्तेः तथा च विरोधिपरामर्शस्याऽप्रामाण्यज्ञानदशायां साध्यविरोध्युन्नयनस्वरूपयोग्यत्वाभावादेव तस्य सत्प्रतिपक्षत्वासम्पादकत्वात् कार्यप्रतिरोधानुधावनं विफलमित्याशयेनाह अगृहीतेत्यादि । बाधोपस्थितिसमर्थेति । प्रकृतपक्षकप्रकृतसाध्यसिद्ध्यौपयिकसाध्यसिद्धिविरोध्युन्नयनस्वरूपयोग्येत्यर्थः । तेन साध्यवदन्यत्वादिव्याप्यवत्तापरामर्शस्याप्युपग्रहः । निरुक्तपरामर्शकालीनत्वं तादृशपरामर्शविशिष्टत्वम् । तेन पुरुषान्तरीयविरोधिपरामर्शकालीनत्वमादाय नातिप्रसङ्गः । साध्यसिद्धिसमर्थेति । प्रकृतपक्षकस्वलिङ्गकसाध्यानुमितिस्वरूपयोग्येत्यर्थः । साध्यीयपरामर्शस्याऽप्रामाण्यज्ञानदशायां न साध्यानुमितिस-

स्तिपक्षधर्मते । विरोधिबोधकान्यगमकतौपयिकरूपसम्प-
त्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्य्यत्वं वा तत्त्वम् ।
स्थापनाया व्याप्तिपक्षधर्मत्वमुभयवादिसिद्धम्, वादिना

---

यदि चायं वन्हिव्याप्यवान् वन्ह्यभावव्याप्यव्याप्यवांश्चेति परामर्शादयं वन्हिमान् वन्ह्यभावव्याप्यवांश्चेत्यनुमितिः प्रामाणिकी न तु सत्प्रतिपक्षत्वं, तदा कार्य्यप्रतिरोधोऽवश्यमुपादेयः, अजनितविरोधिबोधकत्वेन च विरोधिपरामर्शो विशेषणीयः। अत एवाऽग्रिमलक्षणे विरोधिबोधकान्येति फलतो ज्ञानविशेषणम्।एकस्याऽप्रामाण्यग्रहेऽपरेणानुमितिजननात् तद्वारणाय वा तत्।प्रतिरुद्धकार्य्यत्वञ्च प्रतिरुद्धकार्य्यपरामर्शविषयत्वम् । एकदेशादि । न च द्वितीयस्य

---

मर्थत्वमतो नातिप्रसङ्गः। विरुद्धयोरनाहार्यैकनिर्णयागोचरत्वान्नियमादेकत्र धर्मिणि वन्हेस्तदभावव्याप्यवत्तायाश्च समूहालम्बनानुमित्यसम्भवाद्यदिचेत्युक्तम् । न त्विति । न पुनः फलीभूतेन वन्ह्यभावव्याप्यवत्तापरामर्शेन प्रागुपजातवन्हिव्याप्यवत्तापरामर्शस्य कार्यप्रतिरोध इत्यर्थः । अवश्यमिति । विरोधिपरामर्शप्रतिरुद्धकार्यक एव परामृश्यमाणहेतौ प्राचां मते प्रतिपक्षितव्यवहारादिति भावः। नन्वेवमपि तत्रैव वन्हिव्याप्यवत्तापरामर्शेन प्रतिरुद्धकार्यके वन्ह्यभावसाध्यकपरामर्शविषयहेतावतिव्याप्तितादवस्थ्यमत आह अजनितेति। अत एवेति। यत एवाऽजनितफलकस्यैव विरोधिपरामर्शस्य प्रतिपक्षितव्यवहारोपयोगित्वमत एवेत्यर्थः। सम्भासनिविष्टतया यथाश्रुतस्य गमकतौपयिकरूपेणैव साकाङ्क्षत्वादाह फलत इति। स्वमते प्रागुक्तसमूहालम्बनानुमितेरप्रामाणिकत्वात्तद्वारणासम्भवादाह एकस्येति। परामर्शस्येति शेषः। तत् विरोधिबोधकान्यपदम्। लिङ्गस्यानुमित्यजनकत्वाद्व्याप्तेरात्मादावनिव्याप्तेश्चाग्रिमलक्षणस्यापि प्रतिरुद्धकार्यकत्वपरं व्याचष्टे प्रतिरुद्धेति । मूले उभयेति-

तदभावानुपन्यासात्, द्वितीयस्य तत्त्वमन्यतरासिद्धमिति प्रथमेन द्वितीयं बाधितमिति स्वार्थानुमान एवायं दोष इत्येके । तन्न । एकदा निरन्तरयोर्वोभयोर्व्याप्तिपक्षधर्मतया ज्ञातयोः प्रतिपक्षत्वात्। युगपदुपस्थितेश्च कारणवशेन स्वपरसाधारणत्वात् । अथ वस्तुनोऽद्वयात्मकत्वेन व्याप्तिपक्षधर्मताभङ्ग एकत्रावश्यक इति स एव दोषः । न च तयोर्विरोधभङ्गेऽप्युपपत्तेर्न व्याप्त्यादिभङ्गनियम इ-

---

परामर्शस्योत्पादनसमये पूर्वेणानुमितिजननात् कथं नैरन्तर्य्यमिति वाच्यम्। साधकमानादिवशेन क्षणमनुमित्यनुत्पादसम्भवात्। स्वपरेति । अयं भावः । न खलु सम्भवन्तः सर्वः एव हेत्वाभासाः समुद्भाव्याः, आधिक्यप्रसङ्गात्, परन्तु यथाकाममेकः, तथा च प्रतिपक्षोद्भावनेऽपि नाऽप्रतिषेधमात्रेण व्याप्त्याद्यभ्युपगम इति। प्र-

---

त्ययस्य हेत्वोरित्यर्थः। ज्ञातयोरित्यत्र च भावे क्तः। तथा चैकदा क्रमिकयोर्वा हेतुद्वये व्याप्तिपक्षधर्मताज्ञानयोः प्रतिपक्षत्वादित्यर्थः। दीधितौ साधकमानादीत्यादिपदेन विरोधिपरामर्शसामग्र्या अपि साध्यानुमितिविरोधित्वात्तदुपग्रहः। द्वितीयपरामर्शोत्तरकालं तेनैव पूर्वाधीनानुमितेः प्रतिरोधसम्भवादाह क्षणमिति । ननु स्वपरेत्यादिमूलेन युगपदुत्पन्नयोर्विरोधिपरामर्शयोः परार्थस्थले प्रतिपक्षत्वव्यवस्थापनेप्याशङ्कितं क्रमोत्पन्नयोस्तथात्वं नोपपादितमेवेत्यतो भावमाह अयमिति। सर्व एवेति। समयबन्धं विनेत्यादिः। आधिक्यप्रसङ्गादिति । आधिक्याख्यनिग्रहस्थानप्रसङ्गादित्यर्थः। साधनद्वये इव दूषणद्वयेप्याकाङ्क्षाविरहस्याऽविशिष्टत्वादित्यर्थः । तथा चाधिक्यभियैव स्थापनाहेतौ प्रतिवादिना व्याप्त्यादिविरहानुपन्यास-

ति वाच्यम् । अविरोधेऽप्यनुमित्यविरोधात्, विरोधे तु व्याप्तिभङ्गनियमादिति चेन्न । प्रतिरुद्धत्वज्ञानानन्तरं व्याप्त्यादिभङ्गज्ञानमित्युपजीव्यत्वेन व्यभिचारवदस्यापि दोषत्वात् । ननु साध्यतदभावयोरिव तद्व्याप्यत्वेनावधारितयोर्विरोधादेकत्र न निश्चयः किन्तु संशयः, निश्चये वाऽन्यतरव्याप्तिसंशय इति व्याप्यत्वासिद्धिरिति चेन्न । उभयोरेकत्र निश्चयानन्तरमन्यतरव्याप्तिसंशय इत्युपजीव्यत्वेनाऽस्य भिन्नत्वात्। दूषकताबीजन्तु समबलवि-

---

तिरुद्धत्वेति । प्रतिरोधप्रयोजकविरोधिव्याप्त्यादीत्यर्थः । उभयोरिति । परस्पराभावव्याप्यत्वं हि हेत्वोर्विरोधः, तद्ग्रहे च तयोरेकत्र निर्णयो न विरुध्यते इति भावः । दूषकतेति । विरोधिपरामर्शस-

---

सम्भवान्न तस्य व्याप्त्यादिकं प्रतिवादिसिद्धमिति तस्य बाधकत्वायोगात् परार्थस्थलेपि क्रमोत्पन्नयोर्विरोधिपरामर्शयोः प्रतिपक्षविधया दोषत्वं सम्भवत्येवेति भावः । ननु कार्यानुत्पादरूपप्रतिरुद्धत्वस्य ज्ञानं न व्याप्त्यादिभङ्गज्ञानस्योपजीव्यं न वा तथात्वेपि विरोधिपरामर्शयोर्दोषत्वसम्भव इत्यत आह प्रतिरोधप्रयोजकेति । ननु मिथो विरुद्धयोः साधनयोरेकत्र निश्चयस्यासम्भवस्य प्रागुक्तत्वादुभयोरेकत्र निश्चयोत्तरमित्याद्यसङ्गतमत आह परस्पराभावेति । तद्ग्रहे चेति । हेत्वोः परस्पराभावव्याप्यत्वाग्रहे चेत्यर्थः । तथा च तद्ग्रहस्य सत्त्वासत्त्वाभ्यामेव शङ्कासिद्धान्ताविति भावः । विरोधिसामग्र्याः सत्वे साध्यविरोध्यनुमित्यावश्यकतया प्रतिपक्ष एव न सम्भवतीत्यतो विरोधिसामग्रीपदमसाधारणकारणपरं वाच्यमित्याशयेन व्याचष्टे विरोधीत्यादि । तस्य विरोधिपरामर्शस्य । स्वरूपसतो व्याप्त्या-

रोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वं, न तु व्याप्ति-
पक्षधर्मताविरह एव । सद्धेतोरपि सत्प्रतिपक्षत्वात् ।
एकत्र व्याप्तिभङ्गज्ञानद्वारा वाऽस्य दूषकत्वम् । चक्षु-

---

त्वे नियमेन परामर्शान्तरादनुमित्यनुत्पादः तस्यानुमितिविरोधित्वं
कल्पयति न तु तेन ज्ञाप्यमानस्य व्याप्त्यादिविरहस्य, सद्धेतावपि
तस्यानुमितिविरोधित्वादित्यर्थः । व्याप्त्यादिविरहज्ञानद्वारा अस्य
दूषकत्वमाह एकत्रेति ।वाकारोऽनास्थायाम् । प्राथमिकावश्यकानु-
मितिप्रतिरोधेनैव तथात्वात् परमुखनिरीक्षकत्वेन तद्विषयस्याऽऽभा-
सत्वायोगाच्चेति । ननु विरोधिपरामर्शो यदि विपरीतनिर्णयवि-

---

दिविरहस्य दोषत्वे व्यभिचारिहेतुकानुमितिः कदापि न स्यादत
आह तेनेति । विरोधिपरामर्शेन ज्ञाप्यमानस्येत्यर्थः । इत्थं च मूले-
ऽपि व्याप्तिपक्षधर्मताविरह एवेत्यस्य ज्ञायमान इति शेषः । विरह-
स्येति । विरोधित्वं कल्पयतीत्यनुषज्यते । तस्य विरोधिपरामर्शं-
स्य । सद्धेतौ व्याप्त्यादेर्विरहस्यासम्भवादिति भावः । पक्षधर्मता-
भङ्गानुक्त्या मूलस्य न्यूनतामपाकुर्वन्नाह व्याप्त्यादीति । तथा च
मूले व्याप्तिभङ्गेत्यत्र व्याप्तिपदमनुमित्यौ पयिकपरमिति भावः ।
अनास्थायां हेतुमाह प्राथमिकेति । विरोधिपरामर्शाभ्यां व्याप्त्यादि-
भङ्गकल्पनादशायामप्यनुमितेरनुत्पत्त्या प्राथमिकेन साक्षादनुमितिप्र-
तिरोधेनैव तयोर्दूषकत्वादित्यर्थः । ननु साक्षात् दूषकत्वं न व्यापार-
द्वारा दूषकत्वस्य बाधकं द्वयोः समावेशे क्षत्यभावादत आह
परमुखेति । तद्विषयस्येति । विरोधिपरामर्शस्येत्यर्थः ।अयोगादिति ।
अनुमितेस्तत्करणज्ञानस्य वा साक्षाद्विरोधिन एव हेत्वाभासत्वाद-
न्यथोपाधेरपि तथात्वापत्तेरिति भावः । चक्षुरित्यादिमूलस्याऽर्थान्त-
रत्वं निराकुर्वन्नाह नन्विति । विशेषस्य पीतत्वाद्यभावव्याप्यस्य

रादेश्च नानुमानेन प्रतिरोधः, तदुपस्थितावपि फलदर्शनेन तस्याधिकबलत्वात् । नन्वेवं वादिवाक्यमात्रस्य प्रतिरोधकत्वे अनुमानमात्रोच्छेदः । न च विरोधिवाक्यस्य न्यूनबलत्वे लक्षणायोगः, समानबलत्वे प्रतिरोध एव, अधिकबलत्वे नरशिरःशौचानुमानवत्तेन बाध एवेति वाच्यम् । अगृह्यमाणविशेषदशायां प्रतिवादिवाक्येन सर्वानुमानप्रतिरोधापत्तेः । अनुमानात् पूर्वं पश्चाद्वा अनुमानान्तरेण तस्य न्यूनाधिकबलत्वानिरूपणात्, निरूपणे वानुमानवैयर्थ्यापत्तेः । मैवम् । विरोधिवाक्यमात्रस्य समबलत्वाभावात् । उक्तं हि व्याप्तिप-

---

रोधी कथं तर्हि सति विशेषदर्शने नयनादिजन्मा पीतत्वादिभ्रम इत्यत आह चक्षुरादेश्चेति । चस्त्वर्थः । अथ व्याप्तिपक्षधर्मते यदि

---

दर्शन इत्यर्थः । भ्रम इत्युपलक्षणम् । लौकिकस्यापि तद्वत्ताप्रत्यक्षस्य तदभावविशेषदर्शनदशायामनुपपत्तिर्द्रष्टव्या । ननु विरोधिपरामर्शदशायां तद्वत्तया शाब्दादिबोधाद्यनुत्पत्त्या चकारस्य शाब्दादिप्रमाणसमुच्चायकत्वानुपपत्तिरत आह चस्त्विति । मूले तदुपस्थितावपीति । विरोधिव्याप्यवत्त्वस्योपस्थितावपि फलस्य तद्वत्ताप्रत्यक्षस्य दर्शनात्तस्य चक्षुरादेरधिकबलत्वात् तद्वत्ताप्रत्यक्षप्रतिबन्धकासमवहितत्वादित्यर्थः । तथा च दोषविशेषाद्यजन्यबुद्धिं प्रत्येव विरोधिपरामर्शत्वेन प्रतिबन्धकत्वमिति भावः । मूले प्रतिरोधकत्वे विरोधिधीजनकत्वे । लक्षणायोगः इति । वादिवाक्यजन्योपस्थितेरनुमितिरूपकार्य्याप्रतिबन्धकत्वेन तत्र प्रागुक्तसत्प्रतिपक्षलक्षणायोग

क्षधर्मते बलमिति । प्रत्यक्षादेर्लिङ्गभावेनैवानुमानप्रतिरोधः, कथायां तदुपन्यासानर्हत्वात् । यत्तु विरोधिव्याप्यद्वयस्याऽसाधारणत्वात् संशयजनकत्वं दूषकताबीजमिति । तन्न । एकैकं हि सत्प्रतिपक्षं न तु विशिष्टम्, एकैकञ्च न संशायकमिति । अनुमितिप्रामाण्यग्राहकाप्रवृत्तिर्दूषकताबीजमित्यन्ये । तन्न। परस्परप्रतिबन्धेनाऽनुमितेरेवाऽनुत्पत्तेः ।

---

बलं, कथं तर्हि प्रत्यक्षादेः प्रतिरोधकतया कथायामुपन्यास इत्यत आह प्रत्यक्षादेरिति। अत्र हेतुमाह कथायामिति। प्रत्यक्षस्य स्वरूपसत्तयैव बोधकत्वात् विरोधिवाक्यमात्रस्यानुमित्यविरोधित्वात् बाध्याभावव्याप्यवत्तानिर्णयत्वेनैव शाब्दादिबोधप्रतिरोधाच्चेति ।

---

इत्यर्थः। ननु तदभावलिङ्गत्वेनाऽगृहीतस्यापि तदभावग्राहकप्रत्यक्षादिप्रमाणस्य स्वतस्तत्तत्त्वानुमानप्रतिरोधकत्वाल्लिङ्गभावेनैवेत्यत्र एवकारासङ्गतिरतः कथास्थलाभिप्रायेण मूलं योजयितुमाह दीधितौ· अथ व्याप्तीत्यादि । प्रत्यक्षादेरित्यादिपदेन तदभावग्राहकवाक्योपग्रहः। प्रत्यक्षादेरितीति।तथा च ह्रदो न वह्निमान् वन्ह्यभावग्राहकप्रत्यक्षप्रमाणवत्त्वात्तादृशवाक्यवत्त्वाद्वेत्याद्युपन्यासस्थले लिङ्गभावेनैव प्रत्यक्षादेरनुमानप्रतिरोधकत्वमतो नासङ्गतिरिति भावः । अत्र लिङ्गभावेन प्रतिरोधकत्वे। इत्थं च मूले तदुपन्यासानर्हत्वादित्यत्र तस्य लिङ्गभावानापन्नप्रत्यक्षादेः कथायामुपन्यासानर्हत्वादित्यर्थः । ननु तदभावव्याप्यस्येव तदभावग्राहकप्रत्यक्षस्यापि विरोधिसामग्रीत्वाल्लिङ्गभावं विनापि तदुपन्यासे बाधकाभाव इत्यत आह प्रत्यक्षस्येति। बोधकत्वात् विरोधिबोधकत्वात् । तथा च यस्य ज्ञातस्य विरोधिसामग्रीत्वं कुत इत्याकाङ्क्षानुरोधात्तदेव कथायामुपन्यस्यते विपरी-

रत्नकोषकारस्तु सत्प्रतिपक्षाभ्यां प्रत्येकं स्वसाध्यानुमितिः संशयरूपा जन्यते, विरुद्धोभयज्ञानसाम-

———

रत्नकोषकृतामयमभिप्रायः । एकधर्मिकाविरुद्धानेकप्रकारकनानाधर्मिकैकविरुद्धाविरुद्धनानाप्रकारकज्ञानत्वादिवदेकधर्मिकविरु-

———

तद्ग्राहकप्रत्यक्षं च ज्ञातं सन्न तथेति उपन्यासानर्हमिति भावः । नन्वेवमपि विपरीतार्थकवाक्यस्य पदार्थोपस्थितया ज्ञातस्यैव विरोधिसामग्रीत्वात्तस्यैव लिङ्गभावं विनोपन्यासार्हत्वसम्भवान्मूलस्थैवकारासङ्गतिरेवेत्यत आह विरोधीति । मात्रपदेन पदार्थोपस्थित्यादिव्यवच्छेदः । तथा च ज्ञातस्यापि विपरीतार्थकवाक्यस्य पदार्थोपस्थित्याद्यभावदशायां विरोधिसामग्रीत्वाभावान्न तन्मात्रस्यानुमितिविरोधित्वमिति लिङ्गभावेनैव तस्योपन्यस्तस्य तथात्वं वाच्यमिति भावः । ननु तथापि पदार्थोपस्थितिसहकृतानामेव ज्ञातविरोधिवाक्यानां विपरीतार्थकस्य शाब्दे अन्ततो मानसे वा विरोधिधीसामग्रीत्वसम्भवात् विनापि लिङ्गभावं तेषामुपन्यासे बाधकाभाव इत्यत आह बोध्याभावेति । विरोधिवाक्यस्य यद्बोध्यं तदभावव्याप्यवत्तानिश्चयेनैव स्थापनाजनितस्य विरोधिवाक्याधीनस्य शाब्दादिबोधस्य प्रतिरोधादित्यर्थः । तथा च उक्तक्रमेणापि विपरीतवाक्यस्य न विरोधिधीसामग्रीत्वमिति भावः ॥

ननु विशेषदर्शनदशायां प्रात्यक्षिकसंशयस्यानुत्पत्त्या संशयत्वावच्छिन्नं प्रत्येव विरोधिव्याप्यदर्शनाभावस्य हेतुत्वकल्पनाद्विरोधिव्याप्यवत्त्वनिश्चयसत्त्वे संशयाकारानुमितिस्वीकारो रत्नकोषकृतामनुचित इत्यत आह रत्नेत्यादि । विरुद्धानेकप्रकारकत्वघटितस्य संशयत्वस्य जन्यतावच्छेदकत्वे अविरुद्धानेकप्रकारकत्वघटितस्यापि तथात्वं स्यादित्याह एकधर्मिकेत्यादिना । एकधर्मिकत्वघटितस्य संशयत्वस्य जन्यतावच्छेदकत्वे नानाधर्मिकत्वघटितस्यापि तथात्वं स्यादित्याह नानाधर्मिकेति । ज्ञानत्वादिवदित्यादिपदेन नानाधर्मिकैकप्रकारक-

रन्याः संशयजनकत्वात्, संशयद्वारा अस्य दूषकत्वम्। न च संशयरूपा नानुमितिः बाधस्येव विरोध्युपस्थितेरनुमितिसामग्रीविघटकत्वेनाऽवधारणात्, अन्यथा बाधे-

———

द्धानेकप्रकारकज्ञानत्वरूपं संशयत्वं न जन्यतावच्छेदकं, तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजकसमाजप्रयोज्यत्वात् समाजस्य । क्वचिद्विरोधभानस्यापि तत्प्रयोजकाधीनत्वात् । नीलेतरघटत्वघटत्वाप्रकारकज्ञानत्वैकधर्मिकाविरुद्धानेकप्रकारकान्यज्ञानत्वादिवच्च संशयान्यज्ञानत्वादिरूपं निश्चयत्वमपि न जन्यतावच्छेदकं, तत्त्वप्रयोजकविरहादेव तत्त्वविरहाद्युपपत्तेः । एवञ्च तुल्यबलाभ्यां वि-

———

त्वादेः परिग्रहः । जन्यतावच्छेदकमिति । तथा च उक्तकार्यकारणभावविरहादनुमितेः संशयत्वं नाऽनुपपन्नमिति भावः । ज्ञानत्वप्रयोजकेति । तादृशज्ञानत्वावच्छिन्ननियामकेत्यर्थः । समाजस्य संशयत्वघटकधर्माणां मिलनस्य । ननु विरोधिसंसर्गेणोभयप्रकारकत्वलक्षणं संशयत्वमवश्यं कारणनियम्यमत आह क्वचिदिति । तत्प्रयोजकं विरोधभानप्रयोजकम् । तथा च विरोधमविषयीकृत्यापि संशयोत्पादात्तज्ज्ञानार्थं संशयत्वं न जन्यतावच्छेदकमिति भावः । नन तथापि तद्विधेयकनिश्चयाकारानुमितित्वावच्छिन्नं प्रत्येव तद्व्याप्यवत्तानिश्चयस्य हेतुत्वादनुमितेः संशयत्वं दुर्वचमत आह नीलेत्यादि । तदभावप्रकारकेतरत्वघटितस्य तन्निश्चयत्वस्य जन्यतानवच्छेदकत्वे भेदघटितं नीलेतरघटत्वं दृष्टान्तः । तदप्रकारकत्वघटितस्य तदभावनिश्चयत्वस्य जन्यतानवच्छेदकत्वे सुसदृशं दृष्टान्तमाह घटत्वाप्रकारकेत्यादि । एकधर्मिकविरुद्धोभयप्रकारकज्ञानात्मकसंशयत्वघटितस्य निश्चयत्वस्य जन्यतानवच्छेदकत्वे तत्सदृशं दृष्टान्तमाह एकधर्मिकेत्यादि । तत्त्वं तदभावप्रकारकत्वादि । विरहादीत्यादिना तद्भेदस्योपग्रहः । एवं चाविनिश्चयत्वस्य जन्यतानवच्छेदकत्वे

ऽप्यनुमित्यापत्तेरिति वाच्यम् । अधिकबलतया बाधेन प्रतिबन्धात् तुल्यबलत्वादनुमितिः स्यादेव, सामग्रीसत्त्वात् । साध्याभावबोधस्य च तत्र प्रतिबन्धकत्वं न तु तद्बोधकस्य चक्षुरादेः । प्रत्येकं निर्णायकत्वेनावधारितात् कथं संशय इति चेन्न । प्रत्येकाद्धि ज्ञानमुत्पद्य-

———

रुद्धोभयसामग्रीभ्यां जायमानं ज्ञानमर्थात् संशयरूपं भवति । अत एवाहस्सैव विप्रतिपत्तिजन्मानं संशयमामनन्ति । फलबलकल्पनीयश्च न्यूनाधिकसमबलभावः । सतामपि पीतत्वशुक्लत्वस्मृतौ सविधवर्त्तिनि शङ्खे सति दोषविशेषे पीतत्वस्यैवाऽसति च शुक्लत्वस्यैव दूरस्थे च धर्मिणि असति विशेषदर्शने स्मृतयोरेव कोट्योः सति

———

चेत्यर्थः । नन्वेवं संशयमात्रस्यैव साक्षात्कारत्वनियमात् तत्सामग्रीविरहे कुतः संशयात्मिकानुमितिरत आह अत एवेति । आहुरित्यर्थः । समानानेकत्यादिसूत्रस्वरसात् विप्रतिपत्तिवाक्यतः शाब्द एव संशयो न तु तत्प्रत्येकपदार्थोपस्थित्यनन्तरं मानसः स इति शाब्द एव संशये व्यभिचारादुक्तनियम एव नास्तीत्यर्थः । ननु सामग्र्यास्तुल्यबलत्वं दुर्वचमतो न्यूनबलत्वादिकमिव तदपि फलगर्भं वाच्यमित्याह फलबलेनेति । भ्रमसामग्र्या बलवत्त्वं दर्शयन्नाह सतीति । पीतत्वस्यैवेत्यग्रिमेन ग्रहादित्यन्वयः । चक्षुःपित्तादिवशेन शुक्लत्वप्रमासामग्र्या न्यूनबलत्वादिति भावः । प्रमासामग्र्या अधिकबलत्वं दर्शयन्नाह असति चेति । दोषविशेष इति पूर्वेणान्वयः । शुक्लत्वस्यैवेति । दोषात्मककारणविरहेण पीतत्वभ्रमसामग्र्या हीनबलत्वादिति भावः । अनुमिताविव अन्यत्रापि सामग्र्योस्तुल्यबलत्वं दर्शयन्नाह दूरस्थेति । पित्तादीनामिव विशेषदर्शनस्याप्यधिकबलत्वसम्पादकत्वं दर्शयन्नाह सति चेति । एककोटिविशेषदर्शने सति तत्कोटि-

मानमर्थात् संशयो न तु प्रत्येकं संशयजनकत्वमिति मेने । तन्न । साध्यतदभावयोर्विरोधेन यथैकज्ञानस्यापरधीप्रतिबन्धकत्वं तथा साध्याभावव्याप्यवत्त्वस्यापि साध्यविरोधित्वात्तद्बुद्धेरपि साध्यधीप्रतिबन्धकत्वात् विरोधिज्ञानत्वस्य प्रतिबन्धकत्वे तन्त्रत्वात् ।

निबन्धे तु हेत्वासाभासानां फलद्वारकं लक्षणम् ।

---

च एकस्या एव नयनेन ग्रहात् । अथैवमुद्बुद्धाभ्यां विरोधिसंस्काराभ्यां स्मरणमपि संशयात्मकं स्यात्, किं न स्याद्यदि च नाऽनुभवबाधः, येन गुरुणापि निश्चयत्वेन संस्कारजनकत्वमुपेयते भवता । अथ विरोधिनो निर्णयोऽनुमितिप्रतिबन्धको विरोधित्वञ्च

---

रेव नयनेन ग्रहादित्यर्थः । न चोभयकोट्योर्विशेषदर्शने सति तयोर्नयनेऽपि संशयः स्यादिति वाच्यम् । तादृशफलादर्शनेन तत्र सामग्र्योः समबलत्वाकल्पनादिति भावः । ननु संशयस्य साक्षात्कारत्वानियमे स्मृतिरपि संशयः स्यादित्याशङ्कते अथैवमिति । विरोधीति । एकधर्मिकतत्तदभावप्रकारकसंस्काराभ्यामित्यर्थः । न चोद्बोधकानां विशेष एव स्मृतिहेतुत्वादेकधर्मिणि तत्तदभावयोरेकदोद्बोधक एव संस्कारयोरसम्भवीति वाच्यम् । यस्य पुंसः समानधर्मिकतत्तदभावचाक्षुषसामग्र्योरिव समानधर्मिकतत्तदभावगोचरस्मृतिद्वयं अनुगतरूपाभ्यामुद्बोधकस्य हेतुत्वं तत्रैव च विरुद्धसंस्कारयोरेकदोद्बोधसम्भवादिति भावः । उत्तरयति किं न स्यादिति । आनुभविकत्वे स्मृतेः संशयत्वमिष्टमेव तद्बाधे तूभयकोट्योर्विशेषदर्शनदशायामेकधर्मिकतत्तदभावचाक्षुषसामग्र्योरिव समानधर्मिकतत्तदभावस्मृतिसामग्र्योरपि मिथो विरोधित्वं कल्प्यमिति भावः । अनुभवबाधस्तु त्वयाप्युच्यते इत्याह येनेति ।

सहानवस्थायित्वं साध्याभावस्येव तद्व्याप्यस्यापीति चेत् । यदि वस्तुतो विरोधिनो निर्णयस्तथा, कथं तर्हि पक्षतावच्छेदकादेस्तादृशस्य निश्चये भ्रमानुमितिः । अथ विरोधित्वेन, तदा तदग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमितिप्रसङ्गः । अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकं कथमन्यथा तदनन्तरं न भ्रमसंशयाविति चेन्न । सत्यपि शुक्लत्वादिव्याप्यदर्शने शङ्खादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेन च पीतत्वादिव्याप्यवत्तानिश्चये सत्यपि शुक्लत्वादेर्ग्रहात्, सति

---

निश्चयत्वेन हेतुत्वोक्तावपि अनुगतोद्बोधकस्थले स्मृतेः संशयत्ववारणासम्भवात् सोपहासमाह उपेयते भवतीति । मूलोक्तं सिद्धान्तं निरसितुमाशङ्कते अथेति । प्रतिबन्धक इति । अन्यथा बाधनिर्णये अनुमित्यापत्तेरिति भावः । ननु विरोधित्वं यदि तद्वत्ताग्रहप्रतिबन्धकग्रहविषयत्वं तदा विरोधिव्याप्यवत्तायास्तदसिद्धमत आह विरोधित्वं चेति । वस्तुत इति । वस्तुगत्या यः साध्यविरोधी तन्निश्चयो यदि प्रतिबन्धक इत्यर्थः । तादृशस्य साध्यविरोधिनः । विरोधित्वेनेति । निर्णयस्तथेत्यनुषज्यते । तदग्रहे विरोधित्वाग्रहे । नेह साध्यमिति । न चैवं साध्याभावस्याऽप्यव्याप्यवृत्तित्वभ्रमेपि तन्निश्चयः साध्यवत्ताबोधविरोधी स्यादिति वाच्यम् । अप्रामाण्यादेरिव अव्याप्यवृत्तित्वादेरपि ज्ञानस्योत्तेजकत्वादिति भावः । तदनन्तरमिति । तदभावव्याप्यवत्तानिश्चयोत्तरं न तस्य भ्रमः संशयो वेत्यर्थः । न तावद्विशिष्टधीसामान्ये विशेषदर्शनत्वेन प्रतिबन्धकत्वं किं तु प्रत्यक्षाद्यात्मकतत्तद्विशिष्टबुद्धिव्यक्तिष्वेव तच्चानुमितेः संशयत्वे न बाधकमित्याशयेनाह सत्यपीत्यादि । शुक्लत्वादीति । पीतत्वाद्यभावव्याप्यवत्तादर्शनेत्यर्थः । पीतत्वादेरिति । ग्रहादित्यग्रे अन्वयः । ननु प्रमात्मक एव विशिष्टधीसामान्ये तदभावविशेषदर्शनं विरोधि वाच्यमित्युक्तभ्रमस्य तत्सत्त्वेप्युत्पादो न दोषायेत्यत आह अदुष्टेन चेति । पीतत्वादीति । श्वेतत्वाद्यभावेत्यर्थः । नन्वेवं प्रत्यक्षान्यविशिष्टधीसामान्यं प्रत्येवास्तु विशेषदर्शनं विरोधीत्यत आह सति चेति । ननु लौकिकसन्निकर्षा-

च विशेषदर्शने क्वचिदुपनीतभानानुदयात् दूरतः प्रमितस्य स्थाणु-त्वादेः शाखादौ करादिभ्रमेणाऽग्रहात् तत्तत्स्थलविशेष एव तस्य प्रतिबन्धकत्वमिति । अत्राहुः । अनुगतकार्य्यकारणभावानुरोधात् दोषविशेषाद्यजन्ये ज्ञाने कदाचिदनुभवे वा विशेषदर्शनं विरोधि कल्प्यते । न च प्रत्यक्ष एव तथा, सामान्ये बाधकाभावात् बो-ध्याभावव्याप्यवत्तानिश्चयेन शाब्दादिधीप्रतिबन्धाच्च । अथ वि-

---

जन्यविशिष्टधीसामान्यं प्रत्येव तस्य विरोधित्वं वाच्यं तच्चोपनीत-भानसाधारणमेवेत्यत आह दूरत इति । दूरत्वदशायां प्रमितस्येन्द्रि-यसन्निकृष्टस्यापि स्थाणुत्वादेः स्थाणुत्वाभावव्याप्यकरत्वादिप्रका-रेण शाखादिमत्ताभ्रमदशायां धर्मिण्यग्रहादित्यर्थः । इदमुपलक्षणम् । सत्यपि श्वैत्यसन्निकर्षे तदभावव्याप्यवत्ताभ्रमदशायां मलिनशङ्खे श्वैत्यस्य नयनेनाऽग्रहादित्यपि द्रष्टव्यम् । अनुगतत्यस्य विशिष्टधीत-दभावविशेषदर्शनाभावयोरित्यादिः । दोषविशेषादीत्यादिना दूर-त्वादिदोषविनाकृतलौकिकसन्निकर्षस्योपग्रहः । तदभावविशेषदर्शन-दशायां तद्वत्तासंस्कारस्याऽनुद्बोधे प्रमाणाभावादाह कदाचिदिति । वस्तुतोऽनुभवत्वजातौ मानाभावादनुगतरूपेणोद्बोधकस्य हेतुतास्थल एव स्मरणेपि विशेषदर्शनस्य विरोधित्वसम्भवाच्च पूर्वकल्प एव सम्यगित्याशयेनैव कदाचिदित्युक्तम् । तथेति । विशेषदर्शनं विरो-धीत्यर्थः । सामान्ये दोषविशेषाद्यजन्यविशिष्टधीसामान्ये । ननु नि-श्चिताव्यभिचारकत्वाद्दोषविशेषाद्यजन्यप्रत्यक्षत्वमेव विशेषदर्शन-स्य प्रतिबध्यतावच्छेदकं न तु तादृशज्ञानत्वमनुमितौ सन्दिग्धव्य-भिचारकत्वादत आह बोध्याभावेति । शाब्दादीति । योग्यताज्ञाना-दिसत्त्वेपीत्यादिः । तथा च लाघवादिप्रतिसन्धानशून्याया एव व्य-भिचारशङ्कायाः कारणताधीपरिपन्थित्वात् सन्दिग्धव्यभिचारके-णापि विशिष्टबुद्धित्वेनैव प्रतिबध्यत्वं न तु तादृशप्रत्यक्षत्वेन शाब्दो-पमित्यादौ प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनागौरवप्रसङ्गादिति भावः । न च यत्र पर्वतत्वसामानाधिकरण्येनैव वन्हेस्तदभावस्य च व्याप्यवत्तापरामर्शस्तत्र भवन्मतेपि पर्वतोवन्हिमान्न वा इत्याका-

श संशयानुमितिदुर्वारा पर्वतत्वाद्यवच्छेदेनैव विरोधिपरामर्शस्य विशिष्टधीप्रतिबन्धकत्वादिति वाच्यम् । धर्मितावच्छेदकीभूतपर्वतत्वाद्यवच्छेदेन विरुद्धोभयप्रकारकज्ञानस्यैव संशयत्वात्तादृशज्ञानसामग्रीविरहेण पर्वतत्वोपलक्षिते वन्हितदभावयोः समूहालम्बनानुमितेरेव तत्रोत्पादात् । इदं तु चिन्त्यते । यत्र पर्वतत्वाद्यवच्छेदेनैवाऽभावव्याप्यवत्त्वस्य द्रव्यव्याप्यवत्त्वस्य च समूहालम्बनपरामर्शोत्तरं वह्न्यभावेतराभावस्य वन्हीतरद्रव्यस्य च पर्वते बाधनिश्चयः तत्रेतरबाधवशाद्वन्ह्यभावस्य वन्हेश्चानुमितिः पर्वतो वन्ह्यात्मकद्रव्यवान्न वेत्याकारा मणिकृन्मतेऽपि दुर्वारा तस्मात्तन्मतेऽपि विशेषबाधघटितयोः सामान्यसामग्र्योर्मिथो विशिष्टधीविरोधित्वान्तरं कल्पनीयमेव । अत्र वदन्ति । दोषविशेषाणां लौकिकसन्निकर्षविशेषाणां चाऽननुगतत्वाद्दोषविशेषाद्यजन्यत्वं नैकं किं तु दोषविशेषादिजन्यतत्तद्बुद्धीनां भेदवत्त्वमेव तद्वाच्यं तथा च तावद्भेदानां विशेष्यविशेषणभावे विनिगमकाभावादनन्तप्रतिबद्ध्यप्रतिबन्धकभावध्रौव्ये प्रातिस्विकरूपेण तत्तद्विशिष्टबुद्धिव्यक्तिष्वेव तत्तद्विशेषदर्शनत्वेन प्रतिबन्धकत्वं कल्प्यतामवच्छेदकलाघवादित्यनुमितौ तस्य विरोधित्वे मानाभावः । अथ साक्षात्कारत्वानिरूपिततत्तन्निष्ठप्रकारताकबुद्धिं प्रत्येव तदभावव्याप्यवत्तानिश्चयत्वेन विरोधित्वं साक्षात्कारत्वनिरूपिता च विलक्षणविषयता लौकिक इव दोषविशेषजन्येऽपि प्रत्यक्षे अनुगतैव, रजत इव शुक्तावपि रजतत्वदर्शने रजतं साक्षात्करोमीत्यनुभवात्, लौकिकस्येव दोषविशेषजन्यस्यापि हविराद्युपादानप्रत्यक्षस्य यागादिगोचरप्रवृत्तिजकत्वात् तदवच्छेदकत्वेनैव विलक्षणतादृशविषयतासिद्धेश्चेति चेन्न । सति विरोधिव्याप्यवत्तादर्शने बुभुत्सयापि तद्वत्तोपनीतप्रत्यक्षानुत्पत्तिप्रसङ्गात् । न चाऽनाहार्यतादृशबुद्धित्वेनैव प्रतिबध्यत्वं वाच्यम् । आहार्यत्वस्य दुर्वचत्वात्तदवच्छिन्नभेदस्य निवेशायोगात् । बुभुत्साकालीनतत्तद्विशिष्टबुद्धीनां प्रत्येकभेदस्य निवेशे च तेषां विशेष्यविशेषणभावभेदादेव गुरुतरानन्तप्रतिबध्यप्रतिबन्धकभावापत्तितादवस्थ्यात्, असत्यामपि बुभुत्सायां तत्कालीनबुद्धिव्यक्तीनां विरोधिपरामर्शदशायां सामान्यसामग्रीतः समुत्पत्तिप्रसङ्गाच्च । बुभुत्साकालीनतत्तद्बुद्धौ बुभुत्साव्यक्तीनां विशिष्य हेतुत्वकल्पने चातिगौरवापत्तेः न च यद्यद्बुभुत्सासत्त्वे तदभावव्या-

व्यवत्तापरामर्शदशायां तद्वत्ताबोधः तत्तद्बुभुत्साभावकूटविशिष्टत-
दभावव्याप्यवत्तापरामर्शत्वेनैव साक्षात्कारत्वानिरूपिततत्प्रकारता-
कधीसामान्यप्रतिबन्धकत्वमिति वाच्यम् । यत्राऽपेक्षाबुद्ध्यात्मक-
साध्याभावव्याप्यवत्तापरामर्शोत्तरं क्रमेण साध्यस्य बुभुत्सापरामर्शौ
तत्रोत्तरकाले साध्यस्योपनीतभानोत्पत्तिदशायां तन्मतेऽप्यनुमित्या-
पत्तेः साध्यस्योपनीतभानसामग्र्या अनुमितिसामग्र्यातो हीनबलत्वा-
त् । इच्छाघटितसामग्रीत्वेन कथंचिद्बलवत्त्वेऽपि प्रतिबन्धकदिश्यैव
तत्तद्बुभुत्साविरहाणां विशेष्यविशेषणभावव्यत्यासेन गुरुतरप्रति-
बध्यप्रतिबन्धकभावतादवस्थ्यात् । न च तावद्बुभुत्साविरहविशि-
ष्टतदभावपरामर्शत्वावच्छिन्नाभावस्य अखण्डस्य तद्व्यक्तित्वेनैव
तद्वत्ताबोधहेतुत्वान्न गौरवमिति वाच्यम् । प्रतियोगिविनाकृतस्याऽ-
खण्डाभावस्य तत्त्वेन हेतुतायामन्यथासिद्धेरन्यत्र व्यवस्थापितत्वा-
त् । विशिष्टाभावस्य विशेषणाद्यभावस्वरूपत्वेनाऽखण्डत्वासम्भवा-
च्च । अथ प्रत्यक्षस्थले विशेषत एवास्तु विशेषदर्शनस्य विरोधित्वं
विरोधिपरामर्शदशायां तद्वत्तायाः शाब्दोपमितिस्मृतीनामनुत्पत्त्या
तत्प्रकारकपरोक्षत्वावच्छिन्नं प्रति तदभावपरामर्शत्वेन विरोधित्वं
वाच्यं न तु शाब्दत्वाद्यन्तर्भावेण गौरवादित्यनुमितेः संशयत्वास-
म्भवः पर्वतादौ वन्ह्याद्यभावव्याप्यवत्त्वनिश्चयदशायां वन्हिमत्प-
र्वतत्वाद्यवच्छिन्ने वन्हिमत्पर्वतपदवाच्यत्वोपमितेरनुत्पत्त्या तस्या
अपि विरोधिपरामर्शप्रतिबध्यत्वात्, परोक्षत्वं च जातिविशेषो बाध-
निर्णयप्रतिबध्यतावच्छेदकत्वेनैवानुमितावपि सिद्धः, शाब्दादिसा-
धारणानुभवत्वजातौ प्रमाणाभावेन तत्साङ्कर्यासम्भवादिति चेन्न ।
अनुमितिसामग्रीदशायां ज्ञानान्तरानुत्पत्त्या तत्प्रतिबध्यतावच्छेद-
कत्वेन सिद्धया जात्या साङ्कर्येण परोक्षत्वजात्यसम्भवात् । न च
सत्यामपि अनुमितिसामग्र्यां शाब्दोपमितिप्रत्यक्षादीनां प्रत्येकमात्र-
बुभुत्सायां तत्प्रत्येकस्योत्पत्त्या प्रत्यक्षादिप्रत्येकबुभुत्साविरहविशि-
ष्टानुमितिसामग्र्याः प्रत्यक्षत्वादिप्रत्येकधर्मावच्छिन्नं प्रत्येव विरोधि-
त्वमिति वाच्यम् । प्रत्यक्षादिप्रत्येकबुभुत्सासत्त्वे अनुमितिसामग्री-
प्रतिबध्यविजातीयज्ञानोत्पादेऽपि प्रत्यक्षादिप्रत्येकबुभुत्सायाः प्रत्यक्षा-
दिप्रत्येकान्यधीविरोधित्वादेवोक्तनियमोपपत्तेः सर्वमत एव बुभु-
त्साघटितसामग्र्या बलवत्त्वोपगमात् । वस्तुतोऽनुमितिभिन्नं विजा-

तीयं वा ज्ञानं प्रति पक्षतादिविशिष्टवन्ह्यादिपरामर्शत्वपर्यवसितेऽनानुमितिसामग्रीत्वेन सर्वमत एव विरोधित्वं वाच्यं तथा च सोन्दडमते प्रतिपक्षस्थलेऽपि संशयात्मिकाया अपि अनुमितेरेव स्वीकारात् पक्षताविशिष्टवन्ह्यादिपरामर्शस्वरूपाया अनुमिति सामग्र्याः प्रतिबन्धादेव तदानीं न ज्ञानान्तरोत्पादः, भिन्नाविषयानुमित्यपि पक्षतादिसहकृतवन्ह्यादिपरामर्शे प्रतिपक्षस्थले घटादेर्मानसादिज्ञानोपगमात्पक्षतादिभिरिव विरोधिपरामर्शाभावेनापि विशिष्टस्यैव वन्ह्यादिपरामर्शत्वमनुमित्यन्यधीप्रतिबन्धकतावच्छेदकं वाच्यमिति नानाविधविरोधिपरामर्शाभावकूटस्योत्तेजकतागौरवादपि संशयात्मिकाऽनुमितिः स्वीकर्तुमुचितेति। यत्तु विरोधिपरामर्शस्याऽनुमित्यप्रतिबन्धकत्वे यत्र साध्याभावपरामर्शकालीनेषु साध्यपरामर्शसहस्रेषु विशिष्य विशिष्याऽप्रामाण्यज्ञानं तत्रापि तेभ्यः साध्यानुमितिप्रसङ्गः, तत्तदप्रामाण्यज्ञानव्यक्तित्वेन साध्यवत्तानुमितिविरोधित्वे चाऽनन्तप्रतिबध्यप्रतिबन्धकभावापत्तिस्तत्रैव साध्यानुमितिसामान्यं प्रति साध्याभावव्याप्यवत्तापरामर्शत्वेनानुगतरूपेण प्रतिबन्धकत्वकल्पनाच्च कुत्राप्यनुमितिः संशयाकारेति । न च साध्याभावपरामर्शस्याऽप्रामाण्यज्ञानदशायां साध्यस्यानुमित्युत्पादेन तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टसाध्याभावपरामर्शत्वेन विरोधिताया वाच्यत्वात्तवापि तत्तदप्रामाण्यज्ञानस्योत्तेजकतायां विशेष्यविशेषणभावेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावापत्तिरिति वाच्यम् । तावदप्रामाण्यज्ञानाभावविशिष्टसाध्याभावपरामर्शत्वावच्छिन्नाभावस्याऽखण्डस्य तत्तद्व्यक्तित्वेन साध्यानुमितिं प्रति हेतुत्वस्य मया वाच्यत्वादिति । तत्तुच्छम् । यत्र विरोधिपरामर्शकालीनं साध्यपरामर्शसहस्रमेव रक्तो दण्ड इत्यादिविशेषणतावच्छेदकप्रकारकं रक्तत्वाद्यंशे विशिष्य भ्रमत्वज्ञानास्कान्दितं वृत्तं तत्रोत्तरकाले रक्तत्वादिविशिष्टवैशिष्ट्यप्रत्यक्षादेर्वारणार्थं तत्तद्भ्रमत्वज्ञानव्यक्तीनां तादृशविशिष्टवैशिष्ट्यज्ञानप्रतिबन्धकतायां तवापि गौरवस्य तुल्यत्वात् । अस्माकं तु विरोधिपरामर्शस्यानुमित्यप्रतिबन्धकत्वादनुमितेरेव तत्रोत्पादात्।अन्यत्र क्लृप्तेन भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वेनैव तत्र रक्तत्वादिविशिष्टवैशिष्ट्यप्रत्यक्षानुत्पादसम्भवादिति दिक्।अत्रोच्यते । शाब्दोपमितिस्मृतिसाधारणमवश्यं प्रत्यक्षान्यतद्वत्ताबुद्धि-

त्वावच्छिन्नं प्रत्येव तदभावपरामर्शत्वेन विरोधित्वं वाच्यमतोऽनुमितेः संशयत्वासम्भवः । न च प्रत्यक्षान्यत्वतद्वत्ताबुद्धित्वयोर्विशेष्यविशेषणभावावच्छेदकद्वयध्रौव्येण लाघवात्तद्वत्ताशाब्दत्वं तद्वत्त्वोपमितित्वं चेति द्वयमेव प्रतिबध्यतावच्छेदकमस्तु तदभावपरामर्शदशायां तद्विशिष्टस्मृतेस्तु उद्बोधकविरहादेवाऽनुत्पादसम्भवात् अनुगतोद्बोधकस्थले प्रमाणाभावादिति वाच्यम्। तद्वत्ताबुद्धित्वविशिष्टप्रत्यक्षान्यत्वस्य दुर्वचत्वादेव प्रतिबध्यतावच्छेदत्वासम्भवात् । तद्वत्ताबुद्धित्वविशिष्टं यत्प्रत्यक्षं तदन्यत्वस्यावच्छेदकत्वे विरोधिव्याप्यदर्शनदशायां सुखादेरप्यनुत्पत्त्यापत्तेः तस्यापि निरुक्तप्रत्यक्षभिन्नत्वात् । न च तद्वत्ताबुद्धित्वं प्रत्यक्षं च द्वयमेव मिथो वैशिष्ट्यानापन्नं सदन्यत्वे विशेषणीभूय प्रतिबध्यतावच्छेदकं व्यासज्यवृत्त्यवच्छेदकत्वानङ्गीकारात् । अन्यथा तद्वत्ताबुद्धित्वस्य प्रत्यक्षान्यत्वस्य च द्वयोरेव तादृशावच्छेदकत्वस्वीकारेण सामञ्जस्ये तयोर्विशेष्यविशेषणभावव्यत्यासोक्तेरुन्मत्तप्रलपितत्वापत्तेः । वस्तुतस्तत्प्रकारकपरोक्षत्वावच्छिन्नं प्रत्येव तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वं वाच्यं, नित्यज्ञानवृत्तिना साक्षात्कारत्वेन सह सांकर्यभिया अनुमितिसामग्रीप्रतिबध्यतावच्छेदकत्वेन जात्यन्तरस्याऽसिद्ध्या तेन समं परोक्षत्वस्य सांकर्यशङ्काया अप्यसम्भवात् । न चानुमितेः संशयान्यत्वनियमे प्रागुक्तरीत्यानुमितिभिन्नबुद्धावनुमितिसामग्र्याः प्रतिबन्धकतायां नानाविधतदभावपरामर्शानामुत्तेजकत्वकल्पनायां गौरवमिति वाच्यम् । अनुमितावपि तदभावपरामर्शस्य विरोधितया तद्गौरवस्य प्रामाणिकत्वात् । अन्यथा नीलपर्वतत्वावच्छिन्ने वन्हिव्याप्यवत्तानिश्चयोत्तरं पर्वतत्वाद्यवच्छिन्ने नीलत्वाभावव्याप्यवत्तापरामर्शस्तत्रापि नीलपर्वतो वन्हिमानित्यनुमितिप्रसङ्गात् । न च विधेयतान्यतानिष्ठप्रकारताकानुमितित्वावच्छिन्नं प्रत्येव तदभावपरामर्शत्वेन सोन्द्वैर्विरोधित्वान्तरं स्वीक्रियते तथा सति लाघवेन तत्प्रकारकानुमितित्वावच्छिन्नं प्रत्येव तथात्वौचित्यात् यत्र पर्वतत्वावच्छेदेन वन्ह्यभावव्याप्यवत्तां नीलपर्वतत्वावच्छेदेन वन्हिव्याप्यवत्तामवगाहमानः परामर्श उत्पन्नस्तत्र पर्वतो न वन्हिमान् नीलपर्वतश्च वन्हिमान् इत्येवं निर्णयाकारानुमितिप्रसङ्गस्य तावताप्यनुद्धाराच्च । धर्मितावच्छेदकभेदेनो-

शेषान्तरदर्शनविरहविशिष्टमेव तत्तथा, अन्यथा कोटिद्वयविशेषदर्शने संशयो न स्यादिति चेन्न। भवत्वेव तावद्यावदप्रामाण्यं न गृह्यते, अगृहीताप्रामाण्यकस्यैव विशेषदर्शनस्य विरोधित्वादिति।

---

कानुमितेः संशयत्वासम्भवात्, इष्टापत्तौ चाऽनुभवविरोधात्। वस्तुतः अस्मन्मते अनुमितिभिन्नबुद्धावनुमितिसामग्र्याः प्रतिबन्धकतायां नानाविधतदभावपरामर्शानामुत्तेजकत्ववत् सोन्दडमतेऽपि घटचाक्षुषत्वादिप्रकारकनानाविधेच्छानां तत्रोत्तेजकतायां तुल्यमेव गौरवम्। अन्यथा वन्हितदभावयोः परामर्शदशायां सत्यामपि घटादेश्चाक्षुषादिबुभुत्सायां भवन्मते घटादिचाक्षुषानुत्पत्तिप्रसङ्गात्। भिन्नविषयेऽनुमितिसामग्र्या बलवत्त्वेन साध्यतदभावयोरनुमितेरेव सम्भवात्, अस्माकं तु विरोधिपरामर्शाभ्यां मिथः प्रतिबन्धात्तत्रानुमितिसामग्र्येव नास्ति घटादिचाक्षुषार्थं न तद्गोचरेच्छाव्यक्तीनामुत्तेजकत्वमिति सङ्क्षेपः वन्हिव्याप्यधूमवत्तानिश्चयस्य वन्ह्यभावव्याप्यपाषाणत्वादिमत्तानिश्चयस्य च कार्यतावच्छेदकं न तादृशनिश्चयाऽव्यवहितोत्तरानुमितित्वम्, अव्यवहितोत्तरत्वस्याऽननुगतत्वात् गुरुत्वाच्च, किं तु अनुमितित्वव्याप्यं वैजात्यमेव, तथा च तादृशनिश्चयाभ्यां संशयात्मकानुमित्युत्पादे तत्रैव निरुक्तवैजात्ययोः सङ्करप्रसङ्गः इत्यवश्यं रत्नकोषकृतापि वन्हिसाध्यकपरामर्शप्रयोज्यवैजात्यावच्छिन्नं प्रति वन्ह्यभावव्याप्यवत्तानिश्चयत्वेन वन्ह्यभावसाध्यकपरामर्शप्रयोज्यवैजात्यावच्छिन्नं प्रति च वन्हिव्याप्यवत्तानिश्चयत्वेन विरोधित्वं वाच्यमित्यनुमितेः संशयत्वासम्भवः। न च मिथो विरोधिपरामर्शप्रयोज्यवैजात्यान्तरं संशयात्मकानुमितौ स्वीकार्यं, तादृशफलासिद्धौ तदन्तर्भावेण कार्यतावच्छेदकवैजात्यान्तरकल्पनस्याऽन्याय्यत्वात् इत्यपि वदन्तीति कृतं पल्लवितेन॥ विशेषान्तरेति। तदीयव्याप्यदर्शनाभावविशिष्टमेव तदभावव्याप्यदर्शनं तद्वत्ताबोधविरोधीत्यर्थः। संशयः प्रात्यक्षिकः। यावदिति। परामर्शयोरप्रामाण्यं यावन्न गृह्यत इत्यर्थः। ननु विरोधिपरामर्शसत्त्वादप्रामाण्यग्रहोत्तरमेव कुतः सन्देह इत्यत आह अगृहीतेति।

अनैकान्तिकानामन्वयाद्व्यतिरेकाद्वा कोटद्युपस्थापकतया संशयः फलं, विरुद्धस्य साध्यविपरीतज्ञानम्। अपक्षधर्मोऽपि विरुद्धोऽन्यत्र विपरीतज्ञानसमर्थ एव। बाधेऽन्यतो विपरीतज्ञानं न तु हेत्वभिमतादेः। नित्यो घटः कार्य्यत्वादिति विरुद्धे बाधसङ्करेऽप्यदोषः। असिद्धे अनैकान्तिकादिचतुष्टयज्ञानान्यालिङ्गत्वज्ञानं, बाधे पक्षधर्महेतौ व्याप्तिबाधः। प्रकरणसमे तु न व्याप्तिपक्षधर्मताबाधः फलं, नाप्यलिङ्गत्वज्ञानं, व्याप्त्यादिबुद्धिसत्त्वात्। नापि विपरीतबुद्धिः, स्वसाध्यविपरीतेनाऽनियमात्। नापि संश-

———

विरुद्धस्येति। साध्याभावव्याप्यस्येत्यर्थः। बाध इति। हेतौ प्रकृतेऽन्यत्र वा। अपक्षधर्मे च पक्षधर्मताबाध इति शेषो वा। तथा च

———

ननु विरुद्धत्वं न साध्यासमानाधिकरणत्वं तदवच्छिन्नहेतुसत्ताज्ञानेन साध्याभावज्ञानजननासम्भवादत आह साध्याभावेति। ननु ह्रदो वन्हिमान् धूमादित्यादावपक्षधर्महेतुस्थलीयबाधस्य फलानुक्त्या मूलस्य न्यूनत्वमतो हेतुपदं प्रकृता प्रकृतहेतुसामान्यपरत्वेन व्याचक्षाणस्तदुपगृह्णाति प्रकृते अन्यत्र वेति। तथा च पक्षवृत्तिधर्मत्वावच्छेदेन व्याप्तिबाध एव बाधस्य फलं तच्च प्रकृतहेतोः पक्षावृत्तित्वेपि पक्षनिष्ठधर्मान्तरे सुलभमिति भावः। नन्वेवं पक्षधर्मे व्याप्तिबाधस्यैव सम्यक्त्वान्मूले हेताविल्यस्य वैफल्यमतो हेतुपदं प्रकृतहेतुपरं मन्वानः पूरणेनैव मूलन्यूनतामपाकरोति अपक्षधर्मे चेत्यादि। ननु ह्रदो वन्हिमान् घटत्वादित्यादावपक्षधर्मेपि हेतौ व्याप्तिबाधसम्भवात् इत्थमपि न्यूनत्वमेवेत्यतः फलितार्थमाह

यः, प्रत्येकं कोटिद्वयानुपनयात् । किन्तु कथमत्र तत्त्वनिर्णय इति जिज्ञासा फलम् । तथा च प्रकृतसाध्यहेत्वोः किं तत्त्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः प्रकरणसमः । न ह्यनुपस्थिते प्रतिपक्षे एकस्माज्जिज्ञासा, किन्तु निर्णय एव । अथ ज्ञातुमिच्छा जिज्ञासा सा च ज्ञानेष्टसाधनताज्ञानात् संशयाद्वेति कथं तेन विना विरोधिसाधनज्ञानमात्रादिति चेन्न । असति प्रतिपक्षे न जिज्ञासा सति सेत्यन्वयव्यतिरेकाभ्यां प्रकरणसमस्यापि जिज्ञासाकारणत्वात् । न चाऽनैकान्तिकातिव्याप्तिः । तत्र हि संशयद्वारा साध्ये जिज्ञा-

———

हेतौ व्याप्तिपक्षधर्मतान्यतरभङ्ग इत्यर्थः । प्रकृतेति । प्रकृतसाध्ययोर्यौ हेतू तयोरित्यर्थः । संशयादिति। तज्जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात् अन्यत्र च इष्टान्तरसाधनताज्ञानाज्ज्ञानेच्छेति भेदेन विकल्पोपन्यासः । असतीत्यादि । हेतुसमीचीनत्वासमीचीनत्वसं-

———

तथा चेति । हेतौ प्रकृतहेतौ। ननु साध्यहेत्वोरित्यत्र मूले यदि द्वन्द्वसमासस्तदा साध्यस्यापि जिज्ञासालाभादसङ्गतिः प्रतिपक्षस्थले हेत्वोरेव तत्त्वजिज्ञासोत्पत्तेरतस्तत्पुरुषमाश्रित्य व्याचष्टे प्रकृतसाध्ययोरिति । मिथो विरोधिसाध्ययोरित्यर्थः । संशयस्य हेत्त्वांस्तत्त्वजिज्ञासाजनकत्वे मानाभावाद्व्याचष्टे तज्जन्येति । तज्जन्यं तत्त्वसन्देहजन्यं यत् दुःखं तदुत्सारणरूपस्येष्टस्य साधनताज्ञानादित्यर्थः । नन्वेवमिष्टसाधनताज्ञानादित्यस्य पृथगुपन्यासासङ्गतिरतः पूरयित्वा तदर्थमाह अन्यत्र चेति । प्रतिपक्षस्थलादन्यत्र चेत्यर्थः । इत्थं च सं-

सा, अत्र तु हेतुसमीचीनत्व इति । ननु परामर्शयो-रेकदानुत्पादात् कथं प्रतिरोधः, क्रमोत्पन्नयोरेकदाऽस-त्त्वादिति चेन्न । एकानन्तरमपरहेतुव्याप्तिपक्षधर्मताज्ञा-नाभ्यामग्रिमव्याप्तिविशिष्टज्ञानोत्पत्तिकाले पूर्वपरामर्श-नाशात् । न चोभयहेतुव्याप्तिपक्षधर्मताज्ञानानां परस्प-राप्रतिबन्धात् परामर्शोत्पाद इति वाच्यम् । व्याप्त्यादि-ज्ञानचतुष्टययौगपद्याभावात् । यत्तु व्याप्तिद्वयसंस्कारो-द्बोधकहेतुद्वयज्ञानयोः परस्परप्रतिबन्धात् नोभयव्या-प्तिस्मृतिरिति दूषकताबीजम् । इति । तन्न । व्याप्ति-

---

शयजन्यदुःखाभावरूपेष्टसाधनताज्ञानद्वारेण जिज्ञासोपयोगित्वादि-त्यर्थः । उत्पत्तिकाले उत्पत्तिपूर्वकाले । व्याप्तिपक्षधर्मताज्ञानयोरु-त्पादक्रमानियमादुभयोर्नाशकत्वमुक्तम् । उत्पत्तावेव वा तयोर-

---

शयाद्वेत्यत्र प्रतिपक्षस्थल इति पूरणार्हमिति ध्येयम् । प्रकरणसमस्य जिज्ञासाहेतुत्वे मानाभावादाह हेतुसमीचीनत्वेत्यादि । ननु पूर्वपरा-मर्शस्य स्वतृतीयक्षण एव नाशाच्चतुर्थक्षणात्मके परामर्शान्तरोत्प-त्तिकाले तन्नाशाभिधानमसङ्गतमतो व्याचष्टे पूर्वकाल इति । तथा च तृतीयक्षण एव पूर्वपरामर्शस्य नाशः प्राप्तः । नन्वेवमपि हेत्वन्त-रीयव्याप्तिज्ञानस्यैव स्वाव्यवहितोत्तरोत्पन्नत्वेन पूर्वपरामर्शनाशक-त्वात्पक्षधर्मताज्ञानस्य तन्नाशकत्वोक्तिरसङ्गतेत्यत आह व्याप्तीत्या-दि । ननु व्याप्तिज्ञानपक्षधर्मताज्ञानाभ्यां कस्यापि परामर्शस्य नाशाजननात्तथाप्युभयोर्नाशकत्वाभिधानमसङ्गतमेवेत्यत आह उ-त्पत्ताविति । तथा च परहेतोर्व्याप्तिपक्षधर्मताज्ञानाभ्यामग्रि-

स्मृतिं विना सत्प्रतिपक्षाभावात् वादिभ्यां व्याप्त्युद्भावनाच्चेति । मैवम् । हेतुद्वयसमूहालम्बनाद्युगपदुभयव्याप्तिस्मृतावुभयपरामर्शरूपं ज्ञानमुत्पद्यते अत एकदा विरुद्धकार्य्यद्वयकारणान्नैकमपि कार्य्यमुत्पद्यते । तादृशपरामर्शश्च स्वार्थानुमाने प्रत्यक्षादितः, परस्य वाद्युपन्यस्तन्यायोत्थापितप्रमाणात् । अस्य च केवलान्वयिन्यपि सम्भवः घटोऽभिधेयः प्रमेयत्वादित्यत्राऽभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि जात्यन्यत्वे सति घटमात्रवृ-

---

न्वयः । यत्र च व्याप्तिपक्षधर्मतयोः समूहालम्बनं तत्र द्वितीयपरामर्शोत्पत्तिकाल एव प्रथमपरामर्शनाशः । अस्य निरुक्तसत्प्रतिपक्षितत्वस्य । जात्यन्येति । सत्ताकम्बुग्रीवादिमत्त्वादावेकैकस्य

---

मपरामर्शस्य या उत्पत्तिस्तत्पूर्वकाल इति मूले अन्वयः । यद्यपि परामर्शे पक्षहेत्वोः सम्बन्धस्य संसर्गमर्यादयैव भानात् तत्रापि पक्षधर्मताज्ञानस्याऽहेतुत्वादिदमप्यसङ्गतम्, तथापि पक्षवृत्तित्वप्रकारकस्यापि परामर्शस्याऽनुमितिहेतुत्वमभ्युपेत्यैतदुक्तम् । स्वामिनो देवदेवरौ इत्यादाविव व्याप्तिपक्षधर्मताज्ञानाभ्यामित्यत्रापि विभक्त्युपस्थाप्यं द्वित्वं व्युत्पत्तिवैचित्र्येण पदार्थतावच्छेदकीभूतयोर्व्याप्तिपक्षधर्मत्वयोरेवाऽन्वितमित्याशयेन यथाश्रुतमेव मूलं सङ्गमयन्नाह यत्र चेति । उत्पत्तिकाले एवेति । तथा च पूर्वकाल इत्यादिकं न व्याख्येयमिति भावः । साध्याभावव्याप्यवत्पक्षाद्यात्मकस्य दूषणौपयिकप्रतिपक्षस्य केवलान्वयिन्यसम्भवाद्व्याचष्टे निरुक्तेति । व्यवहारौपयिकेत्यर्थः । एकैकस्येति । घटमात्रवृत्त्यन्यत्वं सत्तायां जात्यन्यत्वं च कम्बुग्रीवादिमत्त्वे व्यभिचारितो विशिष्टो हेतुरित्यर्थः ।

त्यन्यधर्मत्वात् घटान्योन्याभाववत् पटरूपवच्च, घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः घटवृत्तिनित्याभावत्वात् घटनिष्ठान्योन्याभाववदिति विशेषादर्शनदशायाम् । न च पक्षैक्यमपि तन्त्रम्, विरोधस्यैव दूषकत्वेऽधिकस्य व्यर्थत्वात् ॥

---

व्यभिचाराद्विशिष्टोपादानम् । घटनिष्ठेति । घटनिष्ठात्यन्ताभावत्वेन सामान्यतः पक्षत्वान्न बाधाश्रयासिद्धी । नन्वाद्यस्य समवेतत्वादौ द्वितीयस्य पटत्वाभावादौ व्यभिचार इत्यत आह विशेषादर्शनेति । वस्तुतो घटो नाऽभिधेयः कम्बुग्रीवादिमत्त्वादित्यादिव्यतिरेकिणा सत्प्रतिपक्षः सम्भवत्येव, व्यापकाभावेनाऽप्रसिद्धस्यापि व्याप्याभा-

---

न च सत्तायामपि स्वरूपसम्बन्धावच्छिन्नघटानिष्ठाभावप्रतियोगित्वरूपस्य साध्यस्य सत्त्वान्न तत्र व्यभिचारः, सत्तापदस्य मूलस्थजातिपदस्य च भावत्वोपलक्षकत्वादिति भावः । ननु घटनिष्ठस्य घटात्यन्ताभावस्य पक्षत्वे बाधः तत्तदभावभिन्नत्वेन पक्षविशेषणत्वे च आश्रयासिद्धिरत आह घटनिष्ठेत्यादि । समवेतत्वादाविति । तस्यापि निरुक्तजात्यन्यत्त्वे सति घटमात्रवृत्त्यन्यत्वादिति भावः । पटत्वाभावादाविति । तस्यापि घटानिष्ठनित्याभावत्वादिति भावः । विशेषादर्शनदशायां व्यभिचारास्फूर्तिदशायाम् । समानधर्मिकस्यैव विरोधिपरामर्शस्य प्रतिपक्षत्वमिति नव्यमतानुसारेणाह वस्तुत इति । साध्याप्रसिद्धावन्वयित्वासम्भवादाह व्यतिरेकिणेति । प्रमेयत्त्वव्यापकीभूताभावप्रतियोगित्वेन कम्बुग्रीवादिमत्तानिश्चयेनेत्यर्थः । ननूक्तक्रमेण व्यतिरेकिणो विरोध्यनुमितिसामग्रीत्वाभावान्न तस्य सत्प्रतिपक्षव्यवहारौपयिकत्वमत आह व्यापकाभावेति । ननु तथाप्युक्तक्रमेण परार्थस्थले प्रत्यक्षापन्यासः केवलान्वयिनि दुर्घटः वाक्या-

वस्य सिद्ध्यभ्युपगमात्, प्रत्येकपदार्थप्रसिद्धौ तादृशप्रतिज्ञाद्युपपत्ते-र्विशिष्टस्य वाक्यार्थत्वात् । सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवांश्च पक्षः पक्षनिष्ठौ साध्याभावसाध्यवद्भे-दव्याप्यौ इत्येवमादिः प्रत्येकमेव ।

विभाजकन्तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृ-तपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नाय-

---

र्थाप्रसिद्ध्या प्रतिज्ञाद्यसम्भवादत आह प्रत्येकेति । व्यवहारौपयिक-स्य मूलोक्तसत्प्रतिपक्षस्य स्वरूपसत एवानुमितिविरोधित्वाद्धाभा-सत्वमतः स्वयमेव हेत्वाभासरूपं तमुपदर्शयति सत्प्रतिपक्षस्त्विति । आभासीभूत इत्यादिः । यत्र विशिष्टपक्षापेक्षया साध्याभावादिव्या-प्यवत्त्वमेव लघु तत्र पक्षधर्मिकतद्वत्तानिश्चयत्वेनैव प्रतिबन्धकत्व-मित्याशयेनाह साध्याभावव्याप्येत्यादि । यत्र साध्याभावादिव्या-प्यवत्तामपेक्ष्य विशिष्टपक्ष एव लघुस्तत्र साध्याभावादिव्याप्यधर्मि-कपक्षनिश्चयत्वेनैव लाघवाद्विरोधित्वमित्याशयेनाह पक्षनिष्ठाविति । साध्याभावसाध्यवद्भेदयोर्व्याप्यावित्यर्थः । एवमादिरित्यादिना सा-ध्याधिकरणत्वाभावव्याप्यवत्पक्षाद्युपग्रहः ॥

ननु तेषां प्रत्येकस्य विभाजकत्वे हेत्वाभासानां पञ्चविधत्वा-नुपपत्तिरत आह विभाजकं त्विति । प्रकृतेत्यादि । ह्रदो वन्हिमान् धूमादित्यादौ साध्याभावव्याप्यव्याप्यवत्पक्षस्य वारणाय सत्यन्तम् । प्रकृतयोः पक्षसाध्ययोर्वैशिष्ट्यग्रहविरोधित्वे सतीति तदर्थः । अत्र प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्त्वग्रहाविरोधित्वं न तादृशग्रहजनकी-भूताभावप्रतियोगिज्ञानविषयतामात्रं तथा सति सत्यन्तवारणीयस्य साध्याभावव्याप्यवत्पक्षस्य व्यावर्तनानुपपत्तेः तज्ज्ञानस्यापि तदभा-वावगाहिप्रकृतसाध्यवत्तासमूहालम्बनविरोधित्वात्, नापि प्रकृतपक्ष-कप्रकृतसाध्यवत्ताज्ञानत्वावच्छिन्नं प्रति यादृशविशिष्टविषयकत्वेन प्रतिबन्धकत्वं तद्वत्त्वमेव तथा, निर्वन्हिः पर्वतो वन्हिमान् जलत्वा-दित्यादौ प्रकृतसाध्यवत्तया प्रकृतपक्षग्रहस्याहार्यत्वात्तादृशग्रहत्वा-वच्छिन्नप्रतिबध्यत्वाप्रसिद्ध्या तत्रत्यसत्प्रतिपक्षाव्याप्तेः प्रकृतपक्ष-

साध्यग्रहाविरोधीत्यस्य व्यर्थतापत्तेश्च, किं तु प्रकृतपक्षकप्रकृतसाध्यवैशिष्ट्यग्रहत्वाव्यापकविषयिताशून्यग्रहं प्रति यादृशविशिष्टविषयकत्वेन प्रतिबन्धकत्वं तत्त्वमेव तथा वाच्यं, तथा च विषयितामात्रस्यैव यथाकथञ्चित्सत्त्वविशिष्टपक्षग्रहत्वाव्यापकत्वात्तच्छून्यग्रहाप्रसिद्ध्या लक्षणासम्भवः स्यादतः पक्षसाध्ययोः प्रकृतत्वोपादानम्। एवमुत्तरत्रापि बोध्यम्। काञ्चनमयह्रदः काञ्चनमयवन्हिमान् धूमादित्यादौ काञ्चनमयत्वाभावव्याप्यवतः पक्षादेर्वारणायाऽविरोध्यन्तम्। तच्च वैशिष्ट्यग्रहविरोधिनस्तदुन्नायकस्य च द्वयोः विशेषणं, समासनिविष्टस्य तस्योभयत्रैवाऽन्वयसम्भवात्। अन्यथा विरोधिमात्रस्य विशेषणत्वे वन्ह्यभावव्याप्यव्याप्याभाववान् पर्वतो वन्हिमानित्यादौ वन्ह्यभावव्याप्यव्याप्यवत्पर्वतात्मिकायामाश्रयासिद्धावतिव्याप्तिः तस्या अपि प्रकृतपक्षसाध्यग्रहाविरोधी यः पक्षसाध्यवैशिष्ट्यग्रहविरोधिवन्ह्यभावव्याप्यवत्पर्वतात्मकप्रतिपक्षस्तदुन्नायकत्वात्। न च विरोध्युन्नायकस्यैव तद्विशेषणं देयमतो नोक्तदोषः, तथा सति वन्हिमान्पर्वतो वन्ह्यभावव्याप्यव्याप्याभाववानित्यादौ प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिनः पर्वतत्वावच्छेदेन वन्ह्यभावव्याप्यवत्त्वस्योन्नायके वन्ह्यभावव्याप्यव्याप्यवत्पर्वतात्मकबाधेऽतिव्याप्त्यापत्तेः। तस्य प्रकृतपक्षसाध्यग्रहाविरोधित्वनियमात् प्रकृतपक्षसाध्यग्रहाविरोधी यस्तदुभयवैशिष्ट्यग्रहविरोधी तदुन्नायकत्वविरहेणैव तस्य वारणीयत्वात्। न चैवं वन्ह्यभावव्याप्याभावविशिष्टः पर्वतो वन्हिमानित्यादौ पर्वतत्वावच्छेदेन वन्ह्यभावव्याप्यवत्त्वस्यापि प्रतिपक्षत्वात्तत्राव्याप्तिः तस्य प्रकृतपक्षग्रहाविरोधित्वादिति वाच्यम्। तस्याश्रयासिद्धित्वेनाऽलक्ष्यत्वेऽपि क्षत्यभावादिति ध्येयम्। न च ह्रदो वन्हिमान् धूमादित्यादौ प्रकृतपक्षसाध्यग्रहविरोधित्वाप्रसिद्ध्या तत्रत्यप्रतिपक्षाव्याप्तः, प्रसिद्धपक्षसाध्यस्थले तादृशग्रहाविरोधित्वविशेषणस्याऽनुपादेयत्वात्। समानविशेष्यत्वप्रत्यासत्त्या प्रतिबन्धकत्वमते ह्रदत्वादिप्रकारकग्रहत्वावच्छिन्नं प्रति ह्रदादिभिन्नत्वज्ञानत्वेन समानविशेष्यतया प्रतिबन्धकत्वात् तत्रापि साध्यादिग्रहाविरोधित्वसम्भवाच्च। पर्वतो वन्हिव्याप्याभाववान् धूमादित्यादौ वन्हिव्याप्यवत्पर्वतात्मकबाधेऽतिव्याप्तिवारणार्थमाह प्रकृतेत्यादि। अत्रापि पक्षसाध्ययोः प्रकृतत्वोपादानमसम्भववारणा-

कत्वम् । तदुन्नायकत्वञ्च यादृशविशिष्टविषयत्वेन परामर्शस्यानुमितिजनकत्वं तत्त्वम् । तच्च साध्याभावव्याप्यवत्पक्षादिकम् । असाधारणविरोधयोरन्यतरस्य प्रतिपक्षविधया दोषत्वपक्षे प्रकृतसाधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाही परामर्शो ग्राह्यः । तत्र सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य, अविरोध्यन्तेनाऽऽश्रयासिद्ध्याद्युन्नायकस्य, विरोध्यन्तेन वन्हिव्याप्याभावे साध्ये वन्हिव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः । संगृह्यते चानेन

---

चेति प्रागेवोक्तम् । ननूक्तरूपोन्नायकत्वं यदि तदुन्नयनहेतुधीविषयत्वं तदोपदर्शितबाधज्ञानस्यापि कथञ्चिद्विशेषणज्ञानादिविधया तद्धेतुत्वात्तत्रातिव्याप्तिरतादवस्थ्यमत आह तदुन्नायकत्वञ्चेति । अनुमितिजनकत्वमिति । निरुक्तविरोधिरूपगोचरानुमितिजनकत्वमित्यर्थः। तेन वन्हिव्याप्यवत्पक्षात्मकबाधस्यापि वन्ह्याद्यनुमितिजनकत्वान्न तत्रातिव्याप्तिताद्वस्थ्यम् । लक्ष्येषु लक्षणं ग्राहयति तच्चेति । तादृशविशिष्टं चेत्यर्थः । पक्षादिकमित्यादिपदेन साध्याद्यभावव्याप्यवत्पक्षाद्युपग्रहः । ननु नित्यः शब्दः शब्दत्वादित्यादौ साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षस्यापि निरुक्तरूपवत्त्वात् तत्रातिव्याप्तिः, तस्य प्राचीनमते असाधारणत्वेन स्वमते च विरोधत्वेनाऽलक्ष्यत्वादत आह असाधारणेत्यादि । निरुक्तोपाधेरसाधारणत्वेपि न तस्य प्रतिपक्षविधया दोषत्वं किं तु मिथो व्याप्तिग्रहप्रतिबन्धकत्वेनैवेति मिश्रमतेऽतिव्याप्त्यसम्भवात् पक्ष इत्युक्तम् । प्रतियोगित्वादीत्यादिना साधनतावच्छेदकादौ तादृशप्रतियोगितावच्छेदकत्वाद्युपग्रहः । ननु प्रकृतसाध्याभावव्याप्यवत्प्रकृतपक्ष एवास्तु प्रतिपक्षः साध्यवत्ताबुद्धौ तन्मते तस्यैव विरोधित्वात्, तथा च पक्षनिष्ठसाध्याभावव्याप्यादेरनुगमार्थं विरोधिरूपोन्नायकत्वघटितलक्षणं व्यर्थमत आह संगृह्यते चेति । अन्यथा प्रकृतसाध्याप्रसिद्ध्या तत्रत्यप्रतिपक्षसङ्ग्रहो न स्यादिति भावः । प्रसङ्गादाह सत्प्रतिपक्षे चेति । यथासिद्धान्तमिति । बौद्धैरुदाहरणादिद्वयस्य, मीमांसकैः प्रतिज्ञादित्रयस्य, प्राच्यैः कण्टकोद्धारणादिवाक्यान्तर्भा-

काञ्चनमयवन्हिमानित्यादौ वन्ह्याद्यभावव्याप्यह्रदत्वादिमान् पक्ष इति । सत्प्रतिपक्षे च यथासिद्धान्तं पञ्चावयवादिप्रयोगमिच्छन्ति । अयं हेतुः साध्यव्यभिचारवानित्यादिवदयं पक्षः साध्याभावव्याप्यवानित्यादिकमुद्भावनं पुनरुचितं प्रतिभाति ॥

---

वेण वाक्यदशकस्य, नैय्यायिकैश्च प्रतिज्ञादिपञ्चकस्य न्यायत्वोपगमादिति भावः । उचितमिति । स्थापनानुमाने दोषाकाङ्क्षायां व्यभिचारादेरिव साध्याभावव्याप्यवत्पक्षात्मनः प्रतिपक्षस्यैव प्रथममुपन्यासार्हत्वादिति भावः ॥

इति श्रीजगदीशतर्कालङ्कारकृतायामनुमानचिन्तामणिदीधितिव्याख्यायां सत्प्रतिपक्षग्रन्थः समाप्तः ।

## चिन्तामणेः असिद्धिः ।

असिद्धिस्तु न व्याप्तिपक्षधर्मताविरहः, प्रत्येकमननुगमात् । अथ प्रत्येकाभावेऽनुगतो व्याप्तिपक्षधर्मताविशिष्टाभावोऽसिद्धिः, यद्यपि विशिष्टस्यान्यत्वे प्रत्येकाभावाव्याप्तिरपसिद्धान्तश्च अनन्यत्वे प्रत्येकाभाव एव स इत्यननुगमः, तथापि विशेषणावच्छिन्नप्रतियोगिको विशेष्याभावो विशेषणविशेष्यसम्बन्धाभावो वा विशिष्टाभावोऽनुगत इति चेन्न । विशिष्टाभावाज्ञानेऽपि व्याप्त्यादिप्रत्येकाभावज्ञाने उद्भावने चानुमितिप्रतिबन्धो वादिनिवृत्तिश्चेति तत्प्रत्येकाभावाव्याप्तिः । अन्यथा तेषां हेत्वाभासान्तरतापत्तेः । न च विशिष्टाभावधीद्वारा प्र-

---

## दीधित्याः असिद्धिः ।

वस्तुत इत्याद्यभ्युच्चयमात्रं, विशिष्टपरामर्शविरोधित्वेन वि-

---

## जागदीश्याः असिद्धिः ।

संसर्गमर्यादयापि पक्षधर्मत्वाद्यवगाहिनि परामर्शे व्याप्तिविशिष्टपक्षधर्मत्वाभावनिश्चयस्य विरोधित्वमनुभवबलादिहास्थीयत इत्याशयेनाह वस्तुत इति।प्रत्येकस्य समर्थत्वे तेनेत्यादिदोषं निर-

त्येकाभावो दोषो लभ्यत इति वाच्यम् । प्रत्येकाभावस्य स्वत एव दोषत्वसम्भवात् । वस्तुतो विशिष्टाभावो दोष एव न, प्रत्येकस्य समर्थत्वे तेनैवान्यथासिद्धेर्व्यर्थविशेषणत्वात् प्रत्येकाभावमज्ञात्वा न विशिष्टाभावज्ञानमित्युपजीव्यत्वाद्विशिष्टाभावानुद्भावनेऽपि प्रत्येकोद्भावने वादिनिवृत्तेश्च ।अत एव व्याप्तिपक्षधर्मताविशिष्टज्ञानविषयाभावत्वं प्रत्येकाभावानुगतमसिद्धत्वम्, व्यभिचारादावसिद्धत्वेऽप्युपजीव्यत्वेन प्राथम्यात्तदुद्भावने वादिनिवृत्तेश्च स स्वत एव दूषकः, तत्र व्याप्त्यसिद्ध्यर्थमुपाधौ तूद्भाविते विप्रतिपद्यतेऽपि, तस्य दुर्ग्रहत्वात् व्यभिचारेणैव तदुन्नयनाच्च, यदि च व्यभिचारादिकमज्ञात्वाप्यसिद्धिबुद्धिः, तथाप्युपधेयसङ्करेऽप्युपाधेरसङ्कर एवेति निरस्तम्।व्यर्थविशेषणत्वादेव । एतेन व्याप्तिपक्षधर्मतान्यतराभावोऽसिद्धि-

---

शिष्टाभावस्य दोषताया दुर्वारत्वात् । प्रत्येकाभावमज्ञात्वापि शब्दादिना शक्यग्रहत्वात्।व्यर्थविशेषणत्वस्य चाऽसाधकतासाधन एव

---

स्येति विशिष्टपरामर्शेति । विशिष्टाभावस्येति । व्याप्तिविशिष्टपक्षधर्मत्वाभावस्येत्यर्थः । दुर्वारत्वादिति । तथा च विशिष्टाभावस्यापि दूषणसमर्थत्वान्न प्रत्येकाभावेन तस्याऽन्यथासिद्धिरिति भावः । प्रत्येकाभावमज्ञात्वेत्यादियुक्तिं निरस्यति प्रत्येकेति । शब्दादिनेत्यादिनाऽनुमानोपग्रहः।शक्यग्रहत्वादिति।तथा च प्रत्येकाभावस्योपजीव्यत्वमेव नेति भावः । व्यर्थविशेषणत्वादिति उक्तं निरस्यति व्यर्थेति ।

रिति प्रत्युक्तम्। अन्यतरत्वाज्ञानेऽपि प्रत्येकाभावस्य दोषत्वात् व्यर्थविशेषणत्वाच्च। यत्तु व्याप्तिपक्षधर्मताप्रमितिविरह आश्रयासिद्ध्यनुगतोऽसिद्धिः, तत्प्रमितिसत्त्वे तत्रानुमितिप्रमित्यापत्तेरिति। तदपि व्यर्थविशेषणत्वात् तदज्ञानेऽपि प्रत्येकज्ञानस्य दोषत्वाच्च निरस्तम्। वस्तुतस्तु प्रकृतहेतुव्याप्तिपक्षधर्मतावैशिष्ट्यस्य तत्प्रमितेश्चाऽप्रसिद्ध्या तदभावो ज्ञातुमुन्नाययितुञ्चाऽशक्य एव। यत्किञ्चिद्व्याप्तिपक्षधर्मताविशिष्टप्रमितिविरहः सद्धेतुसाधारणः स्वप्रमितिविरहो यत्किञ्चित्प्रमितिविरहो वा सद्धेतावपि सकलतत्प्रमितिविरहो दुर्निरूपः, व्याप्त्याद्यभावादेव तद्ग्रहे स एव दोष उपजीव्यत्वात्। यदि च प्रमितिविरहः स्वरूपसन्नेव दोषः कारणाभावत्वात् तदा व्याप्त्यादिभ्रमादनुमितिर्न स्यात्। न स्याच्च हेत्वाभासता, ज्ञानग-

———

सम्भाव्यत्वात्। न वा तदपि, तादृशाभावनिष्ठव्याप्तेर्द्धर्मान्तरेणाऽव-

———

साधन एवेति। अयं हेतुरसाधको व्याप्तिविशिष्टपक्षधर्मताशून्यत्वादित्यसाधकतानुमाने तादृशविशिष्टाभावत्वस्य स्वसमानाधिकरणप्रत्येकाभावत्वापेक्षया गुरुत्वेन व्यर्थविशेषणत्वेऽपि परामर्शविरोधित्वेन दूषकतायां वैयर्थ्याभावादिति भावः। सम्भाव्यत्वादिति। वस्तुतो विशिष्टाभावत्वस्य प्रत्येकाभावत्वाघटितत्वादुक्तानुमानेऽपि न वैयर्थ्यमिति विशिष्टाभावस्यातिरिक्तत्वमनुसृत्याह न वेति। तदपि व्यर्थवि-

भेतल्लक्षणाभावात्। एतेन व्याप्तिप्रमितिपक्षधर्मताप्रमिति-
विरहान्यतरत्वमसिद्धिः अन्यतरत्वञ्च तदन्यान्यत्वं ते-
नोभयविरहेऽपि नाव्याप्तिरिति निरस्तं, व्यर्थविशेषणत्वा-
देव। स्यादेतत् व्याप्तिपक्षधर्मताभ्यां निश्चयः सिद्धिः तद-
भावोऽसिद्धिः, अत एवाव्याप्तेऽपक्षधर्मे च तदारोपरूपाऽ-
सिद्धिरित्यनुमितिः न तु व्याप्तपक्षधर्मादपि तदनिश्चये।
न चैवं हेतोरप्याभासत्वं तदाभासस्यापि हेतुत्वं स्यात्,
दशाविशेष इष्टत्वात्। सेयं स्वरूपसती दूषिका, कार-
णाभावत्वात्। न च व्याप्त्यादिप्रत्येकनिश्चयाभाव एव
दूषक आवश्यकत्वादिति वाच्यम्। विशिष्टनिश्चयस्य
हेतुत्वे तदभावस्य कार्य्यानुत्पादकत्वादिति। मैवम्।
एवं सव्यभिचारादेरप्यत्रैवान्तर्भावप्रसङ्गात् असिद्धेः स्व-
रूपसत एव दोषत्वे स्वज्ञानार्थं व्यभिचाराद्यनुद्भावना-

---

च्छेत्तुमशक्यत्वात् विशेष्यादिप्रतियोगिकत्वमात्रस्य व्यभिचारि-

---

शेषणत्वस्य सम्भाव्यत्वमपि। तादृशेति। अखण्डविशिष्टाभावेत्यर्थः।
अशक्यत्वादिति। प्रत्येकाभावत्वापेक्षया गुरुणो विशिष्टाभावत्वस्य
भिन्नधर्मिकत्वेनाऽवैयर्थ्यादिति भावः। ननु तथापि पक्षधर्मताप्रति-
योगिकाभावत्वस्यैवाऽसाधकताव्याप्यतावच्छेदकत्वसम्भवाद्विशि-
ष्टपक्षधर्मत्वाभावत्वस्य तथापि व्यर्थविशेषणत्वमेवेत्यत आह वि-
शेष्यादीति। मात्रपदेन पक्षधर्मतात्वावच्छिन्नत्वादिप्रतिक्षेपः। व्य-
भिचारीति। साध्यसाधकेऽपि हेतौ पक्षधर्मत्वप्रतियोगिकाभावस्य

त् । यदि च तस्मात् सिद्धिर्नोपपद्यत इति तस्योपजीव्यत्वं तदाश्रयासिद्ध्यादिज्ञानात् सिद्धिर्नेति स एव पृथग्दोषः स्यात् । असिद्धिश्च ज्ञाता परस्याज्ञाव्येति स्वज्ञानार्थमुद्भावितासिद्धिनिर्वाहार्थमाश्रयासिद्ध्यादिज्ञानमावश्यकम् । कथञ्च हेतुतदाभासविवेकः, सिद्धौ द्वयोरपि हेतुत्वात् असिद्धौ तदाभासत्वात् व्यभिचारादेः सद्धेतौ सिद्धिमखण्डयतश्च हेत्वाभासत्वाभावात् । अथ सुषुप्तौ जागरेऽपि व्याप्तिपक्षधर्मतासत्त्वे तदनिश्चयेऽनुमित्यनुत्पादो हेत्वाभासप्रयोज्यः सव्यभिचारादौ तथाऽवधारणादित्यसिद्धिरज्ञाताऽपि हेत्वाभासः । न चैवं हे-

———

साधारणत्वादिति । व्यभिचारादेरिति । सद्धेतौ सद्धेतुत्वेन ज्ञायमाने । तदानीं सिद्धेरप्रतिबन्धेऽपि कालान्तरगृहीतेन व्यभिचारादिना तदानीन्तनाभासत्वं सुग्रहमिति तु ध्येयम् । तेन रूपेण

———

सत्त्वात्तस्याऽसाधकत्वव्यभिचारित्वादिति भावः । ननु सद्धेतौ व्यभिचारस्यैवासत्त्वात् तत्र तस्याभासत्वाभावप्रसञ्जनमसङ्गतमतो व्याचष्टे सद्धेतुत्वेनेति । व्याप्तिविशिष्टपक्षधर्मत्वेन निश्चीयमान इत्यर्थः । तथा च तादृशो व्यभिचार्य्यपीति तत्रैव तत्प्रसञ्जनमिति भावः । मूलमपि दूषयति तदानीमिति । व्याप्तिपक्षधर्मतानिश्चयदशायां तथाविधनिश्चयात्मकासद्धेयप्रतिबन्धेऽपि कालान्तरगृहीतव्यभिचारेणैव तादृशासिद्धिप्रतिबन्धात् तादृशासिद्धिकालेऽपि व्यभिचारस्याभासत्वं सुग्रहं, न हि तदानीं सिद्धिखण्डकत्वमेव तदानीमाभासत्वं तथा, कदाचित् सिद्धिखण्डकस्यैव तथात्वादिति भावः।

त्वाभासाधिक्यं क्लृप्तान्तर्भावो वा, तेन रूपेण व्याप्यासिद्ध्यादेरेव संग्रहादिति चेन्न। एवं सव्यभिचारादिरप्यसिद्धिः स्यादित्युक्तत्वात्। उपजीव्यभेदे आश्रयासिद्ध्यादिरपि पृथक् स्यात्। सुषुप्त्यादावनुमित्यभावः कारणाभावात् कार्य्यानुत्पादो हि न प्रतिबन्धकमात्रात् किन्तु कारणाभावादपि, असत्यपि प्रतिबन्धके वन्ह्यभावेन दाहानुत्पत्तेः। अथानुमित्यनुत्पादो हेत्वाभासप्रयुक्त एवेति चेत्। नह्यनुमितौ मनोयोगादिरपि न हेतुः, हेत्वाभासादेवाऽनुमित्यनुत्पादे तद्व्यतिरेकेणानुमित्यनुत्पादाभावात्, सिद्धरेव तद्धेतुत्वे चरमकारणमेव हेतुः स्यात्। अन्ये तु गमकतौपयिकप्रतिद्वन्द्विव्याप्तिपक्षधर्मताविरहतन्नियतयोरन्यतरत्वं हेत्वाभासत्वं, तत्राधिकसमानबलौ बाधप्रतिरोधौ प्रतिद्वन्द्विनौ, व्याप्तिपक्षधर्मताविरहश्चासिद्धिः, तन्नियतौ च सव्यभिचारविरुद्धौ,

---

तत्साधारणरूपेण। वन्ह्यभावेनेति। वन्ह्यभावस्तु न प्रतिबन्धकः,

---

व्याप्तिपक्षधर्मतानिश्चयाभावत्वरूपस्याऽज्ञानरूपासिद्धित्वस्य व्याप्तिनिश्चयाभावरूपव्याप्यत्वासिद्ध्यादावसत्त्वात्तदनुगमकत्वासम्भवाद्व्याचष्टे तत्साधारणेति। तथा च परामर्शत्वव्यापकीभूतनिश्चयत्वावच्छिन्नाभावत्वमेव परामर्शाभावव्याप्तिनिश्चयाद्यभावसंग्राहकमिति भावः। ननु वन्ह्यभावस्यैव दाहप्रतिबन्धकत्वाद्सत्यपि

न चानयोरप्यसिद्धान्तर्भावः, व्याप्तिविरहानियतत्वेन ज्ञातयोः स्वातन्त्र्येणैव दूषकत्वात् भ्रमे विशेषदर्शनस्येवेति। तन्न। अत्रापि व्याप्तिपक्षधर्मताविरह एवाऽसिद्धिः पर्यवस्यति, तत्र चोक्तमेव। अन्यतरत्वञ्च न लक्षणं, व्यर्थविशेषणत्वात् हेत्वाभासान्तरबहिष्कृतस्य व्याप्तिपक्षधर्मतानिश्चयविरोधिनो रूपस्य विवक्षितत्वात्, तच्चाश्रयासिद्ध्यादिकमेवेति ॥

---

कारणीभूतो योऽभावस्तत्प्रतियोगिन एव तथात्वात्। यदभावत्वेन कारणत्वं तदेव तथेत्यपि कश्चित् ॥

---

प्रतिबन्धक इत्यसङ्गतमत आह वन्ह्यभावस्त्विति। अभावो भावभिन्नः वन्हिस्तु दाहकारणीभूतोपि भाव एवेति तत्प्रतियोगिनो वन्ह्यभावस्य न दाहप्रतिबन्धकत्वमिति भावः। मतान्तरमाह यदभावत्वेनेति। यादृशधर्मावच्छिन्नाभावत्वेन कारणत्वं तादृशधर्मवदेव प्रतिबन्धकमित्यर्थः। दाहादौ च न वन्ह्यभावत्वावच्छिन्नाभावत्वेन कारणत्वं, लाघवात् वन्हित्वेनैव तथात्वादिति भावः। न चोत्तेजकाभावविशिष्टमणित्वाद्यवच्छिन्नाभावव्यक्तेस्तद्व्यक्तित्वेनैव दाहादिहेतुत्वान्मण्यादेरुक्तप्रतिबन्धकत्वं न स्यादिति वाच्यम्। प्रतियोगिविनाकृतस्याऽखण्डाभावस्य तद्व्यक्तित्वेन हेतुतायामन्यथासिद्धत्वात्। अन्यथा पदार्थान्तरमप्यन्तर्भाव्याऽखण्डाभावस्य तद्व्यक्तित्वेन हेतुतापत्त्याद्र-नुपदं विस्तृतत्वादिति भावः ॥

इति जागदीश्यामसिद्धिपूर्वपक्षग्रन्थः समाप्तः

---

उच्यते । आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिः प्रत्येकमेव दोषः, प्रत्येकस्य ज्ञानादुद्भावनाच्चानुमितिप्रतिबन्धात्, न तु विशिष्टाभावः परामर्शविषयाभावो वा, व्यर्थविशेषणत्वात् तस्य ज्ञानमुद्भावनं विनाप्यनुमितिप्रतिबन्धात् । अनुभवसिद्धे हि लक्षणं न तु लक्षणानुरोधेनानुभवकल्पना, परामर्शविषयाभाववत्त्वेनाऽनुगतेन त्रयाणामसिद्धत्वेन संग्रहो महर्षिणा कृत इति न विभागविरोधो हेत्वाभासाधिक्यं वा । अत एव ये व्याप्तिविरहपक्षधर्मताविरहरूपास्तेऽसिद्धिभेदमध्यमध्यासते तदन्ये च यथायथं व्यभिचारादय इति सिद्धा-

---

परामर्शेत्यादि । ननु परामर्शविषयाभावत्वमनाभासे, आभासत्वविशेषितमपि बाधविशेषे, परामर्शविरोधित्वविशेषित-

---

परामर्शविषयाभाववत्त्वं परामर्शविषयप्रतियोगिकाभाववत्त्वम् । तादृशविषयत्वावच्छिन्नाभावस्याऽसिद्धहेतावसत्त्वात् । अनाभासेऽतिप्रसक्तमित्यन्वयः। एवमग्रेऽपि।सद्धेतावपि परामर्शविषयीभूतस्य साध्यतावच्छेदकादेरभावसत्त्वादिति भावः । बाधविशेष इति। पक्षनिष्ठसाध्याभावात्मनो बाधस्याभासत्त्वे सति परामर्शविषयप्रतियोगिकाभाववत्त्वादिति भावः । साध्याभाववत्पक्षात्मनो बाधस्य तादृशविषयाभाववत्त्वविरहात् तत्रातिव्याप्त्यसम्भवाद्विशेषपदम् ।विशेषितं चेति ।तादृशविरोधित्वमात्रस्य व्यभिचाराद्यतिप्रसक्तत्वादिति भावः। ननु तदन्यत्वेन विशेषणात्रातिप्रसक्तिरत आह अप्रसक्तं चेति। पक्षादाविति ।पक्षादेः परामर्शविषयप्रतियोगिकाभा-

न्तप्रवादोऽपि । न चैवं साक्षात्प्रतिबन्धकत्वेन बाधप्रतिरोधयोर्व्याप्तिविरहलिङ्गत्वेन सव्यभिचारविरुद्धयोरपि संग्रहे विभागव्याघातः, स्वतन्त्राभिप्रायस्य निषेद्धुमशक्यत्वात् । अन्यथा शास्त्रे परिभाषोच्छेदापत्तेः । सव्यभिचारादेरप्येवं रूपसत्त्वेऽप्युपजीव्यत्वेन पृथक्त्वम्, उपधेयसङ्करेऽप्युपाधेरसङ्करात् । नन्वाश्रयाप्रसिद्ध्या कथमाश्रयासिद्धिरुद्भाव्या । न च शशीयतया गवि शृङ्गनिषेधवत् व्योमकमलमिति वाच्यम् । शशशृङ्गनिषेधो न गवीत्युक्तत्वादिति चेत् । व्योमकमलमिति निश्चितानन्वयत्वेनाऽपार्थकम्, आश्रयविशेषणासिद्ध्या चाश्रयासिद्धिरसङ्कीर्णा । व्याप्तिविरहश्च व्यर्थविशेषणादौ, तदुक्तमेकामसिद्धिं दुष्परिहरतो द्वितीयापत्तिरिति ।

---

श्च हेतोः साध्यासामानाधिकरण्येऽतिप्रसक्तम्, अप्रसक्तश्च साधनाद्यभाववत्पक्षादौ, पक्षादेः साधनवदन्यत्वादौ, साधनादेः पक्षादिवृत्त्यन्यत्वपक्षनिष्ठाभावप्रतियोगित्वादौ । अत एव यस्य यद्धर्मवत्त्वं परामर्शविषयस्तस्य तदभाववत्त्वं तदिति शब्दमात्रानुगतं प्रत्युक्तम्, परामर्शविरोधित्वमात्रञ्च सव्यभिचारेऽति-

---

घत्वविरहादिति भावः। आदिपदात् पक्षतावच्छेदकाद्यभाववत्पक्षादेरुपग्रहः । अत एव साधनाभाववत्पक्षाद्यव्याप्तेरेव । शब्दमात्रेति । घत्वतत्त्वयोरननुगमादर्थैक्यासम्भवादिति भावः । ( सव्यभिचारादीत्यादिना विरोधस्योपग्रहः । ) परामर्शविरोधित्वमात्रमिति । मात्र-

उपाधिस्तु न व्याप्तिविरहः वह्निव्यापकधूमाव्यापकधर्म-स्याप्रसिद्ध्या धूमे तद्विरहासिद्धेः, किन्तु यावत्स्वव्यभि-चारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वं व्याप्तिः। साध्यव्यापकसाधनाव्यापकश्च धर्मान्तरं न तद्विरहः अपि तु तन्नियतः। न चैवमुपजीव्यत्वेन उपाधिर्हेत्वाभासान्तरम्, उपजीव्यत्वेऽपि स्वतोऽदूषकत्वेन तदर्थं परमुखवीक्षकत्वात्। न हि साध्यव्यापकाव्याप्यत्वमनुमितिविरोधि किन्तु व्यभिचारोन्नयनेन स्वव्यतिरेकेण सत्प्रतिपक्षतया वा, तदाह उपाधाववश्यं व्यभिचार उपाधेरेव व्यभिचारशङ्केति। अप्रयोजकान्यथासिद्धौ सोपाधी नासिद्धौ। प्रतिकूलतर्कानुकूलतर्काभावावुपजीव्यत्वे सति स्वतोदूषकावपि न हेत्वाभासौ, स्वरूपसतोरेव प्रतिबन्धकत्वादित्युक्तम् ॥

---

प्रसक्तम्। न च तदन्यत्वेन विशेषणीयं, नित्यो घटो द्रव्यं प्रमेयो वा जलत्वादित्यादौ तदर्थाप्रसिद्धेः। अथ पक्षतावच्छेदकरूपेण पक्षे

---

पदेन तद्विषयाभावत्वव्युदासः। तेन साधनाभाववत्पक्षादौ नाव्याप्तिः। तदन्यत्वेन सव्यभिचाराद्यन्यत्वेन। नित्यो घट इत्यादि। द्रव्यत्वे साध्ये हेतुनिष्ठमेव साध्याभाववद्वृत्तित्वमप्रसिद्धं न तु तन्मात्रं प्रमेयत्वसाध्ये तु तदप्यप्रसिद्धमित्याशयेन साध्यान्तरमाह प्रमेय इति। आश्रयासिद्धिसम्पादनाय नित्यत्वोपादानम्। तदर्थेति। तदन्यत्वस्य त-

हेतुतावच्छेदकरूपेण हेतोर्यद्विशिष्टज्ञानं साध्यतावच्छेदकविशिष्टसाध्यावगाहितद्विरोधित्वं तदिति चेन्न। पक्षवृत्तित्वविशिष्टसाध्याव्यभिचरितसामानाधिकरण्याद्यभावाव्याप्तेः। न च विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यग्रहाविरोधि यद्व्याप्तिग्रहविरोधि तदन्यत्वे सति परामर्शविरोधित्वं तत्, विशिष्टपक्षवैशिष्ट्योपादानाद्वह्निमान् जलह्रदत्वादित्यादौ व्याप्तिग्रहविरोधिन्या अपि स्वरूपासिद्धेर्नाऽसंग्रह इति वाच्यम्। जलह्रदो वह्निमान् काञ्चन-

---

त्पदस्य योऽर्थो व्यभिचारादिस्तदप्रसिद्धेरित्यर्थः। तथा च तत्राश्रयासिद्ध्याद्यव्याप्तिरिति भावः। साध्यस्यापि विशिष्टज्ञानोक्तौ बाधेतिव्याप्तरतः स्वातन्त्र्येण साध्यावगाहितां निवेशयन्नाह साध्यतावच्छेदकेत्यादि। साध्यावगाहितदिति। प्रकृतसाध्यावगाहिनस्तादृशविशिष्टज्ञानस्य विरोधित्वमित्यर्थः। साध्याव्यभिचरितसामानाधिकरण्याभावस्य सव्यभिचारमध्य एव प्रागन्तर्भावितत्वात् पक्षवृत्तित्वविशिष्टेति। आदिना पक्षवृत्तित्वविशिष्टव्यतिरेकव्याप्त्याद्यभावस्योपग्रहः। न चेति। वाच्यमित्यन्वयः। तत् असिद्धत्वम्। परामर्शविरोधित्वमात्रं साधारण्याद्यतिप्रसक्तमतः सत्यन्तम्। प्रकृतपक्षप्रकृतसाधनयोर्वैशिष्ट्यस्य प्रकृतसाध्यस्य च यो ग्रहस्तदविरोधी सन् यो व्याप्तिग्रहविरोधी तदन्यत्वे सतीत्यर्थः। केवलस्य व्याप्तिग्रहविरोध्यन्यत्वस्योक्तौ साध्याप्रसिद्ध्याद्यव्याप्तिरतोऽविरोधित्वान्तम्। प्रकृतपक्षसाधनयोर्वैशिष्ट्योक्तेः फलमाह विशिष्टपक्षेत्यादिना। नासंग्रह इति। वह्निमदवृत्तित्वविशिष्टह्रदत्वस्वरूपायाः स्वरूपासिद्धेः साध्यसामानाधिकरण्यांश व्याप्तिग्रहविरोधित्वेऽपि प्रकृतपक्षसाधनवैशिष्ट्यग्रहविरोधित्वादविरोधीभूय यो व्याप्तिग्रहविरोधी तदन्यत्वस्य तत्र सत्त्वादिति भावः। जलह्रद इति। ह्रदपक्षे वह्निसाध्ये धूमहेतोः स्वरूपासिद्धिमात्रं काञ्चनमयवह्निसाध्यकस्य तु व्याप्यत्वासिद्धिरपि सा च साध्याप्रसिद्धिसाधनाप्रसिद्धिभेदाद्द्विधेति साध्यसाधनयोः काञ्चनमय इत्युक्तम्। साध्यविशेषणासिद्ध्यादेरेव व्याप्तिग्रहविरो-

मयवन्हिमान् वा धूमात् काञ्चनमयधूमाद्रेसादौ व्याप्तिग्रहविरोधिनस्तादृशग्रहाविरोधिनो रूपस्याऽप्रसिद्धेः ।

* उच्यते । साधारण्यकथितासाधारण्यानुपसंहारित्वभिन्नं

---

धिनः प्रसिद्धत्वादाह तादृशेति । प्रकृतपक्षसाधनवैशिष्ट्यप्रकृतसाध्यग्रहाविरोधिन इत्यर्थः ।

* उच्यते इत्यनन्तरमस्मत्सम्प्रदायसिद्धः पाठो लिख्यते । "साधारण्यकथितासाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः । यत्र साधारण्यादिकमप्रसिद्धं यत्र च वन्ह्यव्यभिचारिमेयत्ववान् वन्हिसमानाधिकरणह्रदत्ववान् वन्ह्यभावव्यापकीभूताभावप्रतियोगिह्रदत्ववान् वा पर्वतो वन्हिमान्मेयत्वात् ह्रदत्वाद्वा इत्यादौ यत्साधारण्यादिकमेव वासिद्धिस्तत्र तदन्यत्वं नोपादेयम् शब्दानुगमस्याऽकिञ्चित्करत्वात्। परामर्शे च व्याप्तिर्व्यतिरेकतोऽप्युपादेया नातो व्यतिरेकव्याप्तिविशिष्टपक्षधर्मत्वाभावादावव्याप्तिः । साधारण्याद्यनिरूपितया ज्ञानस्य विषयितया परामर्शविरोधितावच्छेदकं रूपं वाऽसिद्धिः । अत एव द्रव्यत्वाव्यभिचारिगुणद्रव्योभयसमवेतवान् द्र-

---

* अत्र उच्यते इत्यारभ्य वक्तव्यमित्यन्तं भवानन्दादीनामन्यथैव दीधितिपाठः सम्मतः इति पाठद्वैविध्यस्य प्रसिद्धतया जगदीशेन स्वाभिप्रेतपाठमुल्लिख्य व्याख्या कृता । अन्यसम्मतः पाठस्तु एवम्— "साधारण्यासाधारण्यभिन्नं तज्ज्ञानस्य विषयतापरामर्शविरोधितावच्छेदकरूपमसिद्धिः । वन्ह्यव्यभिचारिमेयत्ववान् वन्हिसमानाधिकरणह्रदत्ववान् वा पर्वतो वन्हिमान् मेयत्वात् ह्रदत्वाद्वेत्यादौ आश्रयासिद्धिविरहेऽपि न क्षतिः, असिद्धित्रयस्याऽसार्वत्रिकत्वात् । आश्रयासिद्धिलक्षणस्य चासिद्धिघटितत्वान्नातिप्रसङ्गः । प्रकृतपक्षाप्रविष्टाभावकसाधारण्यादिभिन्नं वा वक्तव्यम् । परामर्शे चान्वयव्याप्तिरुपादेया तेनानुपसंहारित्वव्युदासः । साध्यसाधनभेदेनासिद्धिभेदात् यत्र साधारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयं यथा काञ्चनमयः पर्वतो ह्रदो वा वन्हिमान् मेयो वा धूमात् मेयत्वाद्वेत्यादौ । पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्याद्यसिद्धिसम्पादनाय हेत्वाभासलक्षणोक्तरीतिरनुसरणीया । तत्र विशिष्टपक्षग्रहस्य विरोधिन्यसिद्धिर्विरोधिरूपं वाश्रयासिद्धिः । प्रकृतपक्षप्रकृतहेतुग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयविशिष्टग्रहविरोधितावच्छेदकं स्वरूपासिद्धिः । संगृह्यते चानेनानित्यं गगनं रूपवत् चाक्षुषस्पर्शाश्रयत्वादित्यादौ निस्पर्शादिकम् । एवं शब्दो द्रव्यं गुणान्यत्वे सति सत्त्वात् गुणान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्यभिचारि गुणवृत्तित्वादित्यादावपि नाव्याप्तिः । तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः । पक्षादिभेदेनासिद्धिभेदात् यत्राश्रयासिद्ध्यादिकमप्रसिद्धं तत्र तदन्यत्वं न वक्तव्यमिति"।

ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः । यत्र साधारण्यादिकमप्रसिद्धं यत्र च वन्ह्यव्यभिचारिमेयत्ववान् वन्हि-

---

व्यत्वसमानाधिकरणगुणसमवेतकर्मासमवेतवान्वा घटो द्रव्यं सत्त्वात् द्रव्यकर्मासमवेतसमवेताद्वेत्यादौ गुणद्रव्योभयसमवेतादिनिष्ठस्य द्रव्यत्वव्यभिचारित्वादेः सत्त्वादिनिष्ठद्रव्यत्वव्यभिचारित्वाद्यात्मकसाधारण्यादितोऽनतिरिक्तत्वेऽपि न क्षतिः । पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्यादौ असिद्धिसम्पादनाय हेत्वाभासलक्षणोक्ता रीतिरनुसर्त्तव्या । तत्र ज्ञानस्य विषयतया प्रकृतपक्षग्रहविरोधितावच्छेदकं रूपमाश्रयासिद्धिः । विशिष्टपक्षसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकरूपं स्वरूपासिद्धिः । संगृह्यते चेत्थमनित्यगगनं रूपवत् चाक्षुषस्पर्शवत्त्वादित्यादौ गगनादेर्निःस्पर्शत्वादिकम् । एवं शब्दो द्रव्यं गुणान्यत्वे सति सत्त्वात् गुणान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्यभिचारि गुणवृत्तित्वादित्यादावपि नाव्याप्तिः । तदुभयाभिन्नासिद्धिर्व्याप्यत्वासिद्धिः । पक्षादिभेदेनासिद्धिभेदाद्यत्राश्रयासिद्ध्यादिकमप्रसिद्धं तत्र तदन्यत्वं न वक्तव्यमिति" । अतः परं व्याख्यायते । साधारण्येत्यादि । परामर्शविरोधितावच्छेदकत्वं साधारण्यादेरपीत्यतो भिन्नान्तम् । मूलोक्तासाधारण्यस्य सत्प्रतिपक्षविधयानुमितिं प्रत्येव विरोधित्वात्तदन्यत्वप्रवेशेन साध्यासामानाधिकरण्यवारणायोगादाह कथितेति । साध्यसाधनसामानाधिकरण्यग्रहविरोध्यात्मकस्वोक्तेत्यर्थः । परामर्शविरोधिनीं कामिनीजिज्ञासामादाय कामिन्यादावतिव्याप्तिवारणाय ज्ञानस्येति । यादृशविशिष्टविषयकज्ञानत्वं प्रकृतपरामर्शत्वाव्यापकविषयिताशून्यज्ञानप्रतिबन्धकतावच्छेदकीभूतविषयतानतिरिक्तवृत्ति साधारण्यादिभिन्नस्तादृशविशिष्टपदार्थोऽसिद्धिरिति तु फलितार्थः । ननु ह्रदः काञ्चनवन्हिमान् धूमादित्यादौ साधारण्याद्यप्रसिद्धेस्तत्रत्यस्वरूपासिद्ध्यादावव्याप्तिरत आह यत्रेति । अप्रसिद्धमिति । तत्र तदन्यत्वं नापादयामित्यन्वयः । ननु वन्ह्यव्यभिचारिमेयत्ववत्पर्वतो वन्हिमान् मेयत्वादित्यादावाश्रयासिद्धावव्याप्तिः । वन्हिव्यभिचारिमेयत्वाद्यात्मकायास्तस्याः साधारण्याद्यभिन्नत्वादत आह यत्र

समानाधिकरणह्रदत्ववान् वन्ह्यभावव्यापकीभूताभावप्रतियोगिह्रदत्ववान् वा पर्वतो वन्हिमान् मेयत्वात् ह्रदत्वाद्वेत्यादौ साधारण्यादिकमेव वाऽसिद्धिस्तत्र तदन्यत्वं नोपादेयं शब्दानुगमस्याऽकिञ्चित्करत्वात्। परामर्शे च व्याप्तिर्व्यतिरेकतोऽप्युपादेया, नातो व्यतिरेकव्याप्तिविशिष्टपक्षधर्मत्वाभावादाववव्याप्तिः। साधारण्याद्यनिरूपितया ज्ञानस्य विषयितया परामर्शविरोधितावच्छेदकरूपं वा असिद्धिः। अत एव द्रव्यत्वाव्यभिचारिगुणद्रव्योभयसमवेतवान् द्रव्यत्वसमानाधिकरणगुणसमवेतकर्मासमवेतवान् वा घटो

---

वेति।मतुबन्तत्रयं पक्षीभूतस्य पर्वतस्य विशेषणम्।तत्रापि प्रथमेन साधारण्यत्वं द्वितीयेनाऽसाधारण्यत्वं तृतीयेनाऽनुपसंहारित्वत्वमाश्रयासिद्धेर्लभ्यते।ननु परामर्शोऽत्र यद्यन्वयव्याप्तिग्रहगर्भस्तदा व्यतिरेकव्याप्तिविशिष्टपक्षधर्मत्वाभावाद्यव्याप्तिरत आह परामर्शे चेति। ननु द्रव्यत्वाव्यभिचारिद्रव्यगुणोभयसमवेतवान् घटो द्रव्यं सत्त्वादित्यादौ गुणद्रव्योभयसमवेतनिष्ठद्रव्यत्वव्यभिचाररूपायामाश्रयासिद्धावव्याप्तिस्तस्याः सत्त्वादिसाधननिष्ठं यद्द्रव्यत्वादिव्यभिचारित्वाद्यात्मकं साधारण्यादिकं तद्भिन्नत्वाभावात्। न च द्रव्यत्वाव्यभिचारिद्रव्यसमवेते गुणासमवेतत्वमेव तत्राश्रयासिद्धिः, द्वयोरपि पक्षधीविरोधित्वेनैकशेषस्य दुष्करत्वादत आह साधारण्याद्यनिरूपितयेति।साधारण्याद्यनवच्छिन्नविषयताकज्ञानत्वेन परामर्शप्रतिबन्धकत्वं तत्त्वमित्यर्थः।कथिताश्रयासिद्धिज्ञानस्य हेतुभूतसत्त्वनिष्ठद्रव्यत्वव्यभिचारित्वानवच्छिन्नविषयताकस्यैव परामर्शविरोधित्वान्न तत्राव्याप्तिरिति भावः।उक्तानुशयं स्वयमेवाह अत एवेति। द्रव्यत्वाव्यभिचारी यो द्रव्यगुणोभयसमवेतस्तद्वान् घट इत्यन्वयः। गुणसमवेतरूपत्वादिनिष्ठस्य द्रव्यत्वव्यभिचारित्वस्य साधनीभूतसत्त्वनिष्ठव्यभिचारभिन्नत्वात् गुणसमवेतमात्रोक्तावव्याप्त्यभावात् द्रव्यपदम्।गुणपदन्त्वाश्रयासिद्धिसम्पत्त्यर्थम्।साधारण्यरूपायामाश्रयासिद्धावव्याप्तिमुद्धृत्याऽसाधारण्यरूपायां तस्यामुद्धरति द्रव्यत्व-

द्रव्यं सत्त्वात् द्रव्यकर्मासमवेतसमवेतात्त्वादौ गुणद्रव्योभयसमवेतादिनिष्ठस्य द्रव्यत्वव्यभिचारित्वादेः सत्तादिनिष्ठद्रव्यत्वव्यभिचारित्वाद्यात्मकसाधारण्यादितोऽनतिरिक्तत्वेऽपि न क्षतिः ।पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्यादावसिद्धिसम्पादनाय हेत्वाभासोक्ता रीतिरनुसर्तव्या। तत्र ज्ञानस्य विषयतया विशि-

———— —

समानेति। द्रव्यत्वसमानाधिकरणो यो गुणसमवेतत्वे सति कर्मासमवेतस्तद्वान् घट इत्यन्वयः। अत्र गुणसमवेतत्वविशिष्टकर्मासमवेतनिष्ठं यत् द्रव्यत्वासामानाधिकरण्यं तत्स्वरूपाश्रयासिद्धेर्द्रव्यकर्मासमवेतत्वविशिष्टसमवेतात्मकं यत्साधनं तन्निष्ठासाधारण्याभिन्नत्वेपि तद्विषयतावच्छिन्नायाः परामर्शविरोधितायाः प्रकृतसाधनघटितासामानाधिकरण्यविषयितानवच्छिन्नत्वान्नाव्याप्तिरिति भावः। गुणसमवेतस्य कर्मासमवेतस्य च प्रत्येकोक्तावाश्रयासिद्ध्यसम्भवादुभयोरुपादानम्। द्रव्यत्वे साध्ये समवेतमात्रस्य हेतुतायामसाधारण्यासम्भवादाह द्रव्यकर्मासमवेतेति। यद्यपि द्रव्यासमवेतमात्रस्य हेतुत्वेपि तन्निष्ठासाधारण्याभेद आश्रयासिद्धेः सम्भवति, तथाप्याश्रयासिद्धिघटकस्य गुणत्वादेरेव हेतुत्वे स्फुटोऽसाधारण्याभेद इत्याशयेन विशिष्टो हेतुरुक्तः। इत्यादावित्यादिना वन्ह्यभावव्यापकीभूताभावप्रतियोगिजलत्ववान् पर्वतो वन्हिमान् जलत्वप्रमाप्रकारादित्यादेरुपग्रहः। तेन जलत्वनिष्ठनिरुक्ताभावाप्रतियोगित्वरूपाश्रयासिद्धेः प्रकृतसाधननिष्ठानुपसंहारित्वाभिन्नत्वेऽपि तत्र नाव्याप्तिरिति भावः। ननु पर्वतान्यः पर्वत इत्यादौ परामर्शस्याहार्यत्वनियमात्तद्विरोधित्वाप्रसिद्ध्या तत्रत्याश्रयासिद्ध्यादावव्याप्तिरत आह पर्वतान्य इत्यादि। हेत्वाभासोक्तेति। केचिदित्यादिना प्रागुक्तहेत्वाभासलक्षणवादिरीत्यर्थः। तथा च तादृशस्थले हेत्वप्रसिद्ध्यादिकं यत्र यावत्सम्भवति तत्र तावदन्यान्यत्वमेवासिद्धिरित्वं वक्तव्यं शाब्दैकदेशस्याऽकिञ्चित्करत्वादिति भावः। तादृशप्रकृतपक्षधर्मिकप्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वावगाहित्वस्य व्यतिरेको यादृशविशिष्टविषयकनिश्चयविरोधिवि-

ष्टपक्षग्रहविरोधितावच्छेदकं रूपमाश्रयासिद्धिः। विशिष्टपक्षसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकरूपं स्वरूपासिद्धिः।संगृह्यते चेत्थमानसगगनं रूपवत् चाक्षुषस्पर्श-

---

षयताप्रयुक्तः साधारण्यादिभिन्नं तादृशविशिष्टमेवासिद्धिः। तादृशविशिष्टविषयकनिश्चयविरोधिविषयताप्रयुक्तत्वं तु तादृशनिश्चयत्वाभावव्याप्यविषयताघटितप्रतियोगिकत्वरूपं तत्रैव व्याख्यातमिति ध्येयम्। असिद्धेस्त्रैविध्यादाह तत्रेति। विशिष्टेति। प्रकृतपक्षतावच्छेदकविशिष्टेत्यर्थः। अत्रापि पर्वतान्यः पर्वतो वन्हिमान् धूमादित्यादावाश्रयासिद्धसङ्गत्तये पूर्वोक्तरीतिरनुसर्तव्या। एवमग्रिमयोरपि। विशिष्टपक्षेत्यादि। अविरोधिन इत्यन्तेन पक्षाप्रसिद्धिहेत्वप्रसिद्ध्योर्व्युदासः। यत्र कामिनी पक्षो हेतुश्च तत्र विशिष्टपक्षहेतुज्ञानं कामिनीज्ञानमेव तदविरोधिन्याः कामिनीजिज्ञासायाः कामिन्यां पक्षभूतायां हेतुभूतकामिनीवैशिष्ट्यज्ञानविरोधिन्या विषयतावच्छेदककामिनीज्ञानादावतिव्याप्तिवारणाय ज्ञानस्येति। तदुभयेति।विशिष्टपक्षविशिष्टसाधनेत्यर्थः। न च ह्रदत्ववत्पर्वतो वन्हिमान् ह्रदत्वादित्यादौ पर्वतो वन्हिमान् पर्वतत्वात्ह्रदत्वादित्यादौ च ह्रदत्वाद्यभावविशिष्टपर्वतस्य प्रकृतपक्षसाधनग्रहाविरोधित्वात्तादृशस्वरूपासिद्धावव्याप्तिरिति वाच्यम।तत्र स्वरूपासिद्धिविरहेऽपि क्षत्यभावादाश्रयासिद्ध्यादेरेव तत्र दोषत्वात्।यत्राश्रयासिद्ध्याद्यात्मिकैव स्वरूपासिद्धिस्तत्राविरोधिन इत्यस्याऽनुपादेयतायाः उक्तप्रायत्वाच्चेति भावः। ननु समानप्रकारकज्ञानस्यैव विरोधित्वात् प्रकृतसाधनाभावविशिष्टप्रकृतपक्ष एवास्तु स्वरूपासिद्धिः कृतमनुगतनिरुक्त्याऽत आह संगृह्यते चेति। अन्यथा विशिष्टपक्षस्य विशिष्टसाधनस्य चाऽप्रसिद्ध्या तत्संग्रहो न स्यादित्यर्थः। ( यद्वा उक्तविवक्षाफलमविरोधिन इत्यस्य व्यावृत्तिं च तन्त्रेणोपदर्शयति संगृह्यते चेति। अनित्यमित्यनेनाश्रयासिद्धिः, चाक्षुषेत्यनेन हेत्वसिद्धिः। तथा च तद्विशेषणादाने तदुभयत्रातिव्याप्तिः स्यादिति भावः। तदुभयेत्यस्य पक्षतावच्छेदकविशिष्टपक्षे हेतुतावच्छेदकविशिष्टहेतुवैशिष्ट्यग्रहविरोधित्वमर्थः।

बत्त्वादित्यादौ गगनादेर्निःस्पर्शत्वादिकम् । एवं शब्दो द्रव्यं गु-
णान्यत्वे सति सत्त्वात् गुणान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्यभिचारि
गुणवृत्तित्वादित्यादावपि नाव्याप्तिः । तदुभयभिन्नासिद्धिर्व्या-
प्यत्वासिद्धिः । पक्षादिभेदेनाऽसिद्धेर्भेदाद्यत्राश्रयासिद्ध्यादिकमप्र-
सिद्धं तत्र तदन्यत्वं न वक्तव्यमिति । सविपक्षवृत्तिप्रकृतसाध्यसाध-
नग्रहविरोधितानवच्छेदकप्रकृतपक्षप्रकृतसाधनवैशिष्ट्यग्रहविरोधि-
तावच्छेदकरूपशून्यज्ञानस्य विषयोऽसिद्धिर्व्याप्यत्वासिद्धिः ।

---

तत्र विशिष्टान्तदलयोर्व्यावृत्तिमाह एवमिति । अत्र गुणान्यत्वविशि-
ष्टसत्ताभाववच्छब्दस्य स्वरूपासिद्धिरूपस्य ज्ञानं यद्यपि पक्षतावच्छे-
दकाविशिष्टशब्दे शुद्धहेतुमत्ताज्ञानं न विरुणद्धि, तथापि हेतुतावच्छे-
दकगुणान्यत्वविशिष्टसत्तात्वविशिष्टवैशिष्ट्यज्ञानं विरुणद्धीति न
तत्राव्याप्तिः । पक्षतावच्छेदकाविशिष्टेत्यस्य व्यावृत्तिमाह गुणान्यत्व-
विशिष्टसत्त्वमिति ।) तदुभयेति । आश्रयासिद्धिस्वरूपासिद्धीत्यर्थः ।
ननु पर्वतः काञ्चनवन्हिमान् द्रव्यत्वादित्यादिस्थलीयव्याप्यत्वासि-
द्धावव्याप्तिः तत्राश्रयासिद्ध्याद्यप्रसिद्ध्या तदन्यत्वस्याऽलीकत्वादत
आह पक्षादिभेदेनेति । न चैवमपि काञ्चनपर्वतो वन्हिमान् काञ्चनपर्व-
तादित्यादौ हेत्वप्रसिद्धावव्याप्तिः तस्य प्रकृतपक्षग्रहविरोधित्वेनाश्रया-
सिद्धितया तद्भिन्नत्वाभावादिति वाच्यम् । तस्याऽलक्ष्यत्वेऽपि क्षत्यभा-
वात्, असिद्धित्रयस्याऽसार्वत्रिकत्वादिति भावः । कस्यचिद्व्याप्यत्वा-
सिद्धिलक्षणमाह सविपक्षवृत्तीत्यादिना । साध्यसाधनयोरप्रसिद्ध्योः
संग्रहार्थमनवच्छेदकान्तं विरोधितावच्छेदकरूपस्य विशेषणम् ।
( तत्रापि सविषयवृत्तिपदं पर्वतः पर्वतावृत्तिह्रदत्ववान् ह्रदत्वादि-
त्यादौ पर्वतावृत्तिह्रदत्वादिरूपायां साध्याप्रसिद्धावव्याप्तिवारणार्थ-
म् । अन्यथा साध्यग्रहविरोधितानवच्छेदकीभूतस्य पक्षसाधनवैशि-
ष्ट्यग्रहविरोधितावच्छेदकरूपस्याऽप्रसिद्ध्या तत्राव्याप्तिप्रसङ्गात् ।
तदुपादाने च सविषयकनिष्ठं यत्साध्यग्रहविरोधितावच्छेद-
कं तद्भिन्नं पक्षधर्मिकहेत्वभावनिश्चयत्वादिरूपमेव पक्षसाधनवै-

साध्यपदोपादानात् पर्वतः पर्वतवृत्तिह्रदत्ववान् ह्रदत्वादित्यादौ साध्याप्रसिद्धेर्नासंग्रहः । तस्याः स्वरूपासिद्धौ निवेशादनुपादेय-

---

शिष्ट्यग्रहविरोधितावच्छेदकं तत्र प्रसिद्धमिति नाव्याप्तिः । उ-क्तचलीयसाध्याप्रसिद्धेः स्वरूपासिद्धित्वमते च ) धूमवान् वन्हेरित्यादौ ज्ञानगतधर्मस्य प्रकृतसाध्यसाधनग्रहविरोधिता-वच्छेदकत्वासम्भवेपि कामिनीजिज्ञासात्वादेरेव तथात्वात् पक्षवृ-त्तित्वविशिष्टसाध्याव्यभिचरितसामानाधिकरण्याभावे नाव्याप्तिरि-त्यावेदयितुं सविषयवृत्तीत्युक्तम् । हेत्वप्रसिद्ध्यादिज्ञानस्यापि निरुक्त-विरोधितानवच्छेदकीभूतसत्त्वादिधर्मवत्त्वादसम्भवापत्तिरतः प्रकृत-पक्षेत्यादि । न च पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्या-दौ हेत्वप्रसिद्ध्याद्यव्याप्तिः तत्र कामिनीजिज्ञासात्वस्यैव तादृशपक्षसा-धनवैशिष्ट्यग्रहविरोधितावच्छेदकत्वात् तस्य च प्रकृतपक्षसाधनग्र-हविरोधितानवच्छेदकत्वाभावेन निरुक्तरूपाप्रसिद्धेरिति वाच्यम् । प्र-कृतपक्षप्रकृतसाधनवैशिष्ट्यग्रहेत्यनेन तादृशग्रहत्वाव्यापकविषयि-ताशून्यग्रहस्य विवक्षिततत्वेन पर्वतो धूमवान् इत्येवंग्रहस्यापि तथात्वेन तद्विरोधितावच्छेदकस्य पर्वतधर्मिकधूमाभावनिश्चयत्वस्यैव प्रकृ-तसाध्यसाधनग्रहविरोधितानवच्छेदकस्य सौलभ्यादिति भावः । येन सम्बन्धेन विरोधितावच्छेदकत्वं तेनैव तच्छून्यत्वस्य लाभार्थं ज्ञानस्येत्युक्तम् । तेन स्वरूपासिद्ध्यादिज्ञानस्य संयोगादिसम्बन्धेन प-क्षधर्मिकहेत्वभावनिश्चयत्वाद्यात्मकतादृशरूपशून्यत्वेपि न तत्राति-व्याप्तिः । तादृशज्ञानस्य विषयत्वं घटादौ विषयीभूतहेत्वाभासत्वं च व्यभिचारादावतिप्रसक्तमत उक्तमसिद्धिरिति । ननु पर्वतः काञ्चन-वन्हिमान्धूमादित्यादौ साध्याप्रसिद्धिज्ञानस्य प्रकृतपक्षसाधनवैशि-ष्ट्यग्रहाविरोधित्वादेव तद्विषयीभूतसाध्याप्रसिद्धौ लक्षणसम्भवा-त्साध्यपदं विफलमत आह साध्येत्यादि । नासङ्ग्रह इति । अन्यथा प्रकृ-तसाधनग्रहाविरोधिनः पर्वतावृत्तित्वविशिष्टह्रदत्वग्रहस्य प्रकृतपक्ष-प्रकृतसाधनवैशिष्ट्यग्रहाविरोधित्वान्निरुक्तरूपशून्यत्वाभावेन च वि-षयीभूतायां साध्याप्रसिद्धावव्याप्तिरेव स्यादिति भावः । लाघवा-दाह तस्या इति । उक्तचलीयसाध्याप्रसिद्धेरित्यर्थः । कश्चिदित्यस-

मेव वा साध्यमित्यपि केचित् । साध्यत्वे स्वप्रसिद्धिव्याप्तिवि-
शिष्टपक्षधर्मतादिविरहादयश्चैतद्भेदाः । यत्तु हेतुतावच्छेदकस्य
व्याप्यतानवच्छेदकत्वम् अपि व्याप्यत्वासिद्धिः, नीलधूमत्वा-
देश्च तथात्वं समानाधिकरणं सम्भवदवच्छेदकान्तरमपेक्ष्य गुरु-
त्वादिति । अत्रावच्छेदकत्वं यद्यनतिरिक्तवृत्तित्वं, तदा तस्याप्य-
स्ति । अथ तादृशेन समानाधिकरणेन तादृशेन वा धर्मान्तरेणाऽ-
घटितत्वे सति तत्त्वम् । तन्न । सत्यन्तस्य गौरवेणानुपादेयत्वात् ।

———

रसबीजन्तु अगृहीताप्रामाण्यकस्यैव ज्ञानस्य विरोधित्वाद्भ्रमत्वज्ञा-
नास्कन्दितस्य स्वरूपासिद्धिज्ञानस्य निरुक्तरूपशून्यत्वात्तद्विषयस्व-
रूपासिद्धावतिव्याप्तिरित्यादिकं द्रष्टव्यम् । ननु व्याप्तेरसिद्धिर्व्या-
प्यत्वासिद्धिरितिव्युत्पत्त्या व्याप्तिविरहस्यैव व्याप्यत्वासिद्धिपदार्थ-
त्वात्साध्याप्रसिद्ध्यसाधारणतल्लक्षणमयुक्तमित्याशङ्कापनयनाय सा-
ध्यहत्वित्यादि । तथा च व्याप्यत्वासिद्धिपदं न यौगिकं किन्तु मण्ड-
पादिपदवत् रूढमिति भावः । तथात्वं व्याप्यतानवच्छेदकत्वम् ।
तस्य नीलधूमत्वादेः । तादृशेनेति साध्यव्याप्यतावच्छेदकीभूतेनेत्य-
र्थः । तेन द्रव्यं गुणाद्यन्यत्वे सति सत्त्वादित्यादौ विशिष्टसत्तात्वस्य
यत्स्वसमानाधिकरणं गुणाद्यन्यत्वं तद्घटितत्वेऽपि नावच्छेदकत्व-
हानिः । न च महाकालनिरूपितविशेषणतया गुणान्यस्य हेतुतायां
गुणान्यत्वस्यापि द्रव्यत्वव्याप्यतावच्छेदकत्वादुक्तदोषतादवस्थ्यम् ।
प्रकृतहेतुतावच्छेदकसम्बन्धेन यद्व्याप्यत्वं तदवच्छेदकधर्मान्तराघ-
टितत्वस्यैव प्रवेश्यत्वादिति भावः । धूमप्रागभावत्वस्य धूमविशि-
ष्टासत्त्वादेर्वा वह्निव्याप्यतावच्छेदकान्तरधूमत्वादिघटितत्वादव-
च्छेदकत्वं न स्यात् अतः समानाधिकरणेनेति । प्रकृतहेतुतावच्छेदकता-
घटकसम्बन्धेन यत्स्वाधिकरणं तत्र प्रकृतव्याप्यवच्छेदकताघटकस-
म्बन्धेन वृत्तिमत्त्वे यर्थः । तेन धूमत्वधूमप्रागभावत्वाद्योरपि यथाक-
थञ्चित्सम्बन्धेन मिथः सामानाधिकरण्येऽपि न क्षतिः । प्रकृतहेतुतावच्छे-
दकताघटकसम्बन्धेन यत्स्वाधिकरणं तत्र तेनैव सम्बन्धेन वृत्तित्वमु

नापि अन्यूनानतिरिक्तवृत्तित्वम्, आलोकाद्यवृत्तेर्धूमत्वादेरप्य-तथात्वापातात्। अथ स्वरूपसम्बन्धविशेषः, तर्हि द्रव्यं रूपादि-त्यादौ रूपत्वादेरपि तथात्वं न स्यात्। रूपादिषु चतुर्विंशतौ स-म्भवदवच्छेदकमेकं गुणत्वमपेक्ष्य रूपत्वादीनां चतुर्विंशतेः षड्-विंशतेर्वा गुरुत्वात्। एवं पशुमान् सास्नादिमत इत्यादौ सास्ना-दिमत्त्वादेरपि गोत्वादिकां जातिमपेक्ष्य उपाधेर्गुरुत्वात् हेतुताव-वच्छेदकावशिष्टहेतुव्यापकसाध्यसमानाधिकरणतादृशहेतोः सा-

---

स्वसामानाधिकरण्यं न च वाच्यम्। धूमत्वप्रकारकप्रमाविशेष्यत्वादे-रपि वन्ह्यादिव्याप्यतावच्छेदकत्वापत्तेः। न चैवमपि द्रव्यं गुणक-र्मान्यत्वे सति समवेतादित्यादौ विशिष्टसमवेतत्वं द्रव्यत्वस्य व्याप्य-तावच्छेदकं न स्यात् स्वसमानाधिकरणेन प्रकृतव्याप्यतावच्छेद-कीभूतगुणत्वादिना घटितत्वादिति वाच्यम्। स्वसमानाधिकरणेत्यस्य स्वव्यापकार्थकत्वादिति भावः। धूमप्रागभावादिकं न लिङ्गं प्राग-भावत्वादीनां व्यर्थत्वादिति परामर्शीयमूलमनुरुध्य सामानाधिकर-ण्यं परित्यजन्नाह तादृशेन वेति। धूमत्वादेरपि स्वात्मकतादृशधर्मघ-टितत्वादवच्छेदकत्वं न स्यादतो धर्मान्तरेणेत्यन्तरपदम्। न चैव धू-मत्वमप्यवच्छेदकं स्यात् धूमत्वस्य विशिष्टधूमत्वाभिन्नतया धर्मा-न्तरत्वाभावादिति वाच्यम्। स्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य ध-र्मान्तरपदेनोक्तत्वादिति भावः। तत्त्वं व्याप्यनतिरिक्तवृत्तित्वम्।यद्य-वच्छेदकत्वमित्यनुषज्यते सत्यन्तस्येति। वन्हिमान्द्रव्यादित्यादौ द्र-व्यत्वादेरवच्छेदकत्ववारणायाऽनतिरिक्तवृत्तित्वांशस्यावश्यकत्वादि-ति भावः।तथात्वं व्याप्यवच्छेदकत्वम्। कालिकदैशिकसाधारणयोः परत्वत्वापरत्वत्वजात्योः करणाभावादाह षड्विंशतेर्वेति। इदमुपल-क्षणम्।वेगादिसाधारण्याः संस्कारत्वजातेः खण्डितत्वादष्टाविंशतर्वेति द्रष्टव्यम्। व्यक्तिबाहुल्यगौरवमुक्त्वा शरीरगौरवं दर्शयन्नाह एव-मिति। सास्नादि र व्यापीति। तथात्वं न स्यादित्यनेनान्वयः। ननु नीलधूमत्वादिकमत्र सास्नावत्त्वादिकमप्यवच्छेदकं माभूत् को दोष इत्यत आह हेतुतेति। तादृशेति।हेतुतावच्छेदकविशिष्टेत्यर्थः। केवला-

ध्याव्यभिचरितसम्बन्धितादृशहेतोर्वा ज्ञानस्यानुमितिकारणस्याऽविरोधिनो निरुक्तानवच्छेदकत्वस्य दोषत्वायोगाच्च । परार्थस्थले तु दृष्टान्तस्य साध्यादिवैकल्यवत् हेतावर्थविशेषणत्वमपि निग्र-

———

न्थयिखण्डकानां मतमाह साध्याव्यभिचारितेति । साध्याव्यभिचरितत्वे सति सम्बन्धिः समानाधिकरणो यस्तादृशो हेतुतावच्छेदकविशिष्टो हेतुस्तस्येत्यर्थः । ज्ञानस्येति । पक्षधर्मतेत्यादिः । निरुक्तेति । स्वरूपसम्बन्धात्मकव्याप्त्यवच्छेदकत्वाभावस्य हेत्वाभासत्वायोगादित्यर्थः । यद्विषयकं ज्ञानमनुमितेः परामर्शस्य वा ग्राह्याभावमुद्रया विरोधि तस्यैवाभासत्वात् । न च हेतुतावच्छेदकधर्मावच्छिन्नमेव साध्याव्यभिचरितसम्बन्धित्वं व्याप्तिः, तादृशसम्बन्धितामात्रस्य तत्त्वे पर्वतीयवन्हेरेव तथात्वात् धूमवान् वह्नेरित्यादिप्रयोगेऽपि बाधनिग्रहापत्तेः, तथा च ग्राह्याभावविधयैव हेतुतावच्छेदकस्य निरुक्तानवच्छेदकत्वं दोष इति वाच्यम् । परार्थस्थले व्याप्त्यतिप्रसक्तधर्मेण हेतुप्रयोगस्यापि पृथग्निग्रहस्थानत्वादर्थातिप्रसङ्गभङ्गे हेतुतावच्छेदकधर्मावच्छिन्नत्वस्य व्याप्तावनन्तर्भावादिति भावः । यत्तु व्यापकसामानाधिकरण्यरूपव्याप्तौ हेतुतावच्छेदकधर्मावच्छिन्नाधिकरणत्वं निवेश्यम्, अन्यथा द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्त्यापत्तेः । तथा च वन्हिमान् प्रमेयधूमादित्यादौ प्रमेयधूमत्वादेरधिकरणतानवच्छेदकत्वलक्षणं व्यर्थविशेषणत्वमसिद्धिभेद एव, परामर्शविरोधित्वात् प्रतियोगितायाः इवाधिकरणत्वस्यापि लघुधर्मसम्भवे गुरुधर्मानवच्छेद्यत्वात् । न चैवं केवलधूमत्वादेरपि अधिकरणतावच्छेदकत्वे मानाभावात् वन्हिमान् धूमादित्यत्रापि धूमत्वादौ व्यर्थविशेषणता स्यादिति वाच्यम् । विशिष्टधूमत्वावच्छिन्नाधिकरणताया अपि धूमत्वावच्छेद्यतया तदवच्छेदकत्वस्यैव तत्र हेतुतावच्छेदकीभूतधूमत्वादौ सुलभत्वात् । नीलधूमत्वादिना हेतुतायान्तु अधिकप्रयोगादेव निग्रह इति निष्कृष्टम् । ननु व्यर्थविशेषणत्वस्याऽदोषत्वे नीलधूमादित्यादिप्रयोगेऽपि निग्रहो न स्यादत आह परार्थस्थले त्विति । ( साध्यादीत्यादिना साधनस्योपग्रहः ) व्यर्थविशेषणत्वमपीति । यद्रूपेण हेतुः

हस्थानविभाजकसूत्रस्थानुक्तसमुच्चयपरेण चकारेण समुच्चितं पृथगेव निग्रहस्थानम् ॥

---

प्रयुज्यते तस्य स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितत्वमपीत्यर्थः। विभाजकसूत्रस्थेति। "हेत्वाभासाश्च यथोक्ता" इत्यन्तिमसूत्रस्थचकारेणेत्यर्थः। पृथगेव हेत्वाभासादिव्यतिरिक्तमेव। न च धूमःादृत्यस्यैव सम्यक्त्वं नीलधूमादिति प्रयुञ्जानस्याऽऽधिक्यमेवास्तु निग्रहस्थानं कृतं चशब्दसमुच्चयेनेति वाच्यम्। हेत्वाधिकमिति सूत्ररूपया हेतुद्वयादिप्रयोगस्थले पदाधिक्यस्य निग्रहस्थानत्वोपगमादिति भावः ॥

इति श्रीजगदीशतर्कालङ्कारकृतायामनुमान-
दीधितिव्याख्यायामसिद्धग्रन्थः समाप्तः।

---

## चिन्तामणेः बाधः ।

बाधो न साध्याभाववत्पक्षकत्वं पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वं वा, पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वाज्ञानेन बाधाभावादिति वक्ष्यते । अत एव साध्याभाववत्पक्षवृत्तित्वमपि न, असिद्धिसङ्कीर्णबाधाव्याप्तेश्च । किन्तु साध्याभाववत्त्वप्रमाविषयपक्षकत्वं, प्रमितसाध्याभाववत्पक्षकत्वं, पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वेति ।

---

## दीधित्याः बाधः ।

अतिरिक्तविषयतावादिमतेनाह पक्षेति । पक्षः साध्याभाववानिति ज्ञाने पक्षनिष्ठविषयत्वस्य प्रकारः साध्याभाव इति लक्षण-

---

## जागदीश्याः बाधः ।

मणिकृता विषयतायाः सप्रकारकत्वास्वीकारादाह अतिरिक्तेति । सप्रकारकविशेष्यतावादिमतेनेत्यर्थः । ननु पक्षनिष्ठत्वं यद्यभावान्वयि तदा प्रकारान्तवैयर्थ्यमतोऽन्यथा व्याचष्टे पक्ष इत्यादिना । प्रकाराभावेत्यत्र यदि तादृशप्रकारस्याऽभाव इति तत्पुरुषस्तदा साध्यस्य तत्प्रतियोगित्वाभावात् बाधमात्रासंग्रहः स्यादतः कर्मधारयाभिप्रायेण योजयति प्रकारः साध्याभाव इति । इत्यादीत्यादिना

विवक्षितविवेकेन साध्याभावप्रमैव दोषः । सा च प्रमात्वेन ज्ञाता न स्वरूपसती, हेत्वाभासत्वात् । प्रमात्वज्ञानं विना अधिकबलत्वाभावेनाऽदोषत्वात् अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च । अथ साध्याभाववति पक्षे हेतोः सत्त्वज्ञाने व्यभिचारः, तदज्ञानेऽसिद्धिः, संशययोग्यत्वाभावेन पक्षत्वाभावादाश्रयासिद्धिश्च । न च पक्षभिन्ने व्यभिचारो दोषः, व्यर्थविशेषणत्वात् सर्व्वोपसंहारप्रवृत्तव्याप्तेः साध्याभाववति साधनमित्यवगमादेव भङ्गात् । न चैवं सन्दिग्धसाध्यदृष्टान्ते सन्दिग्धानैकान्तिकवत्पक्षे व्यभिचारसंशया-

---

समन्वयः । विवक्षितेति । हेत्वादिविषयत्वेनाऽप्रतिबन्धकत्वादिति भावः । साध्याभावप्रमात्वग्रहे पक्षे साध्याभाववत्त्वग्रहस्यावश्यकत्वाभिप्रायेण, साध्याभावस्य बाधत्ववादिमतेन वा शङ्कते अथेति ।

---

हेतुतावच्छेदकाद्युपग्रहः । ननु पक्षधर्मिकसाध्याभावप्रमात्वरूपस्य बाधत्वस्य ग्रहे पक्षे साध्याभावस्याऽलाभादथेत्यादिमूलासङ्गतिरत आह साध्याभावेति । पक्षधर्मिकत्यादिः । आवश्यकत्वाभिप्रायेणेति । पक्षः साध्याभाववान् इति ज्ञानस्याऽन्यांशे साध्याभावप्रमात्वग्रहे पक्षधर्मिकसाध्यानुमित्यविरोधित्वात् पक्षांशे साध्याभावप्रमात्वस्यैव ग्रहस्ताहशानुमितेर्विरोधी वाच्यः पक्षांशे साध्याभावप्रमात्वं च साध्याभाववत्पक्षधर्मिकसाध्याभावप्रकारकज्ञानत्वमित्यवश्यं तादृशप्रमात्वग्रहदशायां पक्षे साध्याभावस्य भानमिति भावः । ननु

दनुमानमात्रोच्छेद इति, पक्षे साध्यसंशयोऽनुमानाङ्ग-
मिति । व्याप्तस्य पक्षधर्मताज्ञानादनुमित्युत्पादेन संश-
यनिवृत्तेः, अन्यथा विशेषदर्शनस्य संशयविरोधिता
भज्येत । न च पक्षे साध्याभावं प्रतीत्य व्यभिचारज्ञा-
नमित्युपजीव्यत्वाद्बाधः पृथक्, पक्षे साध्याभावप्रतीति-
रेव हि साध्याभावहेत्वोः सम्बन्धोल्लेखिनीत्यकावित्तिव-

---

पक्ष इति । व्याप्तौ निश्चितायां पक्षतत्समयोः साध्याभावसंशयो
न दोषायेत्यर्थः । अनुमित्युत्पादेनेति फलतोऽपि विरोधित्वमद-

---

पक्षविषयतास्वरूपसाध्याभाववद्विशेष्यकत्वावच्छिन्नं साध्याभाव-
प्रकारकत्वमेव पक्षांशे साध्याभावप्रमात्वं वाच्यं तच्च पक्षे साध्या-
भावस्याऽलाभेऽपि सुग्रहमतः कल्पान्तरमाह साध्याभावस्येति ।
पक्षनिष्ठस्येत्यादिः । मूले पक्षे साध्यसंशय इति । पक्षे साध्यसंशय-
स्यानुमानाङ्गत्वानुरोधेन तत्सत्त्वेऽपि व्याप्तिविशिष्टपक्षधर्मताज्ञानो-
दयात्तदुत्तरमनुमितेरेवोत्पादेन विरोधिव्यभिचारसंशयानुत्पत्तेरित्य-
र्थः । तथा च साध्याभाववत्त्वांशे निश्चयाकारो व्याप्तिग्रहानुकूलत-
र्करहितो व्यभिचारसंशयो व्याप्तिग्रहस्य विरोधीति पक्षीयसाध्य-
संशयान्नानुमानमात्रोच्छेद इति भावः । पक्षे साध्यसंशयस्य मणि-
कृन्मतेऽनुमानाङ्गत्वाभावात् तदुपेक्ष्य फलितार्थमाह व्याप्ताविं-
त्यादि । तत्समेति दृष्टान्तार्थम् । न दोषायेति । न व्याप्तिग्रहविरो-
धिव्यभिचारसंशयोत्पादायेत्यर्थः । ननु व्याप्तिविशिष्टपक्षधर्मताज्ञा-
नेन प्रतिबन्धादेव व्यभिचारसंशयानुत्पत्तिसम्भवादनुमित्युत्पादप्र-
दर्शनं व्यर्थमत आह अनुमित्युत्पादेत्यादि।फलतोपीति । फलद्वारापि
व्याप्तिपक्षधर्मताज्ञानस्य व्यभिचारसंशयविरोधित्वप्रदर्शनायेत्यर्थः ।
फलतोपीत्यपिरनास्थायाम्, अजनितफलेनापि परामर्शेन व्यभिचा-
रधीप्रतिबन्धात् स्वरूपतो विरोधित्वस्यावश्यकत्वेन फलद्वारा

धत्वे ननोपजीव्यत्वम् । अन्यथा बाधदशायां पक्षे हेतोरज्ञानादसिद्धिरेव । न चोद्भावितव्यभिचारनिर्वाहाय बाधोद्भावनमावश्यकमित्युपजीव्यत्वम्, व्यभिचारोद्भावने परं कथन्तानावश्यकत्वात, तत्त्वे वा तन्निर्वाह्यमेव दूषणं क्लृप्तत्वात् । वन्हिरुष्णः कृतक इत्युद्भावनाद्वन्हिरुष्ण इत्युद्भावने लाघवमिति बाधः पृथगिति कश्चित् । तन्न। पक्षे साध्याभावप्रमा स्वार्थानुमाने यदि न दोषः तदा परं प्रत्यपि न स्यादविशेषादिति तदुद्भावनस्य दूरनिरस्तत्वात् । अथोपनीतकाञ्चनमयत्वविशिष्टवन्ह्यनुमितेः सल्लिङ्गजन्यायाः आभासत्वं हेत्वा-

---

र्शनाय । अत एव ज्यायः स्वरूपतो विरोधित्वं द्रढयति अन्यथेति । हेत्वाभासाधीनमिति । न च हेत्वाभासस्यानुमित्याभासता-

---

तथात्वे मानाभावात् । एतदेव स्फुटीकुर्वन्नाह अत एवेति । फलतो विरोधित्वस्य गौणत्वादेवेत्यर्थः । ज्यायस्त्वमावश्यकत्वेन । यस्तु-तस्तु न चैवमित्याद्यनुमानाङ्गमित्यन्त एवाशङ्काग्रन्थः । यदि व्यभिचारज्ञानमात्रं विरोधि तदा पक्षीयव्यभिचारसंशयादनुमानमात्रोच्छेदः स्यादिति पक्षे साध्यसंशयोऽनुमानाङ्गमनुमानाविरोधि वाच्यमिति न चेति तदर्थः । यदि साध्यसंशयस्यानुमितिहेतुत्वं स्यात् स्यादपि तदनुरोधेन व्यभिचारसंशयत्वादनुमानमात्रोच्छेदः. न चैतदस्ति, यत्र प्रथमत एव व्याप्तिविशिष्टपक्षधर्मताज्ञानादनुमितिस्तत्र व्यभिचाराद्विशेषदर्शने सति संशयायोगादित्याशयेन सिद्धान्तयति मूले व्याप्यस्य पक्षधर्मताज्ञानादिनेति युक्तमुत्पश्यामः । न चेत्यादि । यद्यपि हेत्वाभासस्यानुमित्याभासतायां प्रयोजकत्वं स्या-

भासाधीनम् । न चानुमितेः पूर्व्वं तत्र व्यभिचारज्ञानं, विशिष्टस्याऽप्रसिद्ध्या तदभावस्याऽज्ञानात् । अत एव पक्षासिद्धिरपि न, अतः काञ्चनमयवन्ह्यभावरूपाद्बाधादनुमानाभासत्वं व्यधिकरणप्रकारावच्छिन्नप्रतियोगिकश्चात्राऽभाव इति चेन्न । वस्तुतो व्यभिचारस्यापि तत्र सत्त्वात्, ज्ञानञ्च तस्य बाधस्येवाऽनुमित्यनन्तरमेव । किञ्च वह्नौ काञ्चनमयत्वस्यानुमितावेव भाने काञ्चनमयवह्निमानित्यनुमितिर्न स्यात् विशिष्टस्य पूर्वमज्ञानाद्वन्हौ काञ्चनमयत्वांशेऽनुमितेराभासत्वं वन्हौ

---

प्रयोजकत्वे साध्यवति पक्षे लिङ्गाभासजन्याया अनुमितेराभासत्वापत्तिः, लिङ्गोपधाने तथात्वस्येष्टत्वात् । पक्षासिद्धिरित्यस्य बाधकमाननिबन्धनेत्यादिः । लिङ्गस्येसाधर्भ्युच्चयमात्रं, वन्हेरप-

---

पकत्वमित्युक्तौ नायं दोषः, तथापि समव्याप्तत्वमेव प्रयोजकत्वमित्यभिप्रेत्य इय शङ्केति ध्येयम् । काञ्चनमयत्वविशिष्टस्य वन्हेरप्रसिद्धावपि शुद्धवन्हिमादायैव सन्दिग्धसाध्यकत्वरूपस्य पक्षत्वस्य प्रासाद्धसम्भवात्तदप्रसिद्धेरप्रसक्तत्वेन निराकरणायोगादाह बाधकेत्यादि । अनुमितेर्बाधकं विरोधि यन्मानं साध्यस्य तदभावस्य वा विशिष्टज्ञानं तन्निबन्धनेत्यर्थः । तेन विशिष्टसाध्यतदभावस्य च प्रागुपात्तत्वात् विशिष्टसाध्याप्रसिद्ध्या साधकमाननिबन्धनाया अपि पक्षासिद्धेः खण्डनार्हत्वात् बाधकमानमात्रोपन्यासानौचित्यमित्यपास्तम्, उक्तक्रमेण सिद्धिबाधयोरेवापन्यस्तत्त्वादिति ध्येयम् । मूले वन्हौ काञ्चनमयत्वांश इत्यादि । वन्हौ धर्मिणि काञ्चनमयत्वानु-

लिङ्गस्यासिद्धेः व्यभिचाराच्च। न चानुमितेर्विषयाभावाधी-
नमप्रमात्वं किन्तु हेत्वाभासाधीनं, यस्य हि ज्ञानमनु-
मितिप्रतिबन्धकं स हेत्वाभासः। न च साध्याभावो ज्ञातः
प्रतिबन्धक इति न स हेत्वाभासः। वस्तुतस्तु उपनी-
तस्यानुमितौ भाने मानाभावः प्रत्यभिज्ञादौ च प्रतीति-
बलेनैव तत्कल्पनम् अन्यथा पूर्वोपस्थितसकलपदार्थभा-
ने यथार्थानुमित्युच्छेदः। अपि चैवं परार्थानुमानेप्युप-
नीतभाने बाधितोऽर्थ उपनीतोऽयं मम भात इत्युद्भाव-
नादेव विजयेत वादी उद्देश्यानुमितेरप्रतिबन्धात्तत्र

---

सत्वात् काञ्चनमयत्वस्याऽसाध्यत्वाच्च। न च साध्याभाव इति।

---

मितेराभासत्वं वन्हौ धर्म्मिणि काञ्चनमयत्वसाधकलिङ्गस्यासिद्धे-
र्व्यभिचाराच्च सम्भविष्यतीति शेषः। तथा चोपनीतकाञ्चनमयत्व-
विशिष्टवन्ह्यनुमितेराभासत्वमसिद्ध्यादिहेत्वाभासाधीनतयैवोपपन्नं न
बाधस्य हेत्वाभासत्वं साधयतीति भावः। तत्पक्षकतत्साध्यकानु-
मित्याभासत्वं तत्पक्षकतत्साध्यीयहेत्वाभासाधीनमित्येवं नियममु-
रीकृत्य मूले दूषयति लिङ्गस्येत्यादिना। अभ्युपगमे हेतुमाह व-
न्हेरिति। वन्हिसाध्यकसल्लिङ्गपरामर्शजन्यानुमितिस्थल इत्यादिः।
तादृशानुमितेरेव पूर्वं प्रक्रान्तत्वादिति भावः। वस्तुतः तद्धर्मिक-
तत्प्रकारकानुमित्याभासत्वं तत्पक्षकतत्साध्यकहेत्वाभासाधीनमित्ये-
व व्याप्तिः तथा च सल्लिङ्गजन्यायाः पर्वतः काञ्चनमयवन्हिमानित्य-
नुमितेर्वन्हिपक्षककाञ्चनमयत्वसाध्यकानुमित्याभासत्वाभावेपि व-
न्हिधर्मिककाञ्चनमयत्वप्रकारकानुमित्याभासत्वादिति लिङ्गस्ये-
त्यादिमूलं सम्यगेव इति प्रतीमः। स्वमते ज्ञातस्यैव साध्या-

बाधो दोष इति चेत्, तुल्यं स्वार्थानुमानेऽपि । अत एव यत्र सामान्यतोदृष्टानुमानमेवेतरबाधसहायं विशेषानुमापकं तत्र बाधकानामाभासत्वे तत्प्रयुक्तं सामान्यतोदृष्टस्याप्याभासत्वमिति बाधस्याऽसाङ्कर्य्यात्। न च यदि विशेषविप्रतिपत्तौ सामान्यस्य प्रतिज्ञा तदा अर्थान्तरं सामान्यविप्रतिपत्तौ तु नेतरबाधकापेक्षेति वाच्यम् । स्वार्थानुमान एवैवं बाधासङ्करस्योक्तत्वादित्यपास्तम्। अनुमित्यप्रतिबन्धेन तत्र बाधस्यादोषत्वात्। ननु पक्षे साध्याभावग्रहवत्साध्याभावव्याप्यग्रहोऽपि दूषको विरोधित्वाविशेषात्, तथा च साध्याभावसम्बन्धो व्यभिचारः साध्याभावव्याप्यसामानाधिकरण्यं बाधः साध्याभावव्याप्यञ्च वन्हित्वादिकमेवेति चेत् न। पक्षे हि साध्याभावे ज्ञायमाने ज्ञाते वा यदि साध्याभावव्याप्यसामानाधिकरण्यबुद्धिस्तदा व्यभिचार एव । अथ पक्षे साध्याभाव-

---

अनुमितेः पूर्वं विशिष्टस्याऽप्रसिद्ध्या तदभावस्याऽज्ञानादिति भवतैवोक्तत्वादिति भावः ॥

---

भावस्याभासत्वान्नेत्यस्याऽसङ्गतेराह अनुमितेः पूर्वमित्यादि । भवतैवेति। प्रकारेण च भवन्मते न ज्ञातः प्रतिबन्धक इति मूलार्थः।

इति जागदीश्यां बाधपूर्वपक्षग्रन्थः ।

बुद्धिं विनैव सा, तर्हि हेतुसाध्याभावव्याप्ययोरगृह्यमाण-
विशेषयोः सत्प्रतिपक्षत्वम्। अथ तुल्यबलेन सत्प्रति-
पक्षोऽधिकबलेन बाध इति चेन्न। गमकतौपयिकरूप-
साकल्यं हि बलं तच्च द्वयोर्ज्ञातमिति कथं न सत्प्र-
तिपक्षत्वं, गमकताबहिर्भूतञ्च न बलम्। अथ साध्या-
भावव्याप्यबुद्धेरनन्यथासिद्धत्वं बलं, तदा ततः साधन-
वति पक्षे साध्याभावानुमितावनैकान्तिकत्वमेव पक्षे सा-
ध्याभावग्रहत्वादिति यदुक्तं, तदप्यसिद्धम्। तस्य दोषत्वान-
भ्युपगमात्, अन्यथा हेत्वाभासान्तरतापत्तिः। अथ हे-
तुतः साध्यसिद्धिसम्भावनायां व्यभिचारासिद्धेः बाधे-
न हेतोरसाधकत्वे सिद्धे व्यभिचारसिद्धिरित्युपजीव्य-
त्वाद्बाधः पृथक्, अन्यथा हेतोरसाधकत्वे सिद्धे
साध्यसिद्धिसम्भावनाविरहाद्व्यभिचारबुद्धिः तस्याञ्च
सत्यां हेतोरसाधकत्वधीरित्यन्योन्याश्रय इति चेन्न।
साध्यसिद्ध्युन्मुखहेतुज्ञानस्य प्रमितसाध्याभावसहच-
रितहेतुविषयत्वेन व्यभिचारज्ञानतया दूषकत्वात्। त-
थापि व्यभिचारे साध्याभावप्रमा तन्त्रं तां विना तद-
भावादिति सैव दोष इति चेत्। सत्यम्। किन्तु सा-
ध्याभावप्रमा व्यभिचारज्ञानत्वेन दूषिका क्लृप्तत्वात्,
न स्वतन्त्रा। अत एव पक्षे साध्याभावज्ञानत्वेन प्रति-

बन्धकत्वं न तु साध्याभावसमानाधिकरणसाधनज्ञानत्वे-
नेति प्रत्युक्तम्, तस्य लघुत्वेऽप्यक्लृप्तत्वात् । अथ प्र-
त्यक्षादौ प्रमामात्रं प्रति स्वातन्त्र्येण बाधो दोषत्वेन
क्लृप्त इत्यनुमितावपि स एव दोष इति चेन्न । तर्हि हे-
त्वाभासः अनुमित्यसाधारणदोषस्य तत्त्वात् मनोयोगा-
भाववत् स्वरूपसत एव प्रतिबन्धकत्वात् हेतुत्वाभिम-
तावृत्तित्वेनाऽसाधकतालिङ्गत्वाभावाच्च । बाधितपक्षकत्वं
लिङ्गमिति चेन्न । अन्यत्र तथा दूषकत्वाकल्पनात् ॥

उच्यते । पक्षे साध्याभावनिश्चयः साध्याभावज्ञा-
नप्रमात्वनिश्चयात्, ज्ञानमात्रादर्थनिश्चये प्रामाण्यग्रहवै-
यर्थ्यं भ्रमत्वेन ज्ञातादर्थनिश्चयप्रसङ्गश्च, तथा चोपजीव्य-
त्वेनाधिकबलत्वेन वा पक्षे साध्याभावज्ञानस्य प्रमात्व-

---

तथा चेत्यादि । अधिकबलत्वेनाऽधिकरणरूपत्वेनाऽपेक्षणीयो व्य-

---

अथ बाधसिद्धान्तः ।

---

अधिकं बलं यस्येति भ्रमं निरस्यन्नाह अधिकबलत्वेनेति ।
तृतीयासङ्गत्यर्थं पूरयति अपेक्षणीय इति । साध्याभाववत्ताज्ञानस्य
प्रमात्वनिश्चयं विनापि व्यभिचारस्य सत्त्वात् व्याचष्टे व्यभिचार-
निश्चय इति । ननु व्यभिचारज्ञानस्य न साध्याभावनिश्चयमात्राधी-
नत्वं गृहीताप्रामाण्यके तस्मिन्नसत्यपि व्यभिचारस्य ज्ञानात् किं तु
साध्याभावज्ञानप्रामाण्यनिश्चयाधीनत्वमेवेत्यतः तथैव व्याचष्टे

निश्चये सव्यभिचारो नान्यथा, उभयथापि साध्याभाव-
निश्चयाधीनव्यभिचारज्ञानात् पूर्वं ज्ञातं साध्याभावज्ञा-

---

भिचारनिश्चयः। साध्याभावनिश्चयेति। साध्याभावो निश्चीयते येन प्रामाण्यनिश्चयेन तदधीनेत्यर्थः। अत्रेदं तत्त्वम्। साध्याभाववान् साध्यवदन्यो वा पक्षः, पक्षावृत्तिसाध्यं, पक्षे साध्याभावः, पक्ष-निष्ठसाध्यभाववत्त्वादिकं, साध्यादेः पक्षावृत्तित्वादिकं, साध्यवत्-सामान्यादेः पक्षान्यत्वादिकं, विशिष्टसाध्ये पक्षादेर्विशेष्याभावव-त्त्वादिकं, यथामतं पक्षे साध्यवत्ताज्ञानस्य साक्षाद्विरोधि प्रत्येकमेव

---

साध्याभाव इति। निश्चीयते येनेति। निश्चयविषयतापन्नः क्रियते येन विशेषणेनेत्यर्थः। निश्चितप्रामाण्यकज्ञानस्यैव प्राच्यैरर्थनिश्चायक-त्वोपगमादिति भावः। अत्र बाधग्रन्थे। साध्याभाववत्त्वादिकमित्या-दिना पक्षस्य साध्यवदन्यत्वोपग्रहः। साध्यादेरिति। आदिपदाभ्यां साध्यवत्त्वस्य पक्षवृत्त्यन्यत्वाद्युपग्रहः। वन्हिमतश्चत्वरस्य पर्वता-न्यत्वं न बाध इत्यतः सामान्यपदम्। विशिष्टसाध्य इति। गुणः प-टान्यत्वविशिष्टद्रव्यत्ववानित्यादौ गुणादेर्द्रव्यत्वाद्यभाववत्त्वमित्यर्थः। आदिना विशेष्यस्य पक्षावृत्तित्वोपग्रहः। विशिष्टे साध्ये पक्षस्य वि-शेषणाभावस्तु नाभासः तद्ग्रहदशायां विशिष्टवत्ताज्ञानहेतोर्धर्मिणि विशेषणवत्तानिश्चयस्यैव विरहेण विशिष्टवत्ताज्ञानस्यानुदयात् तत्र तस्याऽविरोधित्वात्, अत एव साध्यविशिष्टहेतुमत्त्वं तु पक्षे साध्य-ग्रहं विना दुर्ग्रहमित्यादिकं स्वयमेव प्रागुक्तमिति ध्येयम्। यथामतं विरोधीत्यन्वयः। तन्नानुभवबलाद्भिन्नविषयकस्यापि ज्ञानस्य प्रति-बन्धकत्वादुपात्तं निखिलमेव साध्यवत्ताविरोधित्वात् बाध इति प्राञ्चः। समानविषयकस्यैव ज्ञानस्य लाघवेन विरोधित्वात् पक्षः साध्याभाववान् पक्षे साध्याभाव इत्येतयोरेव बुद्ध्योर्विरोधित्वमि-त्यपरे। वस्तुतो यत्र पक्षापेक्षया साध्याभावो लघुः तत्र तत्प्रकारक एव बाधनिश्चयो विरोधी, यथा चैत्रावलोकितह्रदो वन्हिमान् इत्यादौ,

बाधः। तन्निश्चयश्च विरोधिनिश्चयत्वेन दोषविशेषाद्यजन्यज्ञानमात्र एव विरोधी । अत एवाऽनन्वयनिश्चयविरहो योग्यतेत्याचार्य्याः ।

---

तत्प्रकारकनिश्चयत्वापेक्षया साध्याभावप्रकारकनिश्चयत्वस्यैव लघुत्वेन साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वात् । यत्र तु साध्याभावापेक्षया पक्ष एव लघुस्तत्र साध्याभावधर्मिकः पक्षनिश्चय एव साध्यवत्ताज्ञानविरोधी, यथा जलह्रदः चैत्रावलोकितवन्हिमानित्यादौ, तत्र साध्याभावनिश्चयापेक्षया पक्षप्रकारकनिश्चयत्वस्यैव लाघवेन विरोधितावच्छेदकत्वात् । यत्र तु पक्षः साध्याभावश्च द्वयमेव तुल्यशरीरं तत्र साध्याभावप्रकारकस्यैव पक्षप्रकारकस्यापि बाधनिश्चयस्य साध्यवत्ताज्ञानविरोधित्वं विनिगमकाभावात्, यथा घटाभावो वन्हिमानित्यादाविति तु परमार्थः । विरोधिनिश्चयत्वेनेति । विरोधितावच्छेदकतत्तद्धर्मप्रकारकनिश्चयत्वेनेत्यर्थः । दोषविशेषेति । साक्षात्कारत्वानिरूपिततत्प्रकारताकज्ञानमात्र इत्यर्थः । तेन दोषाद्यननुगमेपि न क्षतिः, न वा लौकिकसन्निकर्षजन्यस्यापि संशयस्य बाधनिश्चयदशायामुत्पादः, सन्निकृष्टकोटावपि सन्देहप्रकारतायाः साक्षात्कारत्वानिरूपितत्वादिति ध्येयम । ज्ञानसामान्यविरोधितायां संवादमाह अत एवेति । योग्यता शाब्दधीहेतुः । अत्रेदं बोध्यम । लौकिकसन्निकर्षजन्ये दोषविशेषजन्ये च साक्षात्कारत्वनिरूपिततत्प्रकारताकचाक्षुषादौ भ्रमत्वज्ञानाद्यनास्कन्दितस्तदिन्द्रियजन्य एव तदभावनिर्णयो लौकिकालौकिकसाधारणो विरोधी। सत्यपि स्पार्शनादिविरोधिनिर्णये तादृशप्रकारताकचाक्षुषाद्युत्पादात्तदिन्द्रियजन्यत्वनिवेशः । नायं स्थाणुरिति चाक्षुषभ्रमस्थले च विशेषदर्शनेनापि तस्याऽप्रामाण्यज्ञानास्कन्दनेनैव सम्पादितैवाऽयंस्थाणुरिति चाक्षुषोत्पत्तिः । अस्तु वा भ्रमत्वज्ञानास्कन्दितस्यैव विशेषदर्शनाभावविशिष्टस्य स्थाणुत्वाभावचाक्षुषस्य तादृशस्थाणुत्वचाक्षुषविरोधित्वम्, अत एव भ्रमोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुत्वं वर्णयन्ति मिश्राः । शङ्खे पीतत्वभ्रमदशायां च सत्यपि पीतत्वाभावव्याप्यदर्शने पित्तदोषेणैव प्रतिबन्धान्न पीतत्वाभावस्य चाक्षुषं, तत्र विशेषदर्शनस्य उत्तेजकत्वं वा न वाच्यं शब्दानुगमस्याऽनुपयुक्तत्वात्।यदि च

विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुमापकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहविरोधित्वे च सति प्रकृतपक्षप्र-

————

सत्यपि मालिन्यदोषोत्पन्ने श्वैत्याभावचाक्षुषे मालिन्यमार्जनोत्तरमेव शङ्खे श्वैत्यचाक्षुषं तदा शङ्खधर्मिकनिरुक्तश्वैत्यचाक्षुषं प्रति मार्जनाद्यभावविशिष्टस्यैव श्वैत्याभावचाक्षुषस्य विरोधित्वं वाच्यम्। अत एव घटवति भूतले यत्किञ्चिदवच्छेदेनालोकसंयोगाद्घटाभावचाक्षुषे सत्यपि सर्वावच्छेदेनालोकसंयोगानन्तरमेव भूतलं घटवदिति चाक्षुषस्योत्पादेऽपि न क्षतिः। तत्रापि सर्वावयवावच्छिन्नालोकसंयोगानामुत्तेजकत्वात्। वस्तुतो विनश्यदवस्थेनापि पित्तादिना जनिते श्वैत्याद्यभावस्य भ्रमे सत्यपि पित्तादिनाशानन्तरक्षणे शङ्खादौ श्वैत्यादिचाक्षुषोत्पत्तेरानुभविकत्वात् लौकिकप्रत्यक्षं प्रति नैकविधमपि विपरीतज्ञानं विरोधि किन्तु तज्जनकीभूताः पित्तादिदोषा एव तत्प्रतिबन्धकाः। तत्प्रतिबध्यतावच्छेदकं तु न श्वैत्यलौकिकचाक्षुषत्वं, सत्यपि पित्ते घटादेः श्वैत्यग्रहात्, नापि शङ्खधार्मिकतादृशचाक्षुषत्वं, सति पित्ते शङ्खे श्वैत्यस्य निर्विकल्पकापत्तेः, किं तु शङ्खश्वैत्यलौकिकचाक्षुषत्वम्। अत एव शङ्खस्य पित्तचक्षुःसन्निकृष्टतादशायामपि श्वेतशङ्खकालीनो घट इत्यादिश्वैत्योपनीतदर्शनस्य नाऽनुपपत्तिः। एवं शङ्खे पीतत्वस्य वंशे सर्पत्वस्य तमसि नीलरूपस्य दर्पणादौ मुखादेर्दोषविशेषजन्यप्रत्यक्षे दिङ्मोहप्रत्यक्षे च न किञ्चिदपि विपरीतज्ञानं विरोधि, सत्यपि समानेन्द्रियजन्यबाधनिश्चये तादृशप्रत्यक्षाणामानुभाविकत्वात्। यदि च पित्तादिसमानकालोत्पन्नशङ्खधर्मिकपीतत्वाद्यभावलौकिकप्रत्यक्षस्योत्तरक्षणे न पित्तादिदोषाधीनपीतत्वादिभ्रमस्तदा शङ्खादिधर्मिकपीतत्वादिज्ञानमात्रं प्रत्येव तद्धर्मिकपीतत्वाद्यभावलौकिकनिश्चयस्य विरोधित्वं वाच्यम्। एवमन्यत्रापि यथानुभवं प्रतिबध्यप्रतिबन्धकभावः सुधीभिरुल्लेख्य इति सङ्क्षेपः।

प्रकृतेत्यादि। साध्याभावव्याप्यवत्पक्षात्मनः सत्प्रतिपक्षस्य वारणाय प्रथमं सत्यन्तम्। यादृशविशिष्टविषयकत्वेन परामर्शस्य प्रकृतपक्षधर्मिकप्रकृतसाध्यवैशिष्ट्यग्रहविरोधिगोचरानुमि-

कृतसाध्यवैशिष्ट्यग्रहविरोधित्वम् । पक्षादेः साध्यासमानाधिकरण-

———

तिजनकत्वं तदन्यत्वे सतीत्यर्थः । अत्र प्रकृतपक्षधर्मिकप्रकृतसाध्य-वत्ताग्रहविरोधित्वं न तादृशग्रहविरोधिविषयतामात्रं, वन्हिमत्पर्वतो वन्हिव्याप्याभाववानित्यादिस्थले वन्हिमत्पर्वतस्यापि तादृशविरोधित्वात्तद्घटकवन्हिव्याप्यवत्पर्वताद्यात्मके तत्रत्यबाधे अव्याप्त्यापत्तेः, नापि प्रकृतपक्षकप्रकृतसाध्यवत्ताज्ञानत्वावच्छिन्नं प्रति यादृशविशिष्टविषयकत्वेन प्रतिबन्धकत्वं तत्त्वमेव तथा, निर्वन्हिः पर्वतो वन्हिमानित्यादौ तादृशग्रहत्वावच्छिन्नप्रतिबध्यत्वाप्रसिद्ध्या तत्रत्यबाधाव्याप्तेः, किं तु प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्ताग्रहत्वाव्यापकविषयिताशून्यग्रहत्वावच्छिन्नं प्रति यादृशविशिष्टविषयकत्वेन साक्षात्प्रतिबन्धकत्वं तत्त्वमेव तथा वाच्यं, तथा च विषयितामात्रस्यैव यथाकथञ्चित्साध्यविशिष्टपक्षग्रहत्वाव्यापकत्वात् तादृशग्रहाप्रसिद्ध्या बाधमात्राव्याप्तिरतः पक्षसाध्ययोः प्रकृतत्वद्वयोपादानम् । साक्षादित्युपादानाद्वन्हिमद्ध्रदो वन्ह्यभावव्याप्यव्याप्याभाववानित्यादौ वन्ह्यभावव्याप्यवत्त्वविशिष्टह्रदस्य विरोधिव्याप्यवत्ताविधया प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वात्तद्घटके वन्ह्यभावव्याप्यव्याप्यवद्ध्रदाद्यात्मकबाधे नाव्याप्तिरिति ध्येयम् । साध्यपक्षाप्रसिद्ध्यावारणाय द्वितीयं सत्यन्तम् । ह्रदो वन्हिमान्धूमादित्यादौ प्रकृतपक्षादिग्रहविरोध्यप्रसिद्ध्या तत्रत्यबाधाव्याप्तेः, प्रसिद्धपक्षसाध्यस्थले तादृशग्रहाविरोधित्वस्यानुपादेयत्वात् । ह्रदत्वादिप्रकारकग्रहत्वावच्छिन्नं प्रति ह्रदभिन्नत्वादिज्ञानत्वेन समानविशेष्यताप्रत्यासत्त्या प्रतिबन्धकत्वमते तत्रापि पक्षादिग्रहविरोधित्वस्य सुवचत्वाच्च । न च वन्हिमज्जलह्रदो वन्ह्यभावव्याप्याभाववान् इत्यादौ वन्ह्यभावव्याप्यवज्जलह्रदाद्यात्मकबाधे अव्याप्तिः तस्य प्रकृतपक्षग्रहविरोधित्वादिति वाच्यम् । तदभावव्याप्यवत्तादिव्यावृत्तस्यैव पक्षादिग्रहविरोधित्वस्योक्तत्वात्, तस्याश्रयासिद्धित्वेनाऽलक्ष्यत्वेऽपि क्षत्यभाव इत्यपि वदन्ति । व्यभिचारादावतिव्याप्तिवारणायाह प्रकृतपक्षेत्यादि । अत्रापि पक्षसाध्ययोः प्रकृतपदव्यावृत्तिः प्रागुक्तरीत्या द्रष्टव्या । ननु पक्षादेः साध्यासमा-

नप्रमात्वमेव दोष उपजीव्यत्वात् । यदि च पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चयो नाऽनुमितिविरोधी, तदा व्याप्तिपक्षधर्मतया हेतुज्ञानं विशेषदर्शनत्वेन पक्षे साध्याभावज्ञानं परिभूय साध्यं साधयेदेव पर्वते धूम इव व-

---

धर्मवत्त्वादिकमपि बाध एव । साध्याभाववत्पक्षादिज्ञानप्रमात्वन्तु न बाधः । तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात्, अवगाहित्वे तु तद्विषयत्वेनैव प्रतिबन्धकत्वात् प्रमात्वनिश्चयस्यान्यत्र प्रतिबन्धकत्वाकल्पनाच्च ।सर्वत्र निश्च-

---

नाधिकरणधर्मवत्ताज्ञानस्यापि साध्यविरोध्यनुमापकत्वात् साध्यवत्ताधीविरोधित्वाच्च तत्रातिव्याप्तिरत आह पक्षादेरिति । ननु पक्षधर्मिकसाध्यवत्तानिश्चयसामान्यप्रतिबध्यतावच्छेदकत्वे सतीत्युक्त्यैव प्रतिपक्षवारणसम्भवात् विरोध्यनुमापकत्वादिप्रवेशे गौरवमत आह पक्षादेरिति तु नव्याः । आदिना साध्यासमानाधिकरणधर्मवत्पक्षाद्युपग्रहः । बाध एवेति मतभेदेन । नाऽतः परामर्शग्रन्थोक्तस्य साध्यवत्ताबुद्धिं प्रति तदविरोधित्वस्यासङ्गतिः । मूलोक्तं निरस्यति साध्याभावेति । पक्षधर्मिकसाध्यवत्ताज्ञानविरोधिवैशिष्ट्यावगाहिज्ञानप्रमात्वमित्यर्थः । तेन साध्यवदन्यत्वादिज्ञानप्रमात्वस्योपग्रहः । ननु साध्याभाववति साध्याभावप्रकारकमिदं ज्ञानमित्याकारकः साध्याभाववति पक्षे साध्याभावप्रकारकमिदं ज्ञानमित्याकारको वा निरुक्तप्रमात्वस्य ग्रहो विरोधी, तत्र नाद्य इत्याह तज्ज्ञानस्येति । निरुक्तप्रमात्वज्ञानस्येत्यर्थः । नान्त्य इत्याह अवगाहित्व इति । तद्विषयत्वेनैवेति । पक्षादौ साध्याभावादिविषयकत्वेनैवेत्यर्थः । तथा च प्रमात्वविषयत्वेनाऽप्रतिबन्धकत्वात्तस्याभासत्वं दुर्घटमिति भावः । नन्वेवमुक्तरीत्या प्रवृत्त्यादावपि फलानुपधायकत्वादिनिश्चयस्य प्रमात्वग्रहः प्रतिबन्धको न स्यात् अतस्त्रे-

धस्य हेतुत्वे प्रतिबन्धकत्वे च भ्रमत्वाग्रहः, संशयसाधारणज्ञानमात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजकः, अन्यथाकाङ्क्षाक्ष-

———

त्यापत्तिमाह प्रमात्वनिश्चयस्येति । ननु प्रमात्वनिश्चयस्याविरोधित्वे भ्रमनिश्चयत्वेन गृह्यमाणादपि बाधनिर्णयाद्विशिष्टधीर्न स्यादत आह सर्वत्रेति । हेतुत्व इति दृष्टान्तार्थम् । भ्रमत्वाग्रहः । प्रयोजक इत्यन्वयः । अत्र यद्यपि यद्रूपावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकत्वं जनकत्वं वा तद्रूपावच्छिन्नाभाववत्त्वगर्भस्यैव भ्रमत्वस्याग्रहः प्रयोजको वाच्यः अन्यथाऽतिप्रसङ्गात्, तथा च भूतलं नीलघटवदित्यादिनिश्चयस्य नीलघटत्वावच्छिन्नाभाववद्गर्भभ्रमत्वग्रहदशायां भूतलं न घटवदिति प्रतीतिर्न स्यात् घटत्वावच्छिन्नाभाववत्ताबुद्धिं प्रति नीलघटत्वावच्छिन्नवत्तानिश्चयत्वेनाऽप्रतिबन्धकत्वाल्लाघवेन घटत्वावच्छिन्नवत्तानिश्चयत्वेनैव तथात्वात्, तथापि यादृशरूपावच्छिन्नप्रकारिताव्यक्तिर्वस्तुगत्या प्रतिबन्धकत्वस्य जनकत्वस्य वाऽवच्छेदिका तत्र तादृशरूपावच्छिन्नाभाववत्त्वगर्भस्य भ्रमत्वस्य ग्रहस्तन्त्रमित्यदोषः । कथितस्थले नीलघटत्वावच्छिन्नप्रकारिताव्यक्तेरेव घटत्वावच्छिन्नप्रकारितात्वेन घटसामान्याभावबुद्धिप्रतिबन्धकतावच्छेदकत्वात् विशेषणविशेष्यभावापन्नाभ्यां नीलत्वघटत्वाभ्यामवच्छिन्नाया एव प्रकारिताव्यक्तेर्नीलघटत्वावच्छिन्नप्रकारितात्वात् । एवं च साधनभेदेपि वन्ह्यभाववदवृत्तित्वावच्छिन्नप्रकारिताकपर्वतनिश्चयत्वेनैवानुगतरूपेण तादृशनिश्चयोत्तरानुमितिहेतुत्ववादिनां मतेपि वन्ह्यभाववदवृत्तिधूमवान्पर्वत इत्यादिपरामर्शे वन्ह्यभाववदवृत्तिधूमत्वावच्छिन्नाभावगर्भस्य धूमसामान्याभावगर्भस्य च भ्रमत्वस्य ग्रहदशायां न पर्वते वन्ह्यनुमितिः, विशिष्टधूमत्वावच्छिन्नायाः धूमत्वावच्छिन्नाया वा तत्रत्यप्रकारिताव्यक्तेरेव वन्ह्यभाववदवृत्तित्वावच्छिन्नप्रकारितात्वेनाऽनुमितिजनकतावच्छेदकतया तादृशविशिष्टधूमत्वाद्यवच्छिन्नाभाववत्त्वादिगर्भभ्रमत्वग्रहस्यापि तत्रोत्तेजकत्वादिति ध्येयम् । तथात्वे । हेतुत्वे प्रतिबन्धकत्वे च । अन्यथेति । प्रमात्वनिश्चयः प्रयोजको भवेदित्यन्वयः । क्रमेण शाब्दधीप्रवृत्त्यनुमित्यादेः कारणतावच्छेदकानिविष्टो भवेदित्यर्थः । ननु प्रमात्वज्ञान-

न्हिम । न च साध्याभावबुद्धिरेवाऽगृह्यमाणविशेषा सत्प्रतिपक्षवत् प्रतिबन्धिकेति वाच्यम् । रजते नेदं रजतमिति ज्ञानेऽपि विशेषदर्शनेन रजतत्वस्य शङ्खे पीत-

---

तिसाध्यत्वादिनिश्चयहेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यता व्यभिचारज्ञानादीनाञ्च प्रमात्वज्ञानं प्रयोजकीभवेत् । शङ्खादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमितिर्न विना तदप्रामाण्यग्रहं, न हि स्वरूपसत्यपि बाधनिश्चये शाब्दमानसादिज्ञानमुत्पद्यते । अथ लाघवेन संशयसाधारणं संसृष्टत्वज्ञानमेव शाब्दानुमित्योः कारणम्, आस्ताञ्च तस्यैव विरोधितया प्रकरणसमो बाधश्च हेत्वाभासोऽसिद्धिरिव परामर्शस्य, विलीयताञ्चाऽप्रसिद्धसा-

---

ध्य विरोधित्वे शङ्खो न श्वेत इति भ्रमसत्त्वेऽपि शङ्खः श्वेत इत्यनुमितिर्न स्यात् अतस्तत्रेष्टापत्तिमाह शङ्खादाविति । स्वरूपेति । प्रमात्वेनाऽनिश्चीयमानेऽपीत्यर्थः । मिश्रोक्तमाशङ्कते अथेति । लाघवेनेति । बाधनिश्चयाभावहेतुत्वापेक्षया लाघवेनेत्यर्थः । प्राथमिकप्रत्यक्षे व्यभिचाराद्गुरोरपि बुभुत्साविरहविशिष्टबाधनिश्चयाभावस्यैव विशिष्टप्रत्यक्षे हेतुत्वं न तु संसृष्टत्वज्ञानस्येत्याशयेनाह शाब्दानुमित्योरिति । जन्यता तु प्रत्यक्षान्यत्वविशिष्टज्ञानत्वेन विशिष्टानुमितित्वादिना वेत्यवधेयम् । यद्यपि बाधनिश्चयदशायां स्मरणोपमित्योरप्यनुदयात्तत्रापि संसृष्टत्वधियः कारणत्वमुचितं, तथाप्युपमितेरतिरिक्तत्वे विवादात् स्मरणस्योद्बोधकविरहादपि बाधदशायामनुत्पत्तिसम्भवात् शाब्दानुमित्योरेवोपादानम् । ननु बाधस्यानुमित्यविरोधित्वे हेत्वाभासता न स्यादत आह आस्तां चेति । तस्यैव पक्षसाध्ययोः संसृष्टत्वज्ञानस्यैवेत्यर्थः । परामर्शस्येति । विरोधितया हेत्वाभास इति पूर्वेणान्वयः । दोषमात्रस्यैवाऽनुमितिजनकज्ञानविरोधित्वादिति भावः । ननु पक्षसाध्ययोः संसृष्टत्वज्ञानस्यानुमितिहेतु-

त्वज्ञाने शुक्लत्वस्य चानुमानात्, वादिवाक्येन पक्षे साध्याभावज्ञानादनुमानोच्छेदप्रसङ्गाच्च । अथ पक्षे

---

ध्यकमनुमानमिति चेन्न । संशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषे विना अनुमित्यनुत्पादप्रसङ्गात्, सति विशेषदर्शने संशयायोगादिति। एतेन लाघवात् प्रमात्वेन निर्णीयमानं बाधज्ञानं विरोधीति परास्तम्। विपरीतमेव लाघवं, स्फुटतरञ्च तद्भावसाध्ये। तत्र

---

त्वे धूमव्यापकवन्ह्यभाववज्जलमित्यादिपरामर्शाज्जले धूमाभाव इत्याद्यनुमितिर्न स्यात्साध्याप्रसिद्ध्या तत्संसृष्टत्वज्ञानासम्भवात् अतस्तत्रेष्टापत्तिमाह विलीयतां चेति । ननु परामर्शस्य प्रागुत्पन्नं समकालोत्पन्नमुत्तरकालोत्पन्नं वा संसृष्टत्वज्ञानं हेतुः, तत्र नाद्य इत्याह संशयेति । संशयासत्त्वसमये परामर्शोत्पादे अनुमित्यनुत्पादप्रसङ्गादिति योजना । प्रागुत्पन्नस्य निश्चयात्मनः संसृष्टत्वज्ञानस्यानुमितिहेतुत्वमसम्भावितं पक्षतासंपत्त्यर्थमपेक्षितया परामर्शोत्तरानुमित्सया तस्य नाशादतो निश्चयासत्त्वदशायामिति नोक्तम् । ननु परामर्शकालोत्पन्नमेव संसृष्टत्वज्ञानमनुमितिहेतुरिति द्वितीयोऽस्तु कल्पः तस्य सिद्धत्वनियमेऽप्यनुमित्सयैव पक्षतासम्भवादत आह सिद्धिसिषाधयिषे विनेति । परामर्शदशायां तत्सामग्र्या प्रतिबन्धात्साध्यसंशयासम्भवात् सिद्धिपर्यन्तानुसरणम् । ननु परामर्शोत्तरमेव संशयात्मकं संसृष्टत्वज्ञानं भविष्यतीत्यस्तूत्तरः कल्प इत्यत आह सतीति । संशयायोगादिति । व्याप्यदर्शनोत्तरं साध्यवत्तानिश्चयस्य सम्भवेऽपि पक्षतासंपत्त्यर्थमनुमित्सापेक्षणे तावत्पर्यन्तं परामर्श एव न तिष्ठेदिति भावः । ननु भ्रमत्वज्ञानानास्कन्दितबाधनिश्चयत्वेन न प्रतिबन्धकत्वं किं तु प्रमात्वनिश्चयास्कन्दितबाधज्ञानत्वेनैव तथात्वं निश्चयत्वस्योभयत्र प्रवेशेऽपि भ्रमत्वापेक्षया प्रमात्वस्य लघुत्वादित्याशङ्कां निराचष्टे एतेनेति। [स्वरूपसत्यपि बाधनिश्चये शाब्दमानसानुत्पादेन बाधनिश्चयत्वस्य लघुत्वादित्यर्थः ।] ननु

साध्याभावप्रमैव साध्याभावहेतुविषया व्यभिचारज्ञान-
त्वेन दोषो न तु तस्याः प्रमात्वज्ञानमपीति चेत, तर्हि

---

हि गोत्वाद्यप्रकारकं गोत्वाभावादिप्रकारकं ज्ञानं बाधनिश्चयः, तथा
च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वज्ञानाभावो भ्रमत्वग्र-
हविरहः। बाधग्रहश्च पक्षे गोत्वाद्यप्रकारकं ज्ञानं, तस्य च गोत्वा-
दिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वाद्यप्रकारकं गोत्वाभावव-
द्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्रकारकज्ञानं प्रमात्वनिश्चय इति।
उक्तप्रायञ्च तत्तत्कार्य्यं प्रति प्रतिबन्धकानां कारणानाञ्च प्रमात्वेन

---

बाधग्रहस्य प्रमात्वनिर्णयदशायां शाब्दादिज्ञानानुत्पादो विवाद-
ग्रस्त इत्यत आह विपरीतेति। प्रमात्वेन निश्चीयमानबाधज्ञानत्वापे-
क्षया भ्रमत्वज्ञानानास्कन्दितबाधनिश्चयत्वेनैव सर्वत्र प्रतिबन्धक-
तायां लाघवं प्रमात्वनिश्चयत्वापेक्षया बाधनिश्चयत्वस्य लघुत्वादि-
त्यर्थः। न वा सर्वत्र साध्ये बाधग्रहस्य प्रमात्वं भ्रमत्वापेक्षया ल-
घुतरं येन तद्घटितमेव प्रतिबन्धकतावच्छेदकं स्यादित्याशयेनाह
स्फुटतरं चेति। तत् लाघवम्। लाघवस्फुटीकरणाय स्वमतं व्या-
करोति गोत्वाद्यप्रकारकेत्यादि। गौरवं स्फुटीकर्तुं परमतं व्याकरो-
ति बाधग्रहश्चेत्यादि। प्रकारत्वादीत्यादिना गोत्वाभाववद्विशेष्य-
कगोत्वाभावप्रकारत्वाभावस्योपग्रहः। ननु भ्रमत्वज्ञानानास्कन्दि-
तबाधनिश्चयत्वेन प्रतिबन्धकत्वेऽप्रामाण्यनिश्चयानास्कन्दितमेव भ्र-
मत्वज्ञानं प्रवेश्यं प्रमात्वेन निश्चीयमानबाधज्ञानत्वेन प्रतिबन्धकता-
यां तु अप्रामाण्यज्ञानास्कन्दित एव प्रामाण्यनिश्चयो निविष्ट इति ला-
घववैपरीत्येन प्रमात्वेन निश्चीयमानं बाधज्ञानमेव प्रतिबन्धकं
युक्तमत आह उक्तप्रायं चेति। तथा च प्रमात्वज्ञानस्य प्रयोजकत्वे
व्याप्त्यादिज्ञानं प्रत्यपि प्रमात्वेन निश्चीयमानमेव व्यभिचारादिज्ञानं
विरोधि स्यादिति भावः। पूर्वं प्रमात्वनिश्चयस्यैव प्रतिबन्धकत्वमुक्तं
न तु प्रमात्वेन निश्चीयमानस्येत्यतः प्रायपदम्। यद्यपीयं प्रतिब-

प्रमायाः अप्रमात्वज्ञाने भ्रान्तानुमितिर्न स्यात्, न स्याच्च पक्षे साध्याभावज्ञानप्रमात्वभ्रमादनुमितिप्रतिबन्धः । ननूपजीव्यत्वेऽप्यत्र साध्याभावप्रमेति ज्ञानं न स्वतोदूषकं, क्लृप्तत्वात् पक्षे साध्याभावनिश्चयं कुर्वत् व्यभिचार-

---

निश्चीयमानतया तथात्वापत्तिरिति । न च सति विशेषदर्शने विपरीतनिश्चयोऽकिञ्चित्करः तत्सत्त्वेऽपि विशेषदर्शनेन प्रत्यक्षोत्पादादिति वाच्यम् । विशेषदर्शनेन तन्नाशानन्तरमेव प्रत्यक्षोदयात्, परैरपि क्वचित् प्रत्यक्षविशेष एव विपरीतनिश्चयविशेषस्यैव

---

न्निरनुसरं, तथापि प्रमात्वस्य नानात्वादेकविधप्रमात्वेन निश्चीयमानबाधज्ञानत्वेन प्रतिबन्धकत्वे अन्यविधप्रमात्वेन निश्चीयमाने सत्यपि बाधग्रहेऽनुमितिः स्यात् तादृशतादृशप्रत्येकप्रमात्वेन निश्चीयमानबाधज्ञानत्वावच्छिन्नाभावानां बहूनां हेतुत्वे च महागौरवापत्तिः स्यात्, अस्माकं तु यद्यदप्रामाण्यज्ञानदशायां बाधनिश्चये सत्यपि विशिष्टधीस्तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टबाधनिश्चयत्वेनैव प्रतिबन्धकत्वादप्रामाण्यस्य नानाविधत्वेपि क्षत्यभावादित्येव मूलयुक्तिरिति ध्येयम् । ननु तद्व्याप्यदर्शनाभावविशिष्टस्यैव बाधनिश्चयस्य विशिष्टधीप्रतिबन्धकत्वाद्बाधस्यानुमितिविरोधित्वं दुर्घटमित्याशङ्क्य निराचष्टे न चेति । वाच्यमित्यन्वयः । अकिञ्चित्करः । प्रतिबन्धाक्षमः । तत्सत्त्वेपि बाधनिश्चयसत्त्वेपि । तन्नाशानन्तरमेवेति । बाधनिश्चयनाशोत्तरमेवेत्यर्थः । तथा च बाधसत्त्वे प्रत्यक्षमप्यसिद्धमेवेति भावः । सत्यपि बाधनिर्णये लौकिकादिप्रत्यक्षस्यानुभविकत्वमालम्ब्याह परैरपीति । प्राच्यैरपि, क्व चित् प्रत्यक्षविशेष एव दोषविशेषलौकिकसन्निकर्षादिजन्यात्मके प्रत्यक्षविशेषे एव, विपरीतनिश्चयविशेषस्यैव समानेन्द्रियजन्यबाधनिश्चयस्यैव, तथात्वोपगमात् सति विशेषदर्शनेऽकिञ्चित्करत्वोपगमादित्यर्थः । सत्यपि

ज्ञानद्वारेति चेन्न । अत्र साध्याभावप्रमेति ज्ञानान्निगमतः साध्यज्ञानानुदयात् तस्यैव प्रतिबन्धकत्वात्, शाब्दादौ तथा दर्शनात् । साध्याभावप्रमाविषयवृत्तित्वस्य

---

तथात्वोपगमाच्चान हि शाब्दादिबोधेऽपि विशेषादर्शनविशिष्टत्वेन स विरोधी, गौरवात् मानाभावाच्च । न वा चाक्षुषादिप्रत्यक्षे मानसादिविपरीतनिश्चयो विरोधी । उपयुज्यते च क्वचिद्विशेषदर्शनम-

---

पीतत्वाभावव्याप्यदर्शने शङ्खादौ पीतत्वादिभ्रमस्य पीतत्वाभावचाक्षुषविरोधित्वेनाऽकिञ्चित्करत्वाभावात्क्वचिदित्युक्तम् । तथा च दोषविशेषलौकिकसन्निकर्षादिजन्यस्थाणुत्वादिमत्ताचाक्षुषादिकं प्रति विशेषदर्शनाभावविशिष्टस्थाणुत्वाद्यभाववत्ताचाक्षुषत्वादिना प्रतिबन्धकत्वेऽप्यनुमित्यादौ तदभावनिश्चयत्वेनैव प्रतिबन्धकत्वं न तु तत्र विशेषदर्शनस्योत्तेजकत्वं, तदेव स्फुटीकरोति न हीति । सः विपरीतनिश्चयः । गौरवादिति । परोक्षविशिष्टबुद्धिं प्रति लाघवाद्विपरीतनिश्चयमात्रेण प्रतिबन्धकत्वादिति भावः । प्रामाणिकगौरवस्याऽदोषत्वादाह मानाभावाच्चेति । ननु दोषविशेषादिजन्यप्रत्यक्षे विशेषदर्शनाभावविशिष्टविपरीतनिश्चयमात्रस्यैव विरोधित्वाद्विपरीतनिश्चयविशेषस्यैवेति प्रागुक्तं विफलमत आह न वेति । चाक्षुषादिप्रत्यक्षे दोषादिजन्ये । मानसादीत्यादिनाऽऽनुमानिकाद्युपग्रहः । तथा च मानसादिबाधनिश्चयदशायां दोषविशेषादिजन्यचाक्षुषाद्युत्पत्त्यर्थमेव समानेन्द्रियजन्यार्थकस्य विशेषस्येत्यस्याऽभिधानमिति भावः । ननु सत्यपि बाधनिर्णये विशेषदर्शनोत्तरं क्वचिच्छाब्दादिबोधस्यानुभाविकत्वात्परोक्षविशिष्टबुद्धिस्थलेऽपि विशेषदर्शनस्योत्तेजकत्वम्, अन्यथा तस्य नोपयोगः स्यादत आह उपयुज्यते चेति । क्वचिदिति । यत्र विशेषदर्शनं न बाधस्याऽप्रामाण्यग्राहकं तत्र बाधनाशोत्तरमेव विशिष्टबुद्धिस्वीकारादिति भावः । न

हेतुवृत्तित्वादसाधकत्वेन साध्याभावप्रमाया हेत्वाभासत्वम् । साधारण्येऽपि ज्ञायमानं सत् यदनुमितिं प्रतिबन्धाति तस्यैव हेत्वाभासत्वम् । न च साध्याभावप्रमाऽत्रेति

---

प्रामाण्यग्राहकत्वेन बाधबुद्धेः । न चैवं बाधावतारदशायां पक्षे हेतोरग्रहेऽज्ञानलक्षणाऽसिद्धिः, ग्रहे च व्यभिचारधीरेवेति वाच्यम् । बाधग्रहपरामर्शयोर्भेदात्, अभेदेऽपि पक्षः साध्यव्याप्यहेतुमान् साध्याभाववांश्च इति ग्रहस्य परस्परोपरागानवगाहिनो व्यभिचाराविषयत्वात् । एकत्र व्यभिचाराव्यभिचारयोरेकनिश्चयागोचरत्वात्, पूर्णे च करणे साक्षादनुमित्यविरोधिनो व्यभिचारज्ञाना-

---

चेति । वाच्यमित्यन्वयः । अज्ञानलक्षणेति । तथा च परामर्शाभावादेवानुमित्यनुत्पत्तौ बाधस्य तत्र प्रतिबन्धकत्वे मानाभावः । ग्रहे चेति । पक्षे हेतोरित्यनुषज्यते । व्यभिचारधीरेवेति । साध्याभाववान् पक्षो हेतुमानिति ग्रहस्य व्यभिचारधीत्वादिति भावः । भेदादिति । तथा च यत्र बाधनिश्चयोत्तरं परामर्शस्तत्र व्यभिचारज्ञानस्याऽनावश्यकत्वाद्बाध एवानुमितिप्रतिबन्धक इति भावः । विरोधिनोरपि तद्व्याप्यतदभावयोरेकनिश्चयगोचरत्वमभ्युपेत्याह अभेदेपीति । बाधग्रहपरामर्शयोरभेदेपीत्यर्थः । परस्परेति । हेतौ साध्याभाववद्वृत्तित्वावगाहिन एव ज्ञानस्य व्यभिचारधीत्वान्निरुक्तसमूहालम्बनस्य चाऽतथात्वादिति भावः । ननूक्तसमूहालम्बनस्यैव हेतौ साध्याभाववद्वृत्तित्वावगाहित्वे को विरोध इत्यत आह एकत्रेति । निश्चयेत्यस्य स्वारसिकेत्यादिः । तेन बुभुत्सादिवशाद्धेतुः साध्यव्यभिचारी तदभाववांश्च इति समुच्चयस्योपगमेपि न क्षतिः । ननु प्राचां मते हेतुसाध्याभावयोरेकधर्मिणि वैशिष्ट्यावगाहिज्ञानस्यैव व्यभिचारधीत्वात्साध्याभाववान् हेतुमानित्यादिग्रहस्यैव उक्तसमूहालम्ब-

निश्चयदशायां पक्षे साध्याभावहेत्वोर्ज्ञानाद्व्यभिचार इति वाच्यम् । प्रमात्वज्ञानस्य साध्याभावनिश्चयहेतुत्वेन त-

---

देरकिञ्चित्करत्वात् । उक्तश्च साध्यादेः पक्षाद्यवृत्तित्वादिकमपि बाधः । न च तद्ग्रहेऽपि व्यभिचारबुद्धिरावश्यकी । यत्त्वनिश्चितप्रामाण्यस्य ज्ञानस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चयवैयर्थ्यमतिप्रसङ्गश्च तथा च पक्षे साध्याभावज्ञानस्य निश्चयत्वसम्पत्तयेऽपेक्षणीयस्तत्प्रमात्वनिश्चय एव प्रतिबन्धकः, प्राथमिकत्वादुपजीव्यत्वाच्च, न तु चरमभावि तदधीनं व्यभिचारज्ञानमिति । तत्तु-

---

नस्यापि व्यभिचारज्ञानत्वमेवेत्यत आह पूर्णे चेति । लिङ्गज्ञानात्मनोऽनुमितिकरणस्य पूर्णत्वं व्यापारीभूतपरामर्शसम्पत्तिः । अकिञ्चित्करत्वात् अनुमित्यनुत्पादाप्रयोजकत्वात् । तथा चावश्यं तत्र बाधनिश्चयत्वेन पृथक् प्रतिबन्धकत्वं वाच्यमिति भावः । ननु लिङ्गोपधानपक्षस्य प्रामाणिकत्वे व्यभिचारज्ञानस्यापि साक्षादेवानुमितिविरोधित्वात् बाधनिर्णयो न पृथग्विरोधीत्यत आह उक्तश्चेति । साध्यादेरिति । आदिपदाभ्यां पक्षतावच्छेदकादेः साध्यवदवृत्तित्वाद्युपग्रहः । तद्ग्रहे साध्यादेः पक्षावृत्तित्वादिग्रहे । मूलोक्तसमाधानं निरसितुं परिष्कृत्य दर्शयति यत्त्वित्यादिना । अर्थनिश्चयरूपत्वे अर्थनिश्चयकारित्वे । ननु कार्यानुपयुक्तोपि प्रामाण्यग्रहः सामग्रीवशादेवाभ्युपेतव्य इत्यत आह अतिप्रसङ्गश्चेति । गृहीताप्रामाण्यकादपि अर्थज्ञानात् कार्योत्पत्तिप्रसङ्गश्चेत्यर्थः । निश्चयत्वसम्पत्तय इति । साध्याभाववत्ताज्ञानस्य कार्यं यत्साधने साध्याभाववदवृत्तित्वज्ञानं तत्कारित्वसम्पत्तये इत्यर्थः । साध्याभाववदवृत्तित्वबुद्धौ निश्चितप्रामाण्यकसाध्याभाववत्ताज्ञानत्वेनैव हेतुत्वादिति भावः । प्रथमोत्पन्नत्वस्याकिञ्चित्करत्वादाह उपजीव्यत्वाच्चेति । व्यभिचारबुद्ध्युपजीव्यत्वाच्चेत्यर्थः । तथा च तदुक्तारीत्येति न्याय एव

त्वम् । तस्य प्रतिबन्धकत्वेनाऽक्लृप्तत्वात् अगृहीताप्रामाण्यकत्वेनैव निश्चयस्य स्वकार्यकारित्वात्, अन्यथाऽनवस्थानात्, अप्रामाण्यशङ्कानिवर्त्तकत्वेन च क्वचित् प्रामाण्यग्रहोपयोगात्, संशयसाधारणस्य व्यभिचारज्ञानस्य विरोधित्वाच्चेति । यत्तूपनीतकाञ्चन-

---

साध्याभाववत्ताज्ञानप्रमात्वनिश्चयस्यानुमितिविरोधित्वे मानमिति भावः।व्यभिचारज्ञाने प्राथमिकत्वापजीव्यत्वयोर्व्यतिरेकमाह न त्विति। तदधीनमिति।साध्याभावज्ञानस्य प्रमात्वनिश्चयाधीनमित्यर्थः । तस्य साध्याभावज्ञानप्रमात्वनिश्चयस्य । अक्लृप्तत्वादिति । व्यभिचारज्ञानस्य तु बाधनिश्चयाभावस्थल एव प्रतिबन्धकताया: क्लृप्तत्वादिति भावः।न वा साध्याभावज्ञानस्य प्रमात्वनिश्चयो व्यभिचारज्ञानस्योपजीव्य इत्याशयेनाह अगृहीतेति।अगृहीताप्रामाण्यकस्यैव साध्याभावादिनिश्चयस्य साध्याभाववद्वृत्तित्वज्ञानादलक्षणस्वकार्यकारित्वादित्यर्थः।अथाऽगृहीताप्रामाण्यकस्यैव ज्ञानस्य स्वकार्यकारित्वं न तु निश्चितप्रामाण्यकस्येत्यत्र किं विनिगमकमत आह अन्यथेति।यदि निश्चितप्रामाण्यकस्यैव ज्ञानस्य स्वकार्यकारित्वं तदा तत्तत्प्रामाण्यनिश्चयस्यापि स्वकार्यसम्पत्तये स्वप्रामाण्यनिश्चयापेक्षायामनवस्थापत्तिर्बाधिकेति भावः।नन्वेवमर्थनिश्चयस्य प्रामाण्यानुमानप्रयासो विफल इत्यत आह अप्रामाण्येति । अस्तु वा प्रमात्वेन निश्चीयमानमेवार्थज्ञानं स्वकार्यकारि तथापि यदि साध्याभाववत्त्वांशे निश्चयात्मकमेव व्यभिचारज्ञानमनुमितौ विरोधि स्यात्तदा तस्य विशिष्टवैशिष्ट्यबोधत्वनियमात्तद्गतः साध्याभाववत्तानिश्चयस्य प्रमात्वनिश्चयो व्यभिचारज्ञानार्थमपेक्षणीयः स्यात्, न त्वेतदस्ति साध्याभावांशे संशयात्मनोपि व्यभिचारज्ञानस्यानुमितिविरोधित्वात्, अन्यथा वायू रूपवान् स्पर्शादित्यादेः पक्षे साध्यसन्देहदशायामप्रयोजकत्वं न स्यात् इत्यक्षरतात्पर्यादाह संशयेति । साध्याभावांशे संशयसाधारणस्येत्यर्थः । मूलोक्तं सोऽयमतमेव परिष्कृत्योपन्यस्यति यत्त्विति । उपनीतं यत्काञ्चनमयत्वं तद्विशिष्टवह्निप्रकारेण या अनुमितिस्तद्विरोधीत्यर्थः । शुद्धवह्निव्याप्यवत्तानिश्चयोत्तरं सम्भाविताया: पर्वत: का-

मयत्वविशिष्टवन्ह्यनुमितिविरोधी व्यधिकरणकाञ्चनमयत्वावच्छि-
न्नप्रतियोगिताको वन्ह्यभावो बाधः । न च विशिष्टसाध्याप्रसिद्ध्या
कथं तद्विशिष्टानुमितिः, विशेष्ये विशेषणमित्यादिन्यायेन तत्स-
म्भवात् । शुद्धसाध्यव्याप्तिग्रहादेव चोपनयसहकारेणाऽप्रसिद्धवि-
शिष्टानुमितिसम्भवात् तदभावो बाधोऽस्तु । तेन रूपेण व्याप्तेर-

———— —

ञ्चनमयवन्हिमानित्यनुमितेः पर्वते काञ्चनमयत्वेन वन्हिर्नास्तीति बाध-
निश्चयदशायामनुदयादिति भावः।व्यधिकरणेति। इदमुपलक्षणम् ।
वन्हौ काञ्चनमयत्वाभावस्याऽप्युक्तानुमितिविरोधित्वात्, अस्य मते
कारणीभूतपरामर्शविरोधित्वेनाभिमतमध्ये तदन्तर्भावासम्भवादिति
ध्येयम्।ननु काञ्चनमयत्वावच्छिन्नसाध्यकानुमितौ तादृशवन्हित्वाव-
च्छिन्नव्याप्यवत्तानिश्चयत्वेन हेतुत्वाद्वन्हिसामान्यव्याप्यवत्तानिश्च-
यात् कुतस्तादृशवन्हित्वावच्छिन्नविधेयताकानुमितेः सम्भावना यस्याः
काञ्चनमयत्वेन वन्हिबाधो विरोधी इत्याशङ्क्य निराचष्टे न चेति।विशि-
ष्टसाध्याप्रसिद्ध्येति।विशिष्टसाध्ये हेतुव्यापकत्वाग्रहणेत्यर्थः।तेन पृथ-
क् काञ्चनमयवन्हित्वप्रकारेण साध्यप्रसिद्धावपि न तद्रूपेण वन्ह्यनु-
मितेः सम्भव इति भावः।विशिष्टवन्हित्वावच्छिन्नविधेयताकानुमिति-
त्वावच्छिन्नं प्रत्येव विशिष्टवन्हित्वावच्छिन्नस्य व्याप्यवत्तानिश्चयो
हेतुः प्रकृते पुनरितरबाधस्थल इव काञ्चनमयत्वनिष्ठप्रकारतानिरूपि-
तवन्हित्वावच्छिन्नविधेयताकैव वन्हेरनुमितिरतो विशिष्टसाध्यव्या-
प्यवत्तानिश्चयाभावेपि न क्षतिरित्याशयेन परिहरति विशेष्य इत्या-
दि।ननु शुद्धवन्हेः परामर्शो न काञ्चनमयवन्हित्वप्रकारकानुमितिहेतुस्त-
थात्वे काञ्चनमयत्वानुपस्थितिदशायामपि तादृशानुमित्यापत्तेः, एवं
च कस्याः प्रतिबन्धकतया काञ्चनमयत्वेन वन्ह्यभावो बाधः स्यादत
आह शुद्धेति।उपनयेति।काञ्चनमयत्वाद्युपस्थितिसहकारेणेत्यर्थः । त-
दभाव इति । प्रागुक्तो व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नप्रतियोगि-
ताको वन्ह्यभावो बाधोऽस्त्वित्यर्थः । ननु पक्षे हेतोर्ग्रहदशायां काञ्च-
नमयत्वेन वन्हिबाधनिश्चये विशिष्टसाध्यव्यभिचारग्रह एवास्तु दोष
इत्यत आह तेनेति । व्यधिकरणकाञ्चनमयत्वादिरूपेण साध्यव्याप्ति-

नुपादानाच्च तथा व्यभिचारो न दोषाय, उपनीतसकलभाने चाऽ-
प्रामाण्यं प्रत्यक्षेऽपि तुल्यम्, अनुद्देश्यांशे चानुमितेरप्रामाण्यं न
वादिविजयप्रयोजकमिति । तन्न । प्रत्यक्षे हि विना सन्निकर्षम-
भानादुपनीतभानस्य प्रत्यभिज्ञादावानुभविकत्वादुपनयोऽपि सन्नि-
कर्षः कल्पयते, अनुमितौ च फलासिद्ध्या न सामग्र्यन्तरकल्प-

---

ग्रहस्याऽनपेक्षितत्वादित्यर्थः । व्यभिचारः तादृशकाञ्चनमयत्वाद्यव-
च्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वग्रहो न दोषायेत्यर्थः ।
शुद्धसाध्यव्याप्तिग्रहस्यैवोत्पन्नत्वादिति भावः । मूलोक्तदोषं प्रतिब-
न्दिमुद्रया उद्धरति उपनीतेति । तुल्यमिति । यदि च प्रत्यक्षस्थले भ्रमं
प्रति विशिष्य दोषाणां हेतुत्वं सर्वांशे प्रमासामग्रीणां वा प्रतिबन्ध-
कत्वं कल्प्यते तदानुमितिस्थलेऽपि तन्मया सुवचमिति भावः । अनुद्दे-
श्येति । यत्रांशे विवादस्तदंशाप्रामाण्यस्यैव विजयप्रयोजकत्वात्, अ-
न्यथेदं रजतमिति प्रत्यक्षस्यापि शुक्तित्वसाक्षात्त्वेनोपन्यासो न
स्याद्रजतत्वांशे तस्याप्रामाण्यादिति भावः । फलासिद्ध्येति । फ-
लमुपनीतावगाहित्वेनानुमितेरनुभवः तद्विरहेणेत्यर्थः।न सामग्र्यन्तरे-
ति।न च प्रत्यक्षस्थल एवानुमितिसाधारण तत्प्रकारकानुभवत्वावच्छिन्नं
प्रत्येव तदुपनयत्वेन हेतुत्वान्न सामग्र्यन्तरकल्पना तत्प्रकारकप्रत्यक्ष-
त्वावच्छिन्नं प्रति तथात्वे प्रसिद्धसाध्यकस्थल इवाऽप्रसिद्धसाध्यकस्थ-
लेऽप्यनुमितेः साध्यविशेषणकत्वापत्तेरिति वाच्यम्।विशेष्यविधया
तदभावविधेयकानुमितित्वावच्छिन्नं प्रत्येव तद्व्यापकाभाववत्तानि-
श्चयस्य हेतुत्वेनाऽपरामृष्टसाध्यस्यानुमितौ विशेषणत्वासम्भवात्
उपनीतविशेष्यकमानसाद्यनुरोधेन तदलौकिकप्रत्यक्षत्वावच्छिन्नं
प्रत्येव तदुपनयत्वेन हेतुत्वात्, तत्प्रकारकानुभवत्वावच्छिन्नं प्रत्येव
तदुपनयस्य हेतुत्वेपि काञ्चनमयत्वावच्छिन्नविधेयताकानुमितौ
तादृशवह्नित्वावच्छिन्नव्याप्यवत्तानिश्चयस्य काञ्चनमयत्वनिष्ठप्र-
कारतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितौ च काञ्चनम-
याभाववन्हेर्बाधनिश्चयस्य विशेषसामग्रीत्वेन तद्विरहादेव शुद्ध-

दशायां तदभावात् । पक्षधर्मताबलेन प्रसिद्धं बाधान्न सिध्यतीति बाधः पृथक् । प्रसिद्धवन्ह्यभाववति पक्षे व्यभिचारान्न तत्सिद्धिरिति चेत्, तर्ह्यप्रसिद्धवन्ह्यभाव-

———

ना । न खलु वह्निव्याप्यधूमपरामर्शादुपनीतरासभानुमितिरानुभविकी कस्यापि, अन्यथा पर्वते वन्हिसन्देहवतो निश्चितवन्हिव्यभिचारकेण अभिधेयत्वादिना पर्वतादौ प्रमेयत्वादिकमनुमिमतोऽपि वन्ह्यर्थिनो वन्हिमत्त्वनिश्चयान्निष्कम्पप्रवृत्त्यापत्तेरिति ।

पक्षधर्मताबलेनेत्यादि । ननु विशेषतो व्याप्यग्रहान्न तथा

———

वन्हेः परामर्शादुपनीतकाञ्चनमयत्वप्रकारेण वन्हेरनुमित्यसम्भवाच्चेति भावः । उपनीतेत्यस्य बाधाद्यनवतारदशायामित्यादिः । तेन रासभीयान्यवन्हेर्बाधनिश्चयदशायां शुद्धवन्हेः परामर्शादेव रासभीयवन्हिमानित्यनुमितेरानुभविकत्वेपि न क्षतिः । ननु विशेष्ये विशेषणमित्यादिन्यायेन काञ्चनमयवन्ह्याद्यनुमितावितरबाधनिश्चयस्य लाघवादिप्रतिसन्धानस्य च विशेषतो नाऽनन्तकार्यकारणभावः कल्प्यते गौरवात्, किन्तु लाघवात् तत्प्रकारकानुमितौ तद्गोचरज्ञानत्वेनैकमेव हेतुत्वमित्यनुमितेरुपनीतभानत्वमावश्यकमत आह अन्यथेति । उपनयबलादेवानुमितौ भानस्वीकारः इत्यर्थः । लिङ्गोपधानपक्षस्य प्रामाणिकत्वे वन्हेर्हेतुतायां पर्वते प्रमेयत्वानुमितेर्लिङ्गविधयैव वन्हिमत्तानिश्चयात्ततो वन्ह्यर्थिनः प्रवृत्तिर्भवत्येव इत्यत अभिधेयत्वादिनेत्युक्तम् । प्रवृत्त्यापत्तेरिति । तथा च गत्यन्तरासम्भवादेव इतरबाधादेर्विशिष्याऽनन्तकार्यकारणभावः स्वीक्रियत इति भावः ।

मूले पक्षधर्मताबलेनेति । लाघवज्ञानादिवशादप्रसिद्धमहानसीयवन्ह्यादिकं स्वबाधान्न सिद्धतीति बाधः पृथगेव दोष इत्यर्थः । दीधितौ न तथेति । न विशेषतो महानसी-

वति सपक्षे व्यभिचारात् तमपि न साधयेत्, तदज्ञाना-त्तत्साधनेऽनुमितिरप्रमा स्यात् । अथ पक्षवृत्तेरन्य एव धूमादिः सपक्षे, तर्हि गोत्वपृथिवीत्वद्रव्यत्वादेरप्रसिद्ध-सास्नाद्यनुमानं न स्यात् सास्नादिप्रत्येकव्यभिचारात् ।

---

सिद्धिसम्भावना, सामान्यतः सिद्धौ न विशेषतो बाधो विरोधी भिन्नप्रकारकत्वात् । न च समानविषयत्वमेव विरोधित्वे तन्त्रम्, पृथिव्यादिरूपबाधग्रहेऽपि वायू रूपवान्नवेति संशयात् रूपवानि-

---

यवन्हित्वादिप्रकारेणानुमितेः सम्भावना इत्यर्थः । तथा च कुत्र विशेषतो बाधः प्रतिबन्धकः स्यादिति भावः । सामान्यतो वन्हि-त्वादिना। विशेषतो महानसीयवन्हित्वादिना । भिन्नेति । अन्यथा गृहे घटो नास्तीति निर्णयदशायां द्रव्यमस्तीति धीर्न स्यादिति भावः । ननु तत्तद्व्यक्तिवैशिष्ट्यावगाहिज्ञानं प्रति तत्तद्व्यक्तिप्रतियोगिका-भावनिर्णयत्वेनैव समानविषयतया प्रतिबन्धकत्वं न तु तत्तद्धर्मा-वच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति तत्तद्धर्मावच्छिन्नप्र-तियोगिताकाभावनिश्चयत्वेन समानप्रकारतया तथात्वं, तत्तद्व्यक्ति-मात्रवृत्त्यनन्तधर्मान्तर्भावेनाऽनन्तहेतुत्वकल्पने गौरवात्, गृहे घ-टो नास्तीति बुद्ध्यनन्तरं गृहे द्रव्यमस्तीति प्रतीतेर्घटान्यद्रव्यत्वा-वगाहित्वेऽप्युपपत्तेः। तथा च महानसीयवन्हौ लाघवप्रतिसन्धाना-दिवशात् ज्ञायमानवन्हित्वप्रकारेणापि महानसीयवन्हिविषयिण्ये-वानुमितिः कथं महानसीयवन्हेर्बाधनिश्चये स्यात् तादृशबाधस्या-पि तद्विरोधित्वादित्युपाध्यायमतमाशङ्क्य निराचष्टे न चेति । सं-शयादिति । तथा च तत्तद्धर्मान्तर्भावेन प्रतिबन्धकतायां गौरवम-पि प्रामाणिकत्वादास्थेयम्, अन्यथा तत्तद्रूपाभावस्य निश्चयसत्त्वात् रूपत्वेनापि तत्तद्रूपस्य संशयो न स्यादिति भावः । ननु उक्तसंश-यानुरोधाद्वरं प्रत्यक्षं प्रत्येव समानप्रकारकत्वेन विरोधित्वमस्तु

यदि च साध्यत्वावच्छेदकसास्नात्वादिसामान्यावच्छिन्न-
प्रतियोगिताकाभाववति न गोत्वादिकमिति न व्यभि-

———

चारानुमितेश्च । न चाऽरूपमेव रूपत्वेन शङ्कितमारोपितं वा तद्विषयः, तादृशशङ्काविरहेऽपि तयोरानुभविकत्वात् । दोषवशान्नेह श्वेतं

———

परोक्षबुद्धौ तूक्तसमानविषयकत्वेनैव तथात्वं स्यादत आह रूपवानित्यनुमितेश्चेति । ननु तत्तद्रूपाभावस्य निश्चयेन प्रतिबन्धादुक्तसंशयादौ रूपत्वेन तत्तद्रूपं न प्रकारः किं तु रूपभिन्नं वस्त्वन्तरमेव तथेत्याशङ्क्य निषेधति न चेति । अरूपं रूपभिन्नं, रूपत्वेन शङ्कितं रूपं न वेति शङ्काविषयीभूतं, तद्विषयः वायू रूपवान्नवेत्यादिधीविषय इत्यन्वयः । रूपवान्नवेत्यादिबुद्धे रूपत्वविशिष्टवैशिष्ट्यावगाहित्वेपि तत्र विशेषणतावच्छेदकीभूतरूपत्वादिप्रकारकनिश्चयो न हेतुः। विशेषणांशे धर्मितावच्छेदकान्तरसत्त्वस्थल एव तादृशरूपनिश्चयत्वेन हेतुत्वात्, किं तु विशेषणतावच्छेदकीभूतरूपत्वप्रकारकज्ञानमात्रं तथेति भावः। ननु रूपत्वविशिष्टवैशिष्ट्यावगाहिज्ञाने रूपत्वप्रकारकनिश्चयत्वेनैव हेतुत्वं संशयसाधारणतत्प्रकारकज्ञानमात्रस्य तथात्वे तदप्रामाण्यनिश्चयाभावस्योत्तेजकत्वकल्पनागौरवापत्तेरत आह आरोपितं वेति। तथा चाऽरूपमेव रूपत्वप्रकारेण निश्चयविषयीभूतं सद्वायू रूपवान्नवेत्यादिप्रतीतिविषय इति विशेषणतावच्छेदकप्रकारकनिश्चयोपि नाऽसम्भवीति भावः । तादृशेति । रूपभिन्नधर्मिकरूपत्वप्रकारकसंशयारोपयोर्विरहेपीत्यर्थः । तयोः वायुधर्मिकरूपवत्तासंशयानुमित्योः । ननु पृथिव्यादिरूपस्य बाधनिर्णयदशायामतिरिक्तरूपसम्भावनयैव तादृशः संशयः अतिरिक्तरूपसम्भावनाविरहविशिष्टस्यैव तदभावनिश्चयस्य विरोधित्वादिति यदि ब्रूयास्तदाप्याह दोषवशादिति । यद्यपि नेह श्वेतमित्येव वक्तुमुचितम् । न च श्वेतशब्दस्य गुणप-

चारः, तर्हि धूमेऽप्येवं व्यभिचाराभावात् साध्यतावच्छेदकेन प्रकारेणाऽप्रसिद्धमिव प्रसिद्धमपि साध्यं धूमगोत्वादिकं साधयेत् यदि बाधो न दोष इति वयम् ।

---

द्रव्यमिति भ्रमेऽपि इह पीतः शङ्ख इति प्रत्ययात्, घटपटौ न स्तः दण्डी चैत्रो नास्तीति ग्रहेऽपि घटोऽस्ति चैत्रोऽस्तीत्यवगमात् ।

---

रत्वभ्रमवारणाय द्रव्यपदम्, नपुंसकलिङ्गनिर्देशादेव तद्भ्रमव्युदासात् । अन्यथा श्वेत इति पुल्लिङ्गनिर्देशापत्तेः । गुणे शुक्लादयः पुंसीत्यनुशासनात् तथापि समवायेन श्वैत्यविशिष्टस्याऽभावभानार्थं द्रव्यपदम्, अन्यथा खटिकादिलिप्तस्य श्यामघटादेरपि परम्परया श्वेतत्वात्तदभावनिर्णयेऽपि साक्षाच्छ्वेतस्य शङ्खादेर्विशिष्टज्ञाने बाधकाप्राप्तेरित्यर्थः । ननु इह पीतः शङ्ख इत्यादिदर्शने नेह श्वेतं द्रव्यमिति ज्ञानं परोक्षविशिष्टबुद्धिस्थले समविषयत्वेन विरोधितया न बाधकमत आह घटपटावित्यादि । ननूक्तनिश्चयस्य घटपटोभयत्वावच्छिन्नप्रतियोगिताकत्वेन पटाभावस्यैवावगाहित्वात्तदुत्तरं घटो नास्तीतिप्रत्यये बाधकाभावः प्राच्यैः प्रत्येकाभावस्यैव द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वोपगमादत आह दण्डी चैत्रो नास्तीति । न चात्र दण्डिचैत्रत्वावच्छिन्नप्रतियोगिताकत्वेन मैत्राद्यभाव एव भासत इति तदुत्तरं चैत्रोऽस्तीतिप्रत्यये बाधकाभाव इति वाच्यम् । तादृशभ्रमसामग्र्या अनावश्यकत्वात् । अन्यथा तत्तद्घटादिव्यक्तिविशिष्टबुद्धिं प्रति तत्तत्पटादिप्रतियोगिताकाभावनिश्चयत्वेन भिन्नविषयकज्ञानस्यापि विनिगमनाभावेन प्रतिबन्धकत्वापत्तेः । पटो नास्तीत्यादिनिश्चयस्य पटत्वावच्छिन्नप्रतियोगिताकत्वेन घटाद्यभावभ्रमत्वस्वीकारेणैव तदुत्तरं घटोऽस्तीतिबुद्धेः सम्भवित्वात्, घटो नास्तीत्यादिनिश्चयस्य घटत्वावच्छिन्नप्रतियोगिताकत्वेन पटाद्यभावभ्रमत्वस्वीकारेणैव तदुत्तरं घटोऽस्तीत्यादिबुद्धेरनुत्पादस्यापि सम्भवादिति

सल्लिङ्गपरामर्शाद्बाधितविशेषभानप्रसङ्गश्च विशेषबाधावतारानवतारयोः समानः समानसमाधानश्च । अत्र वदन्ति । व्यापकतानवच्छेदकमपि रूपं लाघवज्ञानादिसहकारिवशादनुमितौ प्रकारीभवति, यथा जीवमरणान्यतरप्रतियोगी प्राणित्वादित्यत्र जीवनप्रतियोगित्वम् । अन्यथा जीवित्वे सति गृहासत्त्वस्य हेतोरसिद्ध्या बहिःसत्तानुमानायोगात् । एवं क्षित्यादिकर्त्तुरेकत्वमपि ।

---

भावः । ननु समानप्रकारकत्वेनैव विरोधित्वे महानसीयवन्हेर्बाधनिश्चयदशायामपि सल्लिङ्गपरामर्शादपि पर्वते वन्हित्वप्रकारेण तादृशवन्हेर्भ्रमानुमितिः स्यादतस्तत्र प्रतिवन्दिमाह सल्लिङ्गेत्यादि । चस्त्वर्थे । विशेषेति । समानप्रकारकत्वेन विरोधित्वमते महानसीयवन्हेर्बाधदशायामिव समानविषयकत्वेन तथात्वमतेऽपि तादृशवन्हेर्बाधानवतारदशायामुक्तभ्रमानुमितिप्रसङ्गः समान इत्यर्थः । यदि पर्वतो वन्हिमान् इत्यनुमितेर्वन्हित्वप्रकारेण महानसीयवन्हिप्रकारकत्वेऽपि न भ्रमत्वं वन्हित्वावच्छिन्नाभाववति वन्हित्वावच्छिन्नप्रकारकज्ञानस्यैव वन्हित्वावच्छिन्नभ्रमत्वादित्युच्यते, यदि वा तस्या अनुमितेः औत्सर्गिकप्रामाण्यरक्षार्थं वन्हित्वादिप्रकारेण महानसीयवन्ह्यादेर्भ्रमानुमितिं प्रति हेतुत्वेन विशिष्य दोषः कल्प्यते, तदा समानप्रकारकत्वेन विरोधितामतेऽप्येतत्सुवचमित्याशयेनाह समानसमाधानश्चेति । व्यापकतेति । व्यापकतावच्छेदकत्वेनाऽगृहीतमपीत्यर्थः । लाघवज्ञानादीत्यादिना तदितरबाधनिश्चयस्योपग्रहः । लाघवज्ञानस्य सहकारितास्थलमाह यथेति । व्यापकतानवच्छेदकीभूतस्य जीवनप्रतियोगित्वस्याप्रकारत्वे दोषमाह अन्यथेति । जीवित्वग्राहकप्रमाणान्तरस्य तदानीमसत्त्वादिति भावः । ननु जीवित्वानिर्णयेऽपि हेत्वन्तरेणैव बहिःसत्तानुमानं भविष्यतीत्यत आह एवमिति । क्षित्यादि कर्तृजन्यं कार्यत्वादित्यत्र क्षित्यादिकर्तुरेकत्वमपि लाघवज्ञानवशात्प्रकारीभवतीत्यर्थः । अत्रैकत्वं यद्यपि न संख्याविशेषः कर्तृनानात्वेऽपि तत्संभवात्, नापि क्षितिकर्तृभिन्नप्रतियोगितानवच्छेदकैकत्वं तथा, प्रकृतानुमितेः पू-

अन्यथा एकोऽनेको वा क्षित्यादिकर्त्तेति सन्देहप्रसङ्गात्। अनुमितेश्च तादृश्येण लघ्वर्थाविषयकत्वे तथाविधानुव्यवसायविरहात् सति लाघवप्रतिसन्धाने लघ्वर्थपरिच्छेदकत्वमनुमानस्येयसपि न सिध्येत्। इत्थञ्च विशेषतो जायमानानुमितिं विरुणद्धि बाधः। प्रमितिबाधः

———

वे क्षितिकर्त्तुरप्रसिद्ध्या तदन्तर्भावेण लाघवस्याऽसम्भवात्, किन्तु एकत्वमद्वितीयत्वं तच्च चेतनभिन्नासमवेतजीवेतरावृत्तिद्वित्वस्यानधिकरणत्वं, तादृशं च द्वित्वं जीवद्वयपर्याप्तमेव सुलभम्। ईश्वरघटयोर्द्वित्वं न चेतनासमवेतं जीवेश्वरयोर्द्वित्वं च न जीवतदितरावृत्तीति तदधिकरणत्वेपीश्वरस्य न निरुक्तैकत्वबाधः। यत्तु कर्तृपर्याप्तद्वित्वजीवावृत्तिद्वित्वोभयशून्यत्वमेवैकत्वं जीववृत्तिद्वित्वस्य कर्तृमात्रपर्याप्तस्य सत्त्वे च अधिककर्तृद्वयापत्तिगौरवेण तादृशद्वित्वद्वयाभावस्यैव क्षित्यादिकर्तर्युपगमात् तादृशैकत्वं च घट एव प्रसिद्धमिति। तत्तुच्छम्। कर्तृपर्याप्तस्य जीवेश्वरयोर्द्वित्वस्य जीववृत्तेश्च घटेश्वरयोर्द्वित्वस्याधिकरणत्वेनेश्वरस्य निरुक्तद्वित्वद्वयशून्यत्वबाधात्। (एकत्वमद्वितीयत्वं तच्च निरुक्तद्वित्वद्वयशून्यत्वमिति परमार्थः।) यदपि कर्तृपर्याप्तत्वजीवावृत्तित्वोभयशून्यत्वसमानाधिकरणद्वित्वसामान्यमेकत्वमेव क्षितिकर्तुरेकत्वमिति। तन्मन्दम्। स्वत्वस्याननुगतत्वेन घटैकत्वस्य स्वपदेनोपग्रहे क्षितिकर्तरि तस्य बाधादतिरिक्तस्य चेश्वरीयैकत्वस्य प्रकृतानुमितेः पूर्वमसिद्धत्वादिति ध्येयम्। अन्यथा लाघववशादेकत्वस्याऽभाने। ननु प्रकारान्तरेण क्षितिकर्तुरेकत्वानिर्णयदशायां तदनेकत्वसंशयो भवत्येवेत्यत आह अनुमितेश्चेति। तादृश्येणेति। यद्रूपविशिष्टे लाघवप्रतिसन्धानं तत्प्रकारेणेत्यर्थः। तथाविधेति। यद्रूपविशिष्टे लाघवं तदवच्छिन्नावगाहित्वेनानुमितेरनुव्यवसायविरहादित्यर्थः। न सिद्ध्येदिति। प्रमाणाभावेन व्यापकतावच्छेदकरूपेण लघ्वर्थविषयकानुमितित्वावच्छिन्नं प्रति लाघवज्ञानस्य सहकारित्वकल्पनाया असम्भवादिति भावः। लाघवज्ञानस्थले बाधासङ्कुरमुपसंहरन्नाह इत्थं चेति। महानसीयवह्नौ लाघवप्रतिसन्धानबलाद्वह्निसामान्यपरामर्शात्तादृश्येण जायमानानुमितिं महानसीयवह्निर्नास्तीति बाध-

पृथक् । सल्लिङ्गपरामर्शात् कथं भ्रान्तानुमितिर्जायतां न जायेत वा कथं यथार्थेति चेत् । बाधानवतारे बाधितार्थलाघवज्ञानादोषादेव । तथा सामान्यतोदृष्टात्तदितरप्रसिद्धाशेषविशेषबाधसहकृतात् शिष्यमाणप्रसिद्धप्रकारिकानुमितिर्जायते, यथा भोजनसाध्यकपीनत्वादिवामन्ध्याभोजनबाधे रात्रिभोजनप्रकारिका । एवं द्रव्यवृत्तित्वसाधिका गुणत्वादिच्छायां दिगन्तद्रव्यवृत्तित्वबाधे प्रसिद्धमनोवृत्तित्वानुमितिर्जायमाना मनोवृत्तित्वाभावप्रमया बा-

———

प्रमा प्रतिबध्नाति अतो बाधः पृथग्दोषं इत्यर्थः । न चैवं महानसीयवह्नेस्तदन्यवन्हेश्च बाधनिश्चये वन्हिसामान्यानुमितिः स्यात् वन्हिसामान्यस्य परामर्शसत्त्वादिति वाच्यम् । विशेषाभावद्वयस्य वन्हिसामान्याभावव्याप्यत्वाग्रहे इष्टत्वात्, अन्यथा तस्यैव तद्विरोधित्वादिति भावः । शङ्कते सल्लिङ्गेति । लाघवज्ञानादिसहकारिवशादित्यत्रोक्तादिपदोपगृहीतस्य इतरबाधस्य सहकारितास्थलमाह यथेति । चैत्रो भुङ्क्ते पीनत्वादित्यत्र रात्रीतरभोक्तृत्वस्य बाधनिर्णये रात्रौ भुङ्क्ते इत्यनुमितिर्जायत इत्यर्थः । इतरबाधस्थले बाधासङ्करं व्युत्पादयति एवमिति । पृथिव्यादिदिगन्तानां मनोभिन्नाचेतनत्वेनोपग्रहः, तथा च इच्छा द्रव्याश्रिता गुणत्वादित्यत्र मनोभिन्नाचेतनद्रव्यवृत्तित्वस्य बाधनिश्चयदशायां मनोरूपाचेतनद्रव्यवृत्तित्वप्रकारेण जायमानानुमितिर्मनोवृत्तित्वाभावप्रमया प्रतिबध्यत इति मनोवृत्तित्वाभावरूपो विशेषबाधो दोष इत्यर्थः । अत्रेदमवधेयम् । महानसीयान्यवन्हेर्बाधनिश्चयो न महानसीयवन्हित्वावच्छिन्नविधेयताकानुमितौ हेतुः, शुद्धवन्हिपरामर्शाद्विशिष्टवन्हित्वावच्छिन्नविधेयताकानुमित्यसम्भवात् विशिष्टवन्हिपरामर्शादुत्पन्नायां तादृशानुमितौ व्यभिचाराच्च, किन्तु महानसीयत्वनिष्ठप्रकारतानिरूपितशुद्धवन्हित्वावच्छिन्नविधेयताकानुमितिं प्रत्येव महानसीयान्यवन्ह्यभावनिश्चयत्वेन हेतुत्वं सर्वत्रैवेतरबाधस्थले विशेष्ये विशेषणमिति रीत्यैवानुमितेः स्वीकार्यत्वात् । यद्यप्येवमपि वन्हेर्महानसीयत्वे लाघवमित्येवं प्रतिसन्धानजन्यायां वन्हिसामान्यपरामर्शोत्तरं तादृ-

शानुमितौ व्यभिचारः, तथाप्यव्यवहितोत्तरत्वसम्बन्धेन तादृशबा-
धनिश्चयविशिष्टत्वेनापि कार्यविशेषणान्न दोषः। अव्यवहितोत्तरत्वं
च यथानुगतानतिप्रसक्तं तथोक्तमनुमितिग्रन्थेऽस्माभिः। न चैवं
तादृशबाधनिश्चयविशिष्टत्वमेव कार्यतावच्छेदकमस्तु महानसीय-
त्वनिष्ठप्रकारतानिरूपितवन्हित्वावच्छिन्नविधेयताकत्वप्रवेशो व्य-
र्थ इति वाच्यम्। भ्रमत्वेनाऽगृह्यमाणस्यैव तादृशबाधनिश्चयस्य हे-
तुतया यत्र महानसीयान्यवन्हिमान् पर्वतो न द्रव्यमित्येवं ज्ञानद-
शायां पर्वतत्वावच्छेदेन वन्हिव्याप्यवत्त्वस्य द्रव्यत्वव्याप्यवत्त्वस्य
महानसीयान्यवन्हेर्बाधस्य च समूहालम्बननिर्णय एव तादृशबाधां-
शे भ्रमत्वज्ञानात्मकस्तत्र तदव्यवहितोत्तरोत्पन्नायां महानसीयवन्हि-
मत्पर्वतो द्रव्यं पर्वतश्च वन्हिमानित्येवं समूहालम्बनानुमितौ व्यभि-
चारवारणार्थं तन्निवेशस्यावश्यकत्वात्, अन्यथा तत्रापि पर्वतो महा-
नसीयवन्हिमान् इत्यनुमितिप्रसङ्गात्। न च गृहीताप्रामाण्यकस्य
महानसीयान्यवन्हिर्नास्तीति बाधनिश्चयस्योत्तरं महानसीयवन्हि-
भिन्नवन्हिर्नास्तीति बाधनिश्चयादपि महानसीयवन्हिमानित्यनुमित्यु-
त्पत्त्या व्यभिचारः तदप्रामाण्यज्ञानव्यक्तेरनुत्तेजकत्वे द्वितीयक्ष-
ण एव तादृशानुमित्यापत्तेरिति वाच्यम्। महानसीयवन्हिभिन्नव-
न्हिर्नास्तीति बाधनिश्चयस्य महानसीयवन्ह्यात्मकवन्हिमानित्याका-
रकानुमितिं प्रत्येव हेतुतया महानसीयवन्हिमानित्यनुमितेरेव तत्रा-
नुत्पादात्। यद्घटितसामान्यस्य बाधनिर्णयस्तद्घटितसामा-
न्यप्रकारकानुमितिं प्रत्येव तादृशबाधनिश्चयस्य हेतुत्वात्। न च
यत्राऽप्रामाण्यज्ञानास्कन्दितस्य महानसीयान्यवन्ह्यभावनिश्चयस्यो-
त्तरं महानसीयवन्हित्वावच्छिन्नपरामर्शात् तादृशवन्हित्वावच्छिन्न-
विधेयताकानुमितिः सापि महानसीयत्वनिष्ठप्रकारतानिरूपितवन्हि-
त्वावच्छिन्नप्रकारताकैव, तादृशप्रकारताकबुद्धित्वेनैव महा-
नसीयवन्हित्वावच्छिन्नव्याप्यवत्तापरामर्शजन्यत्वात् तादृशवन्हि-
त्वावच्छिन्नाभावनिश्चयप्रतिबध्यत्वाच्च, तथा च तत्रैवाऽगृहीता-
प्रामाण्यकस्य महानसीयान्यवन्ह्यभावनिश्चयस्य हेतुतायां व्यभि-
चार इति वाच्यम्। तत्रत्यानुमितेर्महानसीयत्वनिष्ठप्रकारतानिरूपि-
तवन्हित्वावच्छिन्नप्रकारताकत्वेऽपि महानसीयत्वनिष्ठप्रकारतानिरू-
पितशुद्धवन्हित्वावच्छिन्नविधेयताकत्वाभावादेव व्यभिचारास्प-

साध्याभाववन्मात्रसहचारो न व्यभिचारः साध्यप्रागभाव-
ध्वंसवद्वृत्तित्वेन व्यभिचारितया पृथिवीत्वादिना गन्धादेः

———

वात् विशिष्टवन्हित्वस्यैव तत्र विधेयतावच्छेदकत्वादिति ध्येयम् ।
एवं महानसीयो वन्हिर्नास्तीत्यादिबाधनिश्चयो महानसीयान्यत्वनिष्ठ-
प्रकारतानिरूपितशुद्धवन्हित्वावच्छिन्नविधेयताकायां महानसीया-
न्यवन्हिमानित्यनुमितौ हेतुः । एवं महानसीयान्यारुणवन्हिर्नास्तीत्या-
कारकनिश्चयो महानसीयत्वारुणत्वोभयप्रकारतानिरूपितवन्हित्वाव-
च्छिन्नविधेयताकायामेव महानसीयारुणवन्हिमानित्यनुमितौ हेतुर्न
तु महानसीयत्वविशिष्टारुणत्वनिष्ठप्रकारतानिरूपितवन्हित्वावच्छि-
न्नविधेयताकानुमितिं प्रत्येव स हेतुः, महानसीयो योऽरुणस्तदन्यव-
न्हिर्नास्तीत्येवं बाधनिश्चयादेव तादृशानुमित्युत्पादेन व्यभिचारात्
एकत्र द्वयमित्येकविधाविषयताया अप्युक्तस्थलमेवोदाहरणं यत्रैकस्यां
प्रकारतायां प्रकारताद्वयनिरूपकत्वं तत्रैव तत्स्वीकारात् । इच्छा
द्रव्याभिन्ना गुणत्वादित्यादौ तु पृथिव्याद्यभिन्नद्रव्यवृत्तित्वाभा-
वनिश्चय एव पृथिव्याद्यन्यद्रव्यवृत्तित्वप्रकारकानुमितौ हेतुर्न तु पृ-
थिव्यादिवृत्तित्वाभावप्रकारकनिर्णयसमुदायः, सामान्यघटितविशेष-
बाधस्यैव तथात्वात्, अन्यथा गुणवृत्तित्वाभावनिर्णयदशायामपीच्छा
गुणान्यद्रव्यवृत्तिरित्यनुमित्यापत्तेः । न च गुणवृत्तित्वं न द्रव्यवृत्तित्वस्य
विशेष इति न तद्बाधनिश्चयेऽप्युक्तानुमितारिति वाच्यम् । सामान्य-
विशेषभावस्याऽकिञ्चित्करत्वात् । अन्यथा वन्हिमान् धूमादित्यादौ
नीलान्यवन्ह्यभावप्रकारकनिश्चयान्नीलवन्हिमानित्यनुमितेरनुत्पत्तिप्र-
सङ्गात् नीलस्य वन्हिविशेषत्वाभावात्, एवं शुद्धपर्वते वन्हेः पराम-
र्शादपि काञ्चनमयान्यपर्वतो न वन्हिमानित्येवं बाधवशात् काञ्चन-
मयपर्वतो वन्हिमानित्यनुमितिर्जायमाना पर्वतः काञ्चनमयो नेत्या-
दिप्रमया बाध्यत इति तत्र तादृशप्रमाविषयीभूतः काञ्चनमयत्वा-
भावविशिष्टपर्वतादिर्बाध एव न पुनरसिद्धिः, कारणीभूतपरामर्शा-
विरोधित्वादित्येवमादिकं बहुतरं स्वयमूहनीयमिति सङ्क्षेपः । कपिसंयो-
गी एतत्त्वादित्यादिसद्धेतावव्यभिचारित्वापातादाह किन्तु साध्येत्या-

द्रव्यत्वादिना गुणस्याऽनुमानभङ्गप्रसङ्गात्, किन्तु साध्या-
त्यन्ताभाववद्गामित्वम्, एवञ्च स्वप्रागभावप्रध्वंसाव-
च्छिन्नतदाश्रये तत्प्रतियोगिसाधने पक्षे व्यभिचारो नेति
बाधो दूषणम् । अथाऽवच्छेद्ये सिद्धसाधनम्, अवच्छे-
दके हेत्वसिद्धिः, विशिष्टञ्च नान्यदिति चेत्, तर्हि प्रा-
गभावप्रध्वंसप्रतियोगिनोरेकवृत्तित्वेनैकसमयतापि स्यात् ।
अथ यत्समयावच्छेदेन तत्र प्रागभावः प्रध्वंसो वा न

---

ध्यत इति विशेषबाधो दोषः । किन्तु साध्येत्यादिकमापाततः ।
वस्तुतस्तु प्रतियोग्यसमानाधिकरणसम्बन्धविशेषावच्छिन्नप्रतियो-
गिताकसाध्याभाववद्गामित्वं व्यभिचारः । स्वप्रागभावेत्यादिकं
स्पष्टत्वेनोक्तम् । तत्र तदानीं तदत्यन्ताभावस्यापि व्युत्पादितत्वा-
त् । अत एवोत्पत्तिकालावच्छिन्ने घटे पृथिवीत्वादिना रूपादि-

---

द्विकमिति । सम्बन्धविशेषेति साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्य-
र्थः । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वमतेनेदम् ।
तेन चैत्रो गोमान् द्रव्यत्वादित्यादौ स्वामित्वसम्बन्धेन साध्यतायां
व्यभिचारिणि नाव्याप्तिः । स्पष्टत्वेनेति । तद्गन्धप्रागभावकालाव-
च्छिन्नो घटः तद्गन्धवान् तद्घटत्वादित्यादौ तत्तत्कालावच्छिन्नतत्त-
द्गन्धादिमत्ताबुद्धौ तत्तत्कालावच्छिन्नतत्तद्गन्धप्रागभावनिश्चयस्य वि-
रोधित्वात्तद्विषयस्य तत्तत्कालावच्छिन्नतत्तद्गन्धप्रागभावादेर्बाधत्व-
स्य स्पष्टत्वेन सर्वसम्मतत्वेनेत्यर्थः । स्वमते तत्तत्कालावच्छेदेन तत्त-
द्गन्धात्यन्ताभावस्यापि तत्र बाधत्वं सम्भवतीत्याह तत्रेति । प्रतियो-
ग्याश्रयेऽपि धर्मिणि तत्प्रागभावकालावच्छेदेन तदत्यन्ताभावस्य
स्वीकारवादे व्युत्पादितत्वादित्यर्थः । अत एवेति । तत्प्रागभावकालावच्छे-

तत्समयावच्छेदेन प्रतियोगीति चेत्, तर्हि तदवच्छेदेन प्रतियोगिसाधने न सिद्धसाधनं किन्तु बाध एव । अन्यथा भावात्यन्ताभावयोरप्यव्याप्यवृत्तित्वभङ्गः, एकवृत्तित्वात् । अवच्छेदकभेदेन वृत्तिरिहापि तुल्या, तत्र देशभेदोऽवच्छेदकोऽत्र तु समयभेद इति । असिद्धेरपि बाध एवोपजीव्यः । न चैवमुपजीव्यत्वाद्बाधवत् सिद्धसाधनमपि पृथक्, उपजीव्यत्वेऽपि स्वतोऽदूषकत्वात् । न हि साध्यज्ञानं तद्बुद्धिविरोधि, धारावाहिकज्ञानोदयात् । नाप्यनुमितिविरोधि, अनुमित्सया प्र-

---

साधने बाधो निराबाधं पदमादधाति । एवं साध्यवत्तानवच्छेदकदेशावच्छिन्नस्य पक्षत्वेऽपि बाधो बोध्यः ।

---

देन तद्वत्यपि तदत्यन्ताभावस्य सत्त्वादेवेत्यर्थः । निराबाधमिति । तत्तत्कालावच्छिन्नघटधर्मिकरूपत्वावच्छिन्नवत्ताबुद्धौ तत्तत्कालावच्छिन्नघटधर्मिकरूपत्वावच्छिन्नात्यन्ताभावनिश्चयस्य विरोधित्वात्तद्विषयस्यैव तत्र बाधत्वात्, अन्यथा श्यामतादशायां घट एव रूपप्रागभाववत्तानिश्चयेऽपि तत्कालावच्छिन्नरूपवत्ताज्ञानोदयेन साध्यतावच्छेदकीभूतरूपत्वावच्छिन्नवत्ताबुद्धिं प्रति रूपप्रागभाववत्तानिश्चयस्याऽविरोधित्वेन तद्विषयस्य बाधत्वायोगात् प्रागभावस्य रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वे मानाभावात्, तत्तत्कालावच्छिन्नतत्तद्व्यक्तित्वावच्छिन्नप्रकारताकबुद्धिं प्रत्येव तत्तत्कालावच्छिन्नतत्तद्व्यक्तिप्रागभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वादिति भावः । शिखरावच्छिन्नः पर्वतो वह्निमानित्यादावप्यसङ्कीर्णबाधस्य सम्भवात् मूलस्य न्यूनतामपाकुर्वन्नाह एवमिति ।

त्यक्षसिद्धेऽप्यनुमानदर्शनात् । तदुक्तं प्रत्यक्षदृष्टमप्यनुमानेन बुभुत्सन्ते तर्करसिका इति । श्रवणानन्तरं मननदर्शनाच्च । तस्मात् सिद्धिमात्रार्थिनः सिद्धौ न तदिच्छा, सिद्धिविशेषार्थिनः साऽस्तीति तस्यानुमितिरेव। एवञ्च सिषाधयिषितपक्षविघटनद्वारा सिद्धसाधनं दूषणं न स्वतः । नन्वभावधीरपि न भावधीप्रतिबन्धिका, नेदं

———

अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्ताज्ञानं प्रयोजकम्, अन्यथा गृहीतभागासिद्धेर्घटत्वादेरपि पृथिवीत्वाद्यवच्छेदेन रूपादिसिद्धिप्रसङ्गात्, न च शिखराद्यवच्छेदेन धूमादिमत्त्वमिति चेन्न । अवच्छेदकत्वयोर्वस्तुनोर्भेदात् श-

———

घटत्वादेरिति पञ्चमी । प्रसङ्गादिति । न च पक्षतावच्छेदकधर्मावच्छेदेनानुमितौ तादृशधर्मविशिष्टधर्मिकबाधनिश्चयाद्यभाव एव नियामक इति तत्सत्त्वे भागासिद्धहेतुनापि तादृशानुमितिरिष्टैवेति वाच्यम् । अनुभवविरोधात्, संयोगमात्रेण वन्ह्यादौ धूमव्यापकत्वावगाहिनः पर्वतत्वावच्छेदेन धूमवत्तापरामर्शात् पर्वतत्वावच्छेद्यसंयोगेनेव पाषाणमयत्वाद्यवच्छिन्नसंयोगेनापि पर्वते वन्ह्याद्यनुमितिप्रसङ्गाच्च । तादृशसम्बन्धेन बाधानिश्चयाद्यभावस्य तत्र सत्त्वात् तादृशसंयोगेन व्यापकत्वाग्रहादेव तत्सम्बन्धेनानुमित्यनुत्पादे पर्वतत्वाद्यवच्छेद्यसंयोगेनाप्यनुमित्यनापत्तेः तादृशसम्बन्धेनापि व्यापकत्वाग्रहस्याऽविशिष्टत्वादिति भावः । न च शिखरेति । तथा च कारणबाधादेव शिखराद्यवच्छेदेन वन्ह्याद्यनुमितेरसम्भवात्तत्र बाधस्य विरोधित्वे मानाभाव इति भावः। अवच्छेदकत्वयोरिति । यत्र पक्षतावच्छेदकपृथिवीत्वादव्यापकत्वरूपमवच्छेद्यत्वं साध्येऽनुमितिरवगाहते तत्रैव तदवच्छेदेन हे-

रजतमिति भ्रमानन्तरं रजतनिश्चयात् । न चाऽभावप्रमा तथा, अपीतः शङ्ख इति प्रमापयत एव पीतोऽयमिति भ्रमदर्शनादिति चेन्न । विरोधिज्ञानं हि प्रतिबन्धकं प्रत्यक्षभ्रमस्य च प्रत्यक्षप्रमा विरोधिनी सा च शङ्खादौ नास्त्येव, अनुमितौ त्वभावप्रमामात्रमेव विरोधीति कथमभावप्रमायां भावानुमितिरिति ।

---

च्छेदसामान्यस्याऽकिञ्चित्करत्वात् । अवच्छिन्नावृत्तेरपि च हेतोस्तत्त्वेन गृहीताज्जायमानामनुमितिं विरुणद्धि बाधप्रमा, सङ्करेऽपि वस्तुतोऽज्ञानासङ्करात् । सुखाद्यनवच्छेदकशरीराद्यवच्छिन्नात्मादौ सुखादिसाध्यकदुःखादेर्वर्त्तमानत्वात् कपिसंयोगाद्यनवच्छेदकमू-

---

तुमत्तानिश्चयः कारणं शिखरावच्छिन्नः पर्वतो वन्हिमानित्याद्यनुमितौ तु स्वरूपसम्बन्धविशेषात्मकमेव शिखरावच्छिन्नत्वं साध्यस्य भासत इति पक्षतावच्छेदकीभूतशिखरावच्छेदेन हेतुमत्त्वज्ञानं न तत्र प्रयोजकमिति भावः । पृथिवीत्वाद्यवच्छेदेन रूपवत्त्वाद्यनुमितावपि स्वरूपसम्बन्धविशेषात्मकमेवावच्छेदकत्वं भासते न तु व्यापकत्वमिति यदि ब्रूयास्तदाप्याह तदवच्छिन्नावृत्तेरपीति । पक्षतावच्छेदकीभूतशिखराद्यवच्छिन्नावृत्तेरपीत्यर्थः । तत्त्वेन तादृशशिखराद्यवच्छिन्नवृत्तिकत्वेन । ननु तथापि स्वरूपासिद्धिसाङ्कर्यमेवेत्यत आह सङ्करेपीति । स्वरूपासिद्धिबाधात्मकयोर्वस्तुतः सङ्करेपीत्यर्थः । ननु ज्ञानासाङ्कर्येण भेदे ह्रदो वन्हिमान् धूमादित्यादावेव बाधस्य सौलभ्यात्तु कस्थलानुधावनं विफलमतो वस्तुसाङ्कर्यमप्याह सुखादीति । तथा च यत्र खण्डशरीरे सुखं नोत्पन्नं किं तु दुःखं तच्छरीरावच्छिन्नात्मा सुखी दुःखादित्यादौ पक्षतावच्छेदकीभूतशरीरावच्छेदेन हेतुसत्त्वान्न स्वरूपासिद्धिः किन्तु तदवच्छेदेन साध्यासत्त्वाद्बा-

स चायं दशविधः । धर्मिग्राहकमानबाधितं घटो ऽव्यापकः सत्त्वादिति प्रत्यक्षेण, परमाणवः सावयवा मूर्त्तत्वादित्यनुमानेन, मेरुः पाषाणमयः पर्वतत्वादिति सुवर्णमयत्वबोधकागमेन, साध्यप्रतियोगिग्राहकबाधितं वन्हिरनुष्णः कृतकत्वादिति प्रत्यक्षेण, शब्दोऽश्रावणो गुणत्वादित्यनुमानेन, गवयत्वं गवयपदाप्रवृत्तिनिमित्तं जातित्वादित्युपमानेन, साध्यग्राहकबाधितं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यत्रागमेन, हेतुग्राहकबाधितं जलानिलावुष्णौ पृथिवीतो विपरीतस्पर्शत्वात् तेजोवदि-

——————

लाद्यवच्छिन्ने कपिसंयोगादिसाध्यकवृक्षविशेषत्वादेर्वर्त्तमानत्वाच्च । अत्र चैतत्कालावच्छिन्नः पर्वतो वन्हिमानिति शब्दादिवदेतत्का-

——————

घ एव दोषः साधनस्य साध्यव्याप्यतया तद्व्यभिचारस्य शङ्कितुमप्यशक्यत्वादिति भावः । अवान्तरभेदेन बाधस्य त्रैविध्यादाह कपीति । वृक्षविशेषत्वादेरिति । संयोगादिविशिष्टतद्वृक्षत्वादेरित्यर्थः । तद्वृक्षत्वमात्रस्य मूलावच्छिन्नवृत्तिकत्वाभावेन स्वरूपासिद्धत्वादिति ध्येयम् । ननु यदि क्वचिदपि पक्षतावच्छेदकीभूतदेशकालाद्यवच्छेदेन साध्यस्यानुमितिः प्रसिद्धा स्यात्तदा तुल्यन्यायेन उत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यनुमितेरपि तादृशोत्पत्तिकालावच्छिन्नगन्धवत्त्वावगाहित्वसम्भवात् तद्विरोधित्वेनैव तादृशकालावच्छिन्नगन्धाद्यभावो बाधः पृथग्दोषः स्यात्, न त्वेवं, सर्वत्रैवानुमितौ पक्षतावच्छेदकोपलक्षिते धर्मिण्येव साध्यस्य भानादत आह अत्र चेति । एतत्कालावच्छेदेन वन्हिमत्तेति । अत्र एतत्कालावच्छिन्नत्वं प्रकारीभूतवन्हौ भासते इति प्राञ्चः । तत्कालावच्छेद्य-

नि प्रत्यक्षेण, मनो विभु ज्ञानसमवाय्याधारत्वादित्यनुगा-
मेन, राजसूयं ब्राह्मणकर्त्तव्यं स्वर्गसाधनत्वादग्निष्टोम-
वादिति राजसूयकर्त्तव्यताबोधकागमेनेति ॥

---

लावच्छिन्नपर्वतपक्षकधूमादेरप्येतत्कालावच्छेदेन वन्हिमत्ताबुद्धि-
रनुभवसिद्धा नाऽपन्हवमर्हतीत्यभिप्रायः ॥

इति श्रीमहामहोपाध्यायरघुनाथशिरोमणिविरचितायां
तत्त्वचिन्तामणिदीधित्यामनुमानखण्डे
बाधान्तग्रन्थः समाप्तः ।

---

त्वविशिष्टसंयोगसम्बन्धेन वन्हिः पक्षे भासत इति नव्याः । अभि-
प्रायो मणिकारस्य ॥

इति श्रीजगदीशतर्कालङ्कारकृतायामनुमानतत्त्वचिन्ताम-
णिदीधितिव्याख्यायां बाधग्रन्थः समाप्तः ।

---

अनुमानखण्डो बाधान्तः समाप्तः ।

---

## चिन्तामणेः हेत्वाभासानामसाधकतासाधकत्वग्रन्थः ।

* अथ हेत्वाभासानामसाधकतासाधकत्वेन सदुत्तरत्वं जात्यादीनाञ्चाऽसाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वादसदुत्तरत्वम् । अथ विरुद्धत्वादिज्ञानादेव स्वानुमितेरिव परानुमितेरपि प्रतिबन्धे किमसाधकतानुमानेन, यद्वचसि वाद्युक्तदूषणावगमः स निगृहीत इति समयबन्धेन कथाप्रवृत्तौ दूषणमात्रमुद्भाव्यमन्यथाऽर्थान्तरत्वादिति चेन्न । द्वयं ह्युद्देश्यं परानुमितिप्रतिबन्धः, स्थापनाया असाधकतासाधनत्वञ्च । तत्राद्यं दूषणमात्रज्ञानादेव, द्वितीयन्तु अलिङ्गत्वज्ञापनात् । प्रतिबन्धकत्ववदनेनापि रूपेण दूषकत्वसम्भव इत्यभिप्रायेण वा असाधकतासाधनमाननेवं पञ्चावयवप्रयोगापेक्षा स्यात्, अन्यथा न्यूनतापत्तिरिति चेन्न । दूषणस्याऽसाधकताव्याप्यत्वमङ्गीकृत्य कथेति पक्षधर्मताया एवोद्भाव्यत्वात्, अन्यथा अधिकतापत्तेः । नन्वेवं कृतकत्वेनाऽनित्यत्वानुमाने व्याप्तिर्नाभिधेया उभयसिद्धत्वा-

---

* हेत्वाभासानामसाधकतासाधकत्वव्यवस्थापनपरस्य एतन्मूलग्रन्थस्य दीधितिकृताऽव्याख्यानेन जागदीश्यपि नोपलभ्यते । मथुरानाथकृता रहस्याख्यव्याख्यापि नैव लभ्यते । केवलं जयदेवमिश्रविरचित आलोक एव । स च कलिकातासोसायटीमुद्रिते माथुरीसहितचिन्तामणिपुस्तके मध्ये निवेशित इत्यत्र मूलमेव सन्निवेशितमित्यलम् ।

दिति चेन्न । कथायां समयाविषयतया दूषणे त्वसाधक-
ताव्याप्त्युपस्थितेरावश्यकत्वात् । अन्यथा कथकत्वविरो-
धात् । न त्वेवं कृतकत्वेनानुमाने, तद्व्याप्तिमनङ्गीकृत्यापि
कथासम्भवात् । यस्तु कथारम्भे बाधस्याऽसाधकत्वव्याप्तिं
नाङ्गीकरोति तं प्रति तद्दूषकत्वं प्रसाध्य पञ्चावयव-
प्रयोगः कर्त्तव्य एव । यत्तु दूषणे पक्षधर्मतामात्रमुद्भाव्यं
तत्र, यत्र वादिनोस्तथा समयः, अन्यत्र तु पञ्चावय-
वप्रयोग एवेति । तन्न । कथासम्प्रदायविरोधात् । अ-
थाऽसाधकत्वं न पक्षे साध्यप्रत्ययाजनकत्वं, तेनापि त-
त्त्वेनाज्ञानदशायां पक्षे साध्यभ्रमजननात् कदाचिदजन-
कत्वं सद्धेतावपि । नन्वेतत्काले साध्यविशिष्टपक्ष-
ज्ञानाजनकत्वं तत्, न हि दूषणत्वज्ञानदशायां पक्षे
भ्रमरूपाप्यनुमितिः । साध्यविशिष्टपक्षज्ञानञ्च हेतुत्वेन
ज्ञानदशायां प्रसिद्धमिति चेन्न । सद्धेतावसत्प्रतिपक्षताद-
शायामपि पूर्वकाले साध्यविशिष्टपक्षज्ञानाजनकत्वम-
स्तीत्यसाधकताप्रसङ्गात् । अथ पक्षे साध्यभ्रमजनकत्वं
तत्, बाधविरुद्धयोरपि तत्त्वाज्ञानदशायां भ्रमजनकत्वा-
दिति चेन्न । सद्धेतौ सत्प्रतिपक्षेऽसाधारणे च तत्त्वेन
ज्ञानदशायां साध्यभ्रमजनकत्वात् अज्ञाने साध्यभ्रमाज-
नकत्वात् । नापि व्याप्तिपक्षधर्मतान्यतरराहित्यम्, सत्प्र-

तिपक्षासाधारणसद्धेतोरभावात् दशाविशेषे तस्य दोषत्वात् साध्याप्रसिद्धौ प्रकृतसाध्यव्याप्त्यप्रसिद्धेश्च । नाप्यनैकान्तिकाद्यन्यतमत्वम्, यत्किञ्चिदनैकान्तिकत्वस्यातिव्याप्तेः प्रकृतसाध्यानैकान्तिकत्वस्याप्रसिद्धत्वेन केवलान्वयिसाधनेऽप्रसिद्धेः अंशतः सिद्धसाधनात् साध्याविशेषाच्च । यत्तु एतत्कालीनैतत्पक्षीयत्वावच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकरणत्वाभावः, तत्तत्कालतत्तत्पक्षविषयसाध्यत्वाभिमतानित्यत्वादिप्रमाजनकत्वाभावो वाऽसाधकत्वम् । न च प्रतियोग्यप्रसिद्धिः, एतत्कालीनैतत्पक्षीयत्वतत्तत्कालतत्तत्पक्षविषयत्वयोर्व्यधिकरणयोरेव प्रतियोगितावच्छेदकत्वादिति । तन्न । सद्धेतोः सत्प्रतिपक्षत्वाज्ञानदशायामपि तादृशप्रमायामकरणभावेनाऽसाधकतापत्तेः । नापि तृतीयलिङ्गपरामर्शस्याऽप्रमात्वं तत्, विरुद्धादौ परामर्शाभावात् सद्धेतौ सत्प्रतिपक्षेऽसाधारणे च तत्प्रमात्वाच्च । नाप्यनुमितिहेतुभूताभावप्रतियोगिज्ञानविषयत्वम् तत्, सद्धेतावपि कदाचित् व्यभिचारित्वसत्प्रतिपक्षत्वज्ञानस्यानुमितिप्रतिबन्धकत्वात् । अथानुमितिप्रतिबन्धकप्रमाविषयत्वमसाधकत्वं, सद्धेतौ व्यभिचारादिभ्रमः प्रतिबन्धकः, अनुमितिप्रतिबन्धकत्वञ्च व्यभिचारादिप्रमायास्तृतीयलिङ्गपरामर्शविघटन-

द्वारा तुल्यबलतया विषयतया वेति चेन्न। सत्प्रतिप-
क्षयोर्विरुद्धयोर्वास्तवतुल्यबलत्वाभावेन तद्भ्रमस्य प्रति-
बन्धकत्वात्। न च तुल्यबलतया ज्ञायमानेन बोधित-
साध्यविपर्य्ययकत्वज्ञानं प्रतिबन्धकं तच्च प्रमैवेति वाच्य-
म्। तुल्यबलताज्ञानमेव हि प्रतिबन्धकं न तु ज्ञायमान-
त्वज्ञानं, गौरवादसिद्धेश्च। न च सत्प्रतिपक्षेऽन्यतराङ्ग-
वैकल्यप्रमैव प्रतिबन्धिकेति वाच्यम्। अन्यतरत्वं तद-
तद्वृत्ति, न च तदतद्वृत्तिसामानाधिकरण्येन ज्ञायमानस्य
दोषत्वं, धर्ममात्रस्य व्यभिचारज्ञानादनुमित्युच्छेदापत्तेः।
अन्यतराङ्गवैकल्यज्ञानोपजीव्यस्य तुल्यबलत्वज्ञानस्यै-
व प्रतिबन्धकत्वाच्च, अन्यथा व्याप्यत्वासिद्ध्यन्तर्भा-
वापत्तेः। अथानैकान्तिकादिज्ञानस्य तत्तदनुमितिप्रति-
बन्धकत्वमसाधकत्वं, तथा हीदमनैकान्तिकादिज्ञानमेत-
त्साध्यवत्तया एतत्पुरुषस्य एतत्कालीनैतत्पक्षकानुमिति-
प्रतिबन्धकम्, एतदनैकान्तिकज्ञानत्वात्, एतदन्यतज्-
ज्ञानवदिति चेन्न। एतत्साध्यवत्तयैतत्पक्षकानुमितेः
कदाचिल्लिङ्गभ्रमात् प्रसिद्धावप्येतत्कालीनैतत्पुरुषस्य
तादृशानुमित्यप्रसिद्धेः। नापि समीचीनसाध्यविशिष्टप-
क्षप्रत्ययाजनकत्वं, बाधविरुद्धासिद्धेषु साध्यानधिकरणे
पक्षे सत्यसाध्यप्रतीत्यप्रसिद्धेः वान्हिमति बाष्पे धूमभ्र-

मात् वन्ह्यनुमितेः सत्यत्वाच्च। न चान्य एव वन्हिस्तत्र भासते, मानाभावात् तद्वह्नेः प्रत्यभिज्ञानात् एकव्यक्तिके तदसम्भवाच्च। न च साऽनुमितिर्लिङ्गविषयत्वेन भ्रमः, अनुमितौ लिङ्गभाने मानाभावात्। किञ्च भावोऽभावो वोभयथापि प्रमेयमिति सत्यानुमितौ भावत्वाभावत्ववति प्रमेयत्वज्ञाने एकत्र तयोरभावादसत्यानुमितिः स्यात्। न चान्यतरत्वं लिङ्गम्, तद्व्याप्तिमविदुषोऽप्यनुमितेर्व्यर्थविशेषणत्वाच्च। अथ साध्यव्याप्यत्वमेव तत्र तन्त्रं तत्र च बाधो नास्तीति चेत्, तर्हि कूटलिङ्गादनुमितौ वन्हिव्याप्यवत्त्वमेव तन्त्रं वन्हिव्याप्यञ्च किञ्चित्तत्रास्त्येव। अथ कूटलिङ्गे वन्हिव्याप्याभेदः प्रतीयते तथा च वह्नौ कूटलिङ्गव्यापकाभेदोऽपि, अन्यथा कूटस्यैव वन्हिव्याप्यत्वाप्रतीतेः, एवञ्च कूटलिङ्गव्यापको वन्हित्वेन भासत इति वन्ह्यनुमितिरसत्येति चेन्न। वन्हिव्याप्यालोके धूमारोपात् यत्रानुमितिस्तत्रासिद्धिभेदेऽसत्यत्वाभावापत्तेः आलोकव्यापके धूमव्यापकाभेदात्। अथ लिङ्गमनुमितिविषयो नियमतः पक्षधर्मताज्ञानविषयत्वात् व्याप्तिज्ञानविषयत्वात् नियमेनानुमितिहेतुविशेषणधीविषयत्वाच्च पर्वतत्ववत्साध्यवच्च। किञ्चैकविशेषणत्वेन ज्ञाते विशेषणान्तरधीसामग्री तत्रैव विशिष्टवैशिष्ट्यज्ञानमि-

ति धूमविशिष्ट एव वन्हिवैशिष्ट्यानुमितिरिति। नन्वनुमितौ व्यापकत्वभानेऽनुमित्यविच्छेदः। न च फलीभूतज्ञानन्यूनविषयस्यैव परामर्शस्यानुमितिहेतुत्वं, गौरवात्। विषयान्तरसञ्चारात् नानुमितिरित्यपि न, परामर्शस्य चरमकारणत्वात् प्रत्यक्षादिसामग्रीतो बलवत्त्वाच्चेति चेन्न। सिद्धसाधनेन विच्छेदात्। यद्यप्येवं लिङ्गज्ञानेऽप्रमात्वेऽपि साध्यप्रमात्वात् कथं तदसाधकं, तथाप्युक्तमसाधकत्वमस्त्येवेति चेत्, अस्तु तावदेवं, तथापि दैवात्तत्र धूमसत्त्वे कथं तदंशेऽप्ययसत्त्यता। अत एव आर्द्रेन्धनप्रभवो वन्हिर्धूमव्यापको नान्यः। वन्हित्वेन व्यापकत्वादन्योऽपि तथा, तेन विनापि धूमसत्त्वात्। अत एव वाष्पे धूमभ्रमात् धूमव्यापका वन्हिर्भासते स च तत्र नास्त्येवेति न सानुमितिः सत्येति निरस्तं, दैवादधूमसत्त्वे सत्यत्वात्। उच्यते। स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वमसाधकत्वम्। तथा हि, विरुद्धत्वादिज्ञानदशावर्त्तीदं पक्षे साध्यप्रत्ययाजनकं विरुद्धादित्वात् पक्षविशेषणमहिम्ना तत्तद्दशायां पक्षे साध्यप्रत्ययाजनकत्वं सिद्ध्यति, बाधितेऽपि लिङ्गत्वभ्रमात् पक्षे साध्यप्रत्ययजनकत्वमिति न प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिः। यद्वा अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्व-

मसाधकत्वम् । तथा हि, इदानीमिदमनुमितिप्रतिबन्धकतावच्छेदकरूपवदनैकान्तिकादित्वात् ज्ञानवत् । अनुमितिप्रतिबन्धकतावच्छेदकञ्च रूपं ज्ञाने विषयतयानैकान्तिकादित्वमेव । न च साध्याविशेषः, उपाधिविशेषस्यानुमेयत्वात्, तोयत्वेन पिपासोपशमनसमर्थतावच्छेदकरूपवत्त्वानुमानवत् । अन्ये त्वनैकान्तिकबाधितविरुद्धेष्वव्याप्यत्वं व्याप्यत्वासिद्धेऽनैकान्तिकत्वं स्वरूपासिद्धसत्प्रतिपक्षासाधारणेषु दशाविशेषेऽनुमितिप्रतिबन्धकज्ञानविषयत्वमसाधकत्वम् । न चैवमनैकान्तिकोऽसाधक इति सहप्रयोगानुपपत्तिः, तत्राऽव्याप्यत्वस्याऽसाधकशब्दार्थत्वात् । असाधकताननुगमेऽपि च हेत्वाभासत्वमनुगतमेव, यस्य ज्ञानमनुमितिप्रतिबन्धकं तस्य हेत्वाभासत्वादिति ॥

इति श्रीमहामहोपाध्यायगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे हेत्वाभासानामसाधकतासाधकत्वग्रन्थः समाप्तः ।

---

अनुमानखण्डो बाधान्तः समाप्तः ।

---

ॐश्रीः।

# अनुमानतत्त्वचिन्तामणौ

## * ईश्वरानुमानम्।

एवमनुमाने निरूपिते तस्माज्जगन्निर्मातृपुरुषधौरेयसिद्धिः, क्षित्यादौ कार्यत्वेन घटवत् सकर्तृकत्वानुमानात्। ननु क्षित्यादि प्रत्येकं न पक्षः, तस्य स्वशब्देनाभिधातुमशक्यत्वात्। नापि मिलितम्, एकरूपाभावात्। अत एव सकर्तृकत्वासकर्तृकत्वविचारारम्भकसंशयविषयः तथाभूतविवादविषयो वा न पक्षः, एकरूपाभावेन तयोस्तावत्सुग्रहीतुमशक्यत्वाद्वादिनोर्निश्चितत्वेन संशयाभावात्। न च वाद्यनुमानयोस्तुल्यबलत्वेन मध्यस्थस्य संशयः, अनुमानाभ्यां तस्य संशयो मध्यस्थप्रश्नानन्तरञ्चानुमानमित्यन्योन्याश्रयात् घटेऽपि कदाचित्तयोः सम्भवात् प्रत्येकं संशये विवादास्पदत्वेनानुमानेऽर्थान्तरतापत्तेश्च। न च शरीरापेक्षेण कर्त्रा यन्न कृतं शरीराजन्यं जन्यं वा पक्षः, जन्यात्मविशेषगुण-शब्द-फूत्कार-सर्गाद्यकालीनवेद--घटादि--लिप्यादिसम्प्रदायानामीश्वरमात्रकर्तृकाणामसंग्रहात् असिद्धेश्च, अदृष्टद्वारा शरीरिणोऽपि क्षित्यादिकर्तृत्वात्। नापि जन्यकृत्यजन्यं जन्यमुभयसिद्धकृतिजन्यान्यद्वा जन्यं पक्षः, क्षित्यादीनामदृष्टद्वारा जन्यकृतिजन्यत्वात्।

---

* ईश्वरानुमानचिन्तामणेर्विस्तृतस्य कुत्र चिन्मध्ये स्थलविशेषमात्रे शिरोमणिना व्याख्यानाद्दीधितेरल्पतया तदनुसारेण जागदीश्या अपि नैव विस्तृतिर्दृश्यते-, अस्य मथुरानाथीयव्याख्याया अलभ्यतया आलोकस्यापि सम्पूर्णग्रन्थव्याख्यापरत्वादर्शनेन यथास्थितदीधितिजागदीशीभ्यां सहैव सन्निवेशितोऽसौ मणिग्रन्थः।

नाप्यदृष्टजनककृत्यजन्यं जन्यकृतिसाक्षादजन्यं वा जन्यं पक्षः, ईश्वरकृतेरदृष्टजनकत्वेन क्षित्यादौ तदभावात्। घटादावप्येवं पक्षत्वेनांशतः सिद्धसाधनात्। न च क्षितिरेव पक्षः, अङ्कुरेण सन्दिग्धानैकान्तिकत्वात्। न च निश्चितविपक्षे हेतुसन्देहात्स इति वाच्यम्। हेतौ साध्याभाववद्गामित्वसंशयस्य दूषकत्वात्। स च साध्याभाववति हेतुसन्देहाद्धेतुमति साध्याभावसन्देहाद्वा उभयथापि दोषः। न चैवं पक्षेऽपि तत् स्यात्, अनुमानमात्रोच्छेदकत्वेनेतरत्र तस्य दूषकत्वात्। अङ्कुरे हेतोरनिश्चये न सन्दिग्धानैकान्तिकम्, तन्निश्चये च साध्यसन्देहवति साध्यानुमितिरेव पक्षवत्सामग्रीसत्त्वात्, अत एवाङ्कुरः पक्षसम इति चेत्, न, तस्याऽपक्षत्वेन हेतोः पक्षधर्म्मताविरहेण स्थापनानुमानाविषयत्वात्। तदा तस्यापि पक्षत्वे प्रतिज्ञान्तरापत्तिः। अनुमानान्तराधीनतत्साध्यानुमित्यनन्तरञ्च पक्षेऽनुमिताावितरेतराश्रयान्निकमप्यनुमानं स्यात् तत्रापि क्षित्यादौ सन्दिग्धानैकान्तात्, क्षितेर्विवादाविषयत्वे अङ्कुरे प्रथमं साध्यसाधनेऽर्थान्तराच्च। किञ्चैवमेकैकोपादानाभिज्ञसिद्धावपि नेश्वरसिद्धिः। नापि सर्गाद्यकालीनं द्व्यणुकं पक्षः, परम्प्रति सर्गाद्यसिद्धेः। किञ्च सकर्तृकत्वं न तावत्कृतिमत्सहभावः कृतिमज्जन्यत्वं वा, अस्मदादिना सिद्धसाधनात्। उपादानगोचरापरोक्षज्ञानचिकीर्षा—कृतिमज्जन्यत्वं तदिति चेत्। न। उपादानगोचरत्वं यदि यत्किञ्चिदुपादानगोचरत्वं तदा अस्मदादिनार्थान्तरत्वम्, ज्ञानादिजन्यत्वमपि विवक्षितम्। न च घटोपादानगोचरापरोक्षज्ञानादीनां क्षितिजनकत्वं सम्भवति, व्यभिचारादिति चेत्। न। क्षितिजनकादृष्टजनकज्ञानादीनामुपादानविषयत्वनियमेनादृष्टद्वारा तैरेव सिद्धसाधनात्। न च साक्षात्तज्जन्यत्वं विवक्षितम्, तद्धि न कृतिजन्याजन्यत्वे सति कृतिजन्यत्वम् स्वजनककृत्यव्यवहितोत्तरक्ष-

णवार्त्तित्वं वा, घटदृष्टान्तस्य साध्यविकलतापत्तेः घटादौ कुलाला-
दिकर्त्तृकत्वाभावप्रसङ्गाच्च । न च शरीरक्रिया दृष्टान्तः इति वा-
च्यम् । घटेनाऽनैकान्तिकत्वात् चेष्टात्वस्योपाधित्वाच्च । नापि क्षि-
त्याद्युपादानगोचरत्वं विवक्षितम्, अप्रसिद्धेः । न चोपादानश-
ब्दस्य सम्बन्धिशब्दत्वेन घट–क्षित्यादिपदसमभिव्याहारे तत्तदुपा-
दानबोधकत्वं चैत्रो मातृभक्तः मैत्रवदिति वाच्यम् । शाब्दे हि
बोधे तथा । न चात्र शब्दः प्रमाणम्, वादिनोरनाप्तत्वात् । अनु-
माने त्वनुगतेन व्यापकत्वग्रहे तेन रूपेण व्यापकसिद्धिः, तच्चोपा-
दानत्वमेवेति कथं नार्थान्तरम् । किञ्चैवं घटादावपि तत्तदुपादान-
त्वेनैवोपस्थित्या सामान्येन रूपेण कुत्राप्यनुपस्थितेर्व्याप्तिरेव न
गृह्येत । अपि च सामान्यलक्षणया ज्ञानलक्षणया योगजध-
र्म्मरूपया प्रत्यासत्त्या उपादानगोचरापरोक्षज्ञान–चिकीर्षा–कृति-
मता अस्मदादिना सिद्धसाधनम्, तेषां क्षित्यव्यवहितपूर्वसमयास-
त्त्वेऽपि तद्गतः सत्त्वात् अदृष्टद्वारा तेषामपि जनकत्वसम्भवात् ज्ञाना-
दिसाक्षाज्जन्यत्वस्य च निरस्तत्वात् ।

अथ योगजधर्म्माजन्य–सविकल्पकाजन्य–सामान्यलक्षणप्रत्या-
सत्त्यजन्य–जन्योपादानगोचरापरोक्षज्ञान–चिकीर्षा––कृतिमदजन्यं
जन्यं पक्षः, योगजधर्म्माजन्य–सविकल्पकाजन्य–सामान्यलक्षणप्र-
त्यासत्त्यजन्योपादानगोचरज्ञान-चिकीर्षा-कृतिमज्जन्यमिति साध्यम् ।
यद्वा अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यजन्यज्ञानादिम-
दजन्यं जन्यम् अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्योपादा-
नगोचरापरोक्षज्ञानादिमज्जन्यमिति साध्यम्, ज्ञानाव्यवहितोत्तरस-
मयवर्त्तीच्छा–तदव्यवहितोत्तरसमयवर्तिकृतीनां जनकत्वं विवक्षितं
न तु ज्ञानादीनां यौगपद्यं पौर्वापर्य्यं वा अतो न साध्याप्रसिद्धिर्न
वा क्षित्यादौ बाध इति । मैवम् । योगजधर्म्मसामान्यज्ञानरूपप्र-

त्यासत्तीनामनागतगोचरसाक्षात्कारस्य तज्जनकप्रत्यासत्तीनाञ्च परस्याप्रसिद्धतया तदजन्यस्य साक्षात्कारस्याप्यप्रसिद्धत्वेन पक्ष–साध्ययोर्विशेषणासिद्ध्या परं प्रत्याश्रयासिद्धेः साध्याप्रसिद्धेश्च। तत्सिद्धौ वा पक्षे तदजन्यत्वासिद्धेः क्षितिजनकादृष्टजनककृति–चिकीर्षा–साक्षात्काराणां योगजधर्म्माद्यजन्यानामदृष्टद्वारा क्षिति-जनकत्वेन सिद्धसाधनात् । न च तादृशसाक्षाज्जन्यत्वं विवक्षि-तम्, घटादिदृष्टान्ते तदसम्भवात्, दृष्टान्ते घटादौ जनकेष्टसाध-ताज्ञानस्यानुमितित्वेन जन्यसाविकल्पकव्याप्तिग्रहजन्यत्वेन साध्या-प्रसिद्धेश्च।

ननु व्याप्तिबलेन साध्यं सिद्ध्यति व्याप्तिश्च यत्र यत्र कार्य-त्वं तत्र तदुपादानाभिज्ञजन्यत्वम् इतिरूपा न तु यद्यत्कार्य्यं त-द्यत्किञ्चिदुपादानाभिज्ञजन्यमिति, एवञ्च यत्र यत्र कार्य्यत्वं त-त्र तदुपादानाभिज्ञजन्यत्वमिति विशिष्य व्याप्त्या क्षित्यादौ का-र्य्यत्वं क्षित्याद्युपादानाभिज्ञजन्यत्वमेव साधयत्यतो न सिद्धसाध-नमिति चेत्, न। घटे पटे च कार्यत्वस्य व्याप्तिग्रहः किं प्रत्येकं घटोपादानाद्यभिज्ञजन्यत्वेन, तत्तदुपादानाभिज्ञजन्यत्वेन, उपादा-नाभिज्ञजन्यत्वेन वा, आद्ये घटोपादानाभिज्ञजन्यत्वादौ कार्य्यत्व-स्य व्यभिचार एव। द्वितीये त्वननुगततत्तच्छब्दाभिधेयघटाद्युपा-दानगतानुगतरूपाभावात् कथं व्यापकताग्रहः, तत्तच्छब्दस्य स्व-भावात् समभिव्याहृतपरतया नायं दोष इति चेत्। न। अनुमाने शब्दस्वभावोपन्यासस्याप्रयोजकत्वात्। अत एवेदानीं देवदत्तो ब-हिरस्ति विद्यमानत्वे सति गृहासत्त्वात्, विद्यमानत्वे सति यो यदा यत्र नास्ति स तदा तदतिरिक्ते देशेऽस्ति यथाऽहमेव बहिरसन् गृ-हमध्ये तिष्ठामीत्यत्र पक्ष–दृष्टान्तसाधारणयत्त्र–तत्त्रयोरनुगतयो-रभावान्नान्वयि, किन्तु व्यतिरेकीत्युक्तम्। तृतीये सिद्धसाधनमेव।

अथ सर्गाद्यकालीनद्व्यणुकं ज्ञानेच्छा-कृतिसमानकालीनसामग्रीजन्यम् कार्य्यत्वात् घटवत् अदृष्टसामग्रीजन्यत्वेऽदृष्टत्वापत्तिरिति चेत् । न । परम्प्रति सर्गाद्यसिद्धेः । ज्ञानादीनां सिद्धावपि द्व्यणुकाजनकत्वात् उदासीनसिद्धावप्रयोजकत्वाच्च । एतेन सर्गाद्यकालीनं द्व्यणुकं द्व्यणुकासमवायिकारणसमानकालीनकृतिजन्यमिति निरस्तम् । द्व्यणुकासमवायिकारणसमानकालीनकृतित्वेन गौरवाप्रयोजकत्वाभ्यामजनकत्वात् । किञ्च कार्य्यत्वं न तावद्योगोपस्थितकृत्यर्हत्वम्, असिद्धेः । नापि पूर्वकालासत्त्वे सति उत्तरकालसम्बन्धित्वं, तत्तत्पूर्वकालत्वस्याननुगतत्वात् सकलपूर्वकालस्याऽप्रसिद्धेः । नापि कादाचित्कत्वं, प्रागभावेनाऽनैकान्तिकत्वात् । नापि प्रागभावप्रतियोगित्वं, ध्वंसेनाऽनैकान्तिकत्वात् । नापि सत्त्वे सति तत्त्वं, सत्ताजातेः परम्प्रति असिद्धेः स्वरूपसत्त्वस्य च ध्वंसेऽपि सत्त्वात् । यच्चायं घटः एतद्घटजनकानित्यज्ञान-चिकीर्षा-कृत्यतिरिक्तज्ञानादिजन्यः कार्यत्वात् पटवदित्यादि । तन्न । विपक्षबाधकाभावेनाऽप्रयोजकत्वात्, अन्यथा अयं घटः एतद्घटजनकानित्यादृष्टातिरिक्तादृष्टजन्यः कार्यत्वात् पटवत्, एतौ सुख-दुःखसाक्षात्कारौ एतज्जनकानित्यसुख-दुःखातिरिक्तसुख-दुःखसाध्यौ सुख-दुःखसाक्षात्कारत्वात् इत्यादिना नित्यधर्म्माधर्म्म-सुख-दुःखाश्रयस्यापि सिद्धिप्रसङ्गात् । अयं घटः स्वजनकानित्यज्ञानाद्यतिरिक्तज्ञानाद्यजन्यः घटत्वात् अपरघटवदित्यादिना सत्प्रतिपक्षाच्च ।

केचित्तु दृश्यते तावदभिमतग्राहिणीन्द्रिये मनो निवेशयतः पुंसो मनःक्रियानुकूलो यत्नः, तथा च सर्गाद्यकालीनशरीरजन्यज्ञानध्वंसानाधारकालाधारज्ञानजनकात्ममनोयोगजनिका मनःक्रिया तन्मनोगोचरप्रयत्नानाधारतन्मनोगोचरप्रयत्न-तद्व्याप्येतरसकलका-

रणाधारकालानन्तरकालानाधारा तन्मनःक्रियात्वात् · सम्मतत-न्मनःक्रियावत् अर्थात् प्रयत्नाधारकालानन्तरकालाधारा सा क्रिया सिद्ध्यतीत्याहुः। तन्न, सर्गाद्यकाले ज्ञानजनकमनःसंयोगजनकक्रियायां मानाभावः, पूर्व्वक्रिययैव संयोगसम्भवात् ईश्वरवादिनां तन्मनोगोचरप्रयत्नानाधारः कालोऽप्रसिद्ध एव, क्रियात्वस्यैव हेतुत्वे व्यर्थविशेषणत्वञ्च। किञ्चैवं प्रयत्नानाधारकालानाधारत्वम्, अर्थात् तत्सिद्धौ मानान्तरादीश्वरसिद्धौ अर्थान्तरत्वमिति। अत्रोच्यते। अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि अदृष्टप्रागभावव्याप्यप्रागभावप्रतियोग्युपादानगोचरापरोक्षज्ञान–चिकीर्षा–कृतिमज्जन्यानि स्वजनकादृष्टेत्तरोपादानगोचरापरोक्षज्ञान–चिकीर्षा–कृतिमज्जन्यानि वा अपरोक्षज्ञान–चिकीर्षा–प्रयत्नविषयीभवदुपादानानि वा समवेतत्वे सति प्रागभावप्रतियोगित्वात् यदेवं तदेवं यथा घटः तथा चैतानि तस्मात्तथा। उक्तपक्षे कस्यचिदनन्तर्भावेऽपि तदादाय तथैव निरुक्तस्य पक्षत्वनिर्देशे समूहालम्बनरूपैवानुमितिरुत्पद्यते। न च जन्यकृत्यजन्यत्वं तावदननुगतष्वेकरूपाभावेन ग्रहीतुमशक्यमिति वाच्यम्। जन्यकृत्यजन्यत्वं हि जन्यकृतिजन्यान्यत्वमित्यन्यत्वेन रूपेण सामान्यलक्षणया तावतामुपस्थितेः। न च जन्यत्वविशेषणव्यावर्त्याप्रसिद्धिः, प्रमेयो घट इतिवदव्यावर्त्तकत्वेऽपि तदुपरक्तबुद्धेरुद्देश्यत्वेन तस्योपरञ्जकत्वात्। उक्तान्यतमत्वमेव सकर्तृकत्वम्। अत एव घटभोक्ता न घटकर्त्तेति व्यवह्रियते। एवञ्च शाब्दफूत्कारादीनां पक्षतैव। ज्ञानेच्छादीनामपि पक्षत्वान्न सन्दिग्धानैकान्तिकता। उपादानस्य सिद्धत्वेऽप्युपादेयस्यासिद्धत्वेन तद्वत्तया तत्रापि चिकीर्षा। यद्वा पक्षे हेतौ च न समवेतत्वं विशेषणं तेन ध्वंसोऽपि पक्षः। साध्ये च उपादानपदं कारणमात्रपरम्,प नुआ-

देयमेव वा। जन्येच्छाकृत्यजन्यत्वञ्च पक्षे विवक्षितं तेन कृतिध्वंसस्य कृतिजन्यत्वेऽपि इच्छाजन्यत्वाभावात् पक्षत्वम्। क्षितिरेव वा पक्षः। न चाङ्कुरे सन्दिग्धानैकान्तिकत्वम्, पक्षपक्षसमैरपेक्ष्येण घटादौ निश्चितव्याप्तेर्लिङ्गस्य तयोर्दर्शनेनोभयत्रानुमित्यविरोधात्। न त्वनुमित्योरन्योन्यापेक्षत्वं येनान्योन्याश्रयः स्यात्। प्रतिज्ञाया अविषयत्वात् तत्र पक्षसमव्यपदेशः। न चाङ्कुरस्य पक्षत्वेनानिर्देशात्तत्र न पक्षधर्म्मताज्ञानमिति वाच्यम्। सिषाधयिषाविरहसहकृतसाधकप्रमाणाभाववति लिङ्गज्ञानस्यानुमितिमात्रकारणत्वात्, तच्च क्षितौ पञ्चावयवेन अङ्कुरे स्वत एवेति न कश्चिद्विशेषः। यदि च क्षितौ हेतुनिश्चयदशायामङ्कुरस्य हेतुमत्तया न निश्चयस्तदा क्व सन्दिग्धानैकान्तिकत्वम्।

अथ पक्षसमे साध्याभावसामानाधिकरण्यसंशयात् हेतौ व्याप्तिग्रह एव नोत्पद्यते उत्पन्नोऽपि वा बाध्येत इति चेत्, तर्हि महानसेऽपि धूमे व्याप्तिग्रहो न स्यात् भूतोऽपि वा बाध्येत सन्दिग्धवह्निकपर्व्वतापर्व्वतधूमवतामेकधर्म्माभावेनाऽपक्षत्वात्।तस्मात्साध्यसन्देहवति हेतुनिश्चयो न दोषः, किन्तु गुण एव, अन्यथाऽनुमानमात्रमुच्छिद्येत। पक्षादन्यत्र तद्दूषणमिति यदुक्तं तत्र पक्षान्यत्वं सिषाधयिषितसाध्यान्यत्वं यदि तदानपेक्षितानुमितिर्न स्यात्। अथ सन्दिग्धसाध्यान्यत्वं साधक–बाधकप्रमाणाभावविषयान्यत्वं वा तदा अङ्कुरेऽपि तन्नास्ति। अथ प्रतिज्ञाविषयान्यत्वं तदा स्वार्थानुमित्युच्छेदः। नियतविषयज्ञानाजन्यत्वेन पक्षविशेषणात्सर्वविषयज्ञानसिद्धिः। साध्ये च ज्ञानेच्छा–प्रयत्नानां विशेषणत्वेन विशिष्टसाधनत्वं विवक्षितं तेन न तदुपलक्षितक्षेत्रज्ञेनाऽर्थान्तरम्। सामान्यतोऽपि साध्यनिर्देशे पक्षधर्म्मताबलेनाभिमतविशेषसिद्धिश्च। नन्वाद्यसाध्यद्वये घटाद्युपादानगोचरापरोक्षज्ञान–चिकीर्षा–कृतीनामेव

जनकत्वमायातु इत्यर्थान्तरम् । न च तेषां व्यभिचारात् क्षित्यादौ न कारणत्वमिति वाच्यम् । अनादौ मत्राहे कस्यचित् कदाचित् क्षितिद्व्यणुकादिपूर्व्वघटाद्युपादानगोचरज्ञानादिसत्त्वात् । न च सर्गाद्यकालीनस्यापि पक्षत्वात्तत्रेश्वरासिद्धिः, परम्पति तदसिद्धेरिति चेत् । न । ज्ञानादीनां त्रयाणां स्वविषयसमवेतकार्य्यं प्रत्येव जनकत्वावधारणेनैतदनुमानस्य तदविषयत्वात् । अत एवान्योपादानगोचरापरोक्षज्ञानाद्यजन्यत्वेन पक्षविशेषणमपि न युक्तम् । तृतीयसाध्ये तु नार्थान्तरं क्षित्यादौ घटाद्युपादानासमवेतत्वात् । ननु सामान्यलक्षणादिप्रत्यासत्त्या क्षित्याद्युपादानगोचरं यत् प्रत्यक्षं तज्जन्यत्वमेवास्तु तथा चेश्वरे न प्रत्यक्षं न वेच्छा—प्रयत्नौ तयोः समानाधिकरणज्ञानाविषयेऽसत्त्वात् । न च तादृशप्रत्यासत्त्यजन्यत्वं प्रत्यक्षविशेषणं, परम्पत्यसिद्धेरिति चेत् । न । द्रव्यत्वेन ज्ञानलक्षणया वा कपालगोचरप्रत्यक्षेऽपि घटादौ अकर्तृकत्वात् क्षित्यादौ सकर्तृकत्वनिर्वाहकं ज्ञानं सिद्ध्यद्विलक्षणमेव सिद्ध्यति । न चावयवविभागद्वारा क्षित्यादिषु जलक्षेपात्समुद्रादिषु हस्तक्षेपात्परमाणुद्वयसंयोगे च द्व्यणुकेष्वस्मदादिकर्तृकत्वादंशतः सिद्धसाधनमिति वाच्यम् । तत्र हि क्षितिनाशे अस्मदादीनां कर्तृत्वं न तु खण्डक्षितौ, अवस्थितसंयोगेभ्य एव तदुपपत्तेः सकलतदुपादानगोचरज्ञानेच्छा—कृतीनामभावाच्च । अत एव द्व्यणुकेऽपि न कर्तृत्वम् । जलक्षेपादधिकपरिमाणकसमुद्रादेः सपक्षत्वमेव घटस्येव । ननु घटे साध्यविकलत्वम् अन्वय—व्यतिरेकाभ्यां ज्ञानादेरेव जनकत्वात् न तु तदाश्रयस्य धर्म्मिग्राहकस्यान्वय—व्यतिरेकस्य वा ग्राहकस्याभावात् । न च घट आत्मजन्य उत्पत्तिमत्त्वात् ज्ञानवदिति वाच्यम् । आत्मसमवेतत्वस्योपाधित्वात्, घटः आकाशजन्य उत्पत्तिमत्त्वात् शब्दवदितिवदप्रयोजकत्वाच्चेति चे-

त् । मैवम् । प्रयत्नवदात्मसंयोगश्चेष्टाद्वारा घटहेतुरतः प्रयत्न इव आत्मापि हेतुः । न चात्मसंयोगे सत्यपि प्रयत्नं विना न चेष्टेति प्रयत्न एव तत्कारणम्, असमवायिकारणं विना कार्यानुत्पत्तेः । न चात्मसंयोगस्य कारणत्वेऽपि संयोगे परिचायकमात्रमात्मेति वाच्यम् । संयोगमात्रस्याकारणत्वेन संयोगिविशेषितस्य हेतुत्वात् । आत्मसंयोगव्यतिरेकप्रयुक्तक्रियाव्यतिरेकस्याऽसिद्धेर्नात्मसंयोगः कारणमिति चेत् । न । या क्रिया व्यधिकरणयदीयगुणजन्या सा तत्संयोगासमवायिकारणिका यथा स्पर्शवद्वेगवद्द्रव्यसंयोगजा क्रियेति व्याप्त्या तत्सिद्धेः । न च क्रियाया मूर्त्तमात्रसमवेतासमवायिकारणकत्वनियम इति वाच्यम् । कार्यमात्राभिप्रायेण ज्ञानादौ व्यभिचारात् विशिष्याऽप्रयोजकत्वात् असमवायिकारणसंयोगाश्रयस्य तत्कार्यजनकत्वनियमाच्च ।

अन्ये तु अनुकूलकृतिसमवायित्वं कर्तृत्वं न तु जनकत्वे सति गौरवात् । कर्त्तरि कारकव्यपदेशश्चाभियुक्तानां सविशेषणे हीति न्यायेन कृतिपर्यवसन्न एव । एवं ज्ञानेच्छा–कृतिजन्यत्वमेव साध्यं तदाश्रयत्वमेवेश्वरस्य कर्त्तृत्वम् ।

अथ घटे कृतिसाध्येष्टसाधनताज्ञानं चिकीर्षाद्वारा हेतुः तच्च न प्रत्यक्षं चिकीर्षाविषये अनागते इन्द्रियासन्निकर्षात् किन्तु अनुमितिरूपं तथा च साध्यविकलो दृष्टान्तः साध्याप्रसिद्धिर्वा दोष इति चेत् । न । सिद्धवृत्त्यासिद्धविषया हि कृतिः सिद्धविषयप्रत्यक्षे सति सम्भवति । न हि मृदवयवानां संस्थानविशेषे कृतिसाध्येष्टसाधनतानुमितावप्यवयवस्य प्रत्यक्षेणोपस्थितिं विना प्रवृत्तिः । अत एव यागे शब्दात्तदुपजीविलिङ्गाद्वा कृतिसाध्येष्टसाधनत्वेऽवगतेऽपि हविरादीनां प्रत्यक्षेणानुपस्थितौ न प्रवृत्तिः । न चोपादानप्रत्यक्षं प्रवर्त्तकज्ञानोपक्षीणम् । अप्रत्यक्षे परमाणौ तत्क्रियाया-

मिष्टसाधनताज्ञानेऽपि प्रवृत्त्यभावात् । प्रवृत्तिविषयस्य मृदङ्गादेः प्रत्यक्षत्वात् न शब्दफूत्कारादिना व्यभिचारः । न चाभिमतग्राहकेन्द्रियसंयोगार्थं मनसि प्रयत्नजन्यक्रियादर्शनाद्व्यभिचारः, अदृष्टसहकृतत्वगिन्द्रियेण हि मनोवहनाडीनामुपलम्भेन तद्गोचरप्रयत्नात् नाडीक्रिया ततः स्पर्शवद्वेगवन्नाड्या नोदनान्मनसि क्रिया न तु प्रयत्नात् । अत एव जलाद्यभ्यवहारमलोत्सर्गहेतुनाडीनामनाद्यभ्यासवासनावशात् अदृष्टसहकृतत्वगिन्द्रियेणोपलम्भात् तद्गोचरप्रयत्नः । नन्वेवं घटादावनुमितिजन्यत्वदर्शनादीश्वरे अनुमितिरपि सिद्ध्येत यथा प्रत्यक्षस्येन्द्रियजन्यत्वेऽपि नित्यं तदीश्वरे तथानुमितेर्लिङ्गजन्यत्वेऽपि सा तत्र नित्यैव अनित्येन अनादिद्व्यणुकाद्यजननादिति चेत् । न । स्वसुख-दुःखाभावादिसाधनतानुमितेर्हि हेतुत्वं घटादौ गृहीतम्, न च भगवति शरीराद्यभावेन सुखमस्ति, अतो न क्षित्यादौ तस्य तथानुमितिर्यथार्था सम्भवति । न च तादृगनुमितेरनुमित्यन्तरस्य वानुमितित्वेन घटादौ प्रवृत्तिविषयप्रत्यक्षवद्धेतुत्वं गृहीतमिति नेश्वरे अनुमितिः । ननु द्वेषजन्यकृतिसाध्ये चिकीर्षाविरहाद्व्यभिचारः तदृष्टान्तेन क्षित्यादौ द्वेषसाध्यत्वादीश्वरे द्वेषोऽपि भवेत् द्वेषवतः संसारित्वे भगवतोऽपि तथात्वापत्तिरिति चेत् । न । न हि सर्पादिद्वेषादेव तन्नाशानुकूलव्यापारे कृतिरुत्पत्तुमर्हति । प्रयोजनमन्तरेण प्रेक्षावतां दुःखैकफले कृतेरनुत्पत्तेः किन्तु दुःखसाधनध्वंसं तत्साध्यदुःखानुत्पादं वा फ[illegible] तत्साधनताज्ञानात्, तथा चेष्टसाधनताज्ञानात् तत्रे[illegible]िकारणं [illegible]त्वात्, द्वेषस्तु परम्परया त[illegible] [illegible] हन्तुं द्वेष्मीत्यबाधितप्रत्ययात् । न चादृश्यस्य कर्तुरनुपलब्धिबाधः, अनुपलब्धिमात्रस्य बाधकत्वे अतीन्द्रियोच्छेदात् योग्यानुपलब्धेश्चासिद्धेः परमात्मनोऽयो-

ग्यत्वनियमात्, शशशृङ्गप्रतिबन्ध्या च नादृश्यमात्रनिरासः पर-
माण्वादिस्वीकारात् । नाप्ययोग्यकर्तृनिरासः, चेष्टया ज्ञानादिमतः
परमात्मनोऽनुमानात् परम्प्रति तस्यायोग्यत्वात् । नापि शृङ्गे प-
शुत्ववदप्रयोजकम्, कर्तुः कार्य्यमात्रे कारणत्वावधारणात्, प्रति-
बन्धिमात्रस्य चादूषणत्वात् । शशे पशुत्वेनायोग्यशृङ्गसिद्धिः कु-
तो नेति चेत् । न । अर्थान्तरत्वात् विपक्षे बाधकाभावेन व्या-
प्त्यसिद्धेः शृङ्गत्वस्य योग्यसंस्थानविशेषव्यङ्ग्यत्वेनायोग्यस्य वि-
रोधेन शङ्कितुमशक्यत्वात् शशे शृङ्गस्यात्यन्ताभाव इति सर्वेषा-
मबाधितप्रत्यक्षबाधितत्वाच्च । अथ कृति-कार्य्ययोर्नान्वय-व्यति-
रेकाभ्यां व्याप्तिग्रहः त्वन्मते व्यापककृतेः सत्त्वे तद्देशे समये वा
कृतिमात्रव्यतिरेकानिरूपणात् । नित्यकृतेरन्वयोऽपि न गृहीतः
वह्निमात्रव्यतिरेकोऽस्ति गृह्यते चेति । न चैवमाकाशात्मनोरप्रसि-
द्धिः समवायिमात्रस्य व्यतिरेकानिरूपणेन कार्य्यं समवायिकार-
णजन्यमिति व्याप्तेरसिद्धेरिति वाच्यम् । समवायिकारणत्वग्रहे हि
तत्संसर्गाभावोऽप्रयोजको निमित्तमात्रसाधारणत्वात् किन्तु यत्स-
मवायि तत्र कार्य्यं यन्न समवायि तत्र नेत्यन्योन्याभावमादाय
कार्य्यं समवायिजन्यमिति व्याप्तिग्रहसम्भवात् समवायित्वेन त-
योरन्योन्याभावोऽस्ति गृह्यते च । यद्वा भावकार्य्यं समवेतमिति
व्याप्त्या तयोः सिद्धिरिति, न, यथा हि यद्वह्नेरन्वये धूमो गृ-
हीतस्तत्तद्व्यतिरेके धूममात्रव्यतिरेकग्रहात् वह्नि-धूममात्रयोर्व्या-
प्तिग्रहः न तु पर्वतीयवह्नेरन्वयव्यतिरेकग्रहात् । न चान्यान्वय-
व्यतिरेकाभ्यामन्यव्याप्तिग्रहे अतिप्रसङ्ग इति वाच्यम् । यद्विशे-
षयोरन्वय-व्यतिरेकग्रहस्तत्सामान्ययोर्बाधकं विना व्याप्तिग्रहात्,
स च वह्नि-धूमव्याप्तिग्रह उत्पद्यमानः सकलधूमगोचरो धूमत्व-
पुरस्कारेण प्रसिद्धधूमगोचर एव वा, तथेहापि कृतिविशेष-का-

र्थविशेषयोरन्वय-व्यतिरेकग्रहो बाधकमन्तरेण कृति-कार्य्यमात्रयोर्व्याप्तिग्रहे उपायः, न तु पक्षधर्म्मताबललभ्यविशेषान्वय-व्यतिरेकग्रहः, अनुमानमात्रोच्छेदप्रसङ्गात् । एतेन कार्य्यत्वस्य विपक्षवृत्तिहतये सम्भाव्यतेऽतीन्द्रियकर्त्ता चेद्व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिद्ध्यति, दृश्योऽथ व्यतिरेकसिद्धिमनसा कर्त्ता समाश्रीयते तस्यागेऽपि तदा तृणादिकमिति व्यक्तं विपक्षेक्षणमिति निरस्तम् । ननु यदि कर्तृमात्रव्याप्तिग्रहाददृश्यकर्तृसिद्धिस्तदा वह्निमात्रव्याप्तधूमात् अदृश्यजाठरीयवह्निसिद्धिरपि स्यात् । न स्यात्, अदृश्यवह्नेर्धूमानुत्पत्तेर्दृश्यस्य तत्र हेतुत्वात् । ननु ज्ञानेच्छा-प्रयत्नत्रयव्यतिरेकान्न कार्य्यव्यतिरेकः किन्तु एकैकव्यतिरेकात् तथा च व्यर्थविशेषणत्वेन विशिष्टव्यतिरेको न हेतुव्यतिरेकव्याप्य इति न हेतोर्विशिष्टसिद्धिः साध्याभावव्यापकाभावप्रतियोगिन एव साध्यगमकत्वादिति चेत् । न । यत एकैकव्यतिरेकात्कार्यव्यतिरेकः अत एव कार्यत्वादेकैकं सिद्ध्यत् त्रयमपि सिद्ध्यति आर्थस्तु समाजः । स्यादेतत् अशरीरो नित्यज्ञानादिमान् सर्वज्ञः कर्त्ता पक्षे विवक्षितो घटादौ च कार्यत्वस्य तद्विपरीतकर्तृसहचारदर्शनाद्विशेषविरुद्धत्वमिति चेत् । न । हेतोर्विवक्षितसाध्यविपरीतसहचारमात्रस्याऽदूषकत्वात् । अन्यथानुमानमात्रोच्छेदप्रसङ्गात् । न चाऽनित्यज्ञानासर्वज्ञशरीरिकर्तृत्वेन समं कार्यत्वस्य व्याप्तिरस्ति, येन विपरीतसाधने विरुद्धत्वं स्यात्, तादृशव्याप्तिश्च त्वया मया वा नाङ्गीक्रियते अङ्कुरादौ योग्यानुपलम्भेन शरीरिकर्तृकत्वाभावात् । अथ यथादर्शनबलप्रवृत्तव्याप्त्याऽनित्यज्ञानादिमान् कर्त्तोपनेयः पक्षधर्म्मतया च नित्यज्ञानादिमान् तथा चोपनेयविशेषयोर्विरोधेन व्याप्ति-पक्षधर्म्मतयोर्विरोधात् परस्परसहकारिताविरहान्नानुमानं विशेषविरोधादिति चेत् । न । अनि-

स्यज्ञानादिकर्तृजन्यत्वेन व्याप्त्यग्रहात् ज्ञानादिमत्कर्तृजन्यत्वव्याप्तश्च पक्षधर्म्मतायाश्च पृथगुपनायकत्वाभावाच्च एकवैयर्थ्यप्रसङ्गात् । तथा च निरपेक्षतादशायां विशेषानुपस्थानादेव न विरोधज्ञानम्, सापेक्षतादशायान्तु सहोपलम्भादेव विरोधप्रतियोगिनोः सिद्ध्यसिद्धिभ्यां विरोधज्ञानाभावश्च । लिङ्गविशेषण–साध्यविशेषणाविरोधे च विशेषविरोधः, यथा चन्दनप्रभववह्निमानयम् असुरभिधूमवत्त्वादिति । ननु ज्ञानत्व–नित्यत्वयोः कर्तृत्वाशरीरित्वयोश्च परस्परविरुद्धत्वेन एकधर्म्यसमावेशात् कथं नित्यज्ञानादिकर्तृसिद्धिरिति चेत् । न । उपसंहारस्थानस्याऽभावात् । तथा हि ईश्वरे तद्बुद्धौ च शरीरित्व–कर्तृत्वे बुद्धित्व–नित्यत्वे चोपसंह्रियमाणे विरुद्धे न तु स्वाश्रयस्थिते, उभयोच्छेदप्रसङ्गात् । न चेश्वरस्तद्बुद्धिर्वोपस्थिता, उपस्थितौ वा धर्म्मिग्राहकमानेन तयोर्विरोधापहारात्, अनुपस्थिते च तद्द्वये विरोधज्ञानमकिञ्चित्करमेव, अस्मदादिबुद्धौ व्योमादौ कुविन्दे मुक्तात्मनि चोपस्थिते विरोधोपसंहारात् । बुद्धित्वनित्यत्वयोः कर्तृत्वाशरीरित्वयोरनधिगमेऽपि ईश्वरे अशरीरिकर्तृत्व–नित्यज्ञानादिसिद्धिरप्रत्यूहैव । अत एव नित्यत्वावयवत्वयोर्विरोधज्ञानमकिञ्चित्करमेवेति परमाणुसिद्धिः । ईश्वर–तद्बुद्ध्यादिकं तर्कितमिति चेत् । न । तर्कस्य प्रसञ्जनस्य संशयस्य चाज्ञातेऽसम्भवात् । स्यादेतत्, घटादौ कृतिसाध्यता हस्तादिव्यापारद्वारैव गृहीता न तु साक्षात् । न च पितृपुत्रयोरेकघटसाधनत्वमिव प्रयत्न–हस्तादिव्यापारयोः साक्षात्साधनत्वं वाच्यमिति वाच्यम् । घटार्थं हस्तव्यापारवत्कुलालसमीपस्थस्य हस्तादिव्यापारशून्यस्य तद्घटकर्तृत्वापत्तेः । न च हस्तादिव्यापारवत्ता अशरीरस्य सम्भवति । अन्यादृशी च कृतिसाध्यता न दृष्टा । शरीर–तद्व्यापारौ चाङ्कुरे बाधिताविति-

ति कर्त्तुरपि बाध एव । अन्यथा त्वदनुमानादेव क्षेत्रज्ञ एव कर्त्ताऽनुमीयेत बुद्ध्यादिमत्परात्मनो योग्यानुपलब्धिबाधाभावात् । शरीरव्यापारद्वारैव क्षेत्रज्ञस्य हेतुत्वात् शरीरव्यापारस्य चाङ्कुरे बाधात् बाधित इति चेत् । तर्हि कर्तृमात्रस्यापि तद्द्वारैव चेष्टेतरकार्य्ये कर्तृत्वावधारणात् तद्बाधे कर्तृमात्रबाधोऽपि । एवञ्च कृतिसाध्यत्वे शरीरव्यापारजन्यत्वं प्रयोजकमिति स एव उपाधिः । एवं ज्ञानेच्छयोरपि इच्छाकृतिद्वारा जनकत्वमिति कथं द्वारं विना क्षित्यादौ जनकत्वमिति । उच्यते । जन्यमात्रे हस्तादिव्यापारजनककृतित्वेन न जनकत्वं चेष्टायां क्षित्यादौ च व्यभिचारात् । घटादौ च तथा जनकत्वमिति जन्यमात्रे कृतिमात्रस्य जनकत्वविरोधिविशेषयोर्जन्य–जनकभावे बाधकं विना सामान्ययोरपि तथाभावनियमात् । न हि विशेषे विशेषप्रयोजकत्वं सामान्ये सामान्यप्रयोजकत्वविरोधि । चेष्टेतरकार्य्ये शरीरव्यापारद्वारैव कृतेर्हेतुत्वात् तेन विना क्षित्यादौ न कृतिसाध्यतेति चेत् । न । चेष्टेतरकार्य्यमात्रे शरीरव्यापारजनककृतित्वेन न जनकत्वं क्षित्यादौ व्यभिचारात्, किन्तु तद्विशेषे घटादावित्युक्तत्वात् । न चैवमामवातजडीकृतकलेवरस्य प्रयत्नादेव घटोत्पत्तिः स्यात् हस्तादिव्यापारं विनाऽपि कृतेर्हेतुत्वादिति वाच्यम् । घटे कृतिवत् हस्तादिव्यापारस्यापि हेतुत्वात् । यदुक्तं क्षेत्रज्ञ एव कुतो नानुमीयत इति । तत्र यदि हस्तादिव्यापारकृतिमान् क्षेत्रज्ञोऽभिमतस्तदा हस्तादिव्यापारस्याङ्कुरे योग्यानुपलम्भबाधात् । अथ हस्तादिव्यापारशून्यकृतिमान् अभिमतस्तदा ओमित्युत्तरम्, स एव भगवानीश्वरः । अत एव सहभावनिरूपकत्वे नियतपूर्व्ववर्त्तित्वं कारणत्वम् । समवाय्यसमवायिनोस्तथात्वेन निमित्तेऽपि तथाभावात् । अन्यथा प्रतिबन्धकाभावानन्तरं प्रतिबन्धकसत्त्वकाले कार्य्यं स्यात् प्रतिबन्धका-

भावस्य पूर्व्वं सत्त्वात् । न च कृतेः सहभावनिरूपकत्वं स्वतः, कार्य्यसमये अभावात्, तथा च तत्परिचायितव्यापारद्वारा तस्याः सहभावनिरूपकत्वम् । अतः शरीरव्यापारद्वारैव कृतेर्जनकत्वं न केवलाया इति निरस्तम् । समवाय्यसमवायि—प्रतिबन्धकाभावानां अविनश्यदवस्थत्वेन कारणत्वात् तथैवाऽन्वय—व्यतिरेकात् । तेन तेषामग्रिमविनाशक्षणे न कार्य्यम् । अन्यथा प्रतिव्यक्ति कार्य्यसहभावनिरूपणे कार्य्योत्पत्तेः प्राक् सहभावस्य निरूपयितुमशक्यत्वात् कारणत्वानिश्चयेन क्वापि प्रवृत्तिर्न स्यादिति तज्जातीयत्वस्यावश्यवाच्यत्वे विनश्यदवस्थं कथं सहभावेनापि व्यवच्छेद्यमतः स्वरूपयोग्यतारूपा कारणता तत्रापि । कार्य्याभावस्तु सहकारिविरहात् । अन्यथा निमित्तानां प्रत्येकं कार्य्यसहभावनिरूपकत्वेन जनकत्वे गौरवम्, प्रागभावस्य प्रतियोग्यजनकत्वप्रसङ्गाच्च । अन्यथा उत्पन्नोऽपि घट उत्पद्येत सामग्र्याः सत्त्वात् । न च स एव तत्र प्रतिबन्धकः, अभावान्तरस्य तत्राकारणत्वेन कारणीभूताभावप्रतियोगित्वरूपस्य प्रतिबन्धकत्वस्य प्रागभावकारणत्व एव विश्रामात् । न चैका सामग्री एकदैकमेव कार्य्यं जनयति स्वभावादिति वाच्यम् । सामग्री—तद्विरहस्य कार्य्य—तदभावप्रतियोगित्वेन सामग्र्यां सत्यां कार्य्यस्य तदभावे सामग्रीविरहस्य वज्रलेपायितत्वात् । स्यादेतत्, कर्त्ता शरीर्य्येव ज्ञानमनित्यमेव बुद्धिरिच्छाद्वारैव इच्छा कृतिद्वारैव हेतुरित्यादिप्राथमिकव्याप्तिप्रत्यक्षविरोधान्नाऽशरीरनित्यज्ञानादिकर्तृसिद्धिः । अत एव शरीरमनित्यमेवेति नियमान्न कर्तृत्वेन नित्यातीन्द्रियशरीरसिद्धिरीश्वरे । न चाप्रयोजकत्वम्, निरुपाधित्वेन शङ्काकलङ्काभावात् । कार्य्यत्व-सकर्तृकत्वयोरपि यदि निरुपाधित्वमस्ति तदापि तुल्यबलत्वेन सत्प्रतिपक्षवत्प्रतिरोधोऽस्तु । न च कार्य्यत्वं पक्षधर्म्मतासत्त्वाद्बलीयः कर्त्ता शरीर्य्येवेत्यादौ तु त-

न्नास्तीति वाच्यम् । ज्ञानमनित्यमेवेत्यादिव्याप्तेरेव क्षित्यादौ ज्ञानजन्यत्वविरोधित्वात्, एवं कार्यं ज्ञानजन्यं ज्ञानमनित्यमेवेत्यनयोर्विरोध एव, अविरोधे तु द्वयमपि स्यात्, तथा च क्षित्यादौ शरीर्य्यनित्यज्ञानपर्यवसाने बाध एव । किञ्च ज्ञानमनित्यमेवेत्यादौ नित्यज्ञानादेरप्रसिद्धेस्तद्व्यावर्त्तकतया नोपाधित्वानिश्चयः तत्संशयो वा, कार्यत्व–सकर्तृकत्वव्याप्तिग्रहदशायां शरीरव्यापाराव्यभिचारादुपाधेर्निश्चयः संशयो वास्तीति । तन्न । ज्ञानमनित्यमेवेत्यादिव्याप्तेरसिद्धेः । विपक्षबाधकाभावेनाप्रयोजकत्वात् । निरुपाधिसहचारदर्शन–व्यभिचारादर्शनादेव व्याप्तिग्रहः निरुपाधित्वमेव वा विपक्षबाधकमिति चेत् । न । अवयवो महानेव तेज उद्भूतरूपमेवेत्यादिव्याप्तिग्रहात् परमाणु–नयनादेरसिद्धिप्रसङ्गात् । अथ द्रव्यचाक्षुषत्वे अनेकद्रव्यवत्त्वस्य साक्षात्कारविषयेन्द्रियसन्निकर्षस्य हेतुत्वात् तन्मूलकविपक्षबाधकेन परमाण्वादिसाधकस्य बलवत्त्वात् परमाण्वादिसिद्धौ विरोधिव्याप्तेर्बाधः न तु वैपरीत्यं विपक्षबाधकाभावेन तस्या बलवत्त्वादिति मन्यसे, तर्हि ज्ञानादिकार्य्ययोः कार्य–कारणभावावधारणात् तन्मूलकविपक्षबाधकेन निष्कलङ्कव्याप्तिग्रहात् पक्षधर्म्मताग्रहसाहित्यान्नित्यज्ञानादिसिद्धौ व्यभिचारान्न व्याप्तिः । अन्यथा साध्यं पक्षातिरिक्त एवेत्यादिनिरुपाधिसहचाराद्व्याप्तिग्रहे सकलानुमानोच्छेदः । वयन्तु ब्रूमः । पक्षधर्म्मताबलान्नित्यं ज्ञानं सिद्ध्यद्बुद्धिरनित्यैवेति व्याप्तिप्रत्यक्षेण न प्रतिबद्ध्यते, अस्मदादिबुद्धिमात्रविषयकत्वेन भिन्नविषयत्वात् एकविषयविरोधिज्ञानस्यैव प्रतिबन्धकत्वात् नित्यत्वानित्यत्वयोरेकजातीयद्रव्येऽविरोधात् । बुद्धिमात्रेऽनित्यत्वावधारणात् कथं तादृशे नित्यत्वबुद्धिरिति चेत् । न । बुद्धिमात्रपदस्येश्वरानीश्वरबुद्धिपरत्वे विरोधाद्व्यभिचाराच्च । अस्मदादिबुद्धिमात्रपरत्वे भि-

भाविषयत्वेनाऽप्रतिबन्धकत्वात् । बुद्धित्वं नित्यावृत्त्येवेत्यवगतमतः कथं तत्र नित्यवृत्तित्वावगम इति चेत् । न । उभयसिद्धनित्यावृत्तित्वावगमेऽप्यतिरिक्तनित्यवृत्तित्वावगतौ विरोधाभावात् । बुद्धित्वमनित्यत्वव्याप्यमवगतं नाऽनित्यत्वाभाववति ज्ञेयमिति चेत् । न । अनित्यत्वव्याप्यत्वमानित्यमात्रवृत्तित्वं तत्र चोक्तमेव । एतेन कर्त्ता शरीर्य्येवेत्याद्यपि ज्ञानं प्रतिबन्धकमित्यपास्तम् । ननु कर्तृजन्यत्वे जन्यत्वं नावच्छेदकं किन्तु घटत्वादिकमेव तेनैव रूपेणाऽन्वय-व्यतिरेकग्रहादावश्यकत्वाच्च, अननुगतमपि जन्यतावच्छेदकं वह्निजन्यतायां धूमत्वादिवत् । अथ घटत्वादिवज्जन्यत्वमप्यवच्छेदकम्, न हि विशेषोऽस्तीति सामान्यमप्रयोजकम्, तथा च वह्निजन्यत्वे धूमविशेषः प्रयोज्योऽस्तीति न धूमसामान्यमग्निं गमयेत् तस्माद्यद्विशेषयोः कार्य्य-कारणभावस्तत्सामान्ययोरपि बाधकं विना तथात्वनियम इति चेत् । न । तत्र बाधकाभावात् अत्र च ज्ञानमनित्यमेवेत्यादिप्राथमिकबहुव्याप्तिबाधात्, तुल्यत्वे वा व्याप्तिसंशयाधायकत्वात् । न च कार्य्य-कारणभावमूलकत्वेन कार्य्यत्वसकर्तृकत्वव्याप्तिर्बलीयसीति वाच्यम् । विरोधिप्रत्यक्षेण कार्य्य-कारणभावस्यैवाऽसिद्धेः । एतेन धूमादौ वह्निजन्यतावच्छेदकमनुगतं न सम्भवति इह तु जन्यत्वमनुगतमस्त्यतो बाधकं विना न त्यज्यत इति परास्तम् । ज्ञानमनित्यमेवेत्यादिसहचारावसायस्य बाधकं विना व्याप्तिपर्य्यवसायिततया बाधकत्वादिति । मैवम् । निरुपाधित्वेन सहचारावसायस्य साधकं बाधकञ्च विना साधारण्येन व्याप्तिसंशयाधायकत्वात् । अन्यथा साध्यं पक्षातिरिक्त एव सुखं दुःखसम्भिन्नमेवेत्यादिव्याप्तिग्रहस्य कार्य्य-कारणभावग्राहकबाधकत्वे तत्संशयाधायकत्वे वा कार्य्यात्कारणानुमानोच्छेदे निरीहं जगज्जायते । तस्माद्यद्विशेषयोः कार्य्य-कारणभावस्तत्सा-

मान्ययोः कार्य्यकारणभावो बलवता बाधकेनाऽपनीयते, न चात्र तदस्ति। विरोधिव्याप्तिसाधकस्य विपक्षबाधकस्याऽभावात्।

नव्यास्तु कार्य्यं कर्तृजन्यमिति व्याप्तितोऽशरीरनित्यज्ञानकर्त्रुपस्थितौ ज्ञानमनित्यमेवेत्यनेन विरोधप्रतिसन्धानं न तु तां विना, प्रतियोग्यनुपस्थितौ विरोधानिरूपणात्, तथा चोपजीव्यबाधात् ज्ञानमनित्यमेवेत्यादिव्याप्तिज्ञानमकिञ्चित्करमेव। अत एव पक्षधर्म्मताविनाकृतं विरोधिव्याप्तिज्ञानं न हेत्वाभासतयोक्तं, विरोधप्रतियोगिसिद्ध्यसिद्धिपराहतत्वात्। स्यादेतत् अस्तु शरीरजन्यत्वमुपाधिः। न च पक्षेतरत्ववत्पक्षमात्रव्यावर्त्तकविशेषणवत्त्वात् साधनविशेषितत्वात् साधनतुल्ययोगक्षेमत्वेन साध्यव्यापकत्वानिश्चयाच्च नोपाधित्वमिति वाच्यम्। चेष्टेतरकार्य्ये शरीरव्यापारद्वारैव कर्त्तुः कारणत्वात् शरीरसहकृतस्यैव स्वकार्य्ये कारणत्वाच्च। न हि शरीरविनाकृतः कर्त्ता शरीरक्रियां चेष्टां घटादिकं वा जनयति। न च यत्सहकृतं यज्जनकं तेन विना तज्जनकमतोऽर्थाच्छरीरजन्यमेव कर्त्तृजन्यमिति साध्यव्यापकत्वानिश्चयात्। पक्षेतरत्वादौ च विपक्षबाधकाभावान्न साध्यव्यापकतानिश्चय इति तेषामनुपाधित्वे बीजम्। अत एव बाधोन्नीतं वह्नीतरत्वं वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वं रसवत्त्वेन गन्धवत्त्वे साध्ये पृथिवीत्वमुपाधिः विपक्षबाधकैस्तेषां साध्यव्यापकत्वनिश्चयात्। न च साधनविशेषितत्वमपि, जन्यत्वं हि प्रागभावप्रतियोगित्वं, शरीरजन्यत्वञ्च शरीरकारणकत्वम्, अन्यानिरुक्तेः इतरपदसमभिव्याहारेण जन्यपदादितरकारणकस्यैव प्रतीतेः तदर्थकत्वकल्पनादिति विधौ वक्ष्यते। अत एव शरीरिकर्त्तृकत्वमुपाधिः शरीरसहकृतस्यैव कर्त्तुः कारणत्वात्, व्याप्यं व्यापककोटावनिवेशयत एव प्रमाणस्य व्याप्तिग्राहकत्वात्, शरीरिकर्त्तृकत्व–सकर्तृक-

त्वयोर्न व्याप्तिग्रहः इति चेत् । न । विशिष्टाविशिष्टभेदेन व्याप्य-व्यापकभावाविरोधात् । अत एव जन्यत्वेन कारणजन्यत्वमनुमेय-मिति । मैवम् । कर्तुर्हि शरीरसहकारिता किं घटादौ कर्त्तव्ये, कार्य्यमात्रे वा, स्वकार्य्ये वा । आद्ये कर्त्ता शरीरं विना घटादिकं न-करोतीति किमायातं कर्त्तुः कार्य्यमात्रकरणे । द्वितीये तु कार्य्य-मात्रं कर्तृजन्यामिति न त्वया स्वीक्रियते, स्वीकारे वा शरीराजन्य-मपि कार्य्यं कर्तृजन्यमिति साध्याव्यापकत्वम् । तृतीये तु स्वज-न्यत्वं न स्वजन्यतावच्छेदकम् आत्माश्रयात् । तथापि यत्र सकर्तृ-कत्वमस्ति तत्र शरीरजन्यत्वमावश्यकमिति तस्य साध्यव्यापकत्व-म्, तुल्ययोगक्षेमत्वेन हेतुव्याप्यतासंशयाधायकत्वेन सन्दिग्धोपा-धित्वं वेति चेत् । न । लाघवेन बाधकं विना कर्तृजन्यत्वे हि जन्यत्वमवच्छेदकं न तु शरीरजन्यत्वं गौरवात्, तथा च शरीर-जन्यत्वं न सकर्तृकत्वव्यापकम् । घटादौ त्वार्थः समाजः घटत्वेन शरीरजन्यत्वानियमात् न तु व्यापकत्वप्रयुक्तः मानाभावात् । शरी-रजन्यत्वं न सकर्तृकत्वव्यापकं तद्व्याप्यजलत्वाव्यापकत्वात् नि-त्यत्ववदिति बाधकात् हस्तादिना कर्तृत्वनिर्वाहेण शरीरस्याप्रयो-जकतया साक्षात्प्रयत्नाधिष्ठेयजन्यत्वस्य साधनव्यापकत्वाच्च शरी-रकर्तृकत्वमपि नोपाधिः । जन्यमात्रे कर्त्तुः शरीरसहकारिताविरहात् ।

अथ यद्विशेषयोः कार्य्य–कारणभावस्तत्सामान्ययोरपि बा-धकं विना तथा नियम इति त्वयैवं निरटङ्कि, तथा च कर्तृविशेष–शरीरजन्यविशेषयोः कार्य्य–कारणभावात् कर्तृमात्र–शरीरजन्य-मात्रयोरपि तथाभावः , तथा च शरीरजन्यत्वं कर्तृजन्यतावच्छे-दकमिति भवत्युपाधिः । न चैवं घटत्ववच्छरीरजन्यत्वं सकर्तृक-त्वव्याप्यं न तु व्यापकमपीति वाच्यम् । उभयासिद्धसकलसकर्तृकवृ-त्तित्वेन साध्यव्यापकत्वनिश्चयात् । जन्यत्वेऽपि सकर्तृकत्वव्याप्य-

त्वग्राहकमस्तीति चेत्, तर्हि उभयत्र व्याप्तिग्राहकसाम्ये विनिगमका-भावात् व्याप्तिसंशयाधायकत्वेन सन्दिग्धोपाधिर्व्याप्यत्वासिद्धिर्वा साधनव्याप्यतासंशयाधायक एव हि सन्दिग्धोपाधिः, स च साध्य-व्यापकत्वे साधनाव्यापकत्वे वा उभयत्र वा संशयात। न च वाच्यं शरीरजन्यत्व-सकर्त्तृकत्वयोरन्वय-व्यतिरेकज्ञाने जन्यत्व–सकर्तृकत्व-योस्तद्ग्रह आवश्यक इति लाघवात्तयोरेव व्याप्तिग्रहो न तूपाधिसा-ध्ययोः, साध्य-साधयोरन्वय-व्यतिरेकज्ञानञ्च शरीरजन्यत्वानवगमे-ऽपि भवतीति विनिगमकमिति। यतो न कर्तृमात्र–जन्यमात्रयोरन्वय–व्यतिरेकाभ्यां व्याप्तिग्रहः, कर्तृमात्रस्य व्यतिरेकाभावात्, किन्तु विशेषयोरन्वय–व्यतिरेकेण कार्य्य–कारणभावेन वा सामान्ययो-स्तथात्वग्रहः तौ च तुल्याविति चेत्, उच्यते। अस्तु तावद्घटत्व-वज्जन्यत्व–शरीरजन्यत्वयोरपि कर्तृजन्यतावच्छेदकत्वेन सकर्तृक-त्वव्याप्यत्वं ग्राहकतौल्यात् विनिगमकाभावात् विरोधाभावाच्च, सकर्तृकत्वव्यापकत्वन्तु शरीरजन्यत्वस्य कुतः घटत्ववदव्यापक-स्यापि जन्यतावच्छेदकत्वात् । उभयसिद्धसकर्तृके अन्वय–व्यति-रेकाभ्यां शरीरजन्यत्वस्य व्यापकत्वग्रह इति चेत्, न, शरीरज-न्यत्वविनिवेश्यत्वेन तुल्यन्यायेन च प्रथमं कर्तृजन्यत्वे जन्यत्वम-वच्छेदकं क्लृप्तमिति तद्विरोधेन शरीरजन्यत्वस्य सकर्तृकत्वव्या-पकत्वानवगमात्। अत एव न सन्दिग्धोपाधित्वम् । ननु घटादौ शरीरजन्यत्वे कर्तृजन्यत्वमनुगतमवच्छेदकं बाधकाभावात् । न च लाघवात् घटत्वादिकमेव तथा, कर्तृजन्यत्वेऽपि जन्यत्वस्याऽ-तथात्वापत्तेः। एवं शरीरजन्यत्वव्याप्यं सकर्तृकत्वं वह्नेर्धूम इवेति भवत्युपाधिः। किञ्च कर्तृजन्यत्वे जन्यत्वं शरीरजन्यत्वे वा सक-र्तृकत्वमवच्छेदकमिति संशयेऽपि न हेतोः साध्यव्याप्यत्वनिश्चय इति चेत्, तर्हि, घटादौ कर्तृजन्यत्वे गृहीते तस्य शरीरजन्यत्वा-

वच्छेदकत्वं ग्रहीतव्यम्, घटे च घटत्ववज्जन्यत्वमपि बाधकं विना कर्तृजन्यतावच्छेदकं गृहीतमतो जन्यमात्रे कर्तृजन्यत्वात् न शरीरजन्यत्वे तदवच्छेदकत्वं प्रथमगृहीतोपजीव्यविरोधात्। अत एव न तस्य हेतौ व्याप्तिसंशयाधायकत्वमपि। एतेनाऽनणुत्व–क्षित्यवयववृत्त्यन्यत्वादय उपाधित्वेन निरस्ताः, जन्यत्वस्य साध्यव्याप्यत्वेन तेषां साध्याव्यापकत्वात्। तथापि क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् गगनवदिति सत्प्रतिपक्षोऽस्त्विति चेत्। न। अस्य प्रसिद्धकर्तृजन्यत्वाभावविषयत्वात् अप्रतीतप्रतियोगिकाभावस्य निरूपयितुमशक्यत्वात्, स्थापनानुमानञ्च पक्षधर्म्मताबलात् प्रसिद्धकर्तृभिन्नकर्तृत्वसाधकमतो भिन्नविषयत्वान्न प्रतिबध्य–प्रतिबन्धकभावः। अत एव तद्व्यापकरहितत्वादिकमभावसाधकं बाधकमपास्तम्। तस्य प्रसिद्धाभावविषयकत्वेनाऽप्रसिद्धाभावाविषयकत्वात् व्यक्तिसाधकस्य च विशेषतोऽप्रसिद्धव्यक्तिसाधकत्वानियमात्, अन्यथानुमानवैयर्थ्यात्। कर्तृजन्यत्वमनुगतं घटादौ प्रसिद्धं यत्साध्यं तदभावो मया साध्यत इति चेत्, कर्तृजन्यत्वमनुगतमपि पक्षधर्म्मताबलेनाऽप्रसिद्धं कर्त्तारमादाय पर्य्यवस्यति तदभावस्तु प्रसिद्धस्य कर्त्तुरभावमादाय सिध्यति नाप्रसिद्धस्य, अनुगतस्यापि कर्तृजन्यत्वस्य तदभावस्य च कर्तृव्यक्तिघटितत्वात्। अन्यथा व्यक्तितदभावासिद्धिप्रसङ्गात्। न चैवं सत्प्रतिपक्षोच्छेदप्रसङ्गः, तस्य गोत्वाद्येकभावाभावसाधकविषयत्वात्। एतेन ज्ञानत्वं न नित्यवृत्ति ज्ञानमात्रवृत्तिजातित्वात् स्मृतित्ववत्, ज्ञानं न नित्यगुणवृत्तिगुणत्वव्याप्यजातियोगि चेतनविशेषगुणत्वात् सुखवत्, आत्मा न नित्यविशेषगुणाधारवृत्तिद्रव्यत्वापरजातिमान् विभुत्वात् गगनवत् इत्यपास्तम्। प्रसिद्धे नित्ये व्योमादौ प्रसिद्धायाश्च रूपत्व–जलत्वादिजातेर्व्यतिरेकविषयत्वादप्रयोजकत्वाच्च। किञ्च क्षित्यादौ

शरीराजन्यत्वमसिद्धम् अदृष्टद्वारा तज्जन्यत्वात् । न चाऽदृष्टाद्वारकजन्यज्ञानाजन्यत्वं हेतुः, ज्ञाने जन्यत्वविशेषणस्याऽव्यावर्त्तकत्वेन व्यर्थत्वात् । न च स्थापनायां पक्षविशेषणेऽप्ययं दोषः, प्रमेयो घट इतिवदुपरक्तबुद्धेरुद्देश्यत्वात् । अपि च शरीराजन्यत्वे व्यर्थविशेषणत्वं लाघवेनाजन्यत्वस्यैव व्याप्यत्वात् न तु निष्प्रयोजनविशेषणवत्त्वमसिद्धम्, व्याप्तिग्रहोपयुक्तविशेषणवत्पक्षधर्म्मतोपयुक्तविशेषणस्यापि जनकत्वात्, व्यभिचारवारकस्यापि सार्थकत्वे अनुमितिप्रयोजकत्वस्यैव तन्त्रत्वात् । व्यभिचारवारकविशेषणवत्येव व्याप्तिग्रह इति चेत् । न । निर्विशेषणेऽपि गोत्वादौ व्याप्तिग्रहात् । तत्रापि व्यक्तिविशिष्टे व्याप्तिग्रह इति चेत् । न । स्वतोऽव्यावृत्तगोत्वव्यभिचारात् । अन्यथाऽन्योन्याश्रयात् । अपि च व्यभिचारवारकविशेषणवत्येव व्याप्तिग्रह इत्यप्रयोजकम्, सहचारदर्शनादिसत्त्वे तदभावेन व्याप्तिग्रहाविलम्बात् । व्यभिचारावारकविशेषणशून्य एव व्याप्तिग्रह इति चेत् । न । प्रमेयधूमे व्याप्तिग्रहात् । अथ तत्रोपात्तव्यभिचारावारकविशेषणशून्यत्वं विवक्षितम्, न च तत्र प्रमेमत्वं विशेषणमुपात्तमिति चेत् । न । विरोधात् । न हि तत्रोपात्तं तेन शून्यञ्चेति घटते । यद्विषयत्वेन परामर्शकारणमनुमितौ तल्लिङ्गं प्रकृते च व्यभिचारादन्यथासिद्धेश्च न विशेषणविषयकत्वेन तत्त्वमिति चेत् । न । धूमाव्याप्यत्वापत्तेः व्यभिचारात् तद्विषयत्वेनानुमित्यकारणत्वात् । अथैकमवच्छेदकम् अपरत्र व्याप्तिः, यद्वा लाघवेन व्यासज्यवृत्तिरेकैव व्याप्तिरिति विशिष्टव्याप्त्यर्थः तत्र विशेष्यतावच्छेदकस्य व्याप्त्यनवच्छेदकत्वेन विशेषणस्य तदवच्छेदकत्वनियमादेकवृत्तित्वबाधे सत्येव व्यासज्यवृत्तित्वमिति व्याप्तेश्च न शरीरजन्यत्वाभावे नीलधूमादौ च व्याप्तिरिति विशेष्यमात्रे सा, तथा च स्वरूपासिद्धिस्तद्वारणार्थं

विशेषणाभिधाने व्याप्यत्वासिद्धिरिति चेत् । न । अव्यभिचारस्या-
नौपाधिकत्वस्य वा विशिष्टे नीलधूमादौ सत्त्वेन तद्व्यतिरेकसाध-
ने बाधात् । न च विशेष्यमुपाधिः, साधनव्यापकत्वात् । कि-

---

## ईश्वरानुमानदीधितिः ।

ईश्वरवादे, न च विशेष्यमुपाधिः साधनव्यापकत्वादिति । सा-
ध्यस्येति शेषः । शरीरसहकारेणैव कर्त्तुः कार्य्यजनकत्वात् शरीरा-
जन्यस्य न कर्तृजन्यत्वम् । तथा चाऽकर्तृकत्वरूपसाध्यव्याप्यस्य श-
रीराजन्यत्वस्य हेतोरव्यापकतया साध्यस्याव्यापकं विशेष्यम् अ-
जन्यत्वं नोपाधिरित्यर्थः । यदि विशिष्टाभावे हेतौ विशेषणवैयर्थ्य

---

## ईश्वरानुमानजागदीशी ।

ननु क्षितिर्न सकर्तृका शरीराजन्यत्वादित्यत्र विशेष्यीभूतस्याऽ-
जन्यत्वस्यानुपाधित्वसम्पादकत्वेन साधनव्यापकत्वाभिधानमसङ्ग-
तम् अङ्कुरादावेव शरीराजन्यत्वव्यभिचारादत आह साध्यस्येति शे-
ष इति । ननु शरीराजन्यस्यापि सकर्तृकत्वसम्भवात्तथाप्यप्रयो-
जकत्वमेवोक्तानुमानस्येत्यतस्तर्कमाह शरीरसहकारेणेति । ननु सा-
ध्यस्य साधनव्यापकत्वं न विशेष्यीभूतस्याऽजन्यत्वस्यानुपाधित्वे
बीजमतः फलितार्थमाह तथा चेति । हेतोरव्यापकतयेति । साध्य-
व्याप्याव्यापकस्य साध्याव्यापकत्वानियमादिति भावः ॥ एतद-
न्त एव कश्चिद्दीधितिग्रन्थः । किञ्चेत्यादिमूलस्याभिप्रायं प्रकाश-
यन्नाह यदीत्यादि । विशिष्टाभावे शरीराजन्यत्वादिरूपे । विशेष-

श्च सौरभविशेषवद्धूमरहितमिदं चन्दनप्रभववह्निराहितत्वात्, निर्धूमोऽयमार्द्रेन्धनप्रभववह्निराहितत्वात् इत्यादावपि कारणविशेषाभावेन कार्य्यविशेषाभावानुमानं न स्यात वह्निरहितत्वादिकञ्चोपाधिर्भवेत्, व्यतिरेकिण्यष्टद्रव्यातिरिक्तद्रव्यानाश्रितत्वञ्च हेत्वभावव्याप्यं न स्यात् द्रव्यानाश्रितत्वस्यैव व्याप्यत्वात, रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादित्यादौ त्वयाप्यसिद्धिवारकविशेषणस्वीकाराच्च। अपि च गौरवेण विशिष्टस्य व्यापकतापि न स्यात, तथा च स्थापनानुमाने उपादानगोचरापरोक्षज्ञान–चिकीर्षा–कृतिमज्जन्यता, धूमेनार्द्रेन्धनप्रभववह्निः घटत्वेन शरीरजन्यत्वादिकं नानुमीयेत।

---

विशेष्याभावरूपञ्च विशेष्यमुपाधिर्भवेत् तदार्द्रेन्धनप्रभववन्हिरहितत्वादिना निर्धूमत्वादौ साध्ये व्यर्थविशेषणत्वम् उपाधिश्च वन्हिरहितत्वादि सम्भवदित्याह किञ्चेति। ननु स्वरूपासिद्धिवारकत्वाद्विशेषणस्य न वैयर्थ्यमिति न भ्रमः अपि तु व्यभिचारावारकत्वात्, रूपादिषु मध्य इत्यत्र गन्धव्यञ्जकत्वस्य हेतोर्व्यभिचारो न शुद्धेनैव वारयितुं शक्यते तस्य समभिव्याहारवशाल्लुब्धातिरिक्ताव्यञ्जकत्वरूपस्य गन्धव्यञ्जकेऽसत्त्वेन विशेषणत्वायोगादतो रूपाद्यन्तर्गतगन्धातिरिक्ताव्यञ्जकत्वं तच्च व्यभिचारवारकमेव इत्यत आह अपि चेति।

---

णेति । शरीरात्मकविशेषणेत्यर्थः । व्यभिचारावारकत्वादिति विशेषणस्य वैयर्थ्ये भ्रम इत्यन्वयः । नन्वेवं घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादित्यत्रापि रूपादिष्वित्यस्य व्यभिचारावारकत्वान्मूलोक्तवैयर्थ्यता दवस्थ्यमत आह रूपादिष्वित्यादि । गन्धव्यञ्जकत्वस्य हेतोर्व्यभिचारो मनःप्रभृतौ । तस्येति । शुद्धैवकारार्थस्येत्यर्थः। समभीति । षष्ठ्यन्तगन्धपदसमभिव्याहारवशादित्यर्थः । विशेषणत्वेति । गन्धव्यञ्जकत्वांशे विशेषणत्वायोगादित्यर्थः। तावन्मात्रस्य चालोकादौ व्यभिचारित्वादिति भावः। रूपादीत्यादि। रूपाद्यन्तर्गतं यद्गन्धातिरिक्तं तद्व्यञ्जकत्वमित्यर्थः।

यत्तु स्वजन्यान्योन्याभावापेक्षया शरीरजन्यान्योन्याभावस्याल्पत्वात् तेषामेव व्याप्यत्वमिति विपरीतमेव लाघवमिति । तन्न, विरोधाभावेन बहूनामल्पस्य च व्याप्यत्वात् । स्नेहे शीतस्पर्शवत्त्वजलत्वयोर्गन्धाभावेऽपृथिवीत्व–पृथिवीत्वाभावयोरिव । अन्यथा नीलधूमस्यैव व्याप्यत्वे धूममात्रस्याऽव्याप्यत्वप्रसङ्गः ।

किञ्च त्वन्मये बह्वन्योन्याभावापेक्षया जन्यत्वात्यन्ताभावस्यैव व्याप्यता स्यादेकत्वात् । प्रमेयत्वाद्यनन्तधर्म्मविशिष्टस्य व्याप्तावपि प्रयोजनाभावान्नानुमाने तदुपन्यासः । अथ लाघवेन जन्यत्वस्य

---

यत्त्वित्यादि यावद्विशेषाभावानामेव सामान्याभावत्वमते । बह्वल्पेति । बहवः जन्यान्योन्याभावा अल्पे शरीरजन्यान्योन्याभावाः । अपृथिवीत्वं पृथिवीसामान्यान्योन्याभावः स च विशेषाभावसमुदायः । जन्यत्वात्यन्ताभावस्येत्यभ्युच्चयमात्रं, जन्यत्वस्याखण्डस्य एकस्य विरहेण

---

तद्वेति । मनःप्रभृतीनां गन्धव्यञ्जकत्वेपि रूपादिव्यञ्जकत्वादेव विशिष्टहेत्वभावादिति भावः । अत्र रूपादीत्यादिपदेन रूपत्वादयः । बह्वल्पेतीति विरोधाभावेन द्वयोरेव व्याप्यत्वादित्येवं मूलमभिप्रेत्य । बहूनामल्पस्य च व्याप्यत्वादित्येवं मूलपाठे तु बह्वल्पपदयोः सह धारणं द्रष्टव्यम् । बह्वल्पपदयोः प्रकृतपरत्वं द्योतयन्नाह बहव इत्यादि । बहवो जन्यप्रतियोगिकान्योन्याभावा इत्यर्थः । अल्प इति । अङ्कुराद्यन्योन्याभावस्य शरीरजन्यप्रतियोगिकत्वाभावादिति भावः । अथाऽपृथिवीत्वं यदि पृथिवीत्वात्यन्ताभावस्तदाग्रिमेण पौनरुक्त्यं बहुत्वासम्भवश्चेत्यतो व्याचष्टे पृथिवीसामान्यान्योन्याभाव इति । ननु पृथिवीत्वावच्छिन्नान्योन्याभावस्यातिरिक्तत्वे बहुत्वासम्भवतादवस्थ्यमत आह स चेति । विशेषाभावेति । तत्तत्पृथिवीभेदसमुदाय इत्यर्थः । अभ्युच्चये हेतुमाह जन्यत्वस्येत्यादि । जन्यत्वस्यातिरिक्तत्वमते अखण्डत्वसम्भवादाह एकस्येति । अतिरिक्तस्यापि जन्यत्वस्य कारणभेदेन ना-

शीघ्रोपस्थितिकतया जन्याभावत्वेन शीघ्रं व्याप्तिग्रहो न तु शरीरजन्याभावत्वेन विलम्बितप्रतीतिकत्वात् । यत्र विशेषण-विशेष्यान्यतराभाववति साध्यं तत्र विशिष्टाभावस्यापि व्याप्तिरिति चेत् । न । एवं ह्युत्पत्तिमत्त्वे सति सत्त्वादिकमनित्यत्व-सकर्तृकत्वव्याप्यतया न गृह्येत, शीघ्रोपस्थितिकतया घटत्वादेरेव तथाभावात् । यदि च सामान्य-विशेषभावाद्विरोधाभावेनोभयस्यापि व्याप्यता, तदा शरीराजन्यत्व-जन्यत्वाभावयोरपि तुल्यम् । किञ्च शरीरजन्यत्वं विशिष्टं तदभावं विशिनष्टि न तु साक्षात् तथा च शरीरजन्यत्वाभावोऽखण्ड एव हेतुरतो न व्यर्थविशेषणता । न चात्र विशिष्टाभावो विशेष्याभाव एव, क्षित्यादावजन्यतापत्तेः । अत एव स्थापनायां शरीरजन्यत्वमुपाधिः साध्याभावव्याप्याभावप्रतियोगित्वेन साध्यव्यापकत्वनियमात् । व्यर्थविशेषणेऽधिकं निग्रहस्थानमिति चेत् । न । हेतुद्वयोपन्यासे च तत्, इह तु विशिष्टमेकमेव हेतुरिति विरुद्धस्थले उक्तमिति । उच्यते । नीलधूमादौ

---

तुल्यन्यायतया सामान्याभावस्यापि तत्तज्जन्यत्वाभावरूपत्वात् । यद्यपि प्रत्येकव्याप्यत्वस्य सम्भवे बहूनामल्पानाञ्च तथात्वम्, न चेह,

---

मात्वादिति भावः । तुल्यन्यायतयेति । जन्यसामान्यान्योन्याभावतुल्यतयेत्यर्थः । अन्यथा जन्यत्वावच्छिन्नान्योन्याभावस्याप्येकस्यैवाऽखण्डस्य हेतुत्वसम्भवात्तद्विरोधः स्यादिति भावः । समुदायरूपत्वादिति । तथा च जन्यान्योन्याभावापेक्षया जन्यत्वाभावकूटस्यैव बाहुल्यमेकस्मिन्नेव जन्ये कारणभेदादनेकजन्यतासत्त्वादिति भावः । स्नेहादौ साध्ये बहूनां शीतस्पर्शानामल्पस्य च द्वयोरेव व्याप्यत्वमुपपादयन्नेवाऽकर्तृत्वे साध्ये जन्यान्योन्याभावकूटस्याऽव्याप्यत्वमाशङ्कते यद्यपीति । तथात्वम् अव्याप्यत्वम् । न चेति । क्षितिरकर्तृका

व्याप्तिरस्त्येव, अन्यथा विशेषाणामव्याप्यत्वे निराश्रया व्याप्तिः स्यात् । नीलत्वमपि न व्याप्यतावच्छेदकं गौरवात्, किन्तु धूमत्वमेव दण्डत्वेन कारणत्वे रूपमिव, धूमत्वञ्च न नीलिम्नि किन्तु तदाश्रये धूमे इति न नीलधूमस्य हेतुत्वम् । नीलधूमे नीलस्य विशेषणत्वे तद्विशिष्टे न धूमत्वम् उपलक्षणत्वे च धूमादेवानुमितिः । किञ्च व्यापकतावच्छेदकस्यैव हेतुतावच्छेदकत्वमिति न नीलधूमत्वं तथा । न चैवं धूमत्वस्यावच्छेदकत्वेऽपि सामग्रीसत्त्वान्नीलधूमादनुमित्युत्पत्तौ हेत्वाभासत्वं न स्यात् अनुमितिप्रतिबन्धकस्य तत्त्वादिति वाच्यम् । तदभावेऽपि नीलधूमप्रयुक्तसाध्यवत्प्रत्ययस्य भ्रमत्वेन तत्कारणत्वस्याभासत्वसम्भवादिति दिक् ।

---

एकैकस्यान्योन्याभावस्य व्यभिचारित्वात् तथा च शरीरजन्यान्योन्याभावसमुदायस्य व्याप्यत्वे न तत्र क्षित्याद्यन्योन्याभावानां निवेशो व्यर्थत्वात्, तथापि जन्यत्वशरीरजन्यत्वावच्छिन्नप्रतियोगिताकावतिरिक्तावेवाभावाविति न तत्र बह्वल्पभावसम्भव इत्यत्र तात्पर्यमिति ॥

---

जन्यान्योन्याभावकूटवत्त्वादित्यादौ न घटादिप्रत्येकान्योन्याभावस्य साध्यव्याप्यत्वमित्यर्थः । एकैकस्य घटादिप्रत्येकान्योन्याभावस्य । घटादौ सकर्तृकत्वव्यभिचारित्वादित्यर्थः । स्नेहवान् शीतस्पर्शादित्यादौ तु बहूनामपि शीतस्पर्शानां प्रत्येकस्नेहाव्यभिचारित्वात् व्याप्यत्वे बाधकाभाव इति भावः । समुदायस्य व्याप्यत्व इति । सम्भवतीति शेषः । इत्यत्र दूषणे । तात्पर्यमिति । जन्यत्वात्यन्ताभावस्यैकत्वदर्शनेन जन्यत्वाद्यवच्छिन्नभेदस्याप्येकत्वस्य मूलस्वरससिद्धत्वादिति भावः ॥

विदुषां निवहैरिहैकमत्या-
यददुष्टं निरटङ्कि यच्च दुष्टम् ॥
मयि जल्पति कल्पनाधिनाथे
रघुनाथे मनुतां तदन्यथैव ॥

इति महामहोपाध्यायश्रीरघुनाथभट्टाचार्य्यशिरोमणि-
विरचिता ईश्वरानुमानतत्त्वचिन्तामणिदीधितिः
समाप्ता ।

अनुमानदीधितिः सम्पूर्णा ।



इति ईश्वरानुमानमणिदीधितिव्याख्या जागदीशी समाप्ता ।

कुर्वन्ति नित्यमनुमानमणेरनेके
प्रायः प्रयासमधिदीधिति नीतिभाजः ।
एषा पुनस्तदपि नैवं निजं निरूढ-
मर्थं प्रकाशयति तेन ममैष यत्नः ॥

इति श्रीमहामहोपाध्यायजगदीशतर्कालङ्कारविरचिता
अनुमानतत्त्वचिन्तामणिदीधितिव्याख्या प्रकाशि-.
काख्या ईश्वरानुमानान्ता सम्पूर्णा ।

शुभम् ।

अनुमानजागदीशी
सम्पूर्णा

—:o:—

एवं शरीराजन्यत्वेऽपि न शरीरमवच्छेदकं गौरवात्, येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेदकत्वानियमात् । अत एव गन्धस्यैव व्यञ्जकत्वादित्यत्राऽप्रसिद्धत्वेन रूपादिषु मध्य इति विशेषणं विना व्याप्तिर्ग्रहीतुं न शक्यत इत्यसिद्धिवारकमपि विशेषणं सार्थकमेव । सुरभिधूमविशेषादौ च चन्दनप्रभवाग्न्यादेः कारणत्वात् कारणाभावस्य कार्याभावप्रयोजकतया व्याप्यत्वानिश्चयः । व्यापके च न व्यर्थविशेषणता, विशिष्टस्य कारणत्वेन व्यापकत्वात् । परिशेषव्यतिरेकिणि विपक्षबाधकेनाऽनन्यगतिकतया विशिष्टस्य व्यापकत्वात् विशिष्टाभावस्य हेत्वभावव्याप्यत्वम् । यत्र च विपक्षबाधकं नास्ति तत्र विशिष्टस्य व्यापकतापि न, यथा कार्यस्य द्विकर्तृकत्वेनापि शरीरजन्यत्वाभावोऽखण्डो हेतुः । यदि हि शरीरजन्यत्वं सकर्तृकत्वप्रयोजकं स्यात्तदा तदभावप्रयुक्तः सकर्तृकत्वाभाव इति तस्य साध्यव्याप्यता स्यात्, न चैवं, किन्तु जन्यत्वं लाघवात्तथा तथा चाऽजन्यत्वमेवोपाधिः । साध्यव्याप्याभावः साध्याभावव्यापक इति नियमेन तस्य साध्यव्यापकतानिश्चयात् सकर्तृकत्वशरीरजन्यत्वयोर्व्याप्त्यभावेन तदभावयोरपि व्याप्त्यभाव इति व्याप्यत्वासिद्धत्वाच्च । अत एव शरीरजन्यत्वाभावस्याऽकर्तृकत्वव्याप्यत्वात्तदभावयोरपि व्याप्य-व्यापकभाव इति निरस्तम् । शरीरजन्यत्वस्य सकर्तृकत्वाप्रयोजकत्वात् । न चाऽजन्यत्वं पूर्वसाधनव्यतिरेकत्वेन नोपाधिः सत्प्रतिपक्षोच्छेदप्रसङ्गादिति वाच्यम् । स्थापनाया यत्राभासत्वं तत्र विशेषादर्शनदशायां सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात् । यथा शब्दोऽनित्यो गुणत्वादित्यत्र शब्दो नित्यो व्योमैकगुणत्वादित्यनेन सत्प्रतिपक्षे गुणत्वाभावो नोपाधिः, जलपरमाणुरूपे साध्याव्यापकत्वात् । न चैवमनैकान्तिकत्वमेव तत्रोद्भाव्यं, सत्प्रतिप-

क्षमुपेक्ष्य तस्योद्भावनानर्हत्वात् । किञ्च प्रागभावप्रतियोगित्वे सति समवेतत्वस्य तत्प्रतियोगित्वे सति सत्त्वस्य सत्त्वे सत्युत्पत्तिमत्त्वस्य वा हेतुत्वे एषामन्यतमव्यतिरेक उपाधिरिति न पूर्वसाधनव्यतिरेकः । अत एवाऽजन्यत्वस्य नोपाधित्वं ध्वंसे साध्याव्यापकत्वादिति न दोषः ।

अन्ये तु यन्निष्ठा यन्निरूपिता च व्याप्तिर्येन विशेषणेन विना न गृह्यते तत्र विशिष्टं व्याप्यतावच्छेदकम् अकर्तृकत्वानिरूपिताभावनिष्ठव्याप्तौ च शरीरं विनैव प्रतियोगितया जन्यत्वमवच्छेदकं क्लृप्तमिति न शरीरजन्यत्वमवच्छेदकं धूमे नीलधूमत्वमिव, अतिगौरवेण शरीरजन्यत्वमप्रतियोगितया च जन्यत्वं नावच्छेदकमिति व्याप्यतावच्छेदकाभावान्न शरीरजन्यत्वाभावोऽकर्तृकत्वव्याप्यः । व्यभिचाराभावात् तथेति चेत् । न । क्षित्यादावेव व्यभिचारात्, अन्यथा क्षित्यादि नाऽदृष्टहेतुकं शरीरजन्यत्वाभावादित्याद्यपि स्यात् । नन्वस्तु तावदशरीर-नित्यज्ञानादिकर्त्रनुमितिस्तथापि साऽनुमितिरयथार्था अशरीरे कर्तृत्वज्ञानत्वात् ज्ञानेच्छा-प्रयत्नेषु नित्यत्वज्ञानत्वात् शरीराजन्ये सकर्तृकत्वज्ञानत्वात्, घटः कर्त्ता, घटज्ञानादिकं नित्यं, व्योम सकर्तृकमिति ज्ञानवदिति साध्यम् । न चोपजीव्यबाधः, अनुमितिर्हि उपजीव्या । नन्वस्तु तदयथार्थत्वमपीति चेत्, न. कर्तृकार्ययोर्निरुपाधिकार्य-कारणभावेन एतस्याऽप्रयोजकत्वात् । अन्यथा पर्वते वह्न्यनुमितिरयथार्था उभयासिद्धवह्निमद्भिन्ने वह्निज्ञानत्वादित्यादिना सकलान्वयव्यतिरेक्युच्छेदः । किञ्चानुमितेरयाथार्थ्यमनेन ज्ञाप्यं न तु कार्यं तथा च दोषादुत्पन्नस्यानेन ज्ञापने तत्रायमेव दोषो दोषान्तरं वा । नाद्यः, अन्योन्याश्रयात् उत्पन्ने तस्मिन् ज्ञापनं ज्ञापकादेव च तस्माद्दोषात्तदुत्पत्तिरिति । नान्त्यः, असिद्धेः । तर्कापरिशुद्धिस्तु न दूषणम् ।

यदि ईश्वरः कर्त्ता स्यात् शरीरी स्यात् इष्टसाधनताज्ञानवान् स्यात् प्रयोजनवान् स्यात् अनित्यज्ञानवान् स्यात्, क्षित्यादि यदि सकर्तृकं स्यात् शरीरिकर्तृकं स्यात् इत्यादितर्काणां विपर्यये आश्रयासिद्धिव्यर्थविशेषणत्वादिना विपर्ययापर्यवसानेनाभासत्वात् ।

ननु क्षित्यादावेककर्तृसिद्धिः कुतः एककर्तृकत्वेन व्याप्त्यभावात् । न च लाघवात्,तस्याऽप्रमाणत्वात् । सकर्तृकत्वप्रमाणादेव लाघवसहकृतात्तत्सिद्धिरिति चेत्, न तावदनुमितिमात्रे लाघवं सहकारि, व्यभिचारात् मानाभावाच्च । न हि लिङ्गपरामर्शे सति तद्विलम्बेनाऽनुमितिविलम्बो येन सहकारिता स्यात् । नापि लध्वनुमितौ, अन्योन्याश्रयात् । नापि व्यक्त्यनुमितौ, धूमेन वह्न्यनुमितौ एक-द्विहस्तसंशयाभावापत्तेः । साधकाभावेन नानात्वासिद्धौ कर्तृसिद्धिरेवैककर्तृसिद्धिरिति चेत् । न । एकत्वसाधकाभावेनैकत्वासिद्धौ कर्तृसिद्धिरेव नानात्वसिद्धिरित्यस्यापि सुवचनात् । अथ यमर्थमनालम्बमानानुमितिः पक्षे साध्यसंसर्गं न विषयीकरोति स पक्षधर्मताबलात्सिद्ध्यति न त्वधिकमपि, तथा च द्वितीयं कर्त्तारमविषयीकुर्वत्यपि कर्त्तारं विषयीकरोत्येवेति न द्वितीयमवगाहते, एकस्तु कर्त्ता सिध्यति तदविषयत्वे कर्तृविषयतैव न स्यात् एकविषयत्वाभावे नानाविषयत्वस्याप्यभावात्, तद्घटितत्वात्तस्येति चेत्,एवं तर्हि कर्त्रेकत्वमपि न विषयः स्यादेकत्वाविषयत्वं विनापि कर्तृविषयत्वसम्भवात् । वस्तुगत्यैकः सिध्यति न त्वेकत्वेनेति चेत्, न, एकत्वासिद्ध्या वस्तुगत्यैक इति ज्ञातुमशक्यत्वात्, तथा चेश्वरे एकत्वानेकत्वयोर्नित्यसंशय इति । उच्यते । यत्र प्रमाणे लघु–गुरुविषयता सम्भवति तत्र लाघवसहकारिता, कारणता–कार्यता–व्याप्यतादिग्राहके प्रत्यक्षे प्रवृत्तिनिमित्तग्राहके उपमाने शब्दशक्तिग्राहकानुमाने तथाविधप्रमाणमात्रे सकलतान्त्रिकैः सहकारित्वकल्पनात् ।

एवं लाघवमेवं गौरवमिति ज्ञानानन्तरं बाधकं विना लघूनामेव कारणत्व–कार्यत्व–प्रवृत्तिनिमित्तत्व–शब्दशक्यत्वानां ज्ञानदर्शनात् । तत्रापि लाघवानादरे शब्दशक्यत्वादिसंशये तन्मूलकव्यवहारोच्छेदो विनिगमकाभावात् सोऽयं विचारमारभते लाघवञ्च न तदङ्गमङ्गीकरोतीति महत्साहसम् । नन्वेवं वस्तुगत्या नानाकर्तृकेषु घटेषु घटत्वेन कुलालकर्तृकत्वानुमानेऽपि बाधकानवतारदशायां लाघवादेककर्तृसिद्धिः स्यात् । न चेष्टापत्तिः, अनुमित्यनन्तरं नानैककर्तृकत्वे संशयादिति चेत् । न । तत्रापि लाघवेन कर्त्रैक्यमेव सिद्ध्यति तत्सन्देहस्तु ज्ञानप्रामाण्यसंशयादिति पश्चान्नानाकर्तृकत्वसाधकप्रमाणादेककर्तृकतानुमानं तत्र बाध्यते । न चैवं क्षित्यादिकर्त्तर्य्यपि प्रामाण्यसंशयादेकत्वसंशयादेकत्वसंशयो दुरुच्छेदः, एकत्वे बाधकस्याभावेन प्रामाण्यनिश्चयात् । न चैकत्वसाधकाभाव एव बाधकः, अनुमितेरेव लाघवसहकारेण एकत्वसाधकत्वात् ।

अन्ये तु क्षितिकर्त्ता अङ्कुरकर्त्त्राभिन्नः अशरीरकर्तृत्वात् अङ्कुरकर्तृवदित्यभेदानुमानादेककर्तृसिद्धिः । न च क्षितिकर्त्ता अङ्कुरकर्तृभिन्नः अङ्कुरेऽकर्तृत्वात् कुलालवदिति सत्प्रतिपक्षः, अनित्यज्ञानानामाश्रयत्वस्योपाधित्वादित्याहुः । अत्राप्यप्रयोजकत्वे भेदाभेदयोर्गौरव–लाघवे एव शरणम् ।

तथापि कथं नित्यसर्वविषयज्ञानसिद्धिः । पक्षधर्म्मताबलादिति चेत्, व्यापकतयावगतस्य पक्षसम्बन्धमात्रं पक्षधर्म्माद्धेतोः सिध्यति तथा च पक्षे तदुपादानगोचरज्ञानमात्रं सिध्येन्न तु नित्यसर्वविषयज्ञानं, तेन रूपेण व्यापकत्वाग्रहात् । न च येन विनाऽनुपपत्तिः सोऽपि विषयः, व्यतिरेकिविलयापत्तेः ।

तत्र प्राञ्चः । यमर्थमनालम्बमानानुमितिः पक्षे साध्यसम्बन्धं

न विषयीकरोति स पक्षधर्म्मताबलात्सिध्यतीत्यनुपपत्तिमूलकोऽन्वयी, प्रतीतानुपपत्त्या च व्यतिरेकी। तदिहाऽनादिद्व्यणुकादिकार्यप्रवाहस्य पक्षत्वे तदुपादानस्यानादिज्ञानगोचरत्वं विना नोपादानगोचरज्ञानजन्यत्वमनादिकार्यप्रवाहस्यानुमितिरालम्बते, अनादितैव च नित्यता, सर्वमुक्तावपि तत्सत्त्वमनादिभावत्वात्, पक्ष—तदुपादानविषयतैव च सर्वविषयता, लाघवात्तु तावद्विषयकमनाद्येकमेव ज्ञानं सिध्यति, न तु नित्यानित्यज्ञानानीति ।

नव्यास्तु अनित्यज्ञानाजन्यत्वेन पक्षविशेषणात् ज्ञानं सिध्यन्नित्यमेव सिध्यति अनित्ये बाधादिति ।

वाचस्पतिमिश्रास्तु लाघवादेकज्ञानसिद्धौ उत्पत्तिमतोऽनादिकार्यप्रवाहं प्रत्यजनकत्वात् परिशेषेण नित्यज्ञानादिसिद्धिः । नियतविषयता च ज्ञानस्य कारणाधीना, कारणञ्च नित्यज्ञानान्निवर्त्तमानं नियतविषयतामादाय निवर्त्त । इति सर्वविषयत्वसिद्धिरिति ।

षट्पदार्थप्रतिपादकवेदकर्तृत्वेनेश्वरस्य षट्पदार्थगोचरसाक्षात्कारवत्त्वेन वा सार्वज्ञम् । घटाकाशसंयोगादिकं प्रति ईश्वरस्य कर्तृत्वात् घटादिगोचरमपि ज्ञानं सिद्धमिति केचित् ।

ननु घटादीनां कथमीश्वरकर्तृकत्वं भवति । घट ईश्वरकर्तृकः कार्यत्वात् क्षितिवदित्यनुमानादिति चेत् । न । घटस्य द्विकर्तृकतया तद्दृष्टान्तेन क्षित्यादिरपि द्विकर्तृका स्यात् तथा च घटवत् क्षितिः क्षितिवद्घट इतीश्वरानन्त्यम् । कार्ये कर्तृत्वेन कारणता न तु द्विकर्तृत्वेनेति चेत्, तर्हि नेश्वरकर्तृकत्वेन कारणता किन्तु कर्तृत्वेनेति । नैवम् । ज्ञानादीनां नित्यत्वेन सर्वविषयतया घटाद्युपादानविषयत्वमपीति कथं न तेषां घटादिकारणता कुलालादिज्ञानतुल्यत्वात् । तदाहुराचार्याः—"परमाण्वदृष्टाद्यधिष्ठातृसिद्धौ ज्ञानादीनां नित्यत्वेन सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्रा-

मत्त्वात् न तु तदधिष्ठानार्थमेवेश्वरसिद्धिः"–इति । "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते"–इत्याद्यागमाम्नायमर्थोऽध्यवसेयः ।

अथेश्वरस्य सर्वज्ञत्वे सर्वविषयभ्रान्तेर्ज्ञाने ईश्वरोऽपि भ्रान्तः स्यात् भ्रमस्येव तस्यापि भ्रमविषयविषयकत्वादिति चेत् । न । रजतत्वप्रकारकज्ञानत्वानयमिति ज्ञानं न भ्रमः अभ्रान्तस्य तथात्वात्, इदं रजतमिति ज्ञाने रजतत्वं प्रकारस्तेन स भ्रमः, ईश्वरज्ञाने च रजतत्वप्रकारकत्वं प्रकार इति स न भ्रमः । अत एवास्मदादिरपि भ्रान्तिज्ञो न भ्रान्त इति ॥ स्यादेतत्, प्रयोजनं विना कथमीश्वरः प्रवर्त्तते सुखस्याभावात् अधर्म्माभावेन निर्दुःखत्वात् । करुणया प्रवर्त्तते इति चेत्, तर्हि परसुख–दुःखप्रहाणे प्रयोजने, तथा च स्वर्गिणमेव सृजेन्न नारकिणम् । धर्म्माधर्म्मपरतन्त्रत्वात्तदनुरूपं फलं प्रापयतीति चेत्, तर्हि आवश्यकत्वात् कर्म्मनिमित्तमेव जगद्वैचित्र्यमस्तु किमीश्वरेणानपेक्षितकीटादिज्ञानवता । कर्म्मनिरपेक्षत्वे चैकदैव सदा च सर्ग–प्रलयौ स्यातां, ज्ञानादीनां नित्यत्वात् । किञ्च तत्प्रयत्नस्य करुणाजन्यत्वे शरीरादिजन्यत्वापत्तौ संसारितापत्तिरिति । न । ईश्वरानभ्युपगमे विचारस्याश्रयासिद्धत्वात् । तमभ्युपगम्य पृच्छसि चेत्, तदाकर्णय, जगत एव तदिच्छाविषयत्वेन स्वेष्टसाधनताज्ञानसत्त्वात् । वस्तुतस्तु क्षित्यादितत्तदसाधारणक्रमिकादृष्टादिसामग्रीसमवहिता ईश्वरज्ञानादयो यदा भवन्ति तदा क्षित्यादिकं करोतीति व्यवहारः । सर्ग–प्रलयासाधारणक्रमिकादृष्टादिसामग्रीसमवहितत्वमेव तदिच्छायाः चिकीर्षासञ्जिहीर्षात्वे । न चैवं किं तज्ज्ञानादिनेति वाच्यम् । क्षित्यादीनां कार्यत्वेन ज्ञानजन्यतया नित्यज्ञानादीनामपि जनकत्वात्, सुखादिशब्दयोरात्माकाशादिवत् ।

नन्वशरीरात्कथं वेद–घटादिशब्दव्यवहारसम्प्रदायः । उच्य-

ते । सर्गादावदृष्टोपगृहीतभूतभेदान्मीनशरीरोत्पत्तावदृष्टवदात्मसंयोगाददृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानाद्विवक्षासहितान्मीनकण्ठ–ताल्वादिक्रिया–तज्जन्यसंयोगाद्वेदोत्पत्तिः, एवं कुलालादिशरीरावच्छेदेनाऽदृष्टसहकृतप्रयत्नवदीश्वरसंयोगात्तद्बुद्धीच्छासहितात् प्रयत्नोत्पत्तौ सकलघटानुकूलव्यापाराद्घटोत्पत्तिः, एवं प्रयोज्यवृद्धप्रयोजकवृद्धभावादिमच्छरीररूपावच्छेदेनाऽदृष्टसहकृतेश्वरज्ञानेच्छा–प्रयत्नादेव वागृव्यवहारः, ततस्तद्दर्शी बालो व्युत्पद्यते, सोऽयं भूतावेशन्यायः ।

यत्तु यथा लिप्यादिना मौनिश्लोकमनुमाय पठति तथा सर्गान्तरोत्पन्नतत्त्वज्ञानवता भोगार्थं सर्गादावुत्पन्नेन मन्वादिना सर्वज्ञेश्वराभिप्रायस्थो वेदः साक्षात्कृत्याऽनूद्यते, ततोऽग्रिमसम्प्रदायः, स एव च कायव्यूहं कृत्वा घटादिवागृव्यवहारं प्रवर्त्तयतीति मतम् । तन्न । प्रतिसर्गाद्यनन्तसर्वज्ञकल्पनायां गौरवात्, तेषामेव क्षित्यादिकर्तृत्वसम्भवेनेश्वराननुमानाच्च । एतेन सर्गादौ सर्गान्तरसिद्धयोगिन एव क्षितिकर्त्तारः सन्त्विति परास्तम् । सर्गादावनन्तसर्वज्ञसिद्धिश्च किं प्रमाणान्तरात्, क्षित्यादिकर्तृग्राहकाद्वा । नाद्यः, तदसम्भवात् । नान्त्यः, अनादिद्व्यणुकादिकार्यप्रवाहस्य सकर्तृकत्वानुमानाल्लाघवसहकृतादेकस्यैव सर्वज्ञस्य सिद्धेः । अथेश्वरज्ञानमूलकशब्दशक्तिग्रहे प्रयोज्यव्यापारानुमितघटज्ञाने घटशब्दस्य कारणत्वग्रहो भ्रमः स्यात् तदीयज्ञानस्य नित्यत्वात् तथा च तज्जन्यघटशब्दशक्तिग्रहस्य भ्रमत्वेन सकलशाब्दज्ञानं भ्रमः स्यात् भ्रमपरम्परामूलकत्वात् । अनित्यसर्वज्ञमूलकशाब्दग्रहे च नायं दोष इति चेत् । न । व्यापारानुमितमिदं घटज्ञानं घटपदजन्यमिति ज्ञानस्य शब्दशक्तिग्रहकारणस्य भ्रमत्वेऽपि घटपदं घटशक्तमिति ज्ञानस्य यथार्थत्वात् विषयाबाधात् । न च भ्रमम्-

त्वेनाऽस्य भ्रमत्वमनुमेयम् । तदंशे व्यधिकरणप्रकाराभावेन बाधात् बाधितविषयत्वस्योपाधित्वाच्च । अत एव घटमानयेति शब्दानन्तरं सूत्रसञ्चाराधिष्ठितदारुपुत्रकस्य घटानयनव्यवहारदर्शनात् बालो घटपदे व्युत्पद्यते । तन्मूलकशाब्दज्ञानमपि न भ्रमः, तस्यापि भ्रमत्वे प्रयोज्यव्यवहारादिदानीं व्युत्पत्तिर्न स्यात्, किमयं प्रयोज्यश्चेतनव्यवहारात् व्युत्पन्नोऽचेतनव्यवहाराद्वेति संशयस्य वज्रलेपायमानत्वादिति । "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावा–भूमी जनयन्देव एकः"–इत्यादि श्रुतयः "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य विभर्त्त्यव्यय ईश्वरः"–इत्यादिस्मृतयश्च मानत्वेनानुसन्धेया इति । स्यादेतत् ईश्वरवच्छक्तिरपि कार्य्येणैवानुमीयते, तथा हि यादृशादेव करतलानलसंयोगाद्दाहो दृष्टस्तादृशादेव प्रतिबन्धकसत्त्वे सति न जायते, अतो यदभावात्कार्याभावस्तदभ्युपेयं वह्न्यादौ, तेन विना तदभावायत्तदाहाभावानुपपत्तेरिति व्यतिरेकमुखेन शक्तिसिद्धिः । न चाऽदृष्टवैगुण्यम्, दृष्टसादृगुण्ये तदभावात्, तस्य तदर्थत्वात् । अन्यथा दृढदण्डनुन्नमपि चक्रं न भ्राम्येत् । अथाऽदृष्टविलम्बादपि विलम्बो यथा वन्ध्यास्त्रीसम्प्रयोगे, परमाणुकर्म्मणि, अध्ययनतुल्यत्वेऽपि एकत्र फलाभावे चेति चेत् । न । अदृष्टविलम्बो हि न तन्नाशानुत्पादौ, मण्यपसारणानन्तरं दाहाभावप्रसङ्गात् । किञ्च नियमतो मणिसद्भावे कार्याभावस्तदभावे कार्यमिति दृष्टत्वात् मण्याद्यभाव एव कारणम्, अन्यथा कदाचिन्मण्याद्यभावेऽपि तदभावात् कार्यं न स्यात्, वन्ध्यासम्प्रयोगे तु दृष्टव्यभिचाराददृष्टविलम्बादेव विलम्बः । अदृष्टञ्च क्वचित् साक्षाज्जनकम्, अन्यथा परम्परया हेतुरपि न स्यात् । न च समप्रज्ञयोः समञ्च निरन्तरमभ्यस्यतोरेकः

प्रगल्भो नाऽपर इति दृश्यते। न च सर्वोत्पत्तिमतामदृष्टं निमित्तकारणम्, अगम्यागमनादिसाध्ये सुखे व्यभिचारात्। तद्धि नाऽधर्म्मात्, सुखत्वात्, नापि धर्म्मात्, तेन हि अगम्यागमनमुत्पाद्य सुखमुत्पादनीयम्, तथा चागम्यागमनकारणत्वेन न स धर्म्मः श्येनापूर्ववन्निषिद्धफलकत्वेनाऽनर्थकत्वात्। दाहप्रतिकूलादृष्टादेव दाहाभाव इति चेत्। न। तस्योत्तेजकाभावसहकृतमण्यजन्यत्वे तत्राऽदाहार्थिनोऽप्रवृत्तिप्रसङ्गात्। तज्जन्यत्वेऽपि तदुत्पादकादेव दाहाभाव इति किमदृष्टेन, अप्रथमोपस्थितत्वात् उपजीव्यत्वाच्च। प्रतिबन्धकाभावहेतुत्वस्य तेनाभ्युपगमात् अदृष्टोत्पत्तौ शौचाचमनादेः साधारणस्याव्याप्यन्वयः स्यात्, अशुचेरेव तदुत्पत्तौ शौचे सति तदभावापत्तेः, प्रतिपक्षसन्निधापकादृष्टस्यैव प्रतिबन्धकत्वे सति मण्यप्रयोगेऽपि दाहानापत्तिः अग्रिमकाल एव सन्निधिदर्शनेन तदसिद्ध्यभावात्। अस्तु तर्हि उत्तेजकाभावसहकृतप्रतिबन्धकाभावस्यान्वय-व्यतिरेकाभ्यां हेतुत्वम्। एवं केवलोत्तेजकसद्भावे उभयसत्त्वे उभयाभावे च विशिष्टाभावोऽनुगतो हेतुः, प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम्, तच्च मण्यभावत्वेन न तु प्रतिबन्धकाभाभावत्वेनेति नान्योन्याश्रयः। अत एव प्रतिबन्धकत्वाभिमतमण्यादीनामभावकूट एव कारणं तेन मणिसद्भावे मन्त्राद्यभावेऽपि न कार्य्यम्। अनतिरिक्ताभाववादिमते च व्यवहारार्थं तत्तत्स्थानाभिषिक्तस्य हेतुत्वम्। न चाऽभावो न कारणम्, भाववत्तद्ग्राहकतौल्यात्, दृष्टश्च कुड्यसंयोगाभावस्य गतौ, अनुपलब्धेश्चाभावज्ञाने, विहिताकरणस्य प्रत्यवाये, निर्दोषत्वस्य वेदप्रामाण्ये जनकत्वमिति प्राञ्चः। नैवम्। विशिष्टं हि नार्थान्तरं येन तदभावोऽनुगतः स्यात्, किन्तु विशेषण–विशेष्य–सम्बन्धा इति तेषां प्रत्येकाभावस्य हेतुत्वे क्वचिद्विशेष्यमण्यभावः क्वचिदुत्तेजकाभावरूपविशे-

षणाभावः क्वचिदुभयं कारणमिति व्यभिचारेणैकमपि हेतुर्न स्यात् । स्यादेतत् प्रतियोगिभेदादिवत्प्रतियोगितावच्छेदकविशेषणभेदादप्यभावो भिद्यते, अन्यथा पृथिव्यादित्रयप्रत्येकरूपाभावेऽवगतेऽपि वायौ रूपसंशयो न स्यात् । एवञ्च यथा केवलदण्डसद्भावे दण्ड–पुरुषसद्भावे द्वयाभावे च विशेषण–विशेष्योभयविरहप्रयुक्तः केवलपुरुषाभावोऽबाधितानुगतव्यवहारबलात् प्रतीतिसिद्धः तथा विशेष्यस्य प्रतिबन्धकस्याभावे विशेषणस्योत्तेजकाभावस्याभावे उभयाभावे च केवलप्रतिबन्धकाभावो विशेष्य–विशेषणोभयाभावव्यापकोऽनुगत एव दाहकारणमस्तु । अथ विशेषणाद्यभावैरेव केवलपुरुषाद्यभावव्यवहारः एकशक्तिमत्त्वादिति चेत् । न । अनुगतव्यवहारस्याऽनुगतज्ञानसाध्यत्वात् शक्तेश्चातीन्द्रियत्वात् । अथोत्तेजकप्रयोगकाले मणेः कोऽभावः, न तावत्प्रागभावध्वंसाभावः, तयोः प्रतियोग्यसमानकालत्वात् । न च श्यामोऽयमासीदित्यत्र श्यामध्वंसप्रयुक्तः श्यामघटत्वेन पक्वघटस्य ध्वंस एव न तु घटत्वेन, तथोत्तेजकाभावध्वंसप्रयुक्त उत्तेजकाभाववत्त्वेन मणेः ध्वंस एवेति वाच्यम् । ध्वंसस्यानन्तत्वेन उत्तेजकापनयेऽपि दाहप्रसङ्गात् । नाप्यत्यन्ताभावः, तस्य कादाचित्कत्वाभावादिति चेत् । न । यथा दण्डोपनयापनयदशायां केवलपुरुषाभाव उत्पाद–विनाशवान्, अन्यथा अबाधितकेवलपुरुषाभाव–तदभावव्यवहारयोरुपपादयितुमशक्यत्वात्, तथोत्तेजकोपनयापनयशृङ्खलायां प्रतिबन्धकाभावोऽपि तथैव स्वीकरणीयः तुल्यन्यायत्वात् । यदि च संसर्गाभावत्रयवैधर्म्यात्तत्र नान्तर्भवति तदा तुरीय एव संसर्गाभावोऽस्तु, न हि क्लृप्तविशेषबाधे सामान्यबाधः, विशेषान्तरमादायापि तस्य सम्भवात् । अन्यथा क्लृप्तानादिसंसर्गाभावादिवैधर्म्येण ध्वंसोऽपि न सिध्येद्व्यवहारान्यथानुपपत्तिश्च

तुल्यैव, सोऽयमस्माकं सगोत्रकलहो न तु शक्तिवादः । अस्तु वा ध्वंस एवाऽसौ, संसर्गाभावविभागे जन्याभावत्वेन ध्वंसस्य विभजनात् । न चैवं विनाशित्वेन प्रागभाव एव सः, परिभाषाया अपर्य्यनुयोज्यत्वात् । यद्वा अत्यन्ताभाव एवासौ, तस्य नित्यत्वेऽपि कदाचित्प्रतीति–कार्य्यानुदयौ प्रत्यासत्तिकादाचित्कत्वात्, प्रत्यासत्तिश्च विशेषणाभावो विशेष्याभाव उभयाभावश्च, तदैव विशिष्टात्यन्ताभावसत्त्वादिति । तन्न । यदि ह्यतीतविशेषणावच्छेदेन विद्यमानस्यैव विशेष्यस्य ध्वंसः स्यात् तदा क्षणरूपातीतविशेषणावच्छिन्नत्वेन घटस्य विनाशः स्यादिति क्षणभङ्गापत्तिः । किञ्च विद्यमानस्य विनष्टत्वेनाऽप्रतीतेः शिखा विनष्टा पुरुषो न विनष्ट इति विपरीताबाधितप्रत्ययाच्च न विशेषणाभावेऽपि विशेष्यध्वंसः । श्यामोऽयमासीत् केवलोयमासीत्पुरुषः इत्यादौ "सविशेषणे हीति" न्यायेन विशेष्यवति श्याम–कैवल्यादिध्वंस एव प्रतीयते, ध्वस्तस्य ध्वंसानुपपत्तेश्च न विद्यमानस्य ध्वंसः । एतेनोत्तेजकसद्भावे सत्युत्तेजकाभावविशिष्टमणेरुत्पन्नध्वंसस्योत्तेजकापनयसमये ध्वंसो जातोऽध्वस्तश्च ध्वंसः कारणमिति न विफल उत्तेजकापनय इत्यपास्तम् । विद्यमानध्वंसस्य च ध्वंसाभावात् । न च ध्वंसान्यः संसर्गाभावो विशिष्टाभाव इति वाच्यम् । उत्पन्नाभावस्य विनष्टप्रतीतिहेतुतया ततोऽपि विद्यमानस्य विनष्टत्वप्रत्ययापत्तेः । नापि विशिष्टाभावोऽत्यन्ताभावः, तथा हि स एव क्वचिद्विशेषणाभावसहितः क्वचिद्विशेष्याभावसहितो दाहकारणमित्यननुगमस्तदवस्थ एव, विशेषण–विशेष्याभावयोः प्रत्यासत्तित्वावच्छेदकानुगतधर्म्माभावात् । अथ विशिष्टविरोधित्वं विशेषण–विशेष्याभावयोरनुगतं तदवच्छेदकमस्ति तयोः सत्त्व एव विशिष्टात्यन्ताभावसत्त्वादिति चेत्, तर्हि विशिष्टविरोधित्वेनानुगतेन तयोरेव हि विशिष्टाभावत्वेन दाहव्यवहारादौ

जनकत्वमस्तु क्लृप्तं तदुपजीविनाऽतिरिक्तविशिष्टाभावेन। अथोत्तेजककाले विद्यमानात्यन्ताभावानुवृत्तावप्युत्तेजकापनयने उत्तेजकाभावव्यक्तिर्या जाता तदवच्छिन्नमणेरभावो न तत्रेति तदा न कार्योदयः तत्तदुत्तेजकाभावविशिष्टमणेरभावकूटस्य जनकत्वादिति चेत्। न। तत्तदुत्तेजकाभावानामननुगतत्वेनानुगतविशिष्टाभावव्यवहारानुपपत्तेः, उत्तेजकाभावत्वेनानुगमेऽतिप्रसङ्ग एव। अथ विशेषण–विशेष्याभावयोर्विशिष्टविरोधित्वमनुगतकारणतावच्छेदकं यत्र तदन्यतराभावस्तत्र न विशिष्टं यत्र विशिष्टं तत्र न तयोरभाव इति सहानवस्थाननियमस्य विरोधस्यानुभवसिद्धत्वादिति चेत्। न। सहानवस्थाननियमो न परस्परविरहरूपतया विशेषण–विशेष्याभावस्य प्रत्येकं विशिष्टाभावतया तत्प्रत्येकाभावाभावस्य विशिष्टत्वापत्तेः तथा च विशेषण–विशेष्ययोः प्रत्येकं विशिष्टत्वापत्तिः तदभावस्य तत्त्वात्। न चोभयाभावाभाव उभयं विशिष्टम्। एवं ह्यभावद्वयं विशिष्टाभावो न तु प्रत्येकाभावरूप इति प्रत्येकाभावात् विशिष्टाभावव्यवहारो न स्यात्। नापि परस्परविरहव्याप्यत्वं तदाक्षेपकत्वं वा, विशेषण–विशेष्याभावस्य विशिष्टाभावत्वेन तद्व्याप्यत्वात्तदनाक्षेपकत्वाच्च, अभेदे तयोरभावात्। एतेनान्यदपि विशिष्टव्यवहारविरोधित्वादिनाऽनुगतत्वमपास्तम्। केनाप्यनुगतेन रूपेण विशेषण–विशेष्याभावस्य विशिष्टाभावत्वे प्रत्येकाभावाभावस्य विशेषण–विशेष्यान्यतरमात्रस्य विशिष्टत्वापत्तेः, तदभावाभावस्य तत्त्वादित्युक्तत्वात्, तस्माद्विशेषण–विशेष्याभावो विशेषणावच्छिन्नविशेष्याभावो न विशिष्टाभाव इति। अत्रोच्यते, विशेषण–विशेष्ययोः सम्बन्धाद्विशिष्टव्यवहार इति तयोः सम्बन्धाभावाद्विशिष्टाभावव्यवहारः घट–तदभावव्यवहाराविव घटसत्त्वासत्त्वाभ्याम्। न हि तयोरसम्बन्धे विशिष्टव्यवहारः, न वा त-

दभावे सति न विशिष्टाभावव्यवहारः । यस्य यत्र यः सम्बन्धः स एव तत्र तस्य वैशिष्ट्य, स च सम्बन्धाभावो विशेषणाभावात् विशेष्याभावादुभयाभावात्, सर्वत्राऽविशिष्ट एकः तेषां व्यापकोऽनुगतविशिष्टाभावव्यवहारादिकारणम्, इह दण्डी पुरुषो नास्तीत्यत्र तथा दर्शनात् । अत एव दण्डमात्रसद्भावे दण्ड–पुरुषसद्भावे उभयाभावे च कैवल्य–पुरुषयोः सम्बन्धाभावः सर्वत्रास्तीत्यनुगतः केवलपुरुषाभावव्यवहारः । एवञ्च प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धाभावो दाहकारणम् । स च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाभावे चास्ति, सर्वत्र प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धो नास्तीति प्रतीतेः । नन्वेवं यत्र प्रतिबन्धकोत्तेजकाभावौ तत्रापि दाहः स्यात् अधिकरणाभावयोरतिरिक्तसम्बन्धाभावादिति चेत् । न । तदभावेऽपि स्वरूपसम्बन्धस्याभावात् सर्वत्र स्वरूपसम्बन्धादेवाऽधिकरणाभावयोर्वैशिष्ट्यप्रतीतेः । तथापि प्रतिबन्धकोत्तेजकाभावावेव स्वरूपसम्बन्धस्तयोरभावश्च प्रतिबन्धकाभाव उत्तेजकश्च दाहकारणं, तथा चोभयाभावे उत्तेजकासत्त्वे परं दाहः स्यात्, उत्तेजकवति प्रतिबन्धके दाहो न स्यादिति चेत् । न । अधिकरणाभावावेव स्वरूपसम्बन्धः तयोर्घटवद्भूतलचत्वरीयतदभावयोरपि स्वरूपसत्त्वे घटवति घटाभावव्यवहारापत्तेः, किन्तूपश्लिष्टस्वभावत्वं, तच्च सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वम् । न च घटवद्भूतल–चत्वरीयतदभावयोर्विशिष्टप्रत्ययजननयोग्यत्वमस्ति, घटवति कदापि घटाभावप्रत्ययानुदयात्, तादिहापि प्रतिबन्धकोत्तेजकाभावयोर्विशिष्टप्रत्ययजननयोग्यत्वं स्वरूपसम्बन्धः, अन्यथोत्तेजकवति प्रतिबन्धके चत्वरीयोत्तेजकाभावविशिष्टप्रत्ययापत्तेः । तादृशस्वरूपसम्बन्धाभावश्च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाभावे चाविशिष्ट एव ।

यद्वा अदण्डपुरुषस्याभावे दण्डी पुरुषो न प्रतियोगी तस्याऽदण्डत्वाभावात् किन्तु तदन्यः, तस्याभावो दण्डिसद्भावेऽपि दण्डमात्रसत्त्वे उभयासत्त्वे चाविशिष्ट इति तस्मात् केवलपुरुषाभावव्यवहारोऽनुगतः। तदुक्तं न हि दण्डिनि सत्यदण्डानामन्येषां नाभावः, किन्तु दण्डाभावस्यैवेति युक्तम्, अन्यथा तत्रान्येषामिति पदस्य व्यर्थतापत्तेः, तथा केवलप्रतिबन्धकाभावे उत्तेजकसहकृतः प्रतिबन्धको न प्रतियोगी तस्य केवलत्वाभावात् किन्तु तदन्यः, तदन्यस्य च केवलप्रतिबन्धकस्याभावे उत्तेजकसहितप्रतिबन्धकसत्त्वे उत्तेजकमात्रसत्त्वे उभयासत्त्वे वा विशिष्ट एवेति नाऽननुगमः, उत्तेजकापनये च केवलप्रतिबन्धकोऽस्तीति न तदभाव इति दाहो न भवतीति। ननु न प्रतिबन्धकाभावः कारणम् एकदण्डान्वये घटोत्पत्तिवत्प्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकान्तराभावेऽपि कार्यानुदयात्, न हि यावत्कारणतावच्छेदकावच्छिन्नं तावदन्वये कार्यमिति चेत्। न। प्रतिबन्धकाभावत्वेन न कारणत्वमन्योन्याश्रयात् किन्तु मण्याद्यभावत्वेनेत्युक्तत्वात्, तत्त्वेऽपि वा घटे दण्डसलिलादिवत्प्रतिबन्धकाभावकूटस्य दाहहेतुत्वात्।

यद्वा प्रतिबन्धकत्वावच्छिन्नप्रतियोगिक एवाभावः कारणम्, स च यावद्विशेषाभावनियत इति न प्रतिबन्धकसत्त्वेऽपरप्रतिबन्धकाभावेऽपि कार्य्योदयः। प्रतिबन्धकस्य च संसर्गाभावो हेतुः, तेन तत्सत्त्वे तदन्योन्याभावेऽपि न कार्य्यम्। अन्वय-व्यतिरेकाभ्यां व्याप्ति-कारणत्वयोर्ग्रहे संसर्गाभावस्य त्वयापि हेतुत्वाङ्गीकारात्, अन्यथा सामग्रीव्यापकयोः सत्त्वे तदन्योन्याभावे कार्य्यव्याप्याभावापत्तौ कार्य्य-कारणव्याप्य-व्यापकभावे व्याघातात्। किञ्च तवापि प्रतिबन्धकाभावे शक्तिरस्तीति तत्सत्त्वे तदन्योन्याभावमादाय शक्तिसत्त्वप्रसङ्गः। न च स दुर्वचः, न वा

प्रागभावादित्वेनाऽननुगम–व्यभिचारौ । प्रतियोग्यधिकरणयोः संसर्गमारोप्य यो निषेधः स संसर्गाभावः । भूतलं घटसंसर्गो नेत्यत्र भूतले घटसंसर्गस्य संसर्गो नारोप्यते किन्तु तादात्म्यम् । वयन्तु ब्रूमः, यत्र प्रतियोगिनमधिकरणे समारोप्य निषेधावगमः स संसर्गाभावः, यत्र चाधिकरणे प्रतियोगितावच्छेदकमारोप्य निषेधावगमः सोऽन्योन्याभावः । भूतलं न घट इत्यत्र भूतलस्य घटत्वाभावगमात् घटत्वमेव च घटतादात्म्यम् ।

आरोपस्य हेतुत्वे किं मानमिति चेत्, मा भूत्तावदन्यत्, नेदमिह नेदमिदमित्यबाधितविलक्षणव्यवहार एव तत्र मानमिति । ननु प्रतिबन्धकात्यन्ताभावो न हेतुः, तस्मिन् सत्यपि कार्य्याभावात् । न हि करादौ मण्यत्यन्ताभावः तत्संयोगात्यन्ताभावो वा, मणेः स्वावयववृत्तित्वात् संयोगस्य चाव्याप्यवृत्तित्वात् । अत एव न तत्प्रागभाव–प्रध्वंसौ हेतू, तयोः करादौ अवृत्तेः गुण–कर्म्मादेश्च प्रतिबध्यत्वानापत्तेः, तस्य जन्यधर्म्मानाश्रयत्वेन तत्र तयोरभावात्, न चान्यः संसर्गाभावोऽस्तीति चेत् । न । संसर्गावच्छिन्नप्रतियोगिकस्याभावविशेषस्य सति प्रतिबन्धकेऽभावात् । स च समयविशेषावच्छेदेन संसर्गितया अत्यन्ताभाव एव, तथैवान्वय–व्यतिरेकावधारणात् । अथैवं प्रध्वंस–प्रागभावस्थले समयविशेषावच्छिन्नात्यन्ताभावेनैवोपपत्तौ न तयोः सिद्धिः, अत्यन्ताभावो ह्यव्याप्यवृत्तिः तस्य चैकत्र भावाभावे क्वचिद्देशोऽवच्छेदकः क्वचित्काल इति चेत् । न । तत्र विद्यमानताविरोधित्वेनैव कपाले न घट इति प्रतीतिवैलक्षण्यात्, न त्वेवं भूतले घटाभावप्रतीतिः ।

अन्ये तु भविष्यति घटो नष्ट इति विलक्षणप्रतीत्योरत्यन्ताभावेनैकेन समर्थयितुमशक्यत्वात् अन्य एवायं संसर्गाभाव इत्यप्याहुः ।

एतेन विशेषणाभाव–विशेष्याभाव–तदुभयाभावघटितं साम-

ग्रीत्रयमेवास्तु दाहे च जातित्रयकल्पनमिति प्रत्युक्तम् । अनुगतहेतुसत्त्वात् दाहवैजात्यस्य योग्यानुपलम्भबाधितत्वाच्च । व्यक्तियोग्यतयैव जातियोग्यत्वेन योग्ये अयोग्यजात्यभावात् । ननु प्रहरं मा दहेत्यादौ सावधिपन्त्रपाठे मन्त्रविनाशे दाहः स्यात् । न च सङ्कल्पविषयकालविशेष एव तत्र प्रतिबन्धकः, सङ्कल्पनाशे समयस्य स्वतोऽविशेषात् । न च उद्देश्यत्वमेव तत्र विशेषः, तस्य विनाशात् । न चोद्देश्यध्वंसोऽपि हेतुः, तस्य यामादूर्ध्वमपि सत्त्वात् । न च मन्त्रपाठजनितमदृष्टमेव तत्र प्रतिबन्धकं तत्कालदाहाप्राप्तिकफलनाश्यत्वेन नाऽग्रे दाहप्रतिबन्ध इति वाच्यम् । प्रतिबन्धकमन्त्रपाठस्यानिषिद्धत्वेनाविहितत्वेन चादृष्टाजनकत्वात् तदाचारस्य विगीतत्वेन श्रुत्याद्यननुमापकत्वादिति । मैवम् । उद्देश्यत्वज्ञानाहितसंस्कारविषयकालस्य प्रतिबन्धकत्वात् । ननु प्रतिबन्धमकुर्वतामप्रतिबन्धकत्वेन शक्तिमनपकुर्वतां मन्त्रादीनां न प्रतिबन्धकत्वमतः शक्तिसिद्धिः । न च कार्य्यानुत्पाद एव प्रतिबन्धः तज्जनकत्वमेव प्रतिबन्धकत्वमिति वाच्यम् । कार्य्यानुत्पादो हि न तत्प्रागभावो न वा तदुत्तरकालसम्बन्धः तस्य मन्त्राद्यजन्यत्वादिति चेत् । न । मन्त्रादीनामप्रतिबन्धकत्वात् तत्प्रयोक्तारस्तु प्रतिबन्धकाः ते च किञ्चित्करा एव । मन्त्रादौ च कार्य्ये कारणोपचारात् स्वार्थिककन्प्रत्ययाद्वा तथा व्यपदेशः । प्रतिबन्धश्च सामग्रीविरहः । मन्त्राद्यभावघटितसामग्रीविरहश्च मन्त्रादिरेव, तदभावाभावस्य तत्त्वात् ।

नव्यास्तु न प्रतिबन्धकाभावः कारणं न वा शक्तिः किन्तु तत्तत्कालीनदाहविशेषं प्रति तत्तत्कालप्रतिबन्धेतरवह्नेः कारणत्वमिति प्रतिबन्धकाभावः कारणतावच्छेदको न तु कारणं दण्डत्ववत्, आकाशादौ त्वेकव्यक्तिके न यथा कारणत्वं कचित्प्रतिब-

न्धेऽप्यन्यत्र शब्दोत्पत्तेः किन्तु भेर्यादेः तथा कारणत्वमिति तत्प्रतिबन्धे न शब्दोत्पत्तिरित्याहुः। तन्न। वह्नि–प्रतिबन्धकाभावयोरन्वय–व्यतिरेकतौल्येनोभयस्यापि कारणत्वात्, न त्वेकमेवावच्छेदकं विनिगमकाभावात्। किञ्च यस्मिन् सत्यपि यदभावात्कार्य्याभावः तस्य कारणत्वमायाति न तु तदवच्छेदकत्वम्। न हि कार्य्यायोगव्यवच्छेदः करणत्वं, किन्तु नियतपूर्वसत्त्वं, तच्च सहकारिविरहप्रयुक्तकार्य्याभावेऽप्यक्षतम्। अन्यथा चक्रसहितदण्डत्वेन कारणत्वे सहकार्य्युच्छेदः। यस्य यद्धर्ममवगम्यैव नियतपूर्वसत्त्वमवगम्यते तस्य तत् अवच्छेदकं, दण्डत्वमिव, सहकारीतु न तथा। ननु मा भूदर्थापत्तिः शक्तौ मानमनुमानन्तु स्यात्, तथा हि स्थिरोऽवयवी जनकदशाविशिष्टो वन्हिरजनकदशाव्यावृत्तभावभूतधर्म्मवान् जनकत्वात् कुण्ठकुठारातीक्ष्णकुठारवत् दाह्यासंयुक्तवह्नेः दाह्यसंयुक्तवह्निवच्च प्रतिबन्धकसत्त्वे संयोगादेरजनकदशावर्त्तित्वेन तदतिरिक्तातीन्द्रियभावभूतधर्म्मसिद्धिः। यद्यपि शक्तेर्भावहेतुजन्यत्वेन नाऽजनकदशाव्यावृत्तत्वं, तथाप्युद्भवविशिष्टायास्तथात्वम्। यद्वा धर्म्मेऽतीन्द्रियत्वं विशेषणम्। न च दृष्टान्तासिद्धिः, तुल्याधारत्वेऽपि लोहविशेषघटितकुठारे विलक्षणच्छिदाकार्य्यबलादतीन्द्रियतीक्ष्णत्वासिद्धेः। अथ वा तथाभूत एव वह्निः कार्य्यानुकूलातीन्द्रियाद्रिष्टधर्म्मसमवायी जनकत्वात् आत्मवत्, अतीन्द्रियत्वञ्च यद्यपि न साक्षात्काराविषयत्वम् अनित्यसाक्षात्काराविषयत्वं योगजधर्म्माद्यजन्यसाक्षात्काराविषयत्वं वा, परस्य वा प्रत्यसिद्धेः, संयोगादिपञ्चकजन्यज्ञानाविषयत्वमैन्द्रियकाणामपि, तथापि संयोगाद्यन्यतरप्रत्यासत्तिजन्यसाक्षात्काराविषयत्वमुभयवादिसिद्धम्, अन्यतरत्वञ्च तदन्यान्यत्वम्। न चाभावातीन्द्रियत्वं, तस्यासिद्धेः। न च वह्नौ स्थितिस्थापके-

नाऽर्थान्तरं, तत्र तदभावात्, क्रियाया वेगेनादृष्टवदात्मसंयोगेन वोत्पत्तेः। न चात्मत्वं नित्यत्वं वोपाधिः, स्पर्शैकत्वादिमति द्व्यणुके साध्याव्यापकत्वात्। यद्वा पिण्डीभूतो वह्निः दाहानुकूलादृष्टातीन्द्रियभावभूतधर्म्मवान् दाहजनकत्वादात्मवत्। न चात्मत्वमुपाधिः, अदृष्टत्वस्य दाहानुकूलत्वेनाऽदृष्टे साध्याव्यापकत्वात्। अथ वा करवह्निसंयोगः कार्य्यानुकूलातीन्द्रियधर्म्मसमवायी जनकत्वादात्मवत् द्व्यणुकवच्च। न चात्मत्वं द्रव्यत्वं वोपाधिः, द्व्यणुकैकत्व-स्पर्शादौ साध्याव्यापकत्वात्। यद्वा प्रतिबन्धकदशायां प्रत्यक्षसकलदाहहेतुसमवहितो दाहाजनको वह्निः जनकदशावृत्तिकार्य्यानुकूलभावभूतधर्म्मशून्यो-जनकत्वात् कुण्ठकुठारवत्। यद्वा तथाभूतो वह्निर्दाहजनकदशावृत्तिदाहानुकूलभावभूतधर्म्मशून्यः दाहाजनकत्वात् दाह्यासंयुक्तवह्निवत्। अनुकूलत्वञ्च कार्य्याभावप्रयोजकाभावप्रतियोगित्वं कारण-तदवच्छेदकसाधारणं, दृढदण्डत्वेन कारणत्वे दृढत्वाभावादपि कार्य्याभावदर्शनादिति। उच्यते। साध्यं विनापि उभयासिद्धप्रतिबन्धकाभावादेव जनकत्वादिहेतुसम्भवात् विपक्षबाधकाभावेनाऽनुमानानामप्रयोजकत्वम्। यदि च सहचारदर्शन-व्यभिचारादर्शनोपाध्यनुपलम्भमात्रादेव व्याप्तिग्रहः तदा शक्तिसिद्ध्यनन्तरं तेनैव हेतुना साध्ये शक्त्यतिरिक्तत्वप्रक्षेपेण शक्त्यतिरिक्तदाहानुकूलातीन्द्रियधर्म्मसिद्धिः। एवं तत्तदतिरिक्तप्रक्षेपात्तेनैव हेतुनाऽनन्ततादृशधर्म्मसिद्धिप्रसङ्गः। द्वितीयादितादृशधर्म्मसिद्धिं विनापि प्रथमानुमितशक्त्यैव जनकत्वाद्युपपत्तेर्न तादृशानन्तधर्म्मसिद्धिरिति चेत्, हन्तैवं शक्तिं विनापि तदर्थसिद्धेः किं शक्त्या। यद्धि ईश्वरानन्त्यवत् न शक्त्यानन्त्यमित्युक्तम्, तदबोधात्। कार्य्यमात्रे हि कर्तृत्वेन कारणत्वं न त्वीश्वरत्वेन द्विकर्तृकत्वादिना वा, गौरवात्, घटे त्वार्थः समाजः। एवमजनक-

दशाव्यावृत्तत्वेनैव प्रयोजकत्वं, न तु भावभूतत्वेनेति गौरवात् । अपि च भावकार्य्यमात्रस्य समवायिकारणजन्यत्वेन शक्तेरपि तथात्वात् शक्त्यनुकूला शक्तिरपरा समवायिकारणे मन्तव्या । एवं सापि समवायिकारणजन्येति तदनुकूलशक्तिस्वीकारे शक्त्यनवस्था । किञ्च प्रथमानुमानेऽजनकत्वं न स्वरूपायोग्यत्वम्, वह्नौ कुठारे च तदभावात्, किन्तु कार्य्यानुपधानम्, तथा च तदनुपधानदशायामपि वह्नौ शक्तिः कुठारे तैक्ष्ण्यमिति बाधो दृष्टान्तासिद्धिश्च लौहविशेषाणामेव सातिशयच्छिदाजनकत्वमिति नातीन्द्रियतैक्ष्ण्यप्रसिद्धिः । अग्रिमचतुर्षु बहिरिन्द्रियाप्रत्यक्षत्वमुपाधिः, तुल्ययोगक्षेमत्वेऽपि सन्दिग्धोपाधित्वेन दूषकत्वात् । अपि च जनकत्वस्य केवलान्वयित्वेन व्यतिरेकाप्रसिद्ध्या नाऽन्वय-व्यतिरेकी । न च जनकत्वाभावस्य शक्तावेव प्रसिद्धिः, अन्योन्याश्रयात् । न च गुरुवचनपरम्परात एव वाक्यार्थतया तत्सिद्धिः, त्वन्नये सिद्धार्थस्याऽप्रमाणत्वात् । न च परार्द्धसङ्ख्यायां साध्यजनकत्व-व्यतिरेकयोः प्रसिद्धिः, अप्रत्यक्षायाः शब्दैकवेद्यायाः तस्याः प्रत्यक्षेण साध्य-हेतुव्यतिरेकयोर्ग्रहीतुमशक्यत्वात् । एतेन पण्डापूर्वेऽपि तत्सिद्धिरपास्ता । स्यादेतत् तृणारणिमणीनां वह्नौ कारणत्वादेकशक्तिमत्त्वमुपेयम्, एकजातीयकार्ये एकजातीयकारणत्वानियमात् । वह्न्यवान्तरजातीये तेषां प्रत्येकं कारणत्वमिति चेत् । न । वह्निजातीयस्याकस्मिकतापत्तेः, कारणगतैकरूपमपहाय कार्य्यगतबहुतररूपकल्पने गौरवात् । तृणारणिमणिप्रभववह्निषु अवान्तरजातेरनुपलम्भबाधितत्वाच्च । यत्र च तत्तादिन्धनप्रयोज्यं प्रदीप-दारुदहनादौ वैजात्यमनुभूयते तत्र कारणेष्वेकशक्तिमत्त्वमपि नास्ति । किञ्च गोमय-वृश्चिकप्रभववृश्चिकादिषु वैजात्यकल्पने तत्प्रभववृश्चिकेष्वपि वैजात्यं कल्प्यमेवं तत्प्र-

भव—तत्प्रभवेष्वपीति वैजात्यानन्त्यं, विजातीयकारणानां विजातीयकार्य्यजनकत्वनियमात् । न च तयोर्नैको वृश्चिकः, बुद्धिव्यपदेशयोरविशेषात् । यदि विजातीयेष्वेककार्य्यशक्तिसमवायाच्च कार्य्यविशेषात्कारणविशेषः तदभावात्तदभावः क्वाप्यनुमीयेत, तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसम्भवादिति चेन, वह्निवृश्चिकादावेवमेतत् । निरूपितनियतवह्न्यादिकारणकधूमादौ कुतो न तदनुमानम् । अन्यथा कार्य्यवैजात्येऽपि तृणस्य वह्निविशेष इव वह्नित्वेन धूमविशेष एव कारणत्वं न तु धूममात्रे । तृणादिप्रभवत्वग्रहानन्तरं वह्न्यवान्तरजातेर्ग्रहवद्वह्नि—तदन्यजन्यत्वज्ञानानन्तरं धूमावान्तरजातिग्रहो भविष्यतीत्यप्याशङ्क्येत । बाधकं विना धूमत्वेन वह्निकार्य्यतेति चेत्, तर्हि बाधकं विना धूमं प्रति वह्नित्वेन कारणतेत्यपि तुल्यम् ।

यत्तु तृणत्वेन कारणत्वग्रहस्योपजीव्यत्वात्तद्रक्षार्थं वह्नौ जातिविशेष एव कल्प्यत इति, तन्न । वह्नित्वेन कार्य्यत्वग्रहात्तद्रक्षार्थं तृणादौ शक्तिकल्पनौचित्यात् । यथा चान्वय—व्यतिरेकाभ्यां तृण—फूत्कारयोः परस्परसहकारित्वं तथैव तच्छक्त्योरपि परस्परसहकारित्वेन वह्न्यनुकूलत्वं, तथैव कार्य्यदर्शनात् । एवं तृणारणि—मणि—फूत्कार—निर्मन्थन—तरणिकिरणानां वह्न्यनुकूलशक्तिमत्वेन कारणत्वेऽपि फूत्कारेण तृणादेव निर्मन्थनेनाऽरणेरेव प्रतिफलिततरणिकिरणैर्मणेरेवाग्न्युत्पत्तिर्न तु मणि—फूत्कारादिभ्यः, मणि—फूत्कारशक्त्योः परस्परसहकारित्वविरहात् ।

यत्तु तृण—फूत्कारादिसामग्र्ये विशिष्टे शक्तिरिति, तन्न । तृणत्वेन गृहीतकारणताभङ्गप्रसङ्गादिति । उच्यते, तृणारणि—मणि—फूत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्तिभावहेतुजनितानन्तशक्तिस्वीकारे गौरवं तावदनन्तव्यक्तिजन्यानन्तवह्निव्यक्तिषु जातिक-

ल्पने लाघवमिति तदेव कल्प्यते। न च जातौ योग्यानुपलब्धिबाधः, गोमय-वृश्चिकप्रभववृश्चिकयोरीषन्नीलत्व-कपिलत्वव्यङ्ग्यवैजात्यस्य प्रत्यक्षसिद्धत्वात्। तृणजन्यनानावह्निव्यक्तिषु तृणजन्यत्वज्ञानानन्तरं मणिजन्यव्यावृत्तानुगतबुद्धिरस्ति जातिविषया। तृणजन्यत्वेनोपाधिना सेति चेत्। न। बाधकं विनाऽनुगतबुद्धेस्तद्व्यङ्ग्यजातिविषयत्वनियमात्।

न च गोमय-वृश्चिकप्रभववृश्चिकपरम्परायामननुगतजात्यापत्तिः, गोमयजन्यवृश्चिकप्रभववृश्चिकेषु वृश्चिकप्रभवत्वजातेः सत्त्वात्। वह्निमात्रे च दाहस्पर्शवानवयवस्तत्संयोगः सेवनादिश्च कारणानि। न च तृणादिकं विनापि तदुत्पत्तिप्रसङ्गः, विशेषसामग्रीमादायैव सामान्यसामग्र्या जनकत्वात्। ननु तृणारणि-मणीनां वह्नौ कारणत्वग्रहे शक्ति-वैजात्ययोरन्यतरकल्पनं तद्ग्रहश्च नान्वय-व्यतिरेकाभ्यां, व्यभिचारात्। अथाऽरणि-मण्यभाववति स्तोमविशेषे तृणं विना वह्निव्यतिरेकः तृणान्वये वह्निरित्यन्वय-व्यतिरेकाभ्यां तत्रैव स्तोमे तादितरसकलहेतुसमवधाने तृणान्वयेऽवश्यं वह्निरिति नियतान्वयेन रासभादिव्यावृत्तेन तृणादिकारणताग्रह इति चेत्। न। तृणं विनापि वह्निरिति ज्ञाने सति वह्निनियतपूर्ववर्त्तित्वस्य कारणत्वस्य ग्रहीतुमशक्यत्वात्। तृणाजन्ये वह्नौ मणेः कारणत्वग्रह इति चेत्। न। व्यभिचारेण वह्नौ तृणजन्यत्वाग्रहे तदजन्यत्वस्याप्यग्रहात् वह्निमात्रस्यैव तदजन्यत्वाच्च। न च मण्यजन्यत्वेन तृणजन्यत्वग्रहः, अन्योन्याश्रयात्। यत्तु यत्र कारणताग्राहकं नास्ति तत्र व्यभिचारस्तद्ग्रहप्रतिबन्धीति। तन्न। अबाधितनियतपूर्ववर्त्तित्वाभावग्रहे तद्ग्रहस्यासम्भवात् अभावप्रमायां भावज्ञानानुदयादिति। उच्यते। उक्तग्राहकैर्वह्निनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकरूपवत्त्व तृणस्य तृ-

णानिष्ठकारणतानिरूपितकार्यतावच्छेदकरूपवत्त्वं वह्नेर्वा अकार्य्या-कारणव्यावृत्तं रूपं परिच्छिद्यते न तु तृणत्वेन कारणत्वं वह्नित्वेन कार्य्यत्वं वा, तच्चोभयथापि सम्भवति वह्नित्वेन कार्य्यतया तदनुकूलशक्तियोगित्वेन च तृणादीनां कारणतया वह्नित्वावान्तरजातिविशेषेण कार्य्यतया वा तत्र विनिगमकमुक्तमेव । अथ तृणारणि–मणीनामभावत्रये न कार्य्यम् अभावत्रयाभावे कार्य्यमिति अन्वय–व्यतिरेकाभ्यामभावत्रयाभावत्वेन तृणादीनां कारणत्वमिति न व्यभिचारः अभावाभावस्य भावपर्यवसन्नत्वादिति चेत्, अभावत्रयाभावः किं तृणादिप्रत्येकव्यापकोऽन्य एव उत तृणादि प्रत्येकमेव, आद्येऽभावस्य कारणत्वमिति किमायातं तृणादिकारणत्वे । द्वितीये तृणस्य नारणिमण्यभावाभावत्वं तदुभयत्वापत्तेः । एतेनाभावत्रये न कार्य्यं तदभावे कार्य्यमित्यन्वय–व्यतिरेकाभ्यां तृणादिप्रत्येकस्य कारणत्वग्रह इति परास्तम् । स्यादेतत्, मा भूत्सहजशक्तिराधेयशक्तिस्तु स्यात्, तथा हि "व्रीहीन् प्रोक्षती"त्यत्र कालान्तरकार्य्यानुकूलोऽतीन्द्रियोऽतिशयः प्रोक्षणजन्योऽस्तीत्युभयवादिसिद्धम् । स व्रीहिसमवेतो न वेति संशये व्रीहिनिष्ठ एव वाच्यः, कथमन्यथा प्रोक्षितानामेव तेषां कालान्तरेऽवघातादौ विनियोगः । न च मन्त्रादिसहकृतत्वमेव व्रीहिषु विशेषः , तेषां चिरध्वस्तत्वात् । ननु कथं प्रोक्षितस्यैवावघातादावन्वयः "व्रीहीनवहन्तीति" श्रुतेस्तन्मात्रान्वयेऽप्युपपत्तेः । अथ "व्रीहिभिर्यजेत" "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ति" "पुरोडाशैर्यजेते"त्यत्र यथा पुरोडाशे प्रकृत्यपेक्षायामवहतव्रीहीणामवयवानुवृत्तिद्वारान्वयः प्रोक्षणे च यागार्थमुपात्तव्रीहीणां तथावघाते व्रीह्याकाङ्क्षायां प्रोक्षितानामेवान्वयः बाधकं विना शब्दानां सन्निहितविशेषपरत्वनियमात्, व्यक्तिवचनानां सन्निहिताविशेषपरत्व-

मिति न्यायात्, अन्यथा प्रकरणादिसान्निहितत्यागे तदन्यसन्निधिकल्पने गौरवमिति चेत् । न । तर्ह्येकस्य द्वयं यत्र प्रोक्षणं तत्रावघातो न तु प्रोक्षणविशिष्टे, यत्र रूपं तत्र रस इतिवत्, तथा च प्रोक्षणस्य शब्देन कालान्तरकार्यजनकत्वाबोधनात् कथं तन्निर्वाहार्थमतिशयकल्पनम् । "प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते" इति वाक्यशेषात्प्रोक्षणविशिष्टस्यावघाते कारणताबोध इति चेत्, अस्तु तावदेवं, तथापि प्रोक्षिता इत्यत्र भूते क्तानुशासनादतीतप्रोक्षणे व्रीहावत्रघातान्वयः, तथा चावघाते प्रोक्षणध्वंसः कारणं न तु प्रोक्षणमिति । मैवम् । प्रोक्षणमवघातजनकं प्रमाणतस्तदर्थमुपादीयमानत्वात् अवघाते व्रीहिवत् । न चासिद्धिः, अप्रोक्षितेऽवघाताभावादवश्यमवघातार्थं प्रोक्षणोपादानात् । न च व्यापारं विना तथा सम्भवति । न च प्रोक्षणध्वंस एव व्यापारः, प्रतियोगिनोऽहेतुत्वापातात् । अन्यथा यागादावपि तथा स्यात् । फलस्य च नियतसमयोत्पत्तिकत्वमपूर्ववत् स्वभावादेव भविष्यति । न च प्रोक्षणोपलक्षिता व्रीहयस्तथा, निरन्वयध्वस्तत्वेनोपलक्षणस्याहेतुत्वात् । कुरुणा क्षेत्रमित्यत्र तु कुरुज्ञानस्येतरव्यावृत्तक्षेत्रव्यवहारजनकत्वं न तु कुरोः । अन्यथा यागोपलक्षितो यज्वैव स्वर्गं फलिष्यति किमपूर्वेण । न च देवदत्ताद्यशरीरं देवदत्तविशेषगुणजन्यं जन्यत्वे सति तद्भोगसाधनत्वात् तन्निर्म्मितस्रग्वदिति तत्सिद्धिः, जन्मान्तरीयैरदृष्टजनकत्वाभिमतैर्ज्ञानेच्छा-प्रयत्नैः सिद्धसाधनात् । तस्मात्प्रोक्षणादयो भावभूतमतिशयं जनयन्त एव कालान्तरभाविकार्यजनकाः प्रमाणतस्तदर्थमुपादीयमानत्वात् यागचिकित्सावत्, स चातिशयो लाघवात् फलसमानाधिकरण इति व्रीहिनिष्ठ एव, तेन तत्समवहितत्वं व्रीहेः साक्षात्सम्बन्धात् पुरुषनिष्ठत्वे च व्रीहिणा साक्षात्सम्बन्धाभावात् परम्प-

रासम्बन्धे गौरवात् न साक्षाद्व्रीहिसमवहितत्वं स्यात् । किञ्च यो यद्गतफलार्थितया क्रियते स बाधकं विना तद्गतमेव तदनुकूलमतिशयं जनयति यथा याग-चिकित्से । अथ प्रोक्षणं पुरुषसमवेतातिशयजनकं कालान्तरभाविकार्यजनकत्वे सति विहितत्वात् यागवत्, अन्यथा विधिविरोधादिति चेत् । न । कृषि-चिकित्सादिना व्यभिचारात् अप्रयोजकत्वाच्च तेन विनापि विधिसम्भवात् । स च प्रतिव्रीहि नानैव । न चैवमेकव्रीहिनाशे फलानुदयः तावत्संस्काराणामभावादिति वाच्यम् । संस्कारत्वेन प्रयोजकत्वे किञ्चित्समवधानेऽपि दण्डादिवत्कार्यसम्भवात् । अस्तु वा सकलव्रीहिनिष्ठ एक एव । न चैकव्रीहिनाशे तन्नाशापत्तिः, किञ्चिदाश्रयनाशस्य वृक्षादाविव कार्य्यानाशकत्वादिति । उच्यते । अतिशयग्राहकमानाल्लाघवसहकृतात् स एक एव सिध्यति न नाना पुरुषनिष्ठश्च, तथा हि प्रोक्षणमपूर्वजनकं दृष्टद्वाराभावे सति कालान्तरभाविफलजनकतया विहितत्वात् याग-तदङ्गवत्, कृष्यादौ दृष्टद्वारसम्भवात् न व्यभिचारो न वाऽप्रयोजकत्वम् । याग-दान-होमादि-तदङ्गानामपूर्वजनकत्वे दृष्टद्वाराभावे सति कालान्तरभाविकार्यजनकतया विहितत्वस्यैव प्रयोजकत्वादन्यस्याऽननुगमात् । न च यो यद्गतफलार्थितया क्रियते स बाधकं विना तद्गतमेव तदनुकूलं फलं जनयतीति नियमः, शत्रुबधमुद्दिश्य प्रवर्त्तिते श्येनयागादौ व्यभिचारात् विपक्षे बाधकाभावाच्च । नापि यदुद्देशेन यत् क्रियते न तत् तत्र भाविकार्यानुकूलातिशयजनकमिति नियमः, हविस्त्यागादिभिर्व्यभिचारात् । ननु प्रोक्षितव्रीहिणा अदृष्टस्य जनितत्वाद्धर्हिष इव न तस्य पुनरुपयोगान्तरं स्यात् विनियुक्तविनियोगविरोधात् उपयोगे वा तज्जातीयान्तरमप्युपादीयेताऽविशेषात् । न । "व्रीहीनवहन्ती"त्यत्रोक्तन्यायेन प्रोक्षितस्यैव

व्रीहेरन्वयात्। विधेर्दुर्लङ्घ्यत्वात्। यथा "बर्हिस्तृणोति बर्हिषि हविरासादयती"त्यत्र। यद्वा विचित्राः संस्काराः केचिदुद्देश्यसहकारिण एवाग्रिमकार्यकारिणः यथाभिचारसंस्कारो यं देहमुद्दिश्य प्रयुक्तः तदपेक्ष एव तत्सम्बद्धस्यैव दुःखं जनयति, तथा प्रोक्षणसंस्कारा अपि उद्देश्यव्रीहिसहकृता एवाग्रिमकार्य्यकर्त्तारः। यथा कारीरीजनितसंस्काराधारपुरुषसंयोगाज्जलमुचामदृष्टसमवधानं तथा प्रोक्षणजन्यादृष्टवदात्मसंयोगात् व्रीहीणामुत्तरक्रियाविशेषाः, कर्तृकर्मसाधनवैगुण्यात् फलाभावस्तुल्य एव। आगमिकत्वात् चाण्डालादिस्पर्शस्याहवनीयादिसंस्कारनाशकत्वश्रुतेर्व्यधिकरणस्याप्यपूर्वनाशकत्वम्। धर्म्मनाशे कर्म्मनाशापारगमनवत् निषिद्धकीर्त्तनवच्च। किञ्च प्रोक्षणजन्यातिशयो व्रीहिनिष्ठो न नाना, आत्मवृत्तेरेकस्मादप्युक्तन्यायेन कार्य्योपपत्तेः। नाप्येकः, एकद्वित्राश्रयनाशानां प्रत्येकमननुगमेन कार्य्यनाशे आश्रयमात्रनाशस्य जनकत्वादेव व्रीहिनाशेन तन्नाशादपरप्रोक्षितव्रीहीणामनन्वयापत्तेः। अथ "व्रीहिन् प्रोक्षती"तीप्सितद्वितीयाश्रुतेः क्रियाजन्येष्टफलभागित्वं व्रीहेरेवावगम्यते, न चापूर्वस्य व्रीहिवृत्तित्वम्, साक्षात् सम्बन्धस्यौत्सर्गिकत्वादिति चेत्। नं। धात्वर्थतावच्छेदकसंयोगेन व्रीहिकर्म्मतोपपत्तेः। न च संयोगावच्छिन्न एव व्यापारविशेषः प्रोक्षणार्थस्तथा च कथं प्रोक्षणैकदेशस्य प्रोक्षणसाध्यतयान्वय इति वाच्यम्। संयोगस्योपलक्षणत्वेनाऽपदर्थत्वात्, अन्यथा ग्रामं गच्छतीत्यादौ का गतिः, का वा "सक्तून् प्रोक्षती"त्यादौ, तत्राधेयशक्त्यभावात्। किञ्च घटं साक्षात्करोतीत्यादौ क्रियाजन्यसंस्कारादीनां घटावृत्तित्वात् संस्कारस्य स्वरूपसम्बन्धेन घटवृत्तित्वम् वह्निमनुमिनोतीत्यादिवत्। प्रयोगसाधुरेव वा द्वितीयेति यदि तदा प्रकृतेऽपि तथास्तु। अथ प्रतिमादौ प्रति-

ष्ठाजन्यं न यजमानादृष्टं पूज्यत्वे प्रयोजकं, भोगादिना तन्नाशेऽपि पूज्यत्वात् तत्सत्त्वेऽपि चाण्डालादिस्पर्शेनाऽपूज्यत्वात् अन्यधर्म्मे सत्यन्यधर्म्मस्याऽनुपयोगाच्च । न च प्रतिष्ठाध्वंसस्तथा, तत एव उपजीव्यप्रतिष्ठाप्रयोजकत्वभङ्गापत्तेश्च । तस्मात्प्रतिष्ठाजन्या अस्पृश्यस्पर्शादिनाश्या प्रतिमादिनिष्ठा शक्तिरभ्युपेया इति चेत्, प्रतिष्ठाविधिना प्रतिमादौ देवतासन्निधिरहङ्कार—ममकाररूपः क्रियते स्वसादृश्यदर्शिनश्चित्रादौ इव ज्ञानस्य नाशेऽपि संस्कारसत्त्वात्, अस्पृश्यस्पर्शादिना च तन्नाशः । अचेतनदेवतापक्षे च यथार्थप्रतिष्ठितप्रत्यभिज्ञानस्याऽस्पृश्यस्पर्शादिविरहसहकृतस्य तथात्वम् "प्रतिष्ठितं पूजयेदि"तिविधिबलात्तत्प्रतिसन्धानस्यावश्यकत्वादिति प्राञ्चः ॥

नव्यास्तु प्रतिष्ठाविधिनैव तवाधेयशक्तिवदपूर्वान्तरं जन्यते तदृष्टवदात्मसंयोगाश्रयस्य पूज्यत्वम् अस्पृश्यस्पर्शेन तन्नाशे चापूज्यत्वमित्याहुः ।

वयन्तु ब्रूमः "प्रतिष्ठितं पूजयेदि"तिविधिवाक्येन प्रतिष्ठायाः कारणत्वं न बोध्यते किन्तु भूतार्थक्तानुशासनादतीतप्रतिष्ठे पूज्यत्वं बोध्यते, तथा च प्रतिष्ठाध्वंसः प्रतीष्ठाकालीनयावदस्पृश्यस्पर्शादिप्रतियोगिकानादिकालसंसर्गाभावसाहितः पूज्यत्वप्रयोजकः स च प्रागभावोऽत्यन्ताभावश्च क्वाचित् । कामिनीचरणाघातदोहदादिभिरशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिसिद्धिः, समयविशेषावच्छिन्नचरणदोहदादिसंयोगध्वंसस्यैव कारणत्वात् चरणाभिघाताद्याकृष्टभागान्तरजनितवृक्षादेव वा तदुपपत्तेः, कालान्तरे पुष्पाद्युत्कर्षादृक्षावयवोपचयावश्यम्भावेन वृक्षभेदावश्यकत्वात् । नापि ताम्र—कांस्यादौ अस्तु भस्मसंयोगादिजन्यशुद्धिरूपा आधेयशक्तिः, तत्संयोगध्वंसस्य संयोगसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिक-

यावदनादिसंसर्गाभावसहितस्य शुद्धिपदार्थत्वात् ।

भस्मादिसंयोगजनितः कांस्याद्युपभोगकर्तृनिष्ठः संस्कार एव शुद्धिरित्यन्ये ।

अभिमन्त्रितपयःपल्लवादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्यथाद्यपनायकः तत्तन्मन्त्रदेवतासन्निधिरेव वा । कलमबीजादीनामापरमाण्वन्तभङ्गे तत्र चाऽवान्तरजातेरभावे नियतकलमजातीयादिसिद्धिरपि परमाणुपाकजविशेषादेव, कार्य्यवृत्तिरूपादिसजातीयस्य पूर्वरूपविजातीयस्य परमाणौ पाकजरूपादेरुभयसिद्धत्वात् । यथा हि कलमबीजं यवादेर्जात्या व्यावर्त्तते तथा तत्परमाणवोऽपि पाकजैरेव । एवं माघकर्षणादिजनितात्परमाणुपाकपरम्पराविशेषादेव हैमन्तिकसस्योत्पत्तिः । एतेन लाक्षारसावसेकादयो व्याख्याताः । निमित्तविशेषजनितपाकजात्तत्फलविशेषः, यथा हारीतमांसं हारिद्रानलसाधितमुपभोगात्सद्यो व्यापादयति नान्यथा साधितमित्यादि । यत्र च तोय–तेजो–वायुषु न पाकजो विशेषः, तत्रोद्भवानुद्भव–द्रवत्व–काठिनत्वादयो विशेषास्तदुपनायकादृष्टविशेषादेव । तुलादौ चाऽधिवासनादिपूर्वकतुलारोहणसामग्री तुल्यस्य सत्यासत्यप्रतिज्ञत्वसहिता प्राचीनधर्म्माधर्म्मफले जय–भङ्गौ जनयति । यद्वा अहं निष्पापः पापवान्वेति तुलाधिरूढाभिशस्तज्ञानविशेषमाहिता सा तथा, तदाहुः “तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः” इति । अथ वा प्रतिज्ञाशुद्ध्यशुद्धी अपेक्ष्य तया धर्म्माधर्म्मौ जन्येते ताभ्याञ्च जय–पराजयौ, सत्यासत्यप्रतिज्ञाभिशस्ततुलारोहणस्येष्टानिष्टफलत्वेनार्थतो विधि–निषेधात् “अभिशस्तः सत्यप्रतिज्ञो विजयकामस्तुलामारोहेदसत्यप्रतिज्ञो न तुलामारोहेत्” इति श्रुतेरुन्नयनात् । यद्वा तया देवतासन्निधिः क्रियते ताश्च कर्मानुरूपं लिङ्गमभिव्यञ्जयन्ति ।

कस्तर्हि शक्तिपदार्थः, कारणत्वम्, तच्च स्व-स्वव्याप्येतरसकलसम्पत्तौ कार्य्याभावव्यापकाभावप्रतियोगित्वम्। अथ वा यत्र कार्य्याभावव्याप्यता इतराभावावच्छिन्ना तत्कारणम्। बीजेऽङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतरसमवधाने सति बीजादङ्कुरसम्भवात्, किन्तु इतराभावेनावच्छिद्यते इतराभावे बीजस्याङ्कुराभावनियमात्। शिलाशकले त्वङ्कुराभावव्याप्यता शिलात्वेनावच्छिद्यते।

यद्वा अन्यासमवधानावच्छिन्नकार्य्यानुत्पत्तिव्याप्यत्वं कारणत्वम्, रासभादेः स्वत एव कार्य्याभावव्याप्यता अन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वात्। अनन्यथासिद्धानियतपूर्ववर्त्तिजातीयत्वं वा तत्त्वम्। अन्यथासिद्धत्वञ्च त्रिधा। येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते, यथा घटं प्रति दण्डरूपस्य। अन्यं प्रति पूर्ववर्तित्वे ज्ञात एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते, यथा शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कार्य्यसम्भवे तत्सहभूतत्वम्, यथा गन्धवति गन्धानुत्पादात् गन्धं प्रति तत्प्रागभावस्य नियतपूर्ववर्त्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावानामन्यथासिद्धत्वम्। एतत्त्रितयव्यतिरेके नियतपूर्ववर्त्तित्वं कारणत्वम्। यागापूर्वयोस्तु यागपूर्ववर्त्तित्वेऽवगते न त्ववगम्यमाने, यत्र जन्यस्य पूर्वभावेऽवगते जनकस्य पूर्वभावोऽवगम्यते तत्र जन्येन जनकस्यान्यथासिद्धिः, यत्र च जनकस्य तथात्वेऽवगते जन्यस्य पूर्वभावावगमः तत्र तद्द्वारा तस्य जनकत्वमेव, दण्डसंयोग-भ्रमणयोस्तु युगपदेव पूर्वभावित्वग्रहः। स्व-स्वानन्तरोत्पत्तिकसकलसमवधाने सत्यपि यस्याभावात्कार्य्यं न जायते सति तु जायते तज्जातीयं प्रति तदनन्यथासिद्धम् अनन्यथासिद्धानियतपूर्ववर्त्तित्वं कारणत्वमित्यन्ये। तन्न। ई-

श्वर-तद्बुद्ध्यादीनामसंग्रहात्, तद्व्यतिरेकस्य तत्समवधानव्यतिरेकस्य वा अभावात् । कार्यस्यान्यथानुपपद्यमानत्वमवश्यक्लृप्तत्वं वा अनन्यथासिद्धत्वम् । नन्वेवमतिरिक्तशक्तौ साधक-बाधकप्रमाणाभावान्नित्यं संशयः, न च साधकाभावस्य बाधकत्वम्, बाधकाभावस्यापि साधकत्वादिति चेत् । न । साधकाभावेन वह्न्यावन्यत्र सिद्धातीन्द्रियधर्म्माभावसाधने लाघवं बाधकाभावेनातीन्द्रियधर्म्मसाधने च गौरवमिति साधकाभावात्तदभाव एव सिध्यतीति ॥

परमप्रयोजनमनुमानस्याऽपवर्गः "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यः" इति श्रुतेः । स च समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसः । ननु नासौ पुरुषार्थः, अतीतदुःखध्वंसस्य सिद्धत्वात् अनागतदुःखस्य ध्वंसयितुमशक्यत्वात् वर्त्तमानस्य पुरुषप्रयत्नं विनैव विरोधिगुणनाश्यत्वात्, अतीतदुःखवन हेतूच्छेदे पुरुषव्यापारः प्रायश्चित्तवदिति चेत् । न । तत्किं हेतूच्छेदस्य सुख-दुःखाभावेतरत्वेन स्वतोऽपुरुषार्थत्वादनागतानुत्पादमुद्दिश्य क्रियमाणत्वाच्च यथा तत्र दुःखानुत्पादः पुरुषार्थस्तथेहापीति विवक्षितम्, अथानुत्पादस्य प्रागभावत्वेनाऽसाध्यत्वात् फलान्तरस्याभावाच्चानन्यगतिकतया कण्टकनाशवत् दुःखसाधननाश एव स्वतः पुरुषार्थस्तथेहापीति वा, उभयथापि दुःखध्वंसस्याऽपुरुषार्थत्वमेव, न च तयोरपि पुरुषार्थत्वमिति वक्ष्यते । मैवम् । दुःखान्तरध्वंसस्याऽयत्नसाध्यत्वेऽपि तादृशदुःखध्वंसस्य मिथ्याज्ञानोच्छेदद्वारा पुरुषप्रयत्नाधीनतत्त्वज्ञानसाध्यत्वात्, तथा हि तत्त्वज्ञानात्सवासनमिथ्याज्ञानाभावे दोषानुत्पत्तौ प्रवृत्त्यभावेऽदृष्टानुत्पत्तौ जन्माभावे तादृशदुःखध्वंसो भवति । अथ चरमदुःख उत्पन्ने तद्ध्वंसस्तज्ज्ञानादेव भविष्य-

ति तदनुत्पादे च तत्त्वज्ञानादपि न स्यादिति चेत् । न । प्रति-योगिवत्तत्त्वज्ञानस्यापि तद्धेतुत्वात्तुल्यवदुभयोरपि कारणत्वात्, तेन विना तदनुत्पत्तेः । अत एव शुकस्य तत्त्वज्ञानमुत्पन्नमिति तस्य तद्ध्वंस उत्पन्नो नास्मदादीनाम् । तत्र दुःखं नोत्पन्नमस्ति तेन स ध्वंसो नास्मदादीनामिति चेत्, अनादौ संसारे तत्कुतो नोत्पन्नम्, स्वकारणाभावादिति चेत् । न । अन्वय–व्यतिरेका-नुविधायिनस्तत्त्वज्ञानादन्यस्याऽन्विष्यमाणस्याभावात् । मुक्तौ स ध्वंसोऽस्त्येव तस्मिन् सति मुक्तिरस्त्येवेति स मुक्त्युत्पादकोत्पाद्य इति सर्वाभ्युपगतम्, मुक्तिः सा अन्या वा । नन्वेवं ध्वंसार्थं दुःख-मुपादेयं तदनुत्पाद्य ध्वंसानुत्पादादिति चेत्, सत्यम्, पुरुषार्थहेतु-त्वेन लोके दुःख–तत्साधनयोरपि उपादानदर्शनात् अनागतकु-म्भनाशार्थं मुद्गरादौ प्रवृत्तिदर्शनादनागतदुःखध्वंसार्थमपि प्रवृ-त्तिः । चरमदुःखध्वंसो न दुःखध्वंसत्वेनोद्देश्यः अयत्नसिद्धदुःखा-न्तरध्वंसवदपुरुषार्थत्वादिति चेत् । न । समानाधिकरणदुःखप्रा-गभावासहवृत्तिदुःखध्वंसत्वेन तस्योद्देश्यत्वात्, दुःखासम्भिन्नसुख-वत् तस्य च पुरुषप्रयत्नसाध्यत्वमेवेत्युक्तम् । एतेन दुःखध्वंसत्व-मेव मोक्षत्वम्, तत्तदात्मयावद्दुःखध्वंससम्बलनदशायान्तु तथा व्यपदेशः प्रतिपुरुषं दुःखध्वंसस्तोमस्य व्यक्तिस्थानीयत्वात् तेजो-भावे सम्बलिते अन्धतमसपदप्रयोगवत्, यथा सम्बलिते एव द्वा-विति बुद्धि–व्यपदेशौ प्रवृत्तिरपि सम्बलनार्थमित्यपास्तम् । मि-लितानामसाध्यत्वात्, मेलकस्याऽनतिरिक्तत्वेऽतिप्रसङ्गात्, अतिरि-क्तत्वे जन्यस्य ध्वंसावृत्तेः अजन्यस्य पुरुषार्थत्वक्षतेः, अन्धतमसा-दौ तथा सम्बल एव प्रयोगात् । एतेन संस्काराजनकभोगविषय-दुःखध्वंसः संस्काराजनकानुभवभवध्वंसो वा मुक्तिः, न चातिव्या-प्तिः, जनकत्वस्याऽजनयत्यपि भावादिति निरस्तम् । अपुरुषार्थत्वात् ।

अन्ये तु दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मोक्षः लोकेऽहिकण्टकादिनाशस्य वैदिके प्रायश्चित्तादौ पापनाशस्यानन्यगतिकतया दुःखसाधनध्वंसत्वेन पुरुषार्थत्वात् । अथाहिकण्टकादि पापं वा नाश्यतां तेन तज्जन्यं दुःखं न भवतीति दुःखानुत्पादमुद्दिश्य प्रवृत्तेर्दुःखानुत्पाद एव प्रयोजनं न तु दुःखसाधनाभावः सुख–दुःखाभावेतरत्वादिति चेत् । न । दुःखानुत्पादस्य प्रागभावत्वेनाऽनादितया असाध्यत्वात् । न च तत्पालनं साध्यम् । पालनं हि न तत्स्वरूपं, तस्यासाध्यत्वात् । नोत्तरसमयसम्बन्धः, अभावे सम्बन्धिद्वयातिरिक्तस्य तस्याप्रामाणिकत्वात् अनभ्युपगमाच्च । नापि सम्बन्धिद्वयस्वरूपं साध्यम्, प्रागभावस्यापि असाध्यत्वात् समय–तदुपाध्योश्च प्रयत्नं विनैव सिद्धेः । अथ दुःखे द्वेषाद्यथा तदभावे इच्छा तथा दुःखसाधने द्वेषात् तदभावेऽपि इच्छा तथा तत्साधने प्रवृत्तिरिति चेत् । न । यदिच्छया यत्साधने यस्य प्रवृत्तिस्तस्यैव तत्प्रयोजनत्वमिति दुःखसाधनाभावस्यैव प्रयोजनत्वात् । अथ चिकीर्षायोनिप्रयत्ने प्रयोजनज्ञानापेक्षा तेन विनोपाये चिकीर्षाविरहात्, न तु द्वेषयोनियत्ने, अनिष्टसाधनताज्ञानादहिकण्टकादौ द्वेष्ये द्वेषात् तन्नाशानुकूलो यत्न उत्पद्यते, अयमेव हि द्वेषस्वभावो यत्प्रतिबन्धकं विना स्वविषयनाशानुकूलं यत्नमुत्पादयति, अन्यथा प्रयत्नद्वैविध्यानुत्पत्तेः, अत एव फलं विनैवोत्कटक्रोधान्धानां आत्मघाते प्रवृत्तिरिति चेत् । न । प्रयोजनमनुद्दिश्य द्वेषमात्रात् दुःखैकफलके प्रेक्षावतां प्रयत्नानुत्पादात्, क्रोधान्धानामपि तात्कालिकः फलाभिमानोऽस्त्येव उत्कटरागान्धानामिव परदारादावपि प्रवृत्ताविति । तन्न । दुःखं मे मा भूदित्युद्दिश्य प्रायश्चित्तादौ प्रवृत्तेर्दुःखानुत्पादस्यैव प्रयोजनत्वात् । न च प्रागभावस्याऽसाध्यत्वम्, दुःखसाधनविघटनद्वा-

रा तस्यापि कृतिसाध्यत्वात् । दुःखसाधनसमवधानदशायां कृतौ सत्यां दुःखसाधननाशे सत्यग्रिमसमये प्रागभावस्वरूपमस्ति तेन विना नास्तीत्यन्वय–व्यतिरेकयोस्तत्र सत्त्वात् । घटेऽपि कृतौ सत्यामग्रिमक्षणे तत्सत्त्वं तया विना नेत्येव कृतिसाध्यत्वम्, न तु प्रागसतोऽग्रिमक्षणे सत्त्वमुत्पत्तिः गौरवात् । कृतिं विना न यत्स्वरूपं तत्कृतिसाध्यं प्रागभावस्वरूपन्तु न तथेति चेत् । न । कृतिध्वंसेऽपि घटसत्त्वेनाग्रिमक्षण इत्यावश्यकत्वात् । अत एव योगवत् क्षेमस्याप्यनागतानिष्टानुत्पादजनकस्य परीक्षकप्रवृत्तिविषयत्वमिति वक्ष्यते निषेधापूर्वप्रस्तावे । ननु प्रायश्चित्तनाश्यपापजन्यदुःखस्य प्रागभावो यद्यस्ति तदा दुःखमावश्यकं तस्य प्रतियोगिजनकत्वनियमात्, नास्ति चेत् तर्हि तदभावादेव दुःखानुत्पाद इत्युभयथापि प्रायश्चित्तमफलम्, तस्माद् दुःखसाधनध्वंसमुखेन प्रागभावस्य साध्यतेति तत्रैव कृतिसाध्यत्वपर्य्यवसानाद्दुःखसाधनध्वंस एव पुरुषार्थो न तु दुःखानुत्पादार्थितयेति तत्र प्रागभावसत्त्वासत्त्वविचारो वायसदशनविचारवत् । अथ तदापि प्रागभावस्यासत्त्वे तदभावात् पापं न दुःखसाधनमिति तन्नाशार्थं प्रवर्त्तेत तस्य सत्त्वे च पापमादायैव तस्य दुःखोत्पादकत्वनियमात् प्रायश्चित्ते सत्यपि गलेपादिकया पापावस्थानमिति न ततः पापनाश इति चेत् । न । प्रागभावस्याऽसत्त्वेऽपि दुःखसाधनजातीयनाशस्य पुरुषार्थत्वात् सत्त्वेऽपि पापान्तरमादायापि तस्य दुःखजनकत्वसम्भवात्, प्रायश्चित्तात्पापनाशः स्यादेवेति प्रागभावसत्त्वासत्त्वसन्देहेऽपि प्रायश्चित्तादौ प्रवृत्तिरप्रत्यूहैवेति । उच्यते । तत्र दुःखप्रागभावोऽस्त्येव तस्यैव दुःखानुत्पादरूपत्वेन पुरुषार्थत्वात् । स च पापनाशद्वारा प्रायश्चित्तसाध्य इति प्रागभावसत्त्वेऽपि न निष्फलं प्रायश्चित्तम् । तेन प्रागभावेन दुःख-

मवश्यं जननीयमिति चेत्, सत्यम्, किन्तु पापान्तरमासाद्य । न चैवं प्रायश्चित्तमफलम्, दुःखानुत्पादेन तस्य सफलत्वात् । न च दुःखानुत्पादस्यापि दुःखानुत्पादान्तरमेव फलं तच्च तत्र नास्तीत्यफलत्वम्, स्वरूपसत एव तस्य पुरुषार्थत्वात् अनवस्थानाच्च । अतोऽनेन पापेन दुःखं मे मा भूदिति विद्यमानपापनाशार्थं प्रायश्चित्ते प्रवृत्तिः । एतेन चीर्णप्रायश्चित्ते दुःखप्रागभावो नास्त्येव, अन्यथा तस्य प्रतियोगिनाश्यत्वेनानिर्मोक्षप्रसङ्गात्, न च प्रायश्चित्तवैफल्यं, न वा भगवतो दुःखमपकर्मोपदेशकत्वेनाऽनाप्तत्वम्, तस्य पापध्वंसेनैव सफलत्वात् प्रागभावानिश्चयेऽपि नरकसाधनपापानिश्चयात् तन्नाशार्थं प्रवृत्तिरित्यपास्तम् । दुःखसाधनध्वंसस्य स्वतोऽपुरुषार्थत्वात् । पापान्तरेण तत्प्रतियोगिजनने तन्नाशात् तस्माद् दुःखं मे मा भूदित्युद्दिश्य तत्साधनध्वंसार्थं प्रवृत्तिरिति दुःखानुत्पाद एव पुरुषार्थो न तु दुःखसाधनध्वंस इति स्थितम् । अपि च न तावद् दुःखमयसंसारबीजमिथ्याज्ञानस्य ध्वंसो मुक्तिः, तत्त्वज्ञानात् तन्नाशेऽपि शरीरधर्मादिसत्त्वदशायां मुक्तिप्रसङ्गात् । नापि शरीरेन्द्रियबुद्ध्यादि-तन्निदानधर्माधर्मध्वंसः, अचीर्णप्रायश्चित्तकर्मणां भोगैकनाश्यत्वेन तत्त्वज्ञानानाश्यत्वात्, भोगद्वारा तन्नाशस्य चाऽपुरुषार्थत्वादिति ।

अपरे तु दुःखात्यन्ताभावो मुक्तिः । यद्यपि परदुःखात्यन्ताभावः स्वतः सिद्ध एव स्वदुःखात्यन्ताभावः स्वात्मन्यसम्भवी घटादावतिप्रसक्तोऽसाध्यश्च, तथापि दुःखसाधनध्वंस एव स्ववृत्तिदुःखात्यन्ताभावसम्बन्धः स च साध्य एव । न चैवमावश्यकत्वेन स एव मुक्तिः, तस्य स्वतोऽपुरुषार्थत्वेन दुःखाभावमुद्दिश्य तत्र प्रवृत्तेः "दुःखेनात्यन्तं विमुक्तश्चरती" त्यत्रात्यन्ताभावत्वेन मुक्तिश्रवणाच्च । यद्यपि दुःखसाधनध्वंसो न पुरुषा-

र्थोऽत्यन्ताभावश्च न साध्यस्तथापि विशिष्टस्य पुरुषार्थत्वं विशेषणसाध्यत्वेन विशिष्टसाध्यत्वञ्च । अहिकण्टकादिनाशस्यापि तत्तद्व्यक्तिसाध्यदुःखात्यन्ताभावमुद्दिश्य तत्सम्बन्धत्वेनैव साध्यतेति । तन्न । अधर्मादिदुःखसाधनध्वंसस्य न मुक्तिनिर्वाहकत्वमित्युक्तत्वात् । किञ्च नाऽनागतस्ववृत्तिदुःखस्यात्यन्ताभावसम्बन्धः साध्यः, मुक्तस्याऽनागतस्ववृत्तिदुःखस्यानभ्युपगमात् अभ्युपगमे वा अमुक्तत्वापातात् अत्यन्ताभावसम्बन्धविरोधाच्च । नाप्युत्पन्नस्य स्ववृत्तिदुःखस्य, तद्वृत्तेस्तत्रात्यन्ताभावविरोधात् तदभावस्य स्वतःसिद्धत्वात् अतीतदुःखाभावस्याऽनुद्देश्यत्वाच्च । नापि परकीयदुःखस्यात्यन्ताभावसम्बन्धः, तस्य स्वतःसिद्धत्वात् । अपि च दुःखसाधनध्वंसस्य नात्यन्ताभावसम्बन्धत्वे मानमस्ति । दुःखसाधनध्वंसादावस्य दुःखस्यात्यन्ताभाव इति बुद्धि–व्यपदेशौ स्त इति चेत् । न । तस्य समानाधिकरणदुःखासमानकालदुःखाभावविषयत्वेनाप्युपपत्तौ अतिरिक्तसम्बन्धाविषयत्वात् । एतेन सर्वदुःखप्रागभावसंसर्गाभावो मुक्तिः, घटादेश्च न मुक्तत्वं, दुःखसाधनध्वंसविशेषितैतद्योगिनो मुक्तपदार्थत्वात् तथैव व्यवहारात् योग–रूढिभ्यां पङ्कजादिपदवाच्यत्ववदिति निरस्तम् । प्रागभावसंसर्गाभावस्य स्वतोऽनुद्देश्यत्वात् प्रत्युतात्यन्ताभावस्याऽसाध्यत्वेन ध्वंसरूपत्वेन तस्य दुःखरूपतया हेयत्वात् ।

प्राभाकरास्तु आत्यन्तिकदुःखप्रागभावो मुक्तिः । न च तस्यानादित्वेन सिद्धत्वादपुरुषार्थत्वम्, कदाचित् कृत्यनपेक्षत्वेऽपि प्रतियोगिजनकाधर्म्मनाशमुखेन तस्य कृतिसाध्यत्वात्, कृत्यधीनतत्त्वज्ञानादधर्म्मनाशे सत्याग्रिमसमये दुःखप्रागभावस्वरूपमस्ति, तया विना अधर्म्मेण दुःखजननात्र तत्प्रागभावस्वरूपमस्तीति घटवत् कृतिसाध्यत्वात् । व्यवस्थापितञ्च त्वया प्रागभावस्य कृति-

साध्यत्वमहिकण्टकादिनाशप्रायश्चित्तक्षेमार्थिप्रवृत्तिस्थले । न चैवं युगपदधर्म्मध्वंस एव मुक्तिः प्रागभावस्याऽनादितया विवक्षितविवेकेन तत्रैव कृतिसाध्यत्वपर्य्यवसानादिति वाच्यम् । अधर्म्मध्वंसस्य स्वतोऽपुरुषार्थत्वात् । दुःखानुत्पादहेतुत्वेनैव तस्य प्रयोजनता वाच्या सा च कथमसाध्यत्वे प्रागभावस्य स्यादिति । अत एव "दुःख–जन्मे"त्यादिसूत्रमपि संगच्छते । अन्यथा मिथ्याज्ञानाद्यनुत्पादानां दुःखानुत्पादाहेतुत्वेनाऽसङ्गतं स्यादित्यास्थिषतेति । तदतिस्थवीयः । तथा ह्यस्तु प्रागभावस्य साध्यत्वं तथापि तस्य प्रतियोगिजनकत्वनियमान्मुक्तस्यापि दुःखोत्पादप्रसङ्गः । अधर्म्म–शरीरादिसहकारिविरहान्न दुःखोत्पाद इति चेत्, तर्ह्युत्तरावधिविधुरत्वेनाऽनादेरत्यन्ताभावत्वापत्तौ प्रागभावत्वव्याकोपः । प्रतियोगिजनकनाश्यजातीयत्वेन तत्र प्रागभावव्यपदेशो वस्तुतो नित्य एव स इति चेत् । न । नित्यत्वेनात्यन्ताभावरूपतया प्रागभावान्यत्वेन नाश्यजातीयत्वाभावात् प्रतियोगिजनकनाशमुखेन तस्याऽसाध्यत्वाच्च । अपि च मुक्तेः प्रागभावस्य समानाधिकरणं भावि दुःखं न प्रतियोगि तस्याऽभावात् भावे वा अमुक्तत्वापातात् । नापि समानाधिकरणमतीतं वर्त्तमानञ्च, तत्प्रागभावस्य विनष्टत्वात् । नापि व्यधिकरणम्, अन्यवृत्तिदुःखस्यान्यत्रात्यन्ताभावेन प्रागभावाभावात् तस्य प्रतियोगिसमानदेशत्वात् । न च दुःखमात्रं प्रतियोगि, स्वपरावृत्तेर्दुःखमात्रस्याऽप्रामाणिकत्वात् तस्यात्यन्तासतो नित्यानिवृत्तत्वेन तन्निवृत्तये प्रेक्षावत्प्रवृत्त्यनुपपत्तेः । अहिकण्टकादिनाश—प्रायश्चित्तादिसाध्यदुःखप्रागभावस्य कलञ्जभक्षणप्रागभावस्य च समानाधिकरणमेव भावि दुःखं भक्षणञ्च प्रतियोगि ।

ननु दुःखाभावो न पुरुषार्थः सुखस्यापि हानेः तुल्यायव्ययत्वात् । न च बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वम्, आव-

श्यकत्वेन दुःखस्यैव हेयत्वात् सुखस्य निरुपधीच्छाविषयत्वात् । अन्यथा दुःखाननुविद्धतया तथात्वे पुरुषार्थत्वविरोधादिति चेत् । न । सुखमनुद्दिश्यापि दुःखभीरूणां दुःखहानार्थं प्रवृत्तिदर्शनात् दुःखाभावस्य स्वत एव पुरुषार्थत्वात् । न हि दुःखाभावदशायां सुखमस्तीत्युद्दिश्य दुःखहानार्थं प्रवर्त्तते । वैपरीत्यस्यापि सम्भवे सुखस्याप्यपुरुषार्थत्वापत्तेः अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिप्रवृत्तिप्रतिबन्धकम् । तस्मादविवेकिनः सुखमात्रलिप्सवो बहुतरदुःखानुविद्धमपि सुखमुद्दिश्य शिरो मदीयं यदि याति यास्यतीति कृत्वा परदारादिषु प्रवर्त्तमाना वरं वृन्दावने रम्ये इत्यादि वदन्तो नात्राधिकारिणः, ये च विवेकिनोऽस्मिन् संसारकान्तारे कियन्ति दुःखदुर्दिनानि कियती सुखखद्योतिकेति कुपितफणिफणामण्डलच्छायाप्रतिममिदमिति मन्यमानाः सुखमपि हातुमिच्छन्ति तेऽत्राधिकारिणः । न च भोगार्थिनामप्रवृत्तौ पुरुषार्थता हीयते, कस्यचिदप्रवृत्तावपि चिकित्सादेः पुरुषार्थत्वात् । अथ, दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते । न हि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥ पुरुषार्थत्वेन सुखवत् ज्ञायमानत्वनियमात्, न च मुक्तिज्ञानं सम्भवतीति चेत् । न हि दुःखाभावं जानीयामित्युद्दिश्य प्रवृत्तिः, किन्तु दुःखं मे मा भूदित्युद्दिश्येत्यतो दुःखस्याभाव एव पुरुषार्थः । तस्य ज्ञानञ्च स्वकारणाधीनं, न तु पुरुषार्थतोपयोगि, सुखी स्यामित्युद्दिश्य प्रवर्त्तते, न तु सुखं जानीयामिति, सुखमेव तथा न तु तदवगमः तस्यावश्यकत्वेनान्यथासिद्धत्वात् गौरवाच्च । किञ्च बहुतरदुःखजर्जरकलेवरा दुःखाभावमुद्दिश्य मरणेऽपि प्रवर्त्तमाना दृश्यन्ते, न च मरणे तस्य ज्ञानमस्ति । न ते विवेकिन इति चेत् । न । पुरुषार्थत्वे विवेकानुपयोगात् । किञ्च चरमदुःखानुभवेऽनागत-

दुःखध्वंसोऽपि विषयः, तथा चाग्निमक्षणे तद्ध्वंसस्तद्विषयकश्च विनश्यदवस्थं ज्ञानमस्तीति वर्त्तमानाप्यचिरमनुभूयते । ज्ञानसमये मुक्तिलक्षणस्य सत्त्वात् न ज्ञानं मुक्तिविरोधि । प्रमाणन्तु, दुःखत्वं देवदत्तदुःखत्वं वा स्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्ति कार्य्यमात्रवृत्तिधर्म्मत्वात् सन्ततित्वाद्वा एतत्प्रदीपत्ववत् । सन्ततित्वञ्च नानाकालीनकार्य्यमात्रवृत्तिधर्म्मत्वम् । एवं सुखत्वादावपि साध्यं तेन सकलोच्छेदे मोक्षः । न चाप्रयोजकत्वम्, सन्तत्युच्छेदे मूलोच्छेदस्य प्रयोजकत्वात् । प्रकृते च मिथ्याज्ञानस्य संसारमूलस्य श्रवणादिक्रमेणोत्पन्नतत्त्वज्ञानात् निवृत्तिः सम्भवत्येव । "आत्मा ज्ञातव्यो न स पुनरावर्त्तते" इति श्रुतिश्च प्रमाणम् । रात्रिसत्रन्यायेनार्थवादोपनीतापुनरावृत्तेः अधिकारिविशेषणत्वात्, 'सः' आत्मज्ञः, 'न पुनरावर्त्तते' न पुनः शरीरी भवतीत्यर्थः । "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्यः" इत्युपक्रम्य "दुःखेनात्यन्तं विमुक्तश्चरति" इति श्रुतिश्च मानम् ।

आचार्य्यास्तु, "अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः" इति श्रुतिस्तत्र प्रमाणम् । वावसन्तमिति यङ्लुकि । तेन संसारिताद्दशायां क्षणमात्रमशरीरत्वेन नान्यथासिद्धिः । ननु द्वन्द्वस्वरसेन मिलितसुख–दुःखोभयनिषेधः प्रतीयते स तु नित्यवत्मास एव एकैकनिषेधे च वाक्यभेदापत्तिः, न च मुक्तौ प्रमाणमिति चेत् । न । द्वित्वेनैकेन रूपेणोपस्थितयोः प्रत्येकं निषेधान्वयेऽपि वाक्यभेदाभावात्, धव–खदिरौ छिन्धीत्यत्र प्रत्येकं छिदान्वय इव, न हि तत्र मिलितच्छिदा । अपि च न प्रियाप्रियरूपं किञ्चिदस्तीति मिलितनिषेधोऽप्येकैकान्वये प्रत्येकाभावे वा भवेत् तत्रैकान्वयस्याशरीरे अयोग्यत्वात् प्रत्येकाभाव एव पर्य्यवस्यति, अत

एव सर्वमुक्तिरपि, सर्वदुःखसन्ततिपक्षीकरणे तत्सिद्धेः अन्यथा मुक्तिरपि न स्यात् तत्रैव व्यभिचारात्। यदि चोषरात्मान एव केचित् तदा तच्छङ्कया मोक्षार्थं न कश्चित् प्रवर्त्तेत। शम-दम-भोगानभिष्वङ्गादिमुक्तिचिह्नेन श्रुतिसिद्धेन सन्देहनिवृत्तिरिति चेत्। न। संसारित्वेन मुक्तियोग्यत्वात् न तु तद्विशेषणशमादिमत्त्वेन, सामान्ये बाधके सत्येव योग्यताया विशेषनिष्ठत्वात्।

किञ्च शमादयः श्रुतौ सहकारितया बोधिताः न तु योग्यतया, तत्त्वेऽपि संसारित्वेन तेऽपि साधनीयाः शमादिकमपि हि कार्य्यं तत्रापि संसारित्वेनैव योग्यता सामान्ये बाधकाभावात्। न च नित्यसुखाभिव्यक्तिर्मुक्तिः, सा हि न नित्या, मुक्त-संसारिणोरविशेषप्रसङ्गात्। नोत्पाद्या, तद्धेतुशरीराद्यभावात्, ज्ञानमात्रे सुखमात्रे वा तद्धेतुत्वावधारणात्। न च संसारिदशायां तद्धेतुः, सामान्ये बाधकाभावात्। अत एव स्वर्गादौ शरीरकल्पना। किञ्च तज्जनकं न तावदात्म-मनोयोगः, तस्याऽदृष्टादिनिरपेक्षस्याऽजनकत्वात्। विषयमात्रापेक्षणे तु संसारिदशायामपि तदभिव्यक्तिप्रसङ्गः। नापि योगजो धर्म्मः सहकारी, तस्योत्पन्नभावत्वेन विनाशित्वेऽपवर्गनिवृत्त्यापत्तेः। न च तज्जन्याभिव्यक्तिरनन्ता, तस्या अप्यत एव नाशात्। अथ तत्त्वज्ञानात्सवासनमिथ्याज्ञाननाशे दोषाभावेन प्रवृत्त्याद्यभावाद्धर्माधर्मयोरनुत्पादे प्राचीनधर्माधर्मक्षयात् दुःखसाधनशरीरादिनाश एव तद्धेतुरत एव तस्यानन्त्येनाभिव्यक्तिप्रवाहोऽप्यनन्त इति चेत्। न। शरीरं विना तदनुत्पत्तेः तस्य तद्धेतुत्वे मानाभावाच्च। न च मोक्षार्थिप्रवृत्तिरेव तत्र मानं, दुःखहानार्थितयापि तदुत्पत्तेः। न च नित्ये सुखे मानमस्ति। "नित्यं विज्ञानमानन्दं ब्रह्म" "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठित" मित्यादिश्रुतिर्मानमिति चेत्। न। उपजन-

नापायवतोर्ज्ञान–सुखयोरहं जानाम्यहं सुखीति भिन्नत्वेनानुभूयमानयोर्ब्रह्माभेदबोधने प्रत्यक्षबाधात् । अथ सुखस्य ब्रह्माभेदबोधनादेवायोग्यतया अनित्यं सुखं विहाय वाक्यार्थत्वेन नित्यसुखसिद्धिः स्वर्गवत् न तु नित्ये सुखे सिद्धे तदभेदबोधनं येनान्योन्याश्रयः, यद्वा नित्यं सुखं बोधयित्वा तदभिन्नं ब्रह्म बोध्यते, न च वाक्यभेदः, वाक्यैकवाक्यत्वादिति चेत् । न । आत्मनोऽनुभूयमानत्वेन तदभिन्नस्य नित्यसुखस्याप्यनुभवप्रसङ्गात् सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात् तदननुभवे वा आत्मनोऽपि अनुभवो न स्यात् । अथात्माभिन्नं नित्यसुखमनुभूयत एव सुखत्वं तत्र नानुभूयत–इति चेत्, न, सुखानुभवसामग्र्या एव सुखत्वानुभावकत्वात्, तस्मादानन्दं ब्रह्मेति मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दवत्त्वं बोध्यं तेनाऽभेदः, अन्यथा नपुंसकलिङ्गत्वानुपपत्तेः ।

एतेन ब्रह्माद्वैततत्त्वसाक्षात्कारादविद्यानिवृत्तौ विज्ञानसुखात्मकः केवल आत्मा अपवर्गे वर्तत इति वेदान्तमतमपास्तम् । स्वप्रकाशसुखात्मकब्रह्मणो नित्यत्वेन मुक्त–संसारिणोरविशेषप्रसङ्गात्, पुरुषप्रयत्नं विना तस्य सत्त्वादपुरुषार्थत्वाच्च । अविद्यानिवृत्तिः प्रयत्नसाध्येति चेत्, अविद्या यदि मिथ्याज्ञानम्, अर्थान्तरं वा, उभयथापि सुख–दुःखाभाव–तत्साधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात् ।

त्रिदण्डिनस्तु, आनन्दमयपरमात्मनि जीवात्मलयो मोक्षः, लयश्च लिङ्गशरीरापगमः, लिङ्गशरीरञ्च एकादशेन्द्रियाणि पञ्च महाभूतानि सूक्ष्ममात्रया सम्भूयावस्थितानि जीवात्मनि सुख–दुःखावच्छेदकानीत्याहुः । तन्न । शरीरध्वंसस्य स्वतो दुःखसाधनाभावतया अपुरुषार्थत्वात् । न चोपाधिशरीरनाशे औपाधिकजीव-

नाशो लयः, स्वनाशस्यापुरुषार्थत्वात्, ब्रह्मणो नित्यत्वेन तद्भिन्नस्य नाशानुपपत्तेः भेदाभेदस्य च विरोधेनाऽभावात्। नाप्यनुपप्लवा चित्तसन्ततिरपवर्गः, आवश्यकत्वेनानुपप्लवस्य दुःखाभावस्य पुरुषार्थत्वेन चित्तसन्ततेरपुरुषार्थत्वात् शरीरादि कारणं विना चित्तसन्ततेरनुत्पादाच्च। न हि चित्तमात्रं तत्सामग्री, शरीरादेर्वैयर्थ्यापत्तेः। नापि दुःखहेतुत्वेनात्मनो हानमेव मुक्तिः, सुख-दुःखाभावेतरत्वेनापुरुषार्थत्वात् ज्ञानरूपात्महानस्याऽयत्नसिद्धेः अतिरिक्तहानस्याशक्यत्वात्।

यत्तु योगर्द्धिसाध्यनिरतिशयानन्दमयीं जीवन्मुक्तिमुद्दिश्य प्रवृत्तेः कारणवशादात्यन्तिकदुःखाभावरूपां मुक्तिमासादयतीति मतम्। तन्न। परममुक्तेरपुरुषार्थत्वापत्तेः विरक्तस्य मोक्षेऽधिकारात् सुखोद्देशेनाप्रवृत्तेश्च। मोक्षे च सर्वाश्रमाणामधिकारः आश्रमचतुष्टयमुपक्रम्य "स ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुतेः, सङ्कोचे कारणाभावात्। आकाङ्क्षाया अविशेषेणानन्तर्यस्याऽप्रयोजकत्वात्। कथं तर्हि "मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्तितः" इति प्रव्रज्यां मोक्षाश्रममाहुः, गृहस्थस्य च पुत्र-दारादिसङ्गो दुर्वार इत्यसाधारण्येन तथोपदेशात् तत्त्वज्ञाननिष्ठो गृहस्थोऽपि मुच्यत इत्यागमाच्च। एवं स्थिते मोक्षमुपक्रम्य "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यः" इति श्रुतिः, श्रुतिभ्यः शरीरादिभिन्नमात्मानमवधार्य्य शास्त्रेण पदार्थान् विविच्य तद्बोधितोपपत्तिभिस्तस्य स्थिरीकरणरूपं मननं विदधाति। न च शब्दोपपत्तिजन्यतत्त्वज्ञानात् साक्षात्कारिसवासनमिथ्याज्ञाननिवृत्तिः, दिङ्मोहादौ तथाऽनुपलब्धेः, अतः श्रुति-स्मृत्युपदिष्टयोगविधिना चिरनिरन्तरादरसेवितानिदिध्यासनजन्ययोगजधर्मादात्मतत्त्वसाक्षात्कारं संसारबीजसवासनमिथ्याज्ञाननिहनन-

समर्थमासाद्य दोषाभावात्प्रवृत्त्यादेरभावे अनागतधर्मानुत्पादेऽनादिभवसञ्चितकर्मणां भोगेन क्षयादपवृज्यते । उपदेशमात्राच्छरीरभिन्नात्मावगमेऽप्यन्यपरत्वशङ्कया सङ्कसुकस्य नाऽश्रद्धामलक्षालनमिति मननमावश्यकम् । तथा च "मन्तव्यश्चोपपत्तिभिरि"ति श्रुतिरेवोपपत्तिबोधकस्य शास्त्रस्यापवर्गहेतुत्वं बोधयति, मननस्य तदेकसाध्यत्वात् । एवञ्च शम–दम–ब्रह्मचर्याद्युपबृंहितयावन्नित्य–नैमित्तिक–सन्ध्योपासनादिकर्म्मसहितात् तत्त्वज्ञानान्मुक्तिः । स्यादेतत् ज्ञान–कर्म्मणोर्न समप्राधान्येन समुच्चयः कर्मणां स्ववाक्यात् फलान्तरार्थत्वेन श्रुतत्वान्मोक्षार्थकल्पनाविरोधात् तत्त्वज्ञानस्य कर्म्मनैरपेक्षेण मुक्तिहेतुत्वप्रतीतेश्च । नाङ्गाङ्गिभावेन, तथा हि न कर्म्म सन्निपत्योपकारकम्, तत्त्वज्ञानशरीरानिर्वाहकत्वात् । नापि प्रयाजादिवदारादुपकारकम्, स्ववाक्यत एव कर्मणां प्रयोजनलाभेन फलवत्सन्निधावफलत्वाभावात् । उपपत्तिविरुद्धश्च ज्ञानकर्मसमुच्चयः काम्य–निषिद्धयोरभावात् । नाप्यसङ्कल्पितफलवत्काम्यकर्मसमुच्चयः, चतुर्थाश्रमविधिविरोधात् । अत एव न यावन्नित्य–नैमित्तिकसमुच्चयोऽपि । नापि यत्याश्रमविहितेन कर्मणा, तत्त्वज्ञाने सति गृहस्थस्यापि मुक्तेः ।

"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते"—

इति स्मृतेः । न चाऽननुगतमपि साधनं, स्वर्गवदपवर्गे प्रकारभेदाभावात् । न चापवर्गार्थिकर्त्तव्यतया कर्माणि विहितानि येन तत्समुच्चयः स्यात् । तस्मात् "सन्न्यस्य सर्वकर्माणी"ति स्मृतेः सर्वकर्मसन्न्यासो ज्ञानमात्राच्च मोक्ष इति । मैवम् । स्व–स्वाश्रमविहितेन कर्मणा ज्ञानस्य समप्राधान्येन समुच्चयात् ज्ञान–कर्मणोस्तुल्यत्वेन मुक्त्यर्थत्वाभिधानात् । तथाच श्रीभगवद्गीता—

"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" ॥

श्रीविष्णुपुराणे—

"तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते" ॥

हारीतः—

"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञान-कर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्" ॥

श्रुतिश्च, "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण च" इति । एतन्मूलकमेव

"परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्त्यपण्डिताः" ;

"ज्ञानं प्रधानं नतु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्माद्‌द्वयोरेव भवेत्प्रसिद्धि-
र्न ह्येकपक्षो विहगः प्रयाति" ॥

न च फलान्तरार्थत्वेन श्रुतस्य कर्मणः फलान्तरार्थत्वमनुपपन्नम्, तथा वाक्यस्वरसात् ज्ञानतुल्यताप्रतीतेः । तत्तत्फलजनकत्वेऽपि हि कर्मणां शब्द एव मानम्, एवमन्यत्रापि । भवतु वा आरादुपकारितया अङ्गाङ्गिभावेन समुच्चयः, स प्रयाजादिवदपूर्वद्वारैव ।

यत्तु जडभरतोपाख्याने—

"न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम् ।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च" इति ॥

तद्योगिधर्मसङ्गत्यागार्थं जातिस्मरत्वेन न शिक्षितानीत्येवंपरं वा । तदुक्तम्– "जज्ञ जातिस्मरो द्विजः सर्वविज्ञानसम्पन्नः सर्वशास्त्रार्थतत्त्ववित्" इति ।

अत्र केचित् । अनुत्पन्नतत्त्वज्ञानस्य ज्ञानार्थिनस्तत्प्रतिबन्धकाधर्मनिवृत्तिद्वारा प्रायश्चित्तवदारादुपकारकं कर्म, सन्निपत्त्योपकारकन्तु तत्त्वज्ञानम् । उत्पन्नतत्त्वज्ञानस्य तु अन्तरालब्धवृष्टेः कारीरीसमाप्तिवदारब्धाश्रमपरिपालनं लोकसंग्रहार्थम् । यद्यपि लोकसंग्रहो न प्रयोजनं सुख–दुःखाभाव–तत्साधनेतरत्वात्, तथाप्यकरणे लौकिकानां विगानान्निन्द्यत्वेन यज्ज्ञानं तत्परिहारार्थं तत्कर्मसाध्यदुःखोत्पादनेनाऽधर्मक्षयार्थञ्चेति । तन्न । तत्त्वज्ञानं प्रत्यङ्गत्वपक्षे कर्मणां ह्यपूर्वद्वारा जनकत्वं दुरितध्वंसकल्पनातो लघुत्वात् तस्मात् यानि कर्माणि उपनीतमात्रकर्तव्यत्वेन विहितानि सन्ध्योपासनादीनि तानि मोक्षार्थिभिरप्यवश्यं कर्तव्यानि, तत्परित्यागस्य प्रत्यवायहेतुत्वेनाऽशास्त्रीयत्वात् सङ्कोचे मानाभावात्, निषिद्धानि काम्यानि च बन्धहेतुत्वान्मुक्तिपरिपन्थीनीति त्यज्यन्ते । धनमूलानि च धनत्यागादेव त्यज्यन्ते । सोऽयं "संन्यस्य सर्वकर्माणी"त्यस्यार्थः । अयमेव हि सन्न्यासपदार्थः, तथा च श्रीभगवद्गीता—

"काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।
नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः" ॥

तत्त्वज्ञानं धर्मद्वारा मुक्तिसाधनं विहितत्वेन धर्मजनकत्वादिति धर्मस्यैव प्राधान्यम् । स च धर्मो मुक्त्यैव फलेन नाश्यते इति केचित् । तन्न । मिथ्याज्ञाननिवृत्त्या दृष्टद्वारेणैवोपपत्तावदृष्टकल्पनानवकाशात् । अन्यथा भेषजादिष्वपि तथा स्यात् । एवञ्च त-

मैव विहितत्वस्य व्यभिचारः ।

अत्र वदन्ति । संसारकारणोच्छेदक्रमेण कार्य्योच्छेदान्मोक्षः, एवञ्च तत्त्वज्ञानमात्रादेव मिथ्याज्ञानोच्छेदादपवर्गः तत्र न तस्य कर्मसहकारित्वम्, मिथ्याज्ञानोन्मूलने कर्मविनाकृतस्यैव तस्य दिङ्मोहादौ हेतुत्वावधारणात् । कर्मणामपवर्गहेतुताश्रुतिश्च तत्त्वज्ञानद्वाराप्युपपद्यते, साक्षात्तस्याऽश्रुतेः । तत्त्वज्ञानवतश्चाधिकारे नित्याकरणेऽपि दोषाभावेन प्रत्यवायाभावोपपत्तेः । अन्यथा भोगार्थं विहित–निषिद्धाचरणेन धर्माधर्मोत्पत्तौ मोक्षाभावप्रसङ्गः । ननु तत्तत्तीर्थमहादान–स्नान–काशीमरणादिकर्मणां तत्त्वज्ञाननैरपेक्ष्येण मुक्तिहेतुत्वं श्रूयते तत्कथं तत्त्वज्ञानमेव तद्धेतुः । न च तेषां तत्त्वज्ञानमेव व्यापारः, अनुपदं तत्त्वज्ञानानुत्पादाददृष्टद्वारा तद्धेतुत्वं वाच्यं तथा चापवर्गकारणमेवादृष्टं कल्प्यतां लाघवात् । न च तत्त्वज्ञानप्रतिबन्धकाधर्मनाश एव तेषां व्यापारः, प्रतिबन्धकदुरितध्वंसतोऽपूर्वस्य लघुत्वात् । अथ तत्तत्कर्म्मणामननुगमात् कथं मुक्तिरनुगता दुःखध्वंसे प्रकाराभावादिति चेत् । न । गुणनाशे समवाय्यसमवायिनाशविरोधिगुणानां नाशकत्वनियमात् । तत्तन्नाशविशेषे तु तत्तद्धेतुरिति चेत्, तर्हि तत्तद्दुःखध्वंसे तत्तत्कर्म्मणामपि तथात्वमस्तु, तत्रापि तत्त्वज्ञाने तत्प्रतिबन्धकदुरितध्वंसे चाननुगतानामेव तत्तत्कर्म्मणां जनकत्वं, मुमुक्षुमुद्दिश्य विहितत्वं वानुगतमस्तीति चेत् । न । ज्ञान–कर्म्मणोर्निरपेक्षकारणताश्रवणात् व्रीहि–यववद्विकल्प एव । निरपेक्षैकसाधनावरुद्धेऽपरसाधनावरुद्धेऽपरसाधनान्वयो न विकल्पमन्तरेण सम्भवति आकाङ्क्षाविरहादिति न्यायात् । साहित्यबोधकं विनैकं प्रत्यनेकस्य हेतुता यत्र शब्देन बोध्यते तत्र विकल्पेनाऽन्वयो यथा व्रीहि–यवयोरिति व्युत्पत्तेर्वा । वस्तुतस्तु दृढभूमिसवासनमिथ्याज्ञानोन्मू-

लनं विना न मोक्ष इत्युभयसिद्धम्, तादृशमिथ्याज्ञाननाशे चान्वय-व्यतिरेकाभ्यां तत्त्वज्ञानकारणमवधारितमतो न तेन विना स इति तत्रापि तत्त्वज्ञानमावश्यकम् । यद्यपि मिथ्याज्ञाननाशे विरोधिगुणस्यैव हेतुत्वम्, तथापि मिथ्याज्ञानप्रागभावासहवृत्तिमिथ्याज्ञानध्वंसस्य तदेकसाध्यत्वम् । "आत्मा ज्ञातव्यो न स पुनरावर्त्तते" इति श्रुतेर्मोक्षं प्रति तत्त्वज्ञानस्य हेतुत्वावधारणाच्च । "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्या तत्त्वज्ञानं विना न मोक्षः किन्तु तस्मिन्सत्येवेति प्रतिपादनाच्च । अन्यथा स्वर्गादौ न शरीरादयः कल्प्येरन् कर्म्मणां तत्त्वज्ञानद्वारापि मुक्तिजनकत्वसम्भवात्, प्रमाणवतो गौरवश्च न दोषाय । कर्म्मणां तत्त्वज्ञानविशेष एव जनकत्वमतो न तत्राऽननुगमो दोषाय । वाराणसीमरणस्य तत्त्वज्ञानफलकत्वमागमादेवावगम्यते । तत्त्वज्ञानाददत्तफलान्येव कर्म्माणि प्रायश्चित्तादिव विनश्यन्ति अनन्यथासिद्धशब्दबलात् । न च प्रायश्चित्तस्य दुरितोत्पत्तिनिमित्तकत्वं, पापनाशफलश्रवणात् । अत एव न ब्रह्महत्यादीनां प्रायश्चित्तदुःखमेव फलम्, नरकफलश्रुतिविरोधात् प्रायश्चित्तविधिवैयर्थ्याच्च, दुःखैकफलत्वेन तत्राप्रवृत्तेः । नापि कर्म्मान्तराधिकार एव फलम्, महापातकातिरिक्तेऽनधिकाराभावात्, अन्यथा यत्किञ्चित्पापवतोऽकृतप्रायश्चित्तत्वेनाऽनधिकारापत्तेः। प्राणान्तिके तदभावाच्च । श्रूयते हि—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परात्मनि" ॥

स्मृतिश्च—

"ज्ञानाग्निः सर्वकर्म्माणि भस्मसात्कुरुतेऽर्जुन" इति ।

"नाभुक्तं क्षीयते कर्म्म" इत्यत्र च प्रायश्चित्तादिस्मृतितः सङ्को-

चस्यावश्यकत्वेन शब्दबोधितनाशकानाश्यकर्म्मपरत्वं लाघवात् न तु तत्तदन्यकर्म्मपरत्वं गौरवात् पाप-पुण्यक्षयहेतूनां बहुतरत्वात् । ज्ञानस्य नाशकत्वं शब्दबोध्यमित्युक्तम् । अथ भस्मसात्पदस्य लाक्षणिकत्वेन यथा वह्नेः परम्परया भस्म तथा ज्ञानात्कर्म्मक्षय इत्यर्थः । तथा च "नाभुक्तं क्षीयते कर्म्मे"ति स्मृतिरुत्सर्गतो भोगेनैव क्षयमाह, अनन्यथासिद्धप्रायश्चित्तविधिना सा बाध्यते । ज्ञाननाश्यत्वञ्च भोगद्वारापि सम्भवतीत्यबाधे सम्भवति बाधकल्पना नेति चेत् । न । कर्म्मणो भोगनाश्यत्वे ज्ञानस्याऽनाशकत्वात् । न हि भोगस्तत्त्वज्ञानव्यापारः, तथाऽश्रवणात् तेन विनापि कर्म्मण एव तदुपपत्तेश्च । कर्म्मणो भोगनाश्यत्वे तत्त्वज्ञानानुपयोगात्।

यत्तु नाभुक्तमिति स्मृतिविरोधेन क्षीयन्त इत्यादिश्रुतेरन्यथा वर्णनम् । तन्न । स्मृतेः प्रत्यक्षवेदबाधितत्वेन विरुद्धार्थकवेदाननुमापकत्वात् । वामदेव-सौभरिप्रभृतीनां कायव्यूहश्रवणात्तत्त्वज्ञानेन कायव्यूहमुत्पाद्य भोगद्वारा कर्म्मक्षय इति चेत् । न । तपः-प्रभावादेव तत्त्वज्ञानानुत्पादेऽपि कायव्यूहसम्भवात् । भोगजननार्थञ्च कर्म्मभिरवश्यं तत्तत्कायनिष्पादनमिति न तत्र तत्त्वज्ञानोपयोगः, यौगपद्यञ्च कायानां तज्जनककर्म्मस्वभावात् तपःस्वभावाद्वा । न च ज्ञानं भोगद्वारा कर्म्मनाशकमित्युक्तम् । एतेनागमयोः परस्परविरोधात् अनिर्णये विमतिपदं कर्म्म भोगनाश्यं प्रायश्चित्ताद्यनाश्यत्वे सति कर्म्मत्वात् भुक्त-भुज्यमानकर्म्मवदित्यनुमानान्निर्णय इत्यपास्तम् । ज्ञानस्य प्रायश्चित्ततुल्यत्वेनाऽप्रयोजकत्वात् श्रुतिबाधितत्वाच्च शब्दबोधितनाशकानाश्यत्वस्योपाधित्वाच्च अकृतप्रधानेन कृतप्रधानेन चाङ्गापूर्वेण व्यभिचाराच्च, तस्य प्रधानयागादिनाश्यत्वात् । न च तस्यापि यागस्येव स्वर्गफलकत्वमिति तन्नाश्यत्वमेव अधिकृताधिकारेऽपि स्वर्गकामस्याधिकारात्

अन्यथा निष्फलेऽप्रवृत्तेरिति वाच्यम् । स्वर्गफलत्वेऽङ्गत्वविरोधात् । प्रवृत्तिश्च फलवद्यागार्थितया । तदुक्तम् "प्रधाने रागादङ्गे वैधी" ति । ननु "तावदेवास्य चिरं यावन्न विमोक्षः अथ सम्पत्स्यते कैवल्येन" इति श्रुतेः तावदेवास्योत्पन्नतत्त्वज्ञानस्य चिरं विलम्बः यावन्नोत्पन्नकर्म्मणो विमोक्षः, अथ सम्पत्स्यते कैवल्येनेत्यत्र भोगेन क्षपयित्वा इति शेषः । न च शेषे मानाभावः, सत्यपि विज्ञाने कर्म्मावस्थाने क्लृप्तसामर्थ्यस्य भोगस्यैव नाशकत्वेनाक्षेपादिति चेत् । न । तत्त्वज्ञाने सति तत्त्वज्ञानदशायां न मोक्षः किन्तु तदग्रिमक्षण इत्यर्थत्वेनाप्युपपत्तेः ।

यत्तु अकृतप्रधानाङ्गापूर्वाभिप्रायमेतत् "ज्ञानाग्निः सर्वकर्म्माणी"त्यादि, तेषां कार्य्याणां नाशकान्तराभावादिति । तन्न । प्रधानार्थितया क्लृप्तानां तदभावे तत्सामग्र्यसिद्धेः तत्सत्त्वेऽपि सर्वकर्म्मपदस्य कर्म्मान्तरपरिग्राहकस्य सङ्कोचे मानाभावात् । यदपि भस्मसात्करणादिना फलाजनकत्वमुच्यते तत्त्वज्ञानात्कृतमपि विहितं कर्म्म न फलायेति । तथा च श्रुतिः, "तद्यथा पुष्करपलाशेनापः श्लिष्यन्ते" इत्यादि । तदपि न । न हि भस्मसात्करणं क्षयश्चानुत्पत्तिरुच्यते, न च लक्षणा, मुख्ये बाधकाभावादिति । उच्यते । कर्म्मणां भोगनाश्यत्वेऽपि ज्ञानस्य कर्म्मनाशकत्वं भोगस्य तत्त्वज्ञानव्यापारत्वात् । न च भोगमात्रस्यैव कर्म्मनाशे सामर्थ्यात्तत्त्वज्ञानव्यभिचारः, कर्म्मप्रागभावासहवृत्तिकर्म्मनाशे युगपत्कर्म्मभोगे वाऽव्यभिचारात् । अत एवानुमानेनाऽऽगमबाधाप्रयोजकत्वेन च श्रुतिवाक्यशेषे मानाभावः । उत्पन्नतत्त्वज्ञानस्याऽपवर्गविलम्बोपपादनार्थमुक्तरीत्या भोगस्यैवाक्षेपादिति, तदस्यापवर्गस्य परमपुरुषार्थस्य श्रुतिसिद्धं कारणमनुमानमिति विविक्तम् ॥

इति श्रीमहामहोपाध्याय-श्रीगङ्गेशविरचिते तत्त्वचिन्तामणौ अनुमानाख्य-द्वितीयखण्डे—ईश्वरानुमानम् ।

समाप्तश्च द्वितीयमनुमानखण्डम् ॥